पवर्ज्जितौ दाधाश्च घु-संज्ञकः स्यात्। दा-दाञ् दाण् दो देङ्, दो दद्घोः (३।३।१२५) दत्तं। धा-धाञ् धेटोः किः, विधिः, णत्वं प्रणिधिः। अपिदिति किं दाप-दातं धान्यं, दैप-अवदातं वस्त्रं।

## २४। कतिबहुगणतावदादि संख्या।

[ कति, बहु, गण तावदादि (तावत् आदि) ०१, संख्या १: ] (१)

---

प्रत्येकापेक्षया बहुत्वम्, अथवा द्वयोरङ्गापेक्षया द्विवचनान्तम् उभयत्र 'सूत्रे बहुल'मिति सुपां लुक्, केचित् दाधा इति प्रत्येकमेकवचनान्तं वदन्ति। पवर्ज्जितः पकारसम्बन्ध-रहित इत्यर्थः, डु दाञ् दाने, दाण् दाने, दो अवखण्डने, देङ् रक्षणे एतेषां दारूपं भवति; धाञ् धारणपोषणयोः, धेट् पाने अनयोर्धारूपं भवति। घुसंज्ञायां सत्याम्, उक्त-दाधादिधातूनामन्यतमात् क्ते कृते 'दो दद् घो'रित्यनेन घुसंज्ञक दास्थाने दद् आदेशः, ततो दत्तमिति सिद्धम्, तथा धाञ् धेट् इत्यनयोरन्यतरात् "घोरुपसर्गात् किः" (४।२।१२) इत्यनेन किप्रत्यये विधिः इति रूपं भवति, अपिच प्र-निभ्यामुत्तरस्मात् धाञ्, धेटोरन्यतरात् कि प्रत्यये "नेर्गद, नद, पत, पद, वहि, वपि, हन्ति, द्राति, घु, मा, शाम" इत्यादिना घुसंज्ञकधातौ परे उपसर्गादुत्तरस्य नेर्णत्वं। दाप्-लवने (छेदने), इत्यस्मात् पकारेत् दाप्-धातौ क्ते परे 'घु'संज्ञाभावात् न ददादेशः, दातं छिन्नमित्यर्थः, एवं दैप शोधने इत्यस्मात् क्तः, एच आतोऽशित्यात (३।२।१४३) इत्यनेन एकारस्यात्वे दा इत्यस्य घुसंज्ञाभावान्न ददादेशः, अवदातं शुद्धमित्यर्थः। केचित्तु दीङ् क्षये इत्यस्य निर्गाङ् दीङो अपि च (३।२।१३५) इत्यनेन आत्वे घुसंज्ञायां सत्यां प्रणिदाता, प्रणिदायेत्यत्र "नेर्गद" इत्यादिना णत्वं स्यात्; यत्पुनर्वृत्तौ चत्वार एव दा गणिता-स्तद्वैषम्यदर्शनार्थमात्रम्; दीङस्तु कथन कस्मिंश्च प्रत्यय एव घुत्वमिति न तस्य गणना।

(१) कतीति—कति च, बहुश्च, गणश्च, तावदादिश्च इति समाहारद्वन्द्वः, तावदादि-र्येषामिति. तद्गुणसंविज्ञानबहुव्रीहिणेन तावतोऽपि ग्रहणम्। संख्यायतेऽनया इति

एते संख्यासंज्ञकाः स्युः । कतिधा, बहुकृत्वः, गणशः, तावत्कृत्वः, यावत्कं, एतावत्कं ।

## २५ । स्वरादि चादि वदादि-तद्धित क्त्वा मान्त-कृदव्ययम् । (१)

[ स्वरादि (स्वर्-आदि), चादि (च आदि), वदादितद्धित (वत्-आदितद्धित), क्त्वा, मान्तकृत् ०१।, अव्ययं १। ] ।

स्वः शब्दादय चादयश्च, वदादि तद्धितश्च, क्त्वा-मान्त-कृतश्च अव्ययसंज्ञकाः स्युः ।

संख्येत्यन्वर्थबलात् बहुगणौ प्रचुरार्थौ न तु वैपुल्यसङ्घवचनाविति त्रिमुनिमतङ्कारः । अत्र तावदादिभिर्डवतुप्रत्ययान्ता यत्तदेतदो गृह्यन्ते । यत्तदेतेभ्यः परिमाणे वतुप् । (५।४।८२), संख्यासंज्ञायां सत्यां कति शब्दात् "संख्याया विधार्थे' (५।४।२७७) इति धाप्रत्ययः कतिधा, बहुशब्दात् 'वारे संख्यायाः कृत्वस्" (५।४।२८७) इत्यनेन कृत्वस् प्रत्ययः बहुकृत्वः गणशब्दात् "संख्यैकार्थाद्वीप्सायाम्" (५।४।२८१) इत्यनेन शप्रत्ययः गणशः । तावत्कृत्वस् इत्यत्र तावच्छब्दात् कृत्वस्प्रत्ययः, यावत्कम् एतावत्कम् इत्यादौ यावदेतावच्छब्दाभ्यां "संख्याया अतिशदन्तायाः कः" (५।३।२०५) इति सूत्रेण क्रीतार्थे कप्रत्ययः ।

(१) स्वरादिर्यस्य स तथा, एवं चादिः वदादिश्च ; वदादिश्चासौ तद्धितश्चेति कर्मधारयः, एवं मान्तश्चासौ कृदिति कर्मधारयः, ततः स्वरादिश्च चादिश्च वदादि-तद्धितश्च क्त्वा च मान्तकृच्चेति समाहारद्वन्द्वः । न व्येति इत्यव्ययं, तथा चोक्तम् "सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्" विभक्ति-पदेन कारकमन्वयस्योरपि ग्रहणम् । स्वः, उच्चैरित्यव्ययोदाहरणे उभयत्र "सुपो लुगव्ययात्" (२।३।१२) इत्यनेन सुपो लुक्, सर्वासु विभक्तिषु "स्वः" इत्येव रूपं भवति

स्वः, उच्चकैः, सुब्लुक्, अकच्। स्वर्, प्रातर्, उच्चैस्, नीचैस्, दिवा, बहिस्, स्वयम्, मृषा, हे, है, अद्धा, कं, शम्, शुभं, स्वस्ति, अस्ति, अभीक्ष्णमित्याद्याः स्वरादयः। चादयः- खल्वपि; याति च वाति वा। स्वरादयो वाचकाश्चादयो द्योतका' इति भेदः। वदादयस्तु दैववत्, बहुशः। क्त्वा- मान्तकृतः कृत्वा, कर्त्तुम्, उच्चैःकारम्।

एवम् उच्चकैः। उच्चकैरित्यत्र "अव्ययसर्वनाम्नामकच् प्राक् टेः कस्मात्कस्मादन्यत्रात्- मनाम्" (२।४।७३) इत्यनेन टेः प्रागकच्, विकल्पेन उच्चैरित्यपि भवति। स्वः स्वर्ग-पर- लोकयोः; प्रातः प्रत्यूषे; उच्चैस् महति (ऊर्ध्व); नीचैस् अल्पे (नीचे); दिवा-दिवसे; बहिस्-बाह्ये; स्वयम्-आत्मना; मृषा मिथ्या; अद्धा-स्फुटावधारणयोः, तत्त्वातिशय- योरिति केचित्, कं-वारिमस्तकनिन्दासुखेषु, शम् सुखे; स्वस्ति मङ्गले; अस्ति सत्तायाम्, अभीक्ष्णं पौनःपुन्ये। अन्येऽपि स्वरादयः सन्ति यथा—पुनः, शनैः, ऋते, पृथक्, युगपत्, अन्तर्, सनुतर्, आरात्, पृथक्, ह्यस्, अद्य, रात्रौ, सायम्, चिरम्, मनाक्, ईषत्, जोषम्, तूष्णीम्, अवश्यम्, समया, निकषा, स्वधा, सकम्, नक्तम्, नञ्, हेतौ, इद्धा, अद्धा, सामि, सना, सनत्, सनात्, उपधा, तिरस्, अन्तरा, अन्तरेण, ज्योक्, सहसा, विना, नाना, स्वधा, अलम्, वषट्, श्रौषट्, वौषट्, अन्यत्, उपांशु, क्षमा, विहायसा, दोषा, मिथ्या, मुधा, पुरा, मिथो, मिथस्, प्रायस्, मुहुस्, प्रवाहुकम्, प्रवाहिका, आर्यहलम्, साकम्, सार्धम्, नमस्, हिरुक्, धिक्, अथ, अम्, आम्, प्रताम्, प्रशाम्, प्रतान्, मा, माङ् इत्यादयः, एतेषामर्थास्तत्तत्कोषतो वेदितव्या बाहुल्यभिया नाऽत्र प्रदर्शिताः। चादयः—च समुच्चये; खलु निषेधे वाक्यालङ्कारे निश्चये; अपि सम्भावनाऽवधारण- निन्दाऽनुज्ञासमुच्चयेषु; याति च यासि गच्छति इति चस्योदाहरणम्, एवं वाति वेत्यत्र वस्योदाहरणम्। अन्येऽपि चादयः सन्ति यथा—वा, ह, अह, एव, एवम्,

## २९। निपाताश्चादयोऽसत्त्वे।

[निपाताः १॥, चादयः १॥, असत्त्वे ७।] (१)

**अद्रव्ये वर्त्तमानाश्चादयो निपातसंज्ञकाः स्युः।**

**च, वा, वै, अमा, स्वाहा, स्वधा, ओं, अ, आ, इ, उ, पशु,**

नूनम्, शश्वत्, भूयस् चेत्, नेत्, कच्चित्, यत्र, हन्त, माङ्, नञ्, यावत्, तावत्, तथाहि, किल, अथ, सुष्ठु, स्म, आदह, कूपत्, सूपत्, माकिम्, नकिम्, नुम्, अ, आ, इ, ई, उ, ऊ, ए, ऐ, ओ, औ, पशु, यथा, भोः, अये, एकपदे, कथाच, अङ्ग, इत्याद्या एतेषामप्यर्थाः कोषतोऽवगन्तव्याः। अथ स्वरादिषु चादयः कथं न गणिता इति चेदाह स्वरादयो वाचकाश्चादयस्तु द्योतका इति। वाचकास्तु तदर्थपर्य्यायाः, द्योतका नाम केवलमर्थप्रकाशका न तु तत्पर्य्यायकाः, यथा स्वःशब्दस्य स्वर्गपर्य्यायकत्वाद्वाचकत्वं, चशब्दस्य तु समुच्चयपर्य्यायकत्वाभावात् केवलं तदर्थप्रकाशनाद्द्योतकत्वम्, किञ्च स्वरादयो द्रव्यवृत्तयश्चादयोऽद्रव्यवृत्तयः। यदादिवर्जिताः—वत्, तसि, तसिल्, दा, र्हि, थल्, था, धा, एधा, अस्तात्, अतस्, एन, आच्, आहि, —त्वम्, असुन्, शस्, च्वि, सात्, डाच्, डाच्, इत्येताः षट्त्रिंशत् उदाहरणं देववत् इत्यत्र देवशब्दात् "तदिवार्थे वतिः" (५।४।२११)। एवं बहुशः बहुशब्दाच्छस् प्रत्ययः, क्त्वा कृत्वा, (एककर्त्तृकयोः पूर्व्वकाले ४।२।१८ इति क्त्वा) अमान्तश्च कर्त्तुम् (कृ+तुम् "तुम् तादर्थ्ये भाववाच्ये" ४।२।३२), उच्चैःकारमित्यत्र "अयथा युक्ताख्यानेऽन्यथात् कृञः क्त्वा वा" (४।२।७५) इत्यनेन उच्चैस्+कृ+णम्।

(१) निपतन्त्युच्चावचेष्वर्थेष्विति निपाताः। सत्त्वं, द्रव्यं, तच्च लिङ्गसंख्यान्वितमिति फलितम्, अद्रव्ये वर्त्तमाना विशेष्यतया द्रव्याभिन्नार्थाश्च, चा इत्यादयो निपातसंज्ञकाः स्युः। वै पादपूरणे, अमा सहार्थे, स्वाहा देवताभ्यो दाने, स्वधा पितृदाने, ओं स्वीकारे, अ सम्बोधने, अधिक्षेपे, निषेधे; आ वाक्यस्मरणयोः, इ सम्बोधन-जुगुप्साविस्मयेषु, उ सम्बोधने। पशु सम्यगर्थे, नु पुनरर्थे। अहो, आहो, उताहो

तु, अद्धा, अहो, आहो, उताहो, कं, शं, शुभं, स्वस्ति, अस्मि, मन्ये, असि, ब्रूहि, विभाषा, अन्यतरस्याम्, अभीक्ष्णम्, नञ्, नो, ना, अह, आह, इति, ह, आकृतिगणोऽयम् ।

अद्रव्य इति किं स्वाहा, अग्नायी ।

## २७। प्राद्युपसर्गः प्राग्धातोः ।

[प्रादि ०।१, उपसर्गः ।१, प्राक् ०।१, धातोः ५।१] (१)

विस्मयार्थे, मन्ये तिङन्तप्रतिरूपम्, एवम् असि, ब्रूहि ; विभाषा अन्यतरस्यां विकल्पार्थे, आह उक्तार्थे व्यर्थे, अन्यत् स्पष्टम् । "स्वरादिनिपातमव्ययम्" इत्यव्ययसूत्रं कुर्वतः पाणिनेर्मते स्वाहा अग्नायीत्यत्र स्वाहाया अव्ययत्वमपि नास्ति निपातत्वाभावात् । निपातप्रदेशाः प्रायो निपातेनेत्यादयः ।

(१) उप समीपे सृज्यते धातोरिति कर्म्मण्यप् उपसर्गः, प्रादिर्निपातो धा[illegible] प्राक् उपसर्गसंज्ञक स्यादित्येवमर्थे क्रते "उपसर्गाः क्रियायोगे गतिश्च" [illegible]दयः क्रियायोगे उपसर्गसंज्ञा गतिसंज्ञाश्च स्युरिति पाणि[illegible]मञ्जरी, एवञ्च प्रगत एजकः प्रेजकः इह कर्म्मविशेषणीभूत[illegible] प्रशब्दस्य क्रियायोगाभावान्नोपसर्गत्वम् तेन नावर्णलोपः ; उक्तञ्च क्रियाद्योतकाः प्रादय उपसर्गा इति द्योतकत्वन्तु पदान्तरप्रतिपादितधर्म्मस्य सन्निधि-मात्रेणोपकारकत्वम्, उपसर्गोहि कर्त्रादिसाधननिष्पादितां क्रियामेव विशिनष्टि, नहि स्वरूपेणानुत्पन्नमिति केचित् तथाहि क्रियायां स्वरूपलाभार्थमादौ साधनसम्बन्धः पश्चात् विशेषापेक्षया उपसर्गसम्बन्ध इति तेषामभिप्रायः, यथा "धातुः सम्बन्धमायाति पूर्व्वं कर्त्रादिकारकैः, उपसर्गादिभिः पश्चात् इति सम्बन्धवेदिन" इति, तदन्ये न मन्यन्ते, तेषां मते "पूर्व्वं निपातोपपदोपसर्गैः सम्बन्धमासादयतीह धातुः । पश्चात् कर्त्रादिभिरेव कारकैरिति प्रयोगार्थविदो वदन्ति ॥" पूर्व्वमुपसर्गसम्बन्धे तु क्रुधद्रुहोः प्रादेः कर्म, अभिशीङ्स्थासां कर्मेति सकर्मकत्वमुपपन्नम् । नन्वेवमुपसर्गकार्य्यस्यान्तर-

**प्रादिर्निपात उपसर्गसंज्ञकश्च धातोः प्राक् स्यात्।**

**प्रणमति, परिणीतः। प्रादिर्यथा—**

**प्र परा ऽप सम न्वव निर्दुरभि व्यधि सूदति नि प्रति पर्यपयः।**
**उप आङिति विंशतिरेष सखे उपसर्गविधिः कथितः कविना॥(१)**

---

ङ्गलात् प्रकृतिगुणात् प्राक् उपसर्गवर्णेन सह इको गुणं प्रैति इत्यादि कथं निर्वाहः स्यात्? नैवम्, उपसर्गप्रत्ययकार्ययोः प्रत्ययकार्यं बलीय आनिगमाधीतेति निबन्धात्। वर्द्धमानमिश्रास्तु "उपसर्गाश्चतुर्विधा सम्बध्यन्ते। धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्त्तते। तमेव विशिनष्ट्यन्योऽनर्थकोऽन्यः प्रयुज्यते"। एतत्र पर्योपसर्गप्रयोगः सम्भवति, यथा "आपद्यन्ते प्रयुज्यन्ते प्रायेणैव प्रयोक्तृभिः। उपसर्गाः क्रियायोगे, तथोदाहृतयो यथा, आहरति, व्याहरति, प्रसमभिव्याहरति इति। प्रणमति, परिणीत इत्युदाहरणे उभयत्र "उपसर्गान्नोपदेशाद्विनमोनानिपाम्" (१।४।१६) इत्यनेनादेर्नस्य णत्वम्।

प्र(१)—गत्यारम्भोत्कर्षसर्वतोभावप्राथम्यख्यात्युत्पत्तिव्यवहारेषु, परा(२)—पराभवानादर[illegible]प्रतिलोमभावेषु, अप(३)—अनादरभङ्गभाकल्यवैकल्यत्यागनञर्थेषु, सम्(४)—प्रकर्षश्लेषनैरन्तर्यौचित्य[illegible], अनु(५)—पश्चाद्भावसादृश्यलक्षणवीप्सेत्थम्भावभागहीनसामर्थ्यसाहाय्यसामीप्यदैर्घ्यपुनरर्थेषु, अव(६)—निश्चयमालिन्यानादरेषु, निर्(७)—निषेधात्ययनिश्चयबहिष्करणेषु, दुर्(८)—निषेधकष्टनिन्दाऽवतर्पणेषु, अभि(९)—समन्तादुभयार्थलक्षणवीप्सेत्थम्भावधर्षणेषु, वि(१०)—विशेषवैरूप्यनञ्योगातिदानेषु, अधि(११)—उपरिभावे, सु(१२)—पूजनशोभनानायासातिशयेषु, उत्(१३)—ऊर्ध्वोत्कर्षप्राकट्यानेकार्थेषु, अति(१४)—अतिशयातिक्रमपूजनासम्भावनेषु, परि(१५)—सर्वतोभावाऽतिशयवीप्सेत्थम्भावविक्रमभागत्यागनियमेषु, नि(१६)—निश्चयनिर्भययोः, प्रति(१७)—लक्षणाख्यानप्रतिप्रसन्नेत्थम्भावभागप्रत्यर्पणसादृश्यविरोधवीप्सासमाधिषु, अपि(१८)—आदरणाल्पत्वसम्भावननिन्दाऽनुज्ञासमुच्चयेषु, उप(१९)—अनुगतिपश्चाद्भावानुकम्पाधिकहीनसामीप्यप्राथम्येषु, आङ्(२०)—समन्ताद्ग्रहणमर्यादेषदर्थमध्याऽभिव्याप्तिषु।

अन्तःशब्दस्य णत्वे, धाञो, ङाप, किविधौ, चोपसर्गः।
अन्तर्णयति अन्तर्द्धा अन्तर्धिः। (१)

## २८। मिदचोऽन्त्यात् परः।

[मित् ०१, अच ५१, अन्त्यात ५१, परः ११] (२)

अचां मध्ये अन्त्यादचः परो मित्संज्ञकः स्यात्
पयांसि सिञ्चति।

(१) णत्वविधौ, धाञि ङापि किविधौ चान्तःशब्दस्योपसर्गत्वं वाच्यम् इति वार्तिकम्, णत्वे अन्तर्णयति, अन्तर्+धा; ङापि उपसर्गादात्वात्; अन्तर्द्धा, अन्तर्+धा+कि (घोरुपसर्गेन्) अन्तर्धिः, धाञि परत एव उपसर्गसंज्ञा वक्तव्या, [illegible], अर्देर्नि निपातनादिति केचित्। तदिदम् "अच्छगत्यर्थे [illegible] गतौ, [illegible]ऽतिः, पर्यभो गतौ। अपि पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु" [illegible] प्रशंसायां नोपसर्गत्वं भजतः; अति अतिक्रमे [illegible] (क्रियाप्रवृत्तौ) नोपसर्गत्वं भजति, परि: अधि गतौ, एतौ यदा गत्यर्थधातुयोगे गतिं द्योतयतस्तदा नोपसर्गौ, तथा अपि अन्यत्व-क्रियायोग्यतावलम्बनानिन्दानुमतिसमुच्चयेषु नोपसर्ग इत्याह।

(२) अन्ते भवः अन्त्यः। म इत् (अनुबन्धः) यस्य स मित् म्-अनुबन्ध इत्यर्थः, म् अनुबन्धः प्रत्ययोऽन्त्यात् स्वरात् परो भवतीति परिभाष्यते, सुबाद्याः प्रत्ययाः परे इत्यस्याः परिभाषाया अपवादिकेयं परिभाषा; पयांसि, सिञ्चतीत्युदाहरणे पयस्+जस्, जश्शसोः शिरिति सर्वनामस्थाने च, नुम् च, नुम् मित्संज्ञकः अन्त्यादचः यश्चिष्टाकारात् परो भवति। सिञ्चति, सिच+ति, आद्यन्तवदेकस्मिन्निति न्याया-देकस्यैव इकारस्य आद्यत्वमन्त्यत्वञ्च परिकल्प्य "शे मुचादीनाम्" इति नुम् विधीयते।

## २९। उपधोपान्त्यः। [उपधा ०१।, उपान्त्यः १।] (१)

उपान्त्यो वर्ण उपधोच्यते। पाचयति।

## ३०। अचोऽन्त्यादि टिः।

[अचः ६।, अन्त्यादि ०१।, टिः १।] (२)

अचां सन्निविष्टानामन्त्यो योऽच् तदादि टिसंज्ञकं स्यात्। पटत्शब्दः टेर्डिति (५।१।४५) पटपटाकृत्य।

## ३१। विषये विशेषणमन्त्यमुत्तरे त्वाद्यञ्च।

(विषये ४।, विशेषणं १।, अन्त्यं १।, उत्तरे ७।, तु ०१।, आद्यं १।, च ०१।)

विष्यर्थं यद्विशेषणं तद्विशेषणवतोऽन्त्यं बोद्धव्यम्(३)। परे पुनः क्वचिदाद्यञ्च। अद्वाद्वादेरिण् (५।२।६६) अदन्तात् दाचिः,

---

(१) अन्त्यस्य समीपम् [illegible] स्थितानां वर्णानां अन्त्यवर्णात् पूर्व्वम् उपधा भवति। पाचयतीत्युदाहरणं—पच+णिच्+ति, अदुपधंचोर्णिति वृद्धिः।

(२) अन्त्यः आदिर्यस्य तत् अन्त्यादि। पटपटाकृत्येत्युदाहरणं—पटत्शब्दात् "अव्यक्त-शब्दानुकरणादनेकाचो डाच्" (५।४।२९८) इति डाच् 'टेर्डिति' इति टिलोपः, "डाचि प्रकृत्या तस्य लुगनुकरणे" (३।४।१९) इति द्वित्वं तकारस्य लुक्, "ऊर्व्यादिच्विडाचश्च" इति (४।३।५२) समासः ततः क्त्वो यप्।

(३) तद्विशेषणवतोऽन्त्यं तद्विशेषणान्तात् कार्य्यं भवतीति भावः। यद्येतत् विशेषणं पञ्चम्यन्तात् परं तदा तदादेः कार्य्यं भवति, यथा, "अद्वाद्वादेरिण्" इत्यत्र इण्विध्यर्थं विशेषणं अदिति, तद्विशेषणवत्या अदन्तप्रकृतेरिण् भवति इति लभ्यते, अदित्यनेन अदन्तस्य ग्रहणमिति फलितम्। परे क्वचिदाद्यञ्च, आदिको गुण इत्यनेन

ऋतो री (३।२।४१) चेक्रीयते। आद्‌गुणः परे आदिको गुणः (१।२।३) देवेन्द्रः। क्वचिदन्यत्रापि आतः प्रादेः कः (४।१।३९) सुस्थः।

## ३२। स्थाने सदृशतमोऽव्यक्तयोगे।

[स्थाने ७।, सदृशतमः १।, अव्यक्तयोगे ७।]

अव्यक्तसम्बन्धे सति स्थाने सदृशतम आदेशः स्यात् (१)। यथा ऐजिचश्चेति (१।१।१९) ए, ओ, ऐ, औ, स्थाने ऐ, औ, भवतः। तत्राव्यक्तयोगे सदृशतमत्वात् एदैतोः कण्ठ्य-तालव्ययोः स्थाने ऐर्भवति। ओदौतोः कण्ठ्यौष्ठ्ययोः स्थाने और्भवति। तत्रैषा, जायैहतः, तवौदनम्, हन्नौ। व्यक्तयोगे

---

अवर्णात् शब्दादिस्थितस्यैवेकारस्य गुणो भवति, यथा देव+इन्द्रः देवेन्द्रः [illegible] आद्यश्चेति चकारादन्यस्यापि ग्रहणं भवति, यथा आतः [illegible] आदिन्तादेव को विहितः।

(१) स्थान-प्रयत्नादीदिषु बहुषु सादृश्यहेतुषु सत्सु स्थानान्तर्य्यं बलीयः। अव्यक्त-योगः सन्देहः, सन्देहे सति यस्य येन सह स्थानगतसादृश्यं तस्य स्थाने स एवादिष्टो भवेत्। यथा ऐजिचश्च एचः स्थाने ऐच् भवेत्, एच्—ए, ओ, ऐ, औ, ऐच्—ऐ, औ। अत्र विशेषाकथनात् सन्देहः किं ए स्थाने और्भवेत् ओ स्थाने ऐरिति, ततोऽस्याः परिभाषायाः प्रवृत्तिः, यत एदैतोः कण्ठतालव्ययोः स्थाने ऐर्भवति एकारस्य ऐकारस्य चोच्चारणस्थानं कण्ठतालू अतस्तद्द्वयस्य स्थानगतसादृश्यं ततश्च तद्द्वयस्थाने ऐरेव भवेत्, एवं ओदौतोः कण्ठौष्ठ्ययोः स्थाने औरेव भवति। तत्रैषा इत्यादीनि उदाहरणानि। व्यक्तयोगे तथाविधसन्देहाभावस्थले असदृशतमोऽपि स्यात् एचः पाठेऽस्मिन्नित्यादिष्वने नैचः स्थाने आत्वं विहितम्।

असदृशतमोऽपि स्यात् । एचः पाठेऽस्मित्यात् (३।३।१४३) ग्लै—ग्लाता, दो—दाता ।

## ३३ । न लुब्लुका लुप्ते प्रत्यये तल्लक्षणं कार्य्य-मङ्गस्य ।

[न ०।१, लुब्लुका ३।, लुप्ते ७।, प्रत्यये ७।, तल्लक्षणं १।, कार्य्यं १।, अङ्गस्य ६।]

लुब्लुक्शब्दाभ्यां लुप्ते प्रत्यये तत्प्रत्ययलक्षणं(१) प्रकृत्य-वयवस्य कार्य्यं न भवति ।

वङ्गा जनपदास्तेषां निवास इत्यण्, जनपदवरणादिभ्यो लुप् (५।२।१४१) णिति वृद्ध्यभावः । लुपि युक्तवत्त्वात् बहुत्वं, तत्, यत् स्वमोर्लुकि (२।३।६२) टेरत्र (२।४।१८) भवति । अङ्गस्येति किं पञ्च साम, पयः, अत्र समुदायस्य सुब्लुक्लक्षणं पदत्वं भवत्येव न लोपविसर्गौ तु (२) पदत्वलक्षणौ, न सुपीति विहितौ । लुब्लुका लुप्ते निषेधात् प्रत्ययलोपे प्रत्ययलक्षणं कार्य्यं भवत्येव अग्निचित् क्विब्लोपे ह्रस्वात्तुक् पिति कृति (४।२।१०६) ।

---

(१) तत्प्रत्ययलक्षणं तत्प्रत्ययहेतुकम् ।

(२) न लोपविसर्गौ पदत्वलक्षणौ (पदसंज्ञाचिह्नकौ) यद्यप्यङ्गस्य कार्य्यकौ, तथापि तौ सुपि परे न विहितौ, ततः सुब्लुकि तयोः प्राप्तिरेव ।

## ३४। विप्रतिषेधे परं कार्य्यम्।

[ विप्रतिषेधे ७।, परं १।, कार्य्यम् १।]

तुल्यबलविरोधे परं यत् कार्य्यं तद्भवति। (१)

ऊठ् धौतः। आदिको गुणः (१।२।३) इति गुणे प्राप्ते परत्वात् वृद्धिरेजूठ (१।२।४) इति वृद्धिः।

## ३५। इष्टसिद्धैत्र प्रायः प्रक्लृप्तिः।

[ इष्टसिद्धै ४।, प्रायः ०१।, प्रक्लृप्ति. १। ]

इष्टार्थसिद्धैत्र प्रायो बाहुल्येन प्रक्लृप्तिः प्रकल्पनं कार्य्यम्।(२)

क्वचिदेकमाद्यन्तवत्। द्विरात्येकाच् (३।४ ३) इयाय अत्रादिवत्त्वं। यदनन्तादेरात एच्च (४।१ ११) अध्येयं अत्रान्तवत्त्वं। आदेशः स्थानिवत् क्वचित्(३), अस्ति ब्रुवोर्भूवचौ (३।३।८८) भवितव्यं वक्ता स्थानिवत्त्वात् धातोरिति तव्यादयः। क्वचिन्न स्यात् दिव उत् सौ त्वोत् द्यौः (२।३।९९) इति न सुंलोपः(४)।

---

(१) यथा 'धौतः' इत्यत्र गुणस्य वृद्धेरपि प्राप्तौ तुल्यबलविरोधः, ततश्च वृद्धिः परत्वात् सैव जाता।

(२) यथा इष्टार्थसिद्धै एकस्वरस्य क्वचिदादिवत् प्रकल्पनं, क्वचिदन्तवत्।

(३) आदेशः कार्य्ये तत्र क्वचित् स्थानिवत् स्थानितुल्यं (यस्य स्थाने जातं तत्तुल्यं) प्रवर्त्तते।

(४) स्थानित्वे तु 'हलङ्याप्' इति सुलोपप्रसङ्गः स्यात्। न पदान्तद्विर्व्वचन-वर्गान्तानुस्वारप्रथमतृतीयदीर्घलुक्‌विधिषु। एषु विधिष्वजादेशाः स्थानिवन्न भवन्ति, पदान्ते कौ स्तः यावादेशौ न स्यात्, द्विर्व्वचने दध्यत्र द्वित्वं न इत्याद्युन्नेयम्।

सूत्रे षष्ठ्यां ततः स्थाने पञ्चम्यां तत उत्तरे ।
सप्तम्याञ्च परे तस्मिन् गम्ये चोपपदे क्वचित् ॥ १५

सूत्रे षष्ठ्यां सत्यां षष्ठ्यन्तस्यैव स्थाने तत्कार्य्यं भवति। चक्षिङः ख्याञ् (३।३।११२) व्याख्याता। पञ्चम्यां सत्यां तत उत्तरे। पदात् त्वां मां त्वा मा वा (२।४।५३)। सप्तम्यां सत्यां तस्मिन् परे पूर्व्वस्य कार्य्यं 'इको यणचि' (१।२।१३) दध्यत्र ; गम्ये च त्यजय्यौ शक्यार्थे (१।२।१७) ; उपपदे च उदि ग्रहः (उणादि ७मसूत्रञ्च वार्त्तिकम्) उद्ग्राहः।

इति श्रीपद्मनाभदत्तकृतौ सुपद्मे व्याकरणे प्रथमस्याध्यायस्य प्रथमः पादः।

## स्वरवर्ण-कोष्ठी।

| | | | |
|---|---|---|---|
| अ इ उ (ण्) | ऋ ऌ (क्) | ए ओ (ङ्) | ऐ औ (च्) |
| अण् | ऋक् | एङ् | ऐच् |
| अक् इक् उक् | | एच् | |
| अच् इच् | | | |

| ह्रस्वस्वराः (५) (लघु) | | | | | दीर्घस्वराः (८) (गुरु) | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| अ | इ | उ | ऋ | ऌ | आ | ई | ऊ | ॠ | ए | ओ | ऐ | औ |
| क | कि | कु | कृ | कॢ | का | की | कू | कॄ | के | को | कै | कौ |
| | ि | ु | ृ | ॢ | ा | ी | ू | ॄ | े | ो | ै | ौ |

## व्यञ्जनवर्ण-कोष्ठी।

हल्

यय्

| ऊष्माणः | | कवर्गः | चवर्गः | टवर्गः | तवर्गः | पवर्गः | | |
|---|---|---|---|---|---|---|---|---|
| शर् — | खर् | क | च | ट | त | प | खय् | |
| श ष स | | ख | छ | ठ | थ | फ | | झय् |
| | | ग | ज | ड | द | ब — जश् | | |
| | | घ | झ | ढ | ध | भ — झष् | | |
| | | ङ | ञ | ण | न | म — ञम् | | |

झल्

यण् — य र ल व; ह — हश्

स्पर्शाः

# प्रथमाध्याये द्वितीयः पादः ।

## सन्धिप्रकरणम् ।

### अच्सन्धिः ।

**१ । एकः पूर्व्वपराचोः प्राग्यणः ।**

[ एकः १।१, पूर्व्वपराचोः ६।२, प्राक् ०।१, यणः ५।१ ] (१)

यणादेशात् प्राक् पूर्व्वपरयोरचोरेकादेशो वक्तव्यः ।

( अधिकारसूत्रमिदम् ) ।

**२ । अकः सवर्णे दीर्घः ।** [अकः ६।१, सवर्णे ७।१, दीर्घः १।१](२)

यण इत्यत्र "अन्यारादितरर्त्तेदिक्शब्दे." (२।३।२९) इत्यनेन दिग्-वाचि-प्राक्शब्दे[illegible] पञ्चमी । यण्शब्देन यणादेशो लक्ष्यते, ततश्च "इको यणचि" (१।२।१२) इत्यत्र पूर्व्वं यावन्ति सूत्राणि [illegible] तत्र तत्र पूर्व्वस्थितस्य परस्थितस्याचोरेकादेशः (उभयोरेकीभावः) स्यादित्यधिकारः । एतदधिकारसूत्रमन्तरेण "दण्डायम्" इत्यादि पदानि न सिध्येरन्, तथाहि दण्ड+अयम् इति स्थिते "अकः सवर्णे दीर्घः" इत्यनेन अयमित्यस्याकारे परतः पूर्व्वस्य "दण्ड" इत्यस्याकारस्य दीर्घत्वे "दण्डा अयम्" इत्येवं भवेत्, एवं सुख+इन इति स्थिते "सुख" इत्यस्याकारात् परस्य "इन" इत्यस्येकारस्य गुणत्वे "सुख एन" इत्येवं भवेत्, एवमन्यत्र ज्ञेयम् । एतत्सूत्रस्थितौ तु पूर्व्वपरयोरचोरेकीभावे "दण्डायम्", "सुखेन" इत्यादीनि पदानि सिध्यन्ति ।

(२) केवलं "सवर्णे दीर्घः" एतावदेव सूत्रमस्तु किमकः इति चेन्न सावर्ण्यं हि तुल्यस्थानप्रयत्नसाधर्म्यमात्रस्य स्वरस्य तादृशेनैव स्वरेण, तथा तुल्यस्थानप्रयत्नसाधर्म्यमात्रस्य वर्णस्य तादृशेनैव वर्णेन भवति ततश्चापये (अपे+ए) इत्यत्र 'ए'कारे परे एकारस्य,

अवर्णान्तादुत्तरस्य इकः स्थाने पूर्व्वपरयोरेकादेशो गुणो भवति। सुखेन, मालेह, देवोपमः, अर्द्धर्चः, तवल्कारः।

## ४। वृद्धिरेजूठः। [वृद्धिः १।, एजूठः ६।] (१)

अवर्णान्तस्य ग्रहणम्। इक्=इ, उ, ऋ, ऌ एतेषां दीर्घरूपाणि च। ततः अकारात् आकाराद्वा इकारस्य ईकारस्य वा स्थितौ उभयोरेकीभावः ए इति गुणादेशश्च स्यात्, एवं अकारात् आकाराद्वा उत्तरत उकारस्य ऊकारस्य वा स्थितौ उभयोरेकीभावः ओ इति गुणादेशश्च, अकारात्, आकाराद्वा उत्तरत ऋकारस्य ॠकारस्य वा स्थितौ उभयोरेकीभावः अर् इति गुणादेशश्च, तथा अकारात् आकाराद्वा ऌकारस्य ॡकारस्य वा स्थितौ उभयोरेकीभावः अल् इति गुणादेशश्च। यथा सुख+इन= सुखेन, माला+इह=मालेह, अथवा माला+ईह (मालायां ईहा यस्य), देव+उपमः (देवस्य उपमा यस्मिन्)=देवोपमः, अर्द्ध+ऋचः (ऋचोऽर्द्धं), तव+ऌकारः= तवल्कारः; तवल्कार इत्यत्र "यणो वर्ग्यस्य" (१।२।३२) इत्यनेन ककारस्य विकल्पेन [illegible]त्वं, लस्य तु "अनचि ह्रस्वहल्लोऽनर्हः" (१।२।६९) इत्यनेन वैकल्पिकद्वित्वं, ततश्च "द्वित्वं लस्यैव [illegible]स्यैव नोभयोरुभयोरपि तवल्कारादिषु बुधैर्बोध्यं रूपचतुष्टयम्"। कृष्ण+ ऋद्धिः इत्यत्र गु[illegible]ण "झयो झयि सवर्णे" (१।२।७९) इत्यनेन लोपे प्राप्ते 'कृष्णर्धिः' इत्येकविधं रूपं भवति, तथा [illegible]" (१।२।६२) इत्यनेन द्वित्वे प्राप्ते चासति लोपे कृष्णर्द्धिः इति विविधं रूपं भवति, असति लोपे द्वित्वाभावे च कृष्णर्द्धिः इति द्विविधं रूपं भवति, "यणो वर्ग्यस्य" इत्यनेन द्वित्वकरणे तु चतुर्विधमपि रूपं भवति।

(१) इह कार्य्यिणा इष्यते कार्य्यी कार्य्यं कार्य्येण इष्यते, निमित्तन्तु निमित्तेन तच्छेष-मनुवर्तते, इति न्यायात् निमित्तरूपस्य आदित्यस्यानुवर्त्तनं न तु कार्य्यस्य गुणस्य, न वा कार्य्यिण इक इति। आदित्यनेन पूर्व्वेतत् च, आ इत्येताभ्यां ग्राह्यम्, एच्=ए, ओ, ऐ, औ, तत्र च, आ इत्येताभ्यामुत्तरतः—ए स्थितौ ऐर्भवति, ओ स्थितौ और्भवति, ऐ स्थितौ ऐः, औ स्थितौ औः, ऊठ ऊकारस्य तु पूर्व्वसूत्रेण गुणप्राप्तावनेन वृद्धिर्विहिता, ऊकारस्य वृद्धिरौरेव। तव+एषा=तवैषा; माया+ऐहत=मायैहत; तव+ओदनम्

आदित्येव (१।२।३) अवर्णान्तादुत्तरस्य पूर्व्वपरायोरैकादेशो वृद्धिर्भवति। तवैषा, जायैहत, तवौदनम्, वृचौ, सौपगवी ; ऊठः खल्वपि धौतः ।

## ५। स्वादीरेरिणोः।

[ स्वात् ५।, ईरेरिणो (ईर, ईरिण्) ६॥ ] (१)

स्वशब्दादीरेरिणोरिकः स्थाने गुणापवादो वृद्धिः स्यात्। स्वैरं, स्वैरी, स्वैरिणी। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति ईरिण्याश्च सिद्धिः।

---

- तवौदनम्, वृत+औ = वृचौ, सा+औपगवी (उपगोरपत्यं इत्यण् ततो ङी)। ; ऊठ उदाहरणं धौतः, धावुधातोः क्तप्रत्यये 'व ऊठ' इत्यनेन वकारस्य ऊठादेशः, ततः धा+ऊ+त. इति स्थिते अनेन गुणेन ऊकारस्य वृद्धौ धौत इति रूपम्।

(१) इह खलु "स्वं रूपं शब्दस्याऽशब्दसंज्ञा"* इति परिभाषातः [illegible]दित्यत्र 'स्व' इति शब्दस्यैव ग्रहणं न तदर्थकशब्दानाम् [illegible]ऽऽद्गुणं बाधित्वा भविष्यति स्व'शब्दस्याकारादुत्तर[illegible]ईरस्यादावीकारे स्थिते "आदिको गुणः" इत्यनेन गुणे प्राप्ते तं

---

* शब्दस्य स्वं आत्मीयं उच्चारितं रूपम् एव गृह्यते न तु तत्पर्य्यायिकरूपाणि यस्माच्छब्दादुद्दिष्टं तत् तस्मादेव भवति न तु तद्वाचकादन्यस्मात् इति भावः। किन्तु घ-शब्दसंज्ञा शब्दशास्त्रे या संज्ञा कृता, तां विनेत्यर्थः तेन "घुमास्थागा" इत्यादौ घुकारेण घुसंज्ञक दा धा इत्येतयोरेव ग्रहणं भवेत् न तु "घु" इति स्वरूपात् यतो 'घु' इति शब्दशास्त्रकृता संज्ञा एवं कर्म्मण्यण् इत्यादावपि कर्म्मसंज्ञकानामेव ग्रहणं भवति न तु कर्म्म इति पदस्य कर्म्म इति शब्दशास्त्रकृता संज्ञा। कारशब्दयोगेऽपि तन्मात्रस्य ग्राहक-इत्यपि बोध्यम्।

६। ऋण, प्र, वत्सर, वत्सतर, दश, वसन, कम्बलादृणस्य।

[ऋण ——— ———कम्बलात् ५।, ऋणस्य ६।] (१)

ऋणादेरुत्तरस्य ऋणस्य ऋकी वृद्धिः स्यात् ।(गुणापवादः)। ऋणार्णम्, प्रार्णम्, वत्सरार्णम्, वत्सतरार्णम्, दशार्णम्, वसनार्णम्, कम्बलार्णम् ।

७। ऋतस्य तृतीयासमासे।

[ऋतस्य ६।, तृतीयासमासे ७।] (२)

---

बाधित्वा वृद्धिर्भविष्यतीत्यर्थः। विधिर्हि सामान्यतोऽथ विशेष एव बाध्यः, उत्सर्गः अपवादश्च, तत्र सामान्यो विधिरुत्सर्गः, विशेषोऽपवादः। उत्सर्गोऽपवादेनापवादविधि-र्बलीयान् इति परिभाषया उभयप्राप्तावपवादस्यैव बलवत्त्वं ज्ञायते तेनाऽत्र सामा-न्यतोऽ[illegible]गुरुस्य ऋकी गुण विहितेऽपि 'स्व' शब्दस्याकारादुत्तरः ईरित्यादेरिकार-स्थितौ वृद्धिरेव भ[illegible] विशेषविधानात् गुणाऽपवादो वृद्धिरेवमुत्तरत्र ज्ञेयम्। ननु सूत्रे 'ईरिन्' इत्यनयोरेव ग्रहणमस्ति न तु ई[illegible]तत् कथं स्वैरिणी (स्व + ईरिणी) इत्यत्र वृद्धिरिति चेदाह "प्रातिपदिकग्रहणे" इति धातुविभक्तिवर्ज्जमर्थवच्छब्दरूपं प्रातिपदिकम्, तस्य ग्रहणे (सम्प्रधारणे) स्त्री-पुं-नपुंसकविशिष्टस्यापि तस्य ग्रहणं भवति, अत्र ईरिन् इति प्रातिपदिकमात्रस्य ग्रहणं कृतं, न तु पुंरूपस्य स्त्रीरूपस्य वा ततस्तस्य त्रिष्वेव लिङ्गेषु वृद्धिर्भवितुमर्हतीति भावः।

(१) ऋणपत्यादिसूत्रे वत्सरशब्दोऽयं चान्द्रादीनामिष्टः, पाणिनीयसूत्रशाकटायना-दीनान्तु नेष्टः। ऋणस्यापनयनाय यदन्यदृणं क्रियते तदृणार्णम्। दशार्णो देशः, नदी च दशार्णा, ऋणशब्दोऽत्र दुर्गभूमौ जले च।

(२) ऋतशब्दोऽत्र ऋगतौ पीडायाञ्च वर्तते। परमऋतौ ऋतमिति कर्मधारयेः

तृतीयासमासे अवर्णान्तादुत्तरस्य ऋतस्य वृद्धिः स्यात्। शीतेन ऋतः – शीतार्त्तः, क्षुधया ऋतः – क्षुधार्त्तः ; तृतीयासमास इति किम् परमर्त्तः।

## ८। प्रादूढोढ्येषैष्याणाम्।

[प्रात् ५।, ऊढोढ्येषैष्याणाम् (ऊढ, ऊढि, एष, एष्य ६।॥] (१)

प्रादेषां वृद्धिः स्यात्। प्रौढः, प्रौढिः, प्रैषः, प्रैष्यः।

---

(१) अत्रोढोढ्योर्गुणापवादिका वृद्धिः, इतरयोस्तु "एङि पररूपम्" (१।२।२२) इत्यनेनावर्णलोपस्य बाधिका वृद्धिः। अर्थवद्ग्रहणेनानर्थकस्येति परिभाषया ऊढग्रहणेन क्तान्तमेव गृह्यते, न तु क्तवत्वन्तस्यैकदेशः, तेन क्तवतौ प्रोढवान् इत्येव रूपं भवेत्, न तु प्रौढवान् * इति सिद्धान्तकौमुदी। शाकटायनादीनाम्मते प्रशब्दात् ऊढशब्दस्योक[illegible]स्यापि वृद्धिर्भवति प्रौढ इति। एष साहचर्यात् एष्य इति अनव्ययस्यैव [illegible]प्रत्ययान्तस्य) ग्रहणं, तेन इषेर्णिजन्तात् क्यपि प्रैष्य इति रूपं भवे[illegible]ष्यरूपाभ्यामन्यत्र तु प्रेषणं प्रेषयति इत्यादौ न वृद्धिः। [illegible]तोः गुरुपधस्य च प्रेषः प्रेष्य इति क्रमेण रूपद्वय[illegible]यम्।

---

* प्रशब्दादुत्तरस्य ऊढ इत्यस्य वृद्धिर्भवतीति नियमे सति प्रशब्दादुत्तरस्य ऊढवान् इत्यस्यैकदेशस्य ऊढरूपस्य क्तवतौ (प्र + ऊढवान्) वृद्धिर्भवेन्न वेति जिज्ञासायां परिभाषामाह अर्थवदिति। अर्थवतो ग्रहणेऽनर्थकस्य तद्रूपस्य न ग्रहणं भवति। तथात्र सूत्रे गृहीत ऊढशब्दोऽयं वहधातोः क्तप्रत्ययनिष्पन्नः स चार्थवान्, वहधातोः क्तवतुनिष्पन्नस्य ऊढवदित्यस्यैकदेश ऊढस्तु निरर्थकस्ततस्तस्यात्र न ग्रहणं भवेदिति भावः। एतत्परिभाषाज्ञापकञ्च "व्रश्च, भ्रस्ज, सृज, मृज, यज, राज, भ्राज, परिव्राज, छशां षः" (२।३।११६) इत्यत्र राज इत्यस्य स्थितावपि भ्राजपरिव्राजयोर्ग्रहणम्।

## ९। अक्षादूहिन्याः। [अक्षात् ५।, ऊहिन्याः ६।]

वृद्धिः स्यात्। अक्षौहिणी सेना; पूर्व्वपदात् संज्ञायामगः (९।४।२) इति णत्वम्।

## १०। ऋगादिधातोरुपसर्गात्।

[ ऋगादिधातोः (ऋक्-आदि—धातु) ६।, उपसर्गात् ५। ]

प्रादेः परस्य ऋगादेर्धातोर्ऋको वृद्धिः स्यात्। प्रार्च्छति, परार्च्छति, उपार्च्छति; आदित्येव (१।२।३) अन्वृच्छति।(१)

## ११। वा सुप एङादेश्च।

[ वा ०१।, सुपः ६।, एङादेः ६।, च ०१। ] (२)

प्रादेः परस्य ऋगादेरेङादेश्च सुबन्तस्य धातोर्वृद्धिर्वा स्यात्।

(१) प्र[illegible]ऋच्छति, परा+ऋच्छति, अनु+ऋच्छति। धातोरिति किं प्रर्षभं (प्र+ऋषभ) वनं, उपसर्गादिति किं [illegible] यस्मादृच्छात् स प्रर्च्छको देशः। केचित्तु "ऋतांवाङी वा" इति वचनमाश्रयाणा आर्त्तिः, [illegible]ऽपक्षयं प्रतिपादयन्ति। अन्ये तु आङ्‌ पूर्व्वात् अर्तेः क्तिनि आर्त्तिरिति रूपं भावयन्ति।

(२). विधये विशेषणमन्त्यमुत्तरं त्वाद्यन्तेति न्यायात् (१।१ ३१) सुपपदेनात्र सुबन्तमुच्यते, तदपि धातुना सम्बध्यते ततश्च य आदौ सुबन्तः पश्चाच्च धातुत्वं गतः, प्रादेः परस्य तादृशस्य ऋगादेरेङादेश्च वृद्धिर्वा स्यादित्यर्थो लभ्यते। यथा प्र+ऋषभीयति प्रकर्षेण ऋषभ इवाचरति, ऋषभशब्दात् (सुबन्तात्)क्यच्, तत ऋषभीय धातोः+लट् तिप् एवमन्यत्र, लृकार इवाचरति लृकारीयति, एक इवाचरति एकीयतीत्यादौ। सर्व्वत्र "क्यणमानऽव्ययात्" (३।१।५) इति क्यच्, "क्यचीदस्य" (३।१।४७) ईत्वमनेनास्य ईत्वञ्च।

प्रार्षभीयति, प्रर्षभीयति, उपाल्कारीयति, उपल्कारीयति; एङादेः उपैकीयति, उपेकीयति, प्रौषधीयति, प्रोषधीयति।

## १२। इको यणचि। [इकः ६।, यण् ०१।, अचि ७।] (१).

इकः स्थाने अचि परे यणादेशो भवति। (एकः पूर्व्वपरयोः (१।२।१) इति निवृत्तम्) दध्यत्र, मध्विदम्, पित्रर्थः, लाकृतिः।

## १३। एचोऽयवायावो वान्तो यि च प्रत्यये।

[एचः ६।, अयवायावः (अय्, अव्, आय् आव्) १।॥, वान्तः (व-अन्त) १।, यि ७।, च ०१।, प्रत्यये ७।] (२)

एचः स्थाने अचि परे यथासंख्यं अय्, अव्, आय्, आव्,

---

(१) प्रत्याहारेषु तदाद्यन्तयोर्मध्ये निरुद्धलक्षणेति परिभाषया इक्पदेन (इ १८, उ १८, ऋ १८ ऌ १२), षट्षष्टिर्गृह्यते, यण्पदेन च (य २, व २, ल २, र १) सप्त[गृह्यन्ते], एवञ्चैतेषां विषमत्वात् यथासंख्यग्रहणाऽसम्भवेन स्थानत एवान्तर्यात् [आन्तर]तमादेश इति मनोरमा, इकारस्य यकारेण सहैकस्थान... [इत्या]न्तर्यमतमत्वमत इकारस्थाने य; एवं उ स्थाने व, ऋ स्थाने र, ऌ स्थाने ल इति ज्ञेयम्। अचीति 'असवर्णे' एव ज्ञेयं सवर्णे तु दीर्घ एव, यण्+अचि इति पदयोर्विभाषया न सन्धिः, सन्धिकरणे तु यणचि स्यात्। दधि+अत्र इति स्थिते अनेन सूत्रेणेकारस्थाने यादेशे च "अनचि च [illegible] ऽनर्हः" "[illegible]" सूत्रद्वयेन धकारयकारयोर्द्वित्वविकल्पाच्च चत्वारि रूपाणि भवन्ति—(१) एकधमेकयं, (२) द्विधं द्वियं, (३) द्वियमेकधं, (४) द्विधमेकयम्। मधु+इदम्, पितृ+अर्थः, ऌ+आकृतिः, इति विशेषः। कलापमते पित्र्यमित्यत्र तद्धित-यकारे परे च रादेशः।

(२) एच्—ए, ओ, ऐ, औ, इति चत्वारः, अय्, अव्, आय्, आव्, इति च चत्वारो विधेयाः, अतएव यथासंख्यप्राप्तिस्तत्र ए स्थाने अय्, ओ स्थाने अव्, ऐ स्थाने

इत्येते आदेशा भवन्ति ; यादौ प्रत्यये च वान्तः—अव्, आव्, च स्यात् । अग्नये, वायवे, राये, नावे ; यि च—गव्यति, भाव्यम्, प्रत्यय इति किम् गोयानम् ; धातोर्नातन्निमित्तस्य—लूयमानस्यापत्यम्—लौयमानिः पुत्रः, नायं यप्रत्ययनिमित्त औत् ।

## १४ । गोरदन्ताऽवो वाऽन्ते ।

[गो ६।, अदन्तावः (अदन्त-अव) १।, वा ०।, अन्ते ७।]

पदान्ते वर्त्तमानस्य गोरचि परे ओतोऽदन्तावो वा स्यात् । गवेश्वरः गवीश्वरः, गवाजिनं गोऽजिनम् ; अन्त इति किम् ? गवि ।

## १५ । गवाक्ष-गवेन्द्रौ नित्यम् ।

[गवाक्ष गवेन्द्रौ (गो + अक्ष, गो + इन्द्र) १।, नित्यम् १।]

एतौ नित्यं स्याताम् । गवाक्षः(१), गवेन्द्रः ।

आय, औ स्थाने आव इति सुः, यकारादिप्रत्यये परे वान्तादेशः अर्थादोदौतोः स्थाने अव, आव एतौ स्तः । अग्ने + ए, वायो + ए, रै + ए, नौ + ए, गामिच्छतीति गो + काम्य, गो + य, गव्य + ति, भौ + यं । गवां यानं गोयानम् इति न प्रत्ययो यकारः । धातोर्नेति यादौ प्रत्यये परे धातोरेचदेशान्तादेशस्तर्हि तन्निमित्तस्यैव यकारनिमित्तस्यैव धातोरोकारस्यौकारस्यैवाऽन्यनिमित्तकस्य तु न ; धातुपदेनाऽत्र नामधातुव्यतिरिक्त एव ग्राह्यः । लूयमानस्याऽपत्यमित्यत्राऽपि इञि सत्याम् औकारस्य यन्निमित्तत्वाभावादावादेशो मा भूत् ।

(१) गवां किरणानाम् अक्षीव समासान्तात्प्रत्ययः । अयं शब्दो वातायने रूढ पुंस्त्वलीकात् । कलापमते नित्यत्वं वातायनविषयएव, पाण्यक्षे तु न भवत्येव गोऽक्षि ।

## १६ । गव्यूतिः क्रोशयुगे ।

[गव्यूतिः (गो + यूति) १।, क्रोश-युगे ७।]

निपात्यते । अन्यत्र गोयूतिः ।

## १७ । चय्यजय्यौ शक्यार्थे ।

[चय्य जय्यौ (चि + य, जि + य) १॥, शक्यार्थे (शक्य-अर्थ) ७।]

शक्यार्थे गम्ये एतौ निपात्येते । चेतुं शक्यः चय्यः, जेतुं शक्यः जय्यः ; अन्यत्र चेयं पापं, जेयं मनः ।

## १८ । क्रय्यस्तदर्थे । [क्रय्य. (क्रि + य) १।, तदर्थे ७।]

क्रयार्थप्रसारिते द्रव्ये क्रय्यो निपात्यते । अन्यत्र क्रेयः (१) ।

पदान्ते [७।] अधिकारोऽयम् । (इतः परं कार्याणि पदान्ते विहितानि स्युरित्यर्थः) ।

## १९ । एङोऽतो लोपः । [एङः ५।, अतः ६।, लोपः १।]

(१) स्वयं धान्यादि दत्त्वा यत्र तन्मूल्यं गृह्णाति, तत्र धान्यं क्रय्यं, यत्र तु द्रव्यं दत्त्वा परकीयधान्यं गृह्णाति तत्र धान्यं क्रेयं, मूल्यरूपद्रव्यं तु न क्रय्यं, नाऽपि क्रेयं, किन्तु धान्यादिकमेव ; तथा शक्तिस्वभावादत्र भाष्यस्वरसोऽपीति शब्देन्दुशेखरः । अन्ये तु तस्यार्थः तदर्थः द्रव्यविनिमयः तत्र वर्त्तमानस्य क्रिय एतौ प्रत्यय भवति, यथा क्रय्या गौः [illegible]ऽप्रसारिता इत्यर्थः ।

पदान्ते(१) वर्त्तमानादेङः परस्यातो लोपः स्यात् । तेऽत्र, कोऽत्र; पदान्त इति किम्? नयनम्(२) लवणम् ।

## २० । ङसिङसोश्च ।

[ङसि ङसोः ६॥, च ०।१।] (३)

[अपदान्तार्थं वचनम्] । एङः परस्य ङसिङसोरतो लोपः स्यात् । अग्नेः, धेनोः ।

## २१ । अदेत्यपदान्तस्याऽजसि ।

[अदेति (अत् + एत्) ७।, अपदान्तस्य ६।, अजसि ७।]

अति, एति च परेऽपदान्तस्यातो लोपः स्यात् । यजन्ति, यजे, लवणस्यति, अत इत्येव [१।२।१८] यान्ति; अजसीति किम्? देवाः, विप्राः(४) ।

---

(१) सुप्तिङन्तं पदं, तस्य अन्तः पदान्तः, तस्मिन् ।

(२) नीधातोः टनप्रत्ययेन अन-प्रत्यये परे नीधातोरीकारस्य गुणे ने + अन इति स्थिते "एचोऽयवा" (१।२।१३) इत्यनेन ए स्थाने अय्; एवं लूधातोः टन-प्रत्ययेन लवण, लू इत्यस्य ऊकारस्य गुणे लो + अन इति स्थिते तेनैव सूत्रेण ओ स्थाने अवादेशः । 'ने'रित्यस्यैकारः, 'लो'रित्यस्य ओकारस्य न पदान्ते वर्त्तमानत्वात्ताभ्यां परतोऽकारस्य न लोपः । "एङोऽतः" इति सूत्रम् "एचोऽयवा" इत्यस्यापवादकम् ।

(३) एङः परस्थिताकारलोपस्य पूर्वसूत्रेण सिद्धावपि पुनरेतत्सूत्रकरणमपदान्तार्थम्, अपदान्ते वर्त्तमानस्याप्येङ उत्तरतोऽतो लोपः स्यादित्यर्थः । 'अग्ने'रित्यस्य एकारो न पदान्तः किन्तु प्रातिपदिकान्तः ।

(४) यज + अन्ति, यज + ए, लवणमिच्छतीति क्यच्, अस्यागमः, ततो लट् + ति = लवणस्य + स्य + ति । या + अन्ति अपदान्त इति विधानादाकारस्य न भवति, अतः सवर्णे

## २२ । धात्वेङि प्रादेरवर्णस्याऽनिणोधोः ।

[धात्वेङि (धातु-एङ्) ७।, प्रादेः (प्र-आदि) ६।, अवर्णस्य ६।, अनिणोधोः (न-इण-एध) ६॥] (१)

धातोरेङि परे प्रादेरवर्णस्य लोपः स्यात् । [वृद्धेरपवादः] । प्रेजति, परोखति; अनिणोधोरिति किम्? प्रैति, प्रैधते; एङीति किम्? उपेहि । इङिकोर्नित्यमधियोगः । अध्येता, अध्येति ।

## २३ । शकादेरन्ध्वादौ ।

[शकादेः (शक-आदि) ६।, अन्ध्वादौ (अन्धु-आदि) ७।]

अन्ध्वादौ परे शकादेरवर्णस्य लोपः स्यात् । शकन्धुः,

---

(१।२।२) इति दीर्घः, एवं देवाः विप्रा इत्यत्राऽपि देव+अस् (जस्), विप्र+अस् (जस्) ।

(१) अथमत्र सम[illegible] धातोरिङ् धात्विङ् इति तत्पुरुषः, आहोस्वित् धातुश्चासाविङ् चेति कर्म्मधारयः, इत्याशङ्काह अनिणोधोरिति वर्ज्जनात् तत्पुरुष एवेति सूचयन्नाह वृत्तौ धातोरेङीति । वृद्धिरेचि (१।२।४) इत्यनेन या वृद्धिस्तस्या एवाऽपवादः, अन्यथा "वा सुप्येङादेव" (१।२।११) इत्यस्य वैयर्थ्यं स्यात्; सिद्धान्तकौमुदीमतेऽस्यापि चेङादौ सुब्धातौ वेति वक्तव्यम् । अथोत्सृष्टाऽनुबन्धत्वेन इणसमानरूपं इङिकोरप्यस्ति, तयोरपि किं निषेधः स्यादित्याशङ्काह इङिकोर्नित्यमधियोग इति न तयोरन्यत्र योगः सम्भाव्यते । प्र+एजति, परा+ओखति, प्र+एति (प्र+इ+ति), प्र+एधते (प्र+एध+ते); एङीति किं उप+इहि (उप+इण+हि); अधि+इता, अधि+एति इको यणचीति (१।२।१२) इकारस्य यत्वम् ।

कुलटा, शुद्धोदनः, समनन्तरम्, समशनम्, अर्द्धशनम्, हलीषा, लाङ्गलीषा(१)। सीमन्तः केशेषु, सीमान्तोऽन्यत्र।

## २४। ओमाङोश्च। [ओमाङोः (ओम्-आङ्) ७॥, च ०।१।]

ओमि आङि च परे अवर्णस्य लोपः स्यात्। कोमिति, आ+ऊढ़ा=ओढ़ा अद्योढ़ा, आ+इहि=एहि उपेहि।

(१) शक+अन्धुः (शकानां अन्धुः कूपः), कुल+अटा (अटतीति अटा, कुलाद्‌अटा, अथवा कुलानि अटति, भ्रमती स्त्री, भिक्षुकी च), शुद्ध+ओदनः (शुद्धः ओदनोऽस्य, तत्पुत्रः शौद्धोदनिः), सम+अनन्तरम् (समम् अनन्तरम्), सम+अशनं (समम् अशनं) भाष्यविरुद्धमिदं द्वयम्, सम्‌उपसर्गेण समासः; अर्द्ध+अशनं (अशनस्यार्द्धं त्रिकाण्डशेषकोषादिसम्मतमिदम्), हल+ईषा, (हलस्य ईषा गमनं), लाङ्गल+ईषा (लाङ्गलस्य ईषा गमनं) ईष गतिहिंसादानेषु ईषणमीषा. दण्ड, हलदण्डार्थस्तालव्यमध्य ईषाशब्दस्य तु नेह ग्रहणम् "धातौ हलस्लाङ्गलमनसामीषाया"मिति संज्ञोक्तत्वात्। मनीषेति च मन+ईषा मनस+ईषा, मनसः सलोपस्य लक्षणाभावात् पृषोदरादौ द्रष्टव्यम्)। सीम+अन्तः (सीमान्तः केशेषु इति नियमः, सीम[illegible]ति, अदि अति बन्धने इति अन्तधातोः पचाद्यचीति केचित्)। अन्ये तु अटामवतीति व्युत्पत्त्या अटव्यादयोऽप्युक्ताः, अटा वयः पक्षिणो यत्रेति अटवीति केचित्। अनेन तु समासोऽर्थोऽस्तीति समर्थः इत्यादीनप्युदाहरन्ति। सिद्धान्तकौमुद्यां कर्कन्धुः (कर्क+अन्धुः कर्काणामन्धुः बदरीवाची तु कर्कन्धूशब्दो दीर्घान्तकृप्रत्ययेन साध्यः), पतञ्जलिः (अञ्जलेः पतितः निपातनात् साधुः; पतन्नञ्जलिर्यस्मिन्निति वाक्ये तु पतञ्जलिर्भवतीति तत्त्वबोधिनी, स हि पतञ्जलिनामा ऋषिः सन्ध्याकरणसमये कस्यचित् ऋषेर्हस्तात् पतित इत्यैतिह्यम्), सारङ्गः पशुपक्षिणोः (सार+अङ्ग) अन्यत्र साराङ्गः, मार्त्तण्डः (मृतण्डादागतः); श्रीमान्दुर्गादासकृतमुग्धबोधटीकायां बृहस्पति-वाचस्पत्यादयोऽप्युदाहृताः।

## २५ । ×एवे चाऽनियोगे ।

[एवे ७।, च ०१।, अनियोगे ७।] (१)

एवे परेऽवर्णस्य लोपः स्यात् । अद्येव, इहेव ; नियोगे तु अद्यैव गच्छ, इहैव तिष्ठ ।

## २६ । ओत्वोष्ठयोर्वा समासे ।

[ओत्वोष्ठयोः (ओतु + ओष्ठ) ७॥, वा ०१।, समासे ७।]

अनयोः परयोरवर्णस्य लोपो वा स्यात् । स्थूलोतुः स्थूलौतुः, बिम्बोष्ठी बिम्बौष्ठी । समास इति किं ? तवौष्ठं रक्तम् (२) ।

## २७ । न सन्धिर्विसर्ग-य-व-लोपे ।

[न ०१।, सन्धिः १।, विसर्ग-य-व लोपे ७।] (३)

---

(१) नियोगोऽवधारणं तस्य निषेधात् सादृश्यसम्भावनयोरयं विधिः, अद्य+एव, इह+एव, एवं चर्म्मेव वस्त्रः, ततदेवाभूत्

(२) स्थूल+ओतुः, बिम्ब+ओष्ठी ; अवर्णस्य ओत्वोष्ठयोश्च एकत्र समासे सूत्रमिदं प्रवर्त्तते, तेन कृष्णसृत+ओष्ठव्रणक्ते इति स्थिते कृष्णसृतौष्ठव्रणक्ते इत्येव रूपं भविष्यति, अत्र हि कृष्णसृत इति ओष्ठव्रण इति समासद्वयम् । आ ओष्ठ ओष्ठः, अकोष्ठमित्यत्र परत्वादनादेशः ।

(३) सन्धिशब्देनात्र न केवलं वर्णानां सन्निकर्षरूपोऽर्थः, परमुपचारात् तद्विषयकमपि सवर्णनिमित्तकदीर्घादिकम् ; तेनाऽयमर्थः, दीर्घादिकं सन्धिकार्य्यं न भवति विसर्जनीयादिलोपः सन्धिः स्यादेवेति इतो पुनःशब्दसूचितम् । कः+एषः भोस्गो इति (१।३।२८) विसर्गलोपे क+एषः इति स्थिते "हशिरेऽप्लुतः" (१।२।४) इत्यनेन हशिप्राप्तौ अनेन निषेधः ; असौ+इदमिति स्थिते "एचोऽयवेति" (१।२।१२) सूत्रेण एस्थाने य, ततः

[अचीत्येव (१।२।१२)] पदान्ते, विसर्गादिलोपे कृतेऽचि पुनः सन्धिर्न भवति। क एषः, अस्मा इदम्, असा इन्द्रः।

## २८। सैष इति पादपूरणे।

[सैषः (सः+एषः) १।, इति ०१।, पादपूरणे ७।]

सैष इत्यपि भवति श्लोकस्य पादपूरणञ्चेत्। सैष दाशरथी रामः, सैष राजा युधिष्ठिरः, सैष विप्रो दयाशीलः, सैष योगी विवर्त्तितः।

## २९। ईदूदेतो द्विवचनस्य।

[ईदूदेतः (ईत्+ऊत्+एत्) ६।, द्विवचनस्य ६।]

ई, ऊ, एकारान्तस्य द्विवचनस्याऽचि परे सन्धिर्न भवति। अग्नी इमे, वायू अत्र, खट्टे इह, पचेते इति।

मणीवादेर्वा। मणीव मणी-इव; दम्पतीव दम्पती-इव; रोदसीव रोदसीइव(१)।

---

अस्माय+इदमिति इति स्थिते "व्योर[illegible]।२१) इत्यनेन यकारलोपे अस्मा+इदं इत्यत्र "आदिको गुणः" (१।२।३) इत्यनेन गुणप्राप्तौ निषेधः। असौ+इन्द्रः इति स्थिते "एचोऽयवेति औस्थाने आवादेशः असाव+इन्द्रः, ततो "व्यो" य वकारलोपे असा+इन्द्रः" इति स्थिते, "आदिको गुण" इत्यनेन गुणप्राप्तौ निषेधः। सः+एष इत्यत्र विसर्गलोपेऽपि वार्त्तिकबलात् पुनः सन्धि, स्यादेव पादपूरणमात्रार्थं॥

(१) "मणीव" इत्यादौ न इवशब्दः किन्तु वार्थे वा शब्दः व शब्दो वेति केचित्, ततश्च सूत्रमिदं न सर्व्वसम्मतम्। जायापती इत्यत्र दम्पती जम्पती च भवति। केचित्तु पेचुषी विदुषी-प्रभृतीनि पठ्यन्ते। तथाहि "मणी भार्य्यापती चैव दम्पती जम्पती तथा। रोदसी वाससी चैव इवे जायापती तथा। "अनेऽरपीह पठ्यन्ते पेचुषीमृतीनपीति मणीवादयः"। इति श्रीमद्विद्यारत्नकृतमुग्धबोधटीकायाम्।

## ३० । अदसो मात् । [अदस ६।, मात् ५।] १

अदसो मकारात् परस्य ईदूतौ न सन्धिः ; एदन्त न सम्भवति । अमी अत्र, अमू आनय ; मादिति किम् ? अमुकेऽत्र ; कथम् "अम्यत्र प्रतिभाति मे" ? अमी रोगीति नाऽयमदसः ।

## ३१ । एकस्याचोऽनाङोऽव्ययस्य ।

एकस्य ६।, अच ६ अनाङ (न + आङ) ६।, अव्ययस्य ६।

अव्ययस्याङ्वर्जितस्यैकाचो न सन्धिः । अ अवेहि, इ इन्द्रं पश्य, उ उत्तिष्ठ ; "वाक्यस्मरणयोरङिदाकारोऽस्ति"— आ एवं मन्यसे ? आ एवं किलैतत् । अनाङ् इति किम् ? ईषदर्थे, क्रियायोगे, मर्य्यादायाम्, अभिविधावाङ्—आ + उष्णं = ओष्णम्, आ + इहि = एहि, आ + अङ्गात् = आङ्गात्, आ + अर्य्येभ्यः = आर्य्येभ्यः । (२)

(१) "अदसो मा[illegible]दाति पृथक् सूत्रकरणात् द्विवचनानुवृत्तिः, केवलमीदूदेता-सन्तर्भितत्वादपि "यावत् सम्भवस्तावद्विधि"रिति अदसो मकारात् परस्येकारस्योकारस्य-[illegible] एदन्त न सम्भवतीति । अमी + अत्र = अमीअत्र कथमत्र सन्धिरित्यत आह, अमी रोगीति, अत्र रोगिवाचकोऽमीशब्द एव न तु अदसः प्रथमा-बहुवचनरूपम् ।

(२) "अ अवेहि" इत्यादिषु अकार-इकार-उकाराः सम्बोधनार्थाः । वाक्यस्मरणयोः आकारो-पूर्वानुस्मृतौ । ईषदर्थे = अल्पार्थे, आ + उष्णम् = ओष्णम् अल्पोष्णमित्यर्थः ; क्रियायोगे = क्रियावाचकपदपूर्व्ववर्त्तिनि, आ + इहि = एहि, इहीति क्रियापदम् ; मर्य्यादायां = सीमायाम्, आ + अङ्गात् आङ्गात् अङ्गदेशपर्य्यन्तमित्यर्थः ; अभिविधौ = अभिव्याप्तौ, आ + अर्य्येभ्यः आर्य्येभ्यः अर्य्यान् व्याप्येत्यर्थः । अत्र प्रथमे पदद्वये आदिशो गुणः

## ३२। ओतः। [ओतः ६।]

ओदन्ताऽव्ययस्य न सन्धिः। नो इह, अहो अहं, उताहो इति।

## ३३। वा सम्बुद्धाविती। [वा ०।, सम्बुद्धौ ७।, इतौ ७।]

इतौ परे सम्बुद्धावोदन्तस्य वा न सन्धिः। वायो इति, वायविति; भानो इति, भानविति; इताविति किम्? वायवायाहि।

## ३४। उञ ऊँ च। [उञ ६।, ऊँ ०१।, च ०।]

उञ इतौ परे वा न सन्धिः, तस्य च ऊँ वा स्यात्। उ इति, विति वा, ऊँ इति च। (१)

## ३५। दूरादाह्वाने। [दूरात् ५।, आह्वाने ७।]

न सन्धिर्वा। भो विप्र आगच्छ, भो विप्रागच्छ वा।

इत्यस्य. अन्यत्र तु अकः सवर्णे दीर्घ इत्यस्य। तथाहि बोपदेवः—"मर्य्यादायामभिविधौ क्रियायोगेषदर्थयोः। य आकारः स ङित् प्रोक्तो वाक्यस्मरणयो-रङित्"।

(१) पाणिनिमते—इतौ परे उञ ऊँ इत्ययमादेशः स्यात्। तथा मयः (प्रत्याहारात्) परस्य ञ्वो वो वा स्यादपि (१।१७८) (८।३ ३३) पाणिनीये। मय प्रत्याहारस्तु (११।१।) सूत्रे द्रष्टव्यम्। बोपदेवमते उञ, सन्धिं वा माप्नोति इतौ परे, मप् प्रत्याहारात् परस्तु वकारो वा स्यादपि। इति श्रीमद्विद्यारत्नकृतमुग्धबोधटीका। अपमर्षारैक्यमेव।

## ३६ । ईदूदाद्यसन्धिः प्रगृह्यम् ।

[ईदूदाद्यसन्धि. (ईत् ऊत् आदि-असन्धिः) १।, प्रगृह्यम् १।]

ईदूदादीनां येषां सन्धि र्न विहितस्ते प्रगृह्यसंज्ञकाः प्रयोगे द्रष्टव्याः । (संज्ञा-सूत्रम्) ।

## ३७ । गोरति । [गोः ६।, अति ७।]

गोशब्दस्याति परे सन्धिर्न भवति वा । गो अग्रम्, गवाग्रम्, गोऽग्रम् । (१)

## ३८ । इकोऽसवर्णे ह्रस्वश्च ।

[इकः ६।, असवर्णे ७।, ह्रस्वः १।, च ०।] (२)

पदान्तेऽसवर्णे परे इको वा न सन्धिः; दीर्घस्य च ह्रस्वः स्यात् । दधि अत्र, नदी अत्र, वधू ऋतुः । ऋति ऋवर्णाऽवर्णयोश्च । (३)

(१) एङन्तस्य गोशब्दस्येति व्याख्येयम्, तथाहि चित्रगु+अग्रं चित्रग्वग्रमिति नित्यमेव सन्धिः स्यात् इति सिद्धान्तकौमुदी ।

(२) अत्र ह्रस्वविधिसामर्थ्यादेव प्रकृतिभावे (सन्ध्यभावे) सिद्धे तदनुकर्षार्थश्चकारो न कर्तव्यः, इति भाष्यम् । फलं नदि अत्र; एवं चक्री अत्र, चक्रि अत्र, चक्र्यत्र । वार्तिकमते समासमात्रे ह्रस्व मतस्य गतिः । यथा वाप्यश्व, नदी मूले वधू ऋतु-रित्युदाहरणं वार्तिक-विकल्पमेव । वोपदेवेनापि समासस्थले सूत्रस्यास्य निषेधः कृतः । विद्यारत्नास्तु क्वचिदनित्यसमासेऽपीत्याहुः ।

(३) ऋत्यकः (६।१।१२८) इति पाणिनिः । ऋति परे अकः प्राग्वत् (सन्ध्यभावः, दीर्घस्य च ह्रस्वोऽपीति तदर्थः) यथा ब्रह्मा ऋषिः, ब्रह्म ऋषिः, ब्रह्मर्षिः । "ऋत्यकः" इति वोपदेवः ।

पित्त्र ऋणम्, हिम ऋतुः, खट्व ऋष्यः ; पक्षे यथाप्राप्तञ्च दध्यत्र, वध्वृतुरित्यादि ; इक इति किम्? ब्रह्म ऋषयः, ब्रह्मर्षयः।

## ३९। यणा व्यवधानं व्याडिगालवयोः।

[यणा ३., व्यवधानं १।, व्याडिगालवयोः ६॥]

अनयोर्मतेन इको यणा व्यवधीयते। दधियत्र, मधुवत्र, भूवादि।

इति अचसन्धिप्रकरणम्।

# हल्सन्धिः ।

## ४० । मोऽनुस्वारो हलि ।

[मः ६।, अनुस्वारः १।, हलि ७] (१)

पदान्ते हलि परे मकारस्यानुस्वारो भवति । देवं पश्यं, पुंभ्याम् ।

## ४१ । नश्चापदान्ते झलि ।

[नः ६।, च ०।१।, अपदान्ते ७।, झलि ७।] (२)

अपदान्ते झलि परे नस्य मस्य चानुस्वारो भवति । पयांसि, यशांसि, सिञ्चति, आक्रंस्यते । झलीति किम्—हन्यते, रम्यते ।

(१) हलः (१।१।२) कादयो हान्ताः, तेषु परतः मकारस्यानुस्वारो भवति । देवम् पश्य = देवं पश्य ; पुमस् + भ्याम् पुमाहितेऽयचीति (२।१।३) पुंस्त्वस्य पदत्वे संयोगान्तस्य रात् सदिपीरिति (२।१।११०) सलोपे अनेन सूत्रेण मकारस्यानुस्वारः, पुंभ्याम् । अत्र हलीति ग्रहणम् अचो निवृत्त्यर्थम्, अचि मा भूदित्यर्थः, तेनाऽवसानेऽप्यनुस्वारो भवतीति पद्मनाभपञ्जिका ।

(२) ङमयणहीनो हल् = झल् (१।१।१२), तस्मिन् परे अपदान्तस्य नस्य चकारान्मकारस्य समुच्चयः मस्य च इत्यर्थः अनुस्वारो भवति । पयांसि = पयस् + जस्, जश्शसोः शिर्झलचोर्नुम् चेति (२।१।६५) जस्स्थाने शि (इ), नुमागमश्च पयन्स् + इ, इति स्थिते सान्तमहतो दीर्घो नुमीति (२।१।८७) यकारस्थितस्याकारस्य दीर्घत्वं, पयान्सि इति स्थिते सतयानेन सूत्रेण नकारस्याऽनुस्वारः पयांसि, एवं यशांसि ; सिञ्चति सिच + लट् तिप् कर्त्तरि शप् (अ), शे मुचादेः (३।२।४७) इति नुम् ; सिन्चति इति स्थिते अनेन

## ४२ । मो हे मनयवलपरे मनयँवँलँ वा ।

[मः ६।, हे ७।, म-न-य-व-ल-परे ७।, म, न, यँ, वँ, लँ, ०१॥, वा ०१।] (१)

**हकारे मनयवलपरे मस्य म, न, यँ, वँ, लँ, इत्येते वा स्युः । किम्ह्मलयति, किंह्मलयति, किन्ह्नुते, किंह्नुते, कियँह्यः, किंह्यः, किवँह्वलयति, किंह्वलयति, किलँह्लादयति, किंह्लादयति ; सम्राट्(२) । क्विबन्तराजि परे मकारोऽत्र निपात्यते । सम्राट्—राजसूययाजी, सर्व्वभूमीश्वरः, सम्राजौ सम्राजः ।**

मकारस्यानुस्वारः सिध्यति, ततः अनुस्वारस्य ययि परसवर्णः (१।२।४७) इत्यनेनानुस्वारस्य णकारपरसवर्णे आदेशे सिध्यति । आ+क्रम+लृट्+ते । इन् कर्मणि लट्ते, रम् कर्मणि लट् मे ।

(१) मश्च, नश्च, यश्च, वश्च, लश्च, मनयवलाः ते परे यस्मात् स मनयवलपरः (हकारः)—तस्मिन् म, न, य, व, ल, परे हकारे इत्यर्थः तादृशे हकारे परे मस्य म, न, यँ, वँ, लँ इत्येते विकल्पेन स्युः । अनुस्वारापवादः, मपरे हे मकारः, नपरे हे नकारः, इत्येवं क्रमः, यवलास्तु स्वभावात् सानुनासिका निरनुनासिका प्रयुज्यन्ते अत्र तु सानुनासिकाना[illegible]मागे इति यँ, वँ, इत्यादिना सूचितम् । ज्वल, ह्वल, ह्मल, चलने घटादिः, ह्नु अपनये, ह्यः शब्दोऽव्यवहितातीतवाचकः, ह्लादि सुखे च । यद्यपि हे म, न, य, व ले इत्युक्तेऽपि तेषां सप्तमीबलात् परत्वं गम्यते, तथापि परशब्देन तेषामव्यवधानत्वं सूचितम् तेन 'किं ह्रस' इत्यत्र न स्यात् ।

(२) सम्राडित्यत्र "मो राजि समः क्वौ (पा ८।३।२५)" इत्येव विशेषसूत्रमपेक्ष्य निपातस्य साधीयस्त्वं सूचयति क्विबन्तराजीति । तेन संरेजे इत्यत्र न स्यात्, राजीति किं संयत् । सम्राट् सं+राज+क्विप्, क्विप्लोपे सम्राज् शब्दो जातः ततः सु, ततः व्रश्चभ्रस्जेत्यादिना (२।३।११६) जस्य षत्वं, ततः षटोऽसौ धेति (१।२।५०) षस्य टत्वं, हल्ङ्याप्भ्यः (२।३।१८) सुलोपः सम्राट्, औ सम्राजौ, जस्—सम्राजः । निपातत्वादर्थ-

अनयोर्वा समोर्मस्य लुक् स्यात्। सततम्, सन्ततम्, सहितम्, संहितम्।

## ४६। अतो मांसस्य पाकपचनयोः।

[अतः ६।, मांसस्य ६।, पाकपचनयोः (पाक-पचन) ७॥] (१)

अनयोः परयोर्मांसस्यातो लुग्वा स्यात्। मांस्पाकः, मांसपाकः, मांस्पचनम्, मांसपचनम्।

## ४७। अणोऽप्रगृह्यस्यानुनासिकः।

[अणः ६।, अप्रगृह्यस्य ६।, अनुनासिकः १।] (२)

पदान्तेऽप्रगृह्यस्याणोऽनुनासिको वा स्यात्। कर्म्मँ कर्म्म, दधिँ दधि, मधुँ मधु, पचतिँ पचति। अप्रगृह्यस्येति किम्?—अग्नी, वायू।

---

(१) पचधर्षिण पाकः, मांसस्य पाकः, मांसपाकस्तत्रानेन सूत्रेण मांसस्यातो लोपे सस्य विसर्गः कस्कादित्वात् पुनः सत्वम् (१।३।१५) इत्येके, असिद्धं बहिरङ्गमन्तरङ्गे इति न्यायात् विसर्ग एव न भवतीत्यन्ये। अथ मांसं पचतीत्यणि कृते, न्यङ्क्वादित्वात् (२।३।१२१) कुत्वे कृते च मांसपाकः, अत्र लोपः कथं न स्यात्, सत्यम्, पचनेन भावटनान्तेन साहचर्य्यात् अण्प्रत्ययान्तस्य कर्तृवाचकस्य पचेर्न भवतीति मन्यते। मांस्पाक इत्यत्र कथं संयोगान्तस्येति सलोपो न स्यादित्यत्र लोपस्य स्थानिवत्त्वादिति केचित्।

(२) अण इति। इह यद्यपि यच्छेषमनुवर्त्तते इति न्यायात् प्राक्तनसूत्रस्थं निमित्तमनुवर्त्तयितुं शक्यते, तथापि लुक्सहचरितस्य तस्य सन्निधाने निरन्तरावसानस्यैव निमित्तत्वम्, अतएवावसान इत्येवेति काशिकायां वामनः; तर्हि विकल्पः कथं न निवर्त्तत इति चेत् परस्य नित्यग्रहणात्। दधिँ पचति मांसानि, मधुँ पचति औषधं,

## ४८। अनुस्वारस्य ययि परसवर्णो नित्यं त्वनन्तस्य।

[अनुस्वारस्य ६।, ययि ७।, परसवर्णः १।, नित्यं ०२।, तु ०१।, अनन्तस्य ६।] (१)

पदान्ते ययि परेऽनुस्वारस्य परसवर्णोऽनुनासिको वा स्यात्। त्वङ्कथञ्चिचम्पचङ्कण्डूयन्तमवधीः, त्वं कथं चित्रं पचं कण्डूयन्तमवधीः।

य, व, ले, यँ, वँ, लँ वा। सयँयन्ता, संयन्ता, सवँवत्सरः, संवत्सरः, यलँलोकम्, यंलोकम्। अपदान्तस्य तु नित्यम्, शङ्किता, चञ्चति, लिम्पति, क्वान्तति। ययि परसवर्ण इति किम्?—संशति, संहतिः।

---

तस्मादेकं तथोनैव कारयेत् कस्यचिद्विपक् इति वैद्यके। हरिणविलोचनाधिवसतिँ बभञ्ज पवनात्मजोरिपुकुलमिति भट्टिः। अत्राऽनुनासिकपदेन नाऽनुस्वारः किन्तु नादबिन्दुरेव। अण इति किं कर्तृं।

(१) ननु स्व रूपं शब्दस्याशब्दसंज्ञेति नियमात् सवर्णस्यैव ग्रहीतुं युज्यते सा तु वर्णानामेव न तु तदन्येषां हलाम्, तत् कथं सवर्णेनासमानवर्णोऽनुनासिको गृह्यते? नैवं सवर्णसंज्ञाव्याख्यानाऽवसरे स्पष्टीकृतमेतत्, अत्राऽपि यय् (१।१।१३) गहणात्-सदधिकमपि विषयीकरोति। यद्येवं ययि सवर्णोऽनुनासिको जायमानस्तस्यैव शुलत्वाऽविष्यति किं परेणेति? सत्यं पूर्वस्य वा परस्येति सन्देहे परग्रहणं तन्निरासार्थम्। तर्हि यरलवां सवर्णानुनासिकाभावात् तेषां स्थाने वर्गपञ्चमं किं न गृह्यते, नैवं रेफवर्जितानां तेषां साऽनुनासिक निरनुनासिकभेदेन द्वैरूप्यं समर्थितम्। कुचुटुतुपूनां ङ, ञ, ण, न, माः सवर्णा अनुनासिकाश्च तिष्ठन्ति, यरलानां यँ, वँ, लँ इति। एतदेव स्पष्टं सूचयितुं यवले यँ वँ लँ वेत्याह।

## ४९ । ङ-णाभ्यां कुटु शरि ।

[ङ-णाभ्याम् ५॥, कु, टु ०१।, शरि ७।] (१)

शरि परे ङ-णाभ्यामुत्तरे यथाक्रमं कु-टू वा स्याताम् । प्राङ्क्शेते, प्राङ्शेते, प्राङ्क्षष्ठः, प्राङ्षष्ठः, प्राङ्क्साधुः, प्राङ्साधुः, लुङ्लङ्लृङ्क्षु, लुङ्लङ्लृङ्षु, सुगण्ट्शेते, सुगण्शेते इत्यादि ।

## ५० । ह्रस्वात् ङ-णनामचि नित्यं द्वे असमासे ।

[ह्रस्वात् ५।, ङ-ण-नाम् ६॥, अचि ७।, नित्यं, २।, द्वे १॥, असमासे ७।]

ह्रस्वात् परेषां ङ-णनामचि परे नित्यं द्वे स्याताम् । क्रुङ्ङास्ते, सुगण्णिह, पचन्नस्ति; समासे तु—तिङन्तः, क्वचिदत्र भवत्यपि आपस्यन्त(२) इति । ह्रस्वादिति किम् ?—प्राणस्ति ।

## ५१ । षष्टोऽसो धेऽप्यथटि ।

[षः ६।, टः १।, असः ६।, धे ७।, अपि ०१।, अथटि ७।] (३)

अश्रुतसकारस्य पदान्ते, धकारे च परे षस्य टः स्यात् ।

---

(१) कु, टु, इत्येतयोरप्युकारौ उच्चारणार्थौ, तत आगमत्वेऽपि तयोः सवर्णग्राहकत्वं नास्तीति भावः ।

(२) आप् च अण् च तौ अन्ते यस्य इति विग्रहः । क्रुङ् + आस्ते, सुगण् + इह, पचन् + अस्तीति विश्लेषः । अचीति किं प्रत्यङ् करोति पचन् करोति ।

(३) षट् इत्युक्ते सकारस्य कः प्रसङ्गः येन अस इत्युच्यते इत्यत आह अश्रुतसकारस्येति । यत्र कदापि च नियमवशात् (दन्त्यः सः) मूर्द्धन्यो भवेत्, तत्र प्राक् दन्त्यश्रुतेर्न स्यात्, अतएव पूर्वविधौ लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्येति परिभाषा-

षट्, मूलवृट्; रज्जुसृट्, प्रमुट्तरः। धकारे च द्विड्ढि, आचड्ढ्वे; अस इति किम्—वपुष्टः, अधटीति किम्—षष्ठः।

## ५२। झयस्तृतीयो झषि च।

[झयः ६।, तृतीयः १।, झषि ७।, च ०१।] (१)

—पदान्ते झषि च परे झयस्तृतीयो भवति। वागिह, वाग्भाम्, अजन्तः, षड् गच्छन्ति, तद्याति, अब्जातम्। झषि च झयग्रहणमपदान्तार्थम्, तेन दोग्धि, लब्धम्।

---

इत्यर्थः, तेनाऽत्र वाक्यत्रयं पदान्तस्य षस्य टः, धेऽपोऽन्यत्राऽपदान्तस्य षस्यापि धकारे परे टत्वं भवति, अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वे थट्प्रत्ययेन न स्यादिति। षष्शब्दस्य प्रथमाबहुवचने षट्, मूलवृष्शब्दस्य प्रथमैकवचने मूलवृट् (मूलं वृश्चतीति क्विप् असञ्जि-ग्रहीत्यादिना (२।३।१३६) सम्प्रसारणं इक्, स्त्रोर्निजावोरिति (२।३।१११) सलोपः, अथ, भ्रस्ज, सृज, मृजेत्यादिना (२।३।११६) अन्त्यस्य मूर्द्धन्यषकारः मूलवृष् इति सिद्धम्, ततः प्रथमैकवचने मूलवृट्)। रज्जुं सृजतीति क्विप् अथ भ्रस्ज सृज मृजेत्यादिना अन्त्यस्य मूर्द्धन्यषकारः रज्जुसृष् इति जातं, ततः प्रथमैकवचने रज्जुसृट्, प्रमुष्-तरः प्रमुट्तरः, न पदान्तेत्यादिना (१।२।६३) टत्वनिषेधः। द्विष् अप्रीतौ अदादिः, ततो हि धुर्भ्यश्च इति (३।३।१) हिस्थाने धि द्विड्ढि, आचष्-ध्वे (आङ् पूर्वकस्य चक्षधातोर्लटि मध्यम-पुरुषबहुवचनरूपम्)। वपुष्ट इत्यत्र ऋस्वाससीति (१।३।२९) षत्वम्।

(१) झय् (१।१।७), झष् (१।१।५); झषि चेति पृथग्वाक्यात् तत्रापदान्तविषयत्वं गम्यते। अन्यथा पदान्ताधिकारे तथाकथनस्य वैयर्थ्यमेव। वाक्+इह, वाक्+भ्याम, अच्+अन्तः, षट्+गच्छन्ति, तत्+याति, अप्+जातम्, इति विग्रहः। दुह+लट् तिप्-दोक्+धि—दोग्धि, लभ्+त—लप्+धं—लब्धम्।

## ५३। पञ्चमो वाऽनुनासिके नित्यन्तु प्रत्यये।

[पञ्चमः १।, वा ०१।, अनुनासिके ७।, नित्यम् २।, तु ०१।, प्रत्यये ७।] (१)

पदान्तेऽनुनासिके परे झयः पञ्चमो वा स्यात्। वाङ्ङ्कारः, वागङ्कारः; वाग्ञः, वाङ्ञः; वाङ्मः, वाग्मः; वाङ्मे, वाग्मे; एवं अज्ञः, अजञः; षण्णः, षड्णः; तन्नः, तद्नः; अम्मः, अब्मः। नित्यन्तु प्रत्यये वाङ्मयं, तन्मात्रं, षण्णाम्।

## ५४। खरि प्रथमोऽपदान्ते च।

[खरि ७।, प्रथमः १।, अपदान्ते ७।, च ०१।] (२)

खरि परे झयः प्रथमो भवत्यपदान्ते च। तत्कुरुते, तच्चिनोति; अपदान्ते च भेत्ता, युयुत्सते, आरिप्सते।

## ५५। वाऽवसाने द्वित्वञ्च।

[वा ०१।, अवसाने ७।, द्वित्वम् १।, च ०१।]

विरामे झयः [redacted]ो वा स्यात्। द्वित्वञ्च वा। वाक्, वाग्, वाक्क्, वाग्ग्।(३)

---

(१) अत्रानुनासिकपदेन ङ, ञ, ण, न, मा गृह्यन्ते। प्रत्यये. प्रत्ययानुनासिके

(२) खर् (१।१।१०)।

(३) विरामोऽवसानमिति पूर्व्वाचार्य्यसंज्ञा, अथवा लोकप्रसिद्धोऽवसानशब्द समाप्तिमभिधत्ते इत्याह विराम इति। पक्षे तृतीयः सिद्ध एव, 'वा'शब्दस्याऽ काकाक्षिवदुभयत्राऽन्वयः, द्वित्वे आदेशे च; वाक्—वच धातोः कर्म्मणि क्विप्, इतो लो इति यकारलोपे क्विति वृद्धि.।

**५६। पूर्व्वस्य तुर्य्यो हः।** [पूर्व्वस्य ६।, तुर्य्यः १।, हः ६।] (१)

पूर्व्वस्य झयसम्बन्धिनो हकारस्य स्थाने तुर्य्यो वा स्यात्। वाग्घीनः, वाग्हीनः; अज्झीनः, अज्हीनः; षड्ढलानि, षड्हलानि; तद्धितम्, तद्हितम्; अब्भीनः, अब्हीनः।

**५७। शश्छोऽश्रुतेः।** [शः ६।, छः १।, अश्रुतेः ६।] (२)

पदान्ते झयसम्बन्धिनः शकारस्य छो वा स्यात्। वाक्छूरः, वाक्शूरः; अच्छ्लोकः, अच्श्लोकः; षट्छ्यामा, षट्श्यामा; अप्छ्मी, अप्श्मी; व्यवस्थितविभाषया शसि नित्यम् यावच्छः। अश्रुतेरिति किम्?—वाक्श्योतति।

(१) झयसम्बन्धिनः झयाऽव्यवहितपरवर्तिन इत्यर्थः, सन्निधानलक्षणोऽत्र सम्बन्धः। पूर्व्वस्य—हकारात् पूर्व्वमवस्थितस्य झय इत्यर्थः, तुर्य्यश्चतुर्थः [illegible] झ, ढ, ध, भानामन्यतम। वाक्+हीनः, अच्+हीनः, षट्+हलानि, तत्+हितम्, अप्+हीनः।

(२) ल, ञम् (ङ, ञ, ण, न, म) परस्य शकारस्य छत्वं नेच्छन्ति कातन्त्राः, "अत्र च वाशब्दस्य व्यवस्थया लकारे ञमे च परे न स्यादिति बोध्यम्, तेन तच्श्लाघ्यम्, तत्श्मशानमित्यादौ न स्या"दिति मुग्धबोधटीकायां श्रीमद्विद्यारत्नाः, पाणिनिना चट्-प्रत्याहारे परे शस्य छत्वं विहितम् (८।४।६४) पाणिनिसूत्रम् "छत्वममीति वाच्य"-मिति वार्त्तिकम्। व्यवस्थितविभाषयेति—इष्टसिद्धिसाधनीभूतविभाषा व्यवस्थित विभाषा। यावच्छ इति संख्यैकार्थवीप्सायामिति यावच्छब्दात् शप्रत्ययः। श्च्युतिर् आसेचने इत्यस्य भौवादिकस्य लट् प्रथमपुरुषैकवचनरूपं श्च्योतति।

## ५८। तोर्लो ले। [तो: ६।, ल: १।, ले ७।] (१)

तवर्गस्य ले परे लो वा स्यात्। तल्लेखः, तद्लेखः; भवाल्लुब्धः, भवान्लुब्धः।

## ५९। चुना चुः। [चुना ३।, चुः १।] (२)

चुना (चवर्गेण) योगे तवर्गस्य चवर्गो वा भवति। तच्चि-

(१) अत्र तवर्गस्थाने प्रवर्तमानो निरनुनासिक एव लकार इति सम्प्रदायः, ततो भवाल्लुब्ध इत्युदाहरणम्—किन्तु नकारस्याऽननुनासिकस्य साऽनुनासिक एव लकारः प्रवर्तते आन्तरतम्यात् इति कातन्त्राः, "नकारस्याऽनुनासिको लकारः" इति सिद्धान्तकौमुदी, "यलो द्विधाऽसौ निरनुनासिकः साऽनुनासिकः। ञमोऽनुनासिकत्वेन तत्स्थाने साऽनुनासिकः" इति बोपदेवः, उदाहरणम् विद्वाँल्लिखति, एवं भवाँल्लुब्ध इत्यपि स्यात्। भय इति निवृत्तमिति पद्मनाभपञ्जिका, अत्र दान्त(पदान्त)स्थितयोस्तकारनकारयोरुदाहरणात् "दान्ते" (पदान्ते) इति बोध्यमिति मुग्धबोधटीकायां श्रीमद्विद्यारवाः।

(२) व्यवधानान्तरत्वात् कार्यित्वेन च "तोर्लो ले" इत्यस्मात् तवर्गस्याऽनुवृत्तिः, चुनेति करणे तृतीया इति मिश्राः, सहार्थे इति वयम्, किञ्च "तृतीयया साहित्य-सूचनात् योगो लभ्यते" इति मुग्धबोधटीकायां श्रीमद्विद्यारवाः, अपिच "सहयुक्तेऽप्रधाने इत्यादि सूत्रं सहयोगं विनाऽपि तृतीयाया वक्ष्यमाणत्वात् चुनेति तृतीया नासङ्गता" इति सिद्धान्तकौमुदीटीका, ततश्च इतो "योग" इत्येतस्याध्याहारः। योगो नामाऽव्यव-हितपूर्वपरैकतरवर्तित्वम्, अतएव चुनेति तृतीयानिर्देशात् परस्यापीति उत्तरग्रन्थः, तदर्थन्तु चवर्गादुत्तरवर्तिनोऽपि तवर्गस्य चवर्गः स्यादेव यतस्तत्राऽपि चवर्गयोगसत्त्वात्। चवर्गेण योगे—चवर्गेण सहाऽव्यवहिते पूर्वस्मिन् परे एव वा स्थितस्येत्यर्थः तादृशस्य तवर्गस्य स्थाने चवर्गः स्यात्। यथोद्देश्यविधेययोः समसंख्यत्वे यथाक्रमप्राप्तिरिति बोध्यम्। व्यवस्थितविभाषा "वाऽसमाने" इत्यस्मादिभाषाऽनुवर्तत एव, तस्याव्यव-स्थितत्वादेकस्मिन् सुबन्तरूपे तिङन्तरूपे वा पदे सन्धिर्नित्यं स्यात "एकपदे सन्धिर्नित्य"-

नोति, तत्चिनोति; तच्छिन्नम्, तत्छिन्नम्; तज्जितम्, तज्झङ्कारः, तद्झङ्कारः; तञ्ञकारः, तद्ञकारः; प्रशाञ्चि-नोति, प्रशान्चिनोति। चुनेति तृतीयानिर्द्देशात् परस्याऽपि, एकपदे नित्यं व्यवस्थितविभाषया, यदाहुः

"संहितैकपदे नित्या, नित्या धातूपसर्गयोः।
सूत्रेष्वपि तथा नित्या सैवाऽन्यत्र विभाषया॥

परः सन्निकर्षः संहितोच्यते,तेन राज्ञः,यज्ञः, याच्ञा, प्रियपञ्चञः।

---

मिति भाष्यकारणात्, कारिका च "संहितैकपदे नित्येति", संहिता नाम परः सन्निकर्षः निरतिशयमानन्तर्य्यम्, अत्रोपचारात् तत्कार्य्यमपि संहिताशब्देनोच्यते, एकस्मिन् सुबन्तरूपे तिङन्तरूपे वा पदे सन्धीयमानयोर्वर्णयोः सन्निकर्षे सति नित्यमेव यथासम्भवं तत्कार्य्यं भवेदित्यर्थः, यथा यजधातोर्नप्रत्यये यज्+न, इत्येकपदे जकारनकारयोः संहितायां "चुना चु"रित्यनेन नस्य स्थाने ञः स्यात् सर्वदैव 'यज्ञ' इत्येवं रूपं स्यात् न कदापि "यजन" इति; एवमन्यत्र, नित्या धातूपसर्गयोः, धातुश्च उपसर्गश्च तौ धातूपसर्गौ तयोः संहिता संहिताकार्य्यमित्यर्थः नित्या, उपसर्गैः सह धातूनां सन्निकर्षे सति यथासम्भवं सन्धिकार्य्यं नित्यमेव भवति, यथा अधीते अधि+इते, अत्र दीर्घः, व्याजहार =वि+आ+जहार अत्र यणादेशः, एवमन्यत्र; सूत्रेष्वप्येवं संहिताकार्य्यं नित्यमेव स्यात् यथा "आदिरिताऽन्त्येन समभ्यः" एवमन्यत्र; अन्यत्र उक्तातिरिक्तस्थलेषु विभाषया विकल्पेन संहिताकार्य्यं स्यादिति भावः। समासे बहुपदानामेकवद्भावादेकपदत्वं तत्स्थाऽन्यत्रेत्यनेनाऽसमस्तपदयोर्ग्रहणम्, तथाच श्रीपतिसूत्रं पदद्वयोरहलो वेति। पाणिनि-बोपदेवयोर्मते शकारयोगेऽपि तवर्गस्य चवर्गो विहितः, किन्तु शकारादुत्तरस्य तवर्गस्य स्थाने चवर्गो निषिद्धः (८।४।४०।) (८।४।४४) पाणिनीये, (४६) बोपदेवीयम्; एवं सति तत्+शेते इति स्थिते प्रथमं शकारयोगे तस्य चः, ततः शकारस्थाने छः (८।४।६३) पाणिनीयं, (६१) बोपदेवीयम्, (११२।५७) सौपद्मम्, तच्छेते इति सिद्धम्, विश्नः, प्रश्न इत्यादिषु शकारात् परस्थितस्य नकारस्य चवर्गो निषेधवलान्न भवति। पद्मनाभेन-तु

## ५९। ष्टुना ष्टुः।

[ष्टुना ३।, स्तोः ६।, ष्टुः १।] (१)*

ष्टुना टवर्गेण योगे, षकारादुत्तरस्य च तवर्गस्य टवर्गो वा स्यात्। तट्टीकते, तत्टीकते; तट्ठकारः, तत्ठकारः; उड्डीनम्, उद्डीनम्; वादयण्ढक्काम्, वादयन्ढक्काम्; लिखण्णकारम्, लिखन् णकारम्। ष्टुनेति तृतीयानिर्देशात् परस्याऽपि, एकपदे नित्यम्—बंभण्टि, ईट्टे, गूढम्; षात् खल्वपि यष्टा, अच्योष्ठाः।

---

(सि१।६२) सूत्रेण शकारे परे एव तवर्गस्य चवर्गो विहितो न तु शकारयोगे, ततः शादिति निषेधनियमस्य प्रयोजनाऽभावादवतारः कृतः। चुना चुरित्येतत्सूत्रस्य 'श्चो च'रित्येवं रूपे कृते चवर्गे परे एव तवर्गस्य चवर्गः स्यान्न तु चवर्गादुत्तरस्य तवर्गस्य, तेन यज्ञ्यादिपदानां न सिद्धिः स्यात्।

(१) सूत्रमिदं पूर्व्वसूत्रवत् व्याख्येयम्, बंभण्टि भण+यङ् लुक्=बंभण्+ति (लट्), इति स्थिते अनेन सूत्रेण पूर्व्ववर्त्तिना णकारेण योगे तकारस्य टकारः, बंभण्टि; ईट्टे—ईट्+ते(लट्), अनेन सूत्रेण तकारस्य टकारः, अत्राऽपि पूर्व्वपरयोरव्यवहितदेश-वर्त्तिना टवर्गेण योगः; गूढम्, गुह संवरणे इत्यस्य क्तप्रत्ययरूपम् गुह+त इति स्थिते ततो हो ढः दादेरित्यनेन (२।७।११२) ह-स्थाने ढः, ततो "झषस्तथोर्धोऽध इत्येके (२।२।११३-वा)" इत्यनेन प्रत्ययतकारस्य धकारः, ततोऽनेन ढकारयोगे धकार-ढकारः ततो "ढो ढे लोपः" इत्यनेन ढलोपः, उकारदीर्घश्च गूढमिति सिद्धम्, एतेषु विकल्पो नास्ति। यष्टा=यज्+ता "व्रश्चभ्रस्जे"त्यनेन जकारस्य षकारः, षकारयोगे चाऽनेन सूत्रेण तकारस्य टकारः। अच्योष्ठाः=अच्योष्+थाः, च्यवतेर्लुङि मध्यमपुरुषैक-वचनरूपम्।

## ६२। नटाभ्यां से। [नटाभ्याम् (न, ट,) ५॥, से ७।]

आभ्यां से तुग्वा स्यात्। भवान्त्साधुः, भवान्साधुः; षट्त्साये, षट्साये। न खर्परे; भवान्स्नाता। (१)

## ६३। छोऽचो द्विः। [छः ६। अचः ५।, द्विः १।]

अच उत्तरस्य छकारस्य द्विर्भवति। वेति निवृत्तम्, परस्मिन्-वा-ग्रहणात्।(२) सच्छावः, तरुच्छायां, गच्छति।

## ६४। पदान्तदीर्घादनाङ्माङो वा।

[पदान्त-दीर्घात् ५।, अनाङ्, माङः ५।, वा ०१।]

पूर्व्वेण नित्ये प्राप्ते विकल्प आरभ्यते, पदान्तदीर्घाच्छकारो द्विर्वा स्यात्। कुटीच्छाया, कुटीछाया; आङ्माङस्तु नित्यम् पूर्व्वेणैव—आच्छादयति, माच्छादयति। (३)

## ६५। ह्राभ्यां यय्। [ह्राभ्याम् (ह, र) ५॥, यय् ०१।]

अच उत्तराभ्यां ह्राभ्यां परो यय् द्विर्वा स्यात्। ब्रह्म्मा,

---

(१) 'न खर्परे' इति वार्त्तिकम्।

(२) उभयोर्विभाषयोर्विधिः स नित्य इति न्यायात्, पाइ वेति निवृत्तम्। सच्छाव इत्यत्र विसर्जनीयलोपे सन्धिप्रतिषेधो (१।१।२७) माभूदिवाशीत्यनुवर्त्तनात्। तरोश्छाया तरुच्छाया, तरूणां छाया इति वाक्यं तु तरुच्छायमिति स्यात्। टीकाकारमते हि छाव छात पर्णच्छादो संहिताऽभावान्नाऽयं विधिः।

(३) पदान्तादिति किं ? ईच्छति, म्लेच्छति इत्यादिषु नित्यमेव स्यात्। नञाङौ यङ्लुगादिकारणाभावेऽप्यनादाङ्मादिविकल्पएव।

ब्रह्मा ; अर्क्कः, अर्कः ; कुर्म्मः, कुर्मः ; कार्य्यम्, कार्यम् ; दुर्ल्लभः, दुर्लभः। यरीति किम्, ददर्श अर्हति। (१)

## ९९। अनचि ह्रस्वहलोऽहर्लः।

[अनचि (न-अच्) ७।, ह्रस्व-हलः ५।, हल् ०१।, अर्हः ११] (२)

ह्रस्वाद्धलश्चोत्तरो रेफ-हकार-वर्ज्जितोऽनच्परो हल् द्विर्व्वा स्यात्। द्वित्वविधौ यणादेशो न स्थानिवत्—दद्ध्यत्र, दध्यत्र ; विग्घ्नः, विघ्नः ; उग्ग्रः, उग्रः ; पुत्त्रः, पुत्रः ; दृश्श्यः, दृश्यः ; शिष्ष्यः, शिष्यः। हल्परस्तु दर्श्श्यते, दर्श्यते ; ईर्ष्ष्या, ईर्ष्या ; मत्स्स्यः, मत्स्यः ; इन्द्द्रः, इन्द्रः ; राष्ट्ट्रम्, राष्ट्रम्। अनचीति किम् ? ददर्श। अर्ह इति किम् ? बर्षा, ब्रह्मा। ह्रस्वादिति किम् ? दात्रम्, नेत्रम्।

(१) ब्रह्मेत्यादिषु "संहितैकपदे नित्येति" भाष्यवचनान्नित्यमेव द्वित्वमिच्छन्ति केचित्।

(२) ह्रस्वहल् इत्यत्र समाहारे द्वन्द्वः, अर्ह इति ...हारद्वन्द्वगर्भो बहुव्रीहिः, द्वित्वविधौ यणादेशस्य स्थानिवत्त्वस्वीकारे दध्यत्र इत्यत्र धकारस्य द्वित्वं न स्यात् इकारस्थाने जातस्य यकारस्य इकारतुल्यतया अनच्परत्वाभावात्। पुन्नाम्नो नरकात् त्रायते इति वाक्ये तु नित्यद्वित्वसम्पन्नः पुत्त्रशब्दः, पुनातीति पूधातोः औणादिक क्त्रप्रत्यये ह्रस्वत्वे च एकतकारवान् पुत्रशब्दो भवति तस्यैवायमुदाहरणम्। पाणिनिमते आदिनि शब्दे परे आक्रोशे गम्यमाने पुत्रस्य द्वित्वं न स्यात् (८।४।४८) पाणिनीयसूत्रम् "पुत्रादिनी त्वमसि पापे"। हतशयोः परतः पुत्रशब्दस्यैव द्वित्वं विकल्पेन नाऽन्यस्येति वार्त्तिकम् पुत्त्रहती, पुत्रहती, पुत्त्रशयी, पुत्रशयी। इन्न्द्रः, इन्द्रः; राष्ट्रं राष्ट्रम् इत्यादीनामपि प्राक्शासनः।

## ६७ । शरः खयः । [शरः ५।, खयः १।]

शरः परः खय् द्विर्वा स्यात् । स्त्थाली, स्थाली ।

## ६८ । खयः शर् च । [खयः ५।, शर् ०१।, च ०१।]

वत्स्सः, वत्सः ; क्ष्षीरम्, क्षीरम् ।

## ६९ । यणो वर्ग्यश्च । [यणः ५।, वर्ग्यः १।, च ०१।]

उल्क्का, उल्का ; वल्म्मीकम्, वल्मीकम् ।

## ७० । वर्ग्याद्यण् च । [वर्ग्यात् ५।, यण् ०१।, च ०१।]

दध्य्यन्न, दध्यन्न ; मध्व्वन्न, मध्वन्न ।

## ७१ । वर्गादेः शरि द्वितीयः ।

[वर्गादेः ६।, शरि ७।, द्वितीयः १।]

वर्गादेः शरि द्वितीयो वा स्यात् । ख्षीरम्, क्षीरम् ; वाख्शेते, वाक्शेते ; भवथ्सु, भवत्सु ; अफ्सु, अप्सु ।

## ७२ । ढ्रलोपो ढ्रोः पूर्व्वस्याणो दीर्घश्च ।

[ढ्र लोपः (ढ्, र्-लोपः) १।, ढ्रोः (ढ्,र्) ७॥, पूर्व्वस्य ६।, अणः ६।, दीर्घः १।, च ०१।]

द्वित्वसाहचर्य्याद्वेति निवृत्तम्, ढकार-रेफयोः परयो र्यथाक्रमं ढकार-रेफयोर्लोपः स्यात् । पूर्व्वस्याणो दीर्घश्च । लीढम्, गूढम्, नीरक्तम्, अन्तारम्यम्, हे कर्त्ताराजसे ।

## ७३। उदः स्थास्तम्भोः सस्य लुक्।

[उदः ५।, स्था-स्तम्भोः ६॥, सस्य ६।, लुक् ०१।] (१)

उदः परयोः स्थास्तम्भोः सस्य लुक् स्यात्। उत्थाता, उत्तम्भिता।

## ७४। तः स्से। [तः ६।; स्से ७।]

स्से परे तकारस्य लुग्भवति। तस्करः। (२)

## ७५। हलो यवोर्ये वा।

[हलः ५।, यवोः ६॥, ये ७।, वा ०१।]

हलः परयोर्यवोर्ये परे लुग्वा स्यात्। आस्ये भव-मास्यम्, आस्य्यम् वा; साध्वीनामुदयः साध्युदयः, साध्व्युदयो वा।

## ७६। झयो झयि सवर्णे। [झयः ६।, झयि ७।, सवर्णे ७।]

सवर्णे झयि परे हलः परस्य झयो लुग्वा स्यात्। छिन्तः, छिन्त्तः; प्रत्तम्, प्रतत्तम्; शिण्ढि, शिण्ड्ढि; बन्धुम्, बन्द्धुम्। झयीति किम् प्रियपञ्च्ञः। से च सस्तो लोपो वक्तव्यः, ससस्ति स्वप्ने संस्सि। (३)

इति सुपद्मव्याकरणे प्रथमस्याध्यायस्य द्वितीयः पादः।

---

(१) उदः स्कन्धे, उत्कन्धः रोग इति केचित्।

(२) तत् + तस्करः।

(३) छिद् + तस् (लट्) छिन्तः, छिन्त्तः। प्र + दा + क्त प्रत्तम्, प्रतत्तम्। शिष + हि (लोट्), शिण्ट्धि, शिण्ढि, शिण्ड्ढि। बन्ध + तुम् बन्धुम् बन्द्धुम्। ससस्ति इति धातुः स्वप्नार्थे। से परे सस्भागस्य लोपः स्यात् इति वार्तिकम्, ससस्त् + सि (लट्) सस्-लोपे 'संस्सि' इति रूपम्।

# हल्सन्धिचक्रम्।

## (सामान्यनियमानाम्)

| पदान्ते अपदान्ते वा | उत्तरतः | स्थाने | आदेशः लोपो वा | परतः, योगे वा |
|---|---|---|---|---|
| पदान्ते | ० | मस्य | अनुस्वारादेशः | हलि (हल् — कादयो हान्ताः) |
| अपदान्ते | ० | मस्य, नस्य च * | अनुस्वारः | झलि (झल् — ञम्-यण्-होनो हल्) |
| पदान्ते | ० | अप्रगृह्यस्य अणः (अ, इ, उण्) | अनुनासिकः | ० |
| पदान्ते | ० | अनुस्वारस्य | परसवर्णोऽनुनासिकः (ङ, ञ इत्यादि) वा। | यथि (शर्-ह-वर्जितो हल्) † |
| | ङ णाभ्यां | | कु, टु, वा | शरि (श, ष, स) |
| पदान्ते | ० | अप्लुतसकारस्य षस्य | टः | ‡ |
| पदान्ते | ० | झय (ङ, ञ, ण, न, म वर्जितस्य हलः) | तृतीयः (ग, ज, ड, द, ब) | § |
| पदान्ते | ० | झयः | पञ्चमः (ङ, ञ, ण, न, म) वा | ¶ |
| पदान्ते अपदान्ते च | ० | झलः | प्रथमः (क, च, ट, त, प) | खरि (खर् — वर्गादि-द्वय, श, ष, स) |
| | झयः | हकारस्य | पूर्वस्य चतुर्थः | |

* क्त्वे परे समासेऽवेक्ष्यन् शब्दस्य मस्य लुक् स्यात्। मन.कामयोः परतस्तुम्-समशब्दयोर्मस्य लुक् स्यात्। ततहितयोः शब्दयोः परतः समशब्दस्य मस्य विकल्पेन लुक् स्यात्।

† अपदान्ते नित्यम् भवति।

‡ तकारे परे षस्य टः स्यात्।

§ अपदान्ते झशि च।

¶ प्रत्यये परे नित्यम्।

# हल्सन्धिचक्रम्।

## (द्वित्वप्रकरणम्)

| उत्तरत: | अक्षराणाम् | द्वित्वम् | विषये, परे वा |
|---|---|---|---|
| ह्रस्व स्वरात्— ... ... —(अ इ, उ, ऋ, लृ) | ङ, ण, नाम् | द्वित्वम् | अमनामे |
| अच:— ... ... .. (अ, इ, उ, ऋ, लृ, ए, ओ ऐ, औ) | छकारस्य | द्वित्वम् | |
| अच उत्तराभ्यां रहाभ्याम् | यर्संज्ञकानाम् | द्वित्वम् | |
| ह्रस्वात्, ङमन्त ... ... | र, ह, वर्जितानां हलाम् | द्वित्वम् | अनचि |
| शर: ... ... ... | खराम् | द्वित्वम् | |
| खर: .. ... ... | शर्संज्ञकानाम् | द्वित्वम् | |
| वर्गात् ... . ... | यण्संज्ञकानाम् (य, व, र, ल) | द्वित्वम् | |
| यण: ... ... ... | वर्गसंज्ञकानाम् | द्वित्वम् | |

आङ् माङ् वर्जितात् पदान्तदीर्घादुत्तरस्य छकारस्य विकल्पेन द्वित्वम्।

—:—

# प्रथमाध्याये तृतीयः पादः।

## विसर्गसन्धिप्रकरणम्।

### १। रुसोः पदान्ते विसर्ज्जनीयः।

[रुसोः, (रु,स्=र,स) ६॥, पदान्ते ७।, विसर्ज्जनीयः १।] (१)

पदान्ते रेफस्य, सकारस्य च विसर्गो भवति। अभिनः, अरुणः, यशः, करः, निनीः। अतः पदान्ताधिकारः।

### २। अहन्सजुष्प्रतिदीव्नां नषोः।

[अहन्, सजुष्, प्रतिदीव्नाम् ६॥।, नषोः ६॥]

---

(१) अत्र 'रु'शब्देन रेफस्यैव ग्रहणं कृतं, न तु रु इति रूपस्य, तथात्वे तरुप्रभृतीनां समाप्ते पदान्ते रुस्थाने विसर्गः प्रसज्येत; रु इत्यनेन रेफग्रहणस्य प्रयोजनन्तु "दधो रुः" (३।१।३४) इत्यनेन विहितस्य रु(र)कारस्य संग्रहः। विसृज्यते विसर्ज्जनीय इति कर्म्मण्यनीयप्रत्ययस्तु सामान्यतः कर्म्मप्रत्ययोपलक्षकः, ततश्च वृत्तौ विसर्गो भवतीति व्याख्यानम्। अभिनः, 'भिदिर् विदारणे' इत्यस्य रौधादिकस्य लङि सिपि रुधादेः श्नम् (३।२।१५४) इति श्नम् कृते 'अभिनद्स्' इति स्थिते "दधोरुः" (३।१।३४) इत्यनेन दकारस्य रुत्वे 'अभिनर्स्' इति स्थिते "संयोगान्तस्य रान्तु सदिपोः" (२।१।११०) इत्यनेन सकारलोपे 'अभिनर्' इति स्थिते अनेन सूत्रेण रस्थाने विसर्गः "अभिनः" इति सिद्धम्। अनयैव रीत्या 'रुधिर् आवरणे' इत्यस्य रौधादिकस्य लङि सिपि 'अरुणः' इति रूपम्। 'यशः' इति 'यशस्'शब्दस्य प्रथमैकवचनस्य, द्वितीयैकवचनस्य वा रूपम्, निनीरिति सनन्तात् नीधातोः क्विपि प्रथमैकवचनरूपम् 'निनीष्' इत्यस्य प्रथमैकवचनरूपमित्यर्थः। अतः—अस्मात् सूत्रादारभ्य पदान्ताधिकारः यावन्ति कार्याणि पदान्ते भव्यानीत्यर्थः।

पदान्ते अहरादेर्नषोर्विसर्गो भवति । अहः, सह-जुषेः क्विप्, सनः सजुषाभिषोश्चेति (२।३।१०५) दीर्घत्वम्, सजू(१) स्तापसः, सजूरित्यव्ययं चास्ति ; प्रतिदिवाः ।

## ३ । रः खरवसानयो-रसुपि ।

[र ६, खरवसानयोः (खर् अवसान) ७।२, असुपि ७।१] (२)

पदान्ते खरि परेऽवसाने च रेफस्य विसर्गो भवति । पुनः-कृतम्, गीः, धूः ; खरीति किम् पुनर्याति ; असुपीति किम् गीर्षु । विसर्ज्जनीयस्याऽधिकारोऽयम् ।

## ४ । क×पौ॥ च कखपफेऽप्रयुक्ते ।

[क× ,पौ॥ १।२, च ०।१, क, ख, प, फ ७।१, अ(न) प्र युक्ते ७।१]

कपावुच्चारणार्थौ विसर्गस्य सदृशतमत्वात्(३) कखयो-र्जिह्वामूलीयः, पफयोरुपाध्मानीयश्च भवति । अकाराद्विसर्ग एवाऽवतिष्ठते । क×कविः, कःकविः, क×खलः, कःखलः;

(१) जुषि प्रीतिसेवनयोरित्यस्य क्विपि जुष्, सह जुषा वर्त्तते इति सहपूर्व्वकात् जुष क्विप 'निन्ध संज्ञायाम्' (४।४।६०) सहस्य सादेश, 'सन सजुषाभिषो' दीर्घश्च, सजूः इत्यस्य प्रथमैकवचने सजुः अनेन षस्थाने विसर्ग । इहाविशिष्टस्य सजुष्शब्दस्य (सजुष इति रूपमाश्रित्य) ग्रहणादव्ययस्याऽपि सजूष्शब्दस्य विसर्ग इत्याह सजूरित्यव्ययञ्चास्तीति, प्रतिदिवन् । सु प्रतिदिवा ।

(२) एकाऽपीयं सप्तमी अर्थवशाद्भिद्यते, खरि परे, अवसानविषये चेति । विसर्ज्जनीयस्येति अधिकृतम् ।

(३) सदृशतमत्वात् एकस्थानीयार्थमात्रत्वात् ।

क$\approx$परः कःपरः ; क$\approx$फली, कः फली । अप्रयुक्त इति किम् कःचीरम्, कःप्साति । (१)

## ५ । निर्दुर्वहिःप्रादुराविश्चतुरां षः ।

[निर्दुर्वहिःप्रादुराविश्चतुराम् (निर्, दुर्, वहिस्, प्रादुस्, आविस्, चतुर्,) ६॥, षः १।]

एषां विसर्गस्य कादौ परे क×प$\approx$योरपवादः षः स्यात् । निष्कुलम्, दुष्कुलम्, वहिष्कृतम्, प्रादुष्करोति, आविष्करोति, चतुष्काण्डम्, निष्फलम्, चतुष्पुत्राः । (२)

## ६ । इजन्ताभ्यां षसौ पाशकल्पककाम्येषु प्रत्ययेष्वनव्ययस्य ।

[इजन्ताभ्यां (इच्,अत्) ५॥, षसौ १॥, पाश, कल्प,क, काम्येषु ७॥, प्रत्ययेषु ७॥, अनव्ययस्य (न,अव्यय) ६।] (३)

पाशादिषु प्रत्ययेष्वनव्ययस्य इजन्तात् षो भवति, अतश्च सो-दन्त्यः । धनुष्पाशः, ज्योतिष्कल्पम्, [illegible]नुष्कः, दोर्भ्याम्

---

(१) व्याघातौ परेऽपि क+प$\approx$ न स्त इति मुग्धबोधटीका ।

(२) पाणिनिना सामान्यत इकारोकारोपधस्यैव विसर्गस्य षो विहितः (८।३।४१) पाणिनिसूत्रम् ।

(३) अनव्ययस्येति—अव्ययीभावाऽतिरिक्ताऽव्ययभिन्नस्येत्यर्थस्तेन उपपयस्काम्यती त्यादौ सत्वमेवेति भर्तृहरिः । अत इजन्तात् षः, अदन्तात् स इति यथाक्रमं द्रष्टव्यम्, अतश्च सो दन्त्य इति ।

तरति दोष्कः, ज्योतिष्काम्यति ; अतश्च—रक्षस्पाशः, तमस्कल्पम् ; अनव्ययस्येति किम्? प्रातःकल्पम्, मिथःकाम्यति, पुनःकाम्यति। आकस्कादेरिजङ्गयां षसावित्यनुवर्त्तिष्यते।

## ७। न काम्ये नरयोः।

[न ०१।, काम्ये ७।, न,रयोः ६॥]

नकार,रेफयोर्विसर्गस्य काम्ये षसौ न भवतः। अहः-काम्यति, गीःकाम्यति।

## ८। नमःपुरसोः कृञि समासे वा च तिङि।

[नमःपुरसोः (नमस्, पुरस्) ६॥, कृञि ७।, समासे ७।, वा ०१, च ०१।, तिङि ७।]

अनयोः कृञि समासे विसर्गस्य सः स्यात्। नमस्कृत्य, पुरस्कारः। समास इति किम्? नमः कृत्वा गतः। वा च तिङि—नमस्कुरु, नमःकुरु। (१)

## ९। तिरसश्चाऽसमासेऽपि।

[तिरसः ६।, च ०१।, असमासे ७।, अपि ०१।] (२)

(१) पाणिनिमते नमःशब्दस्य सर्व्वत्रैव विभाषा, पुरःशब्दस्याव्ययस्य नित्यमेव। "नमस्पुरसोर्गत्योः" (८।३।४०) पाणिनिसूत्रम्। तत्र सिद्धान्तकौमुदी—गतिसंज्ञयोरनयोर्विसर्गस्य सः कुप्वोः परयोः, नमस्करोति। साक्षात्प्रभृतित्वात् कृञो योगे विभाषया गतिसंज्ञा ; तदभावे नमः करोति। पुरोऽव्ययमिति नित्यम् गतिसंज्ञा ; पुरस्करोति। अगतित्वान्नेह पूः पुरौ पुरः प्रविष्टव्याः।

(२) अपि शब्दात् समासेऽपीति बोध्यम्। तिरःशब्दस्यान्तर्द्धानार्थे समासः।

तिरसः कृञि सर्व्वत्र विसर्गस्य सो वा स्यात्। तिरस्कृत्य तिरःकृत्य ; तिरस्कृत्वा, तिरः कृत्वा ; व्यवस्थितविभाषया नित्यम्, तिरस्कारः।

## १० । द्वित्रिचतुरां कृत्वोऽर्थे ।

[द्वि, त्रि, चतुराम् ६।॥, कृत्वोऽर्थे ७।]

एषां कृत्वोऽर्थे वृत्तीनां विसर्गस्य क, ख, प, फे षो वा स्यात्। द्विष्कुरु, द्विःकुरु ; त्रिष्पट्, त्रिःपट् ; चतुष्पीतम्, चतुःपीतम्। कृत्वोऽर्थे इति किम्? चतुष्पार्श्वम्, नित्यम् पूर्व्वेणैव। (१)

## ११ । इसुसोरपेक्षायाम्।

[इसुसोः (इस्, उस्) ६॥, अपेक्षायाम् ७।] (२)

इसुसोर्विसर्गस्य षो वा स्यात्। सर्पिष्पिव, सर्पिःपिव ; यजुष्कुरु, यजुःकुरु ; अपेक्षायामिति किम्? तिष्ठतु सर्पिः पिवोदकम्।

---

(१) एवं चतुष्कपाल इत्यादिष्वपि पूर्व्वेणैव नित्यम्। द्वित्रिचतुर्ग्रहणं किमर्थम् इह मा भूत् पञ्चकृत्वः करोति इति भाष्यम्।

(२) अपेक्षा नाम कार्य्यनिमित्तयोरन्योऽन्यसम्बन्धः, अन्वयबोधयोग्याकाङ्क्षेति यावत्, सा च सामर्थ्योऽपरपर्य्याया। अत्रेदमपि ज्ञातव्यं यत्, "षत्वाभिहितं समानाधिकरण-समसमर्थवद्भवति" तेन सर्पिःपवित्रमित्यादौ न षत्वं तयोः सामानाधिकरण्येन सामर्थ्येऽपि षत्वविधानाऽभावात् असमर्थतुल्यत्वम्। इसुसौ च प्रातिपदिकावयवौ गृह्येते ; तेन "पत्युः कार्य्यः, मत्युः पाकः, कविभिः कृत"मित्यादौ न प्रसङ्गः, तत्तदर्थानां इसुसोः प्रातिपदिकाऽवयवत्वाभावादिति सिद्धान्तकौमुदीटीकायां तारानाथः।

## १२ । समासेऽनुत्तरपदस्थयोर्नित्यम् ।

[समासे ७।, अनुत्तरपदस्थयोः अन्-उत्तर-पदस्थ) ६॥, नित्यम् १।]

इसुसोः समासे विसर्गस्य षः स्यात् । सर्पिष्कुण्डम्, यजुष्पाठः ; अनुत्तरपदस्थयोरिति किम् ? महासर्पिःकुण्डम् । (१)

## १३ । अस: कृकमिकंसकुम्भकुशीकर्णीपात्रेष्वनव्ययस्य ।

[अस: ६।, कृ, कमि, कंस, कुम्भ, कुशी, कर्णी, पात्रेषु ७॥, अनव्ययस्य (न-अव्यय) ६।] (२)

असन्तस्य, कृञादौ समासे विसर्गस्य सः स्यात् । अयस्कारः, यशस्कारः, अयस्कामः, अयस्कंसः, अयस्कुम्भः, अयस्कुशी, अयस्कर्णी, अयस्पात्री ; अनव्ययस्येति किम् ? अधःकारः । नोत्तरपदस्थस्य, सर्व्वायःकारः ।

---

(१) समासे परपदमुत्तरपदम् महत्सर्पिः महासर्पिः, कर्म्मधारये परत्वात् सर्पिःशब्दस्योत्तरपदत्वम् ; वाक्ये तु परमसर्पिष्करोति, परमसर्पिःकरोतीति पूर्व्वेण (१ ३।११) विकल्पः ।

(२) पाणिनिना अकारादुत्तरस्य विसर्गस्य सः विहितः (८।३।४६) पाणिनिसूत्रम् ; कृशब्देनाऽत्र तदादिग्रहणम् तेन कृधातोः कृत्प्रत्ययनिष्पन्नशब्दमात्रस्य ग्रहणम्, समासे तस्यैव घटकत्वसम्भवात् । असन्तस्य कृञादावेवेति नियमो नित्यार्थमेवेति पद्मनाभपञ्जिका । अयः+कारः, यशः+कारः, अयः+कामः, इत्यादि विग्रहः । कमेः सप्रत्ययेन कंस इति सिद्धं, तत् कमिग्रहणेनैव सिद्धे कंसग्रहणेन ज्ञापयति उणादीनामव्युत्पत्तिपक्षे कस्कादित्वमिति गोयीचन्द्रः । स्त्रियाञ्चेति संक्षिप्तसारवार्त्तिकात् अयस्कुम्भीत्यादीनां सिद्धिः ।

## १४ । अधःशिरसोः पदे ।

[अधःशिरसोः (अधस्, शिरस्) ६॥, पदे ७।] (१)

अनयोः पदे सः स्यात् । अधस्पदम्, शिरस्पदम् ।

## १५ । कस्कादिषु च ।

[कस्कादिषु (कस्क+आदि) ७॥, च ०१।] (२)

अनुकरणत्वाद्दीर्घः । एषु यथायोगं षसौ भवतः । कस्को याति, कुत आगत इत्यण् कौतस्कुतः, अहस्करः, तमस्काण्डम्, मेदस्पिण्डम्, वाचस्पतिः, गोष्पतिः, भ्रातुष्पुत्रः । क ख प फ इति निवृत्तम् ।

## १६ । अतो ह्यशतो-रुः ।

[अतः ५।, ह्यशतोः (ह्यश्, अत्) ७॥, उः १।] (३)

---

(१) अत्रापि "समासे" इति योज्यम्, तेन समासाभावे "अधः पदम्, शिरः पदमिति" अनन्तरपदस्थस्येत्येव, परमशिरःपदमिति च सिद्धान्तकौमुदी ।

(२) कस्कादयो यथा—कस्कः, कौतस्कुतः, भ्रातुष्पुत्रः, शुनस्कर्णः, सद्यस्कालः, सद्यस्क्रीः, साद्यस्कः, कांस्कान्, सर्पिष्कुण्डिका, चतुष्कपालम्, बर्हिष्पलम्, यजुष्पात्रम्, अयस्कान्तः, तमस्काण्डः, अयस्काण्डः, मेदस्पिण्डः, भास्करः, अहस्करः ;—आकृतिगणोऽयम् । कौतस्कुत इति तद्धितान्तस्य गणपाठात् कुतः कुत इत्यत्र विसर्गो भवत्येव इति गोयीचन्द्रः । ककमिकंसेत्यादि सूत्रे (१।३।१३) कर्णीशब्दोपादानात् कर्णे परे न प्राप्नोतीति शुनस्कर्णोऽत्यस्य कस्कादिषु पाठः इति गोयीचन्द्रः । तमस्काण्डादिः समास एवेति संक्षिप्तसारसूत्रात् (स. पा. १४०) अस्ति तमः काण्डं पश्य वाचः पति इत्यादावसमासे न भवति । मुहुः शब्दस्य ककार पकारपरस्यैव कस्कादित्वमिति केचित् मुहुष्कामः ।

(३) अत् इति तपरग्रहणात् केवलस्यैव 'अकार'स्य ग्रहणमित्यवसेयम् । कोऽत्र, इत्यत्र विसर्गस्थाने उत्वे कृते, क+उ+अत्र इति स्थिते अनित्यस्याकारे परे न उकार-

अति, हशि च परे अतः परस्य विसर्गस्य उर्भवति। कोगतः, कोऽत्र; हशतोरिति किम्? क आगतः; अत इति किम्? देवा अत्र।

## १७। इचो रोऽभझशोः।

[इचः ५।, रः १।, अभझशोः (अच्, हश्) ७॥] (१)

अचि, हशि च परे इजन्तादिसर्गस्य रो भवति। कविरत्र, कैरिह, वधूर्याति; अझशोरिति किम्? हरिः पातु वः।

## १८। अह्नो लुकि सुपोऽरूपरात्रिरथन्तरे।

[अह्नः ६।, लुकि ७।, सुपः ६।, (अ[न]-रूप, रात्रि, रथन्तरे) ७।] (२)

उत्वाद्यपवादोऽयम्; अचि, हशि च परे, सुब्लुकि, अह्नो विसर्गस्य रो भवति। अहरत्र, अहर्मूलम्, अहरिदम्, अह-

---

स्थाने वकारः प्रवर्तते, तस्य बहिरङ्गत्वात्, एकपदाश्रितत्वादन्तरङ्गं गुणस्य। तथाहि परिभाषा—"असिद्धं बहिरङ्गमन्तरङ्गे" अन्तरङ्गे कार्ये कर्त्तव्ये बहिरङ्गकार्यमसिद्धं स्यात्, तदाश्रितकार्यञ्च, प्रकृतेरन्तरन्तरङ्गं, प्रकृतेर्बहिः, बहिरङ्गम्। प्लुतादकारात् विसर्गस्य न उत्वम्, यथा—एहि सुस्रोत३ अत्र स्नाहि।

(१) र इत्यत्राऽकार उच्चारणार्थः। रेफविधानसामर्थ्यात् पुनः (सूत्रान्तरेण) प्राप्तो विसर्गो न भवति। तस्मादन्तवद्व्यवस्था नावश्यकीयेति गोयीचन्द्रः। इच इति किम्? कोऽत्र।

(२) यद्यपि सुपोऽन्यस्य न लुक् सम्भवति, तथापि स्पष्टार्थमेव सुप इत्यस्योपादानम्। अहरत्र, इत्यत्र अहः+अत्र इति स्थिते अतो हशतोः (१।३।१६) इत्यनेन उत्वप्राप्तौ

र्य्यति ; सुब्लुकीति किम् ? अहोभ्याम्, अहोभिः ; अरूपादिष्विति किम् ? अहोरूपम्, गतमहो रात्रिरागता, अहोरथन्तरं साम, कथमहोरात्रः, (१) एकदेशविकृतमनन्यवद्भवतीति ; "क्ये पदत्वात्" अहर्य्यति, अहर्य्यते ; लुकीति किम् ? दीर्घाहो निदाघः, हे दीर्घाहोवा, अत्र—हल इति (२।३।१८) सुलोपः । "उषर्बु धोऽग्नौ" । "नार्पतादयो हृदे" ।

---

विप्रतिषेधे परं कार्य्यम् (तुल्यबलविरोधे परं कार्य्यं स्यात्) इति परिभाषया रत्वाऽपवादः । अहरिदम् अहः + इदम् इति स्थिते भोभगो इत्यनेन (१।३।२०) यत्वलोपप्राप्तौ पुरस्तादपवादोऽनन्तरान् विधीन् बाधते, नोत्तरानिति परिभाषया तन्निषेधः ।

(१) सूत्रे रात्रिशब्दे परएव निषेधः, न तु रात्रे परे, तत् कथ-महोरात्रः' इत्यत्र न रत्वम् इत्यत आह एकदेशविकृतमनन्यवद्भवतीति, एकदेशे एकाऽवयवे विकृते विकृतिं रूपान्तरं प्राप्तम् अनन्यवत् न अन्यवत् प्रकृतितुल्यरूपमेव भवति, तथाहि रात्रशब्दोऽत्र रात्रिशब्दस्येकारलोपे निष्पन्नः, ततश्च रात्रिशब्दतुल्यरूप एव, अहश्च रात्रिश्चेति समाहारे द्वन्द्वः, "स्त्रीपुंसादित्वात्" (५।१।८६) समासान्तः, 'पुंस्त्वञ्च रात्रिश्चागयो'रिति (४।२ ८६) पुंस्त्वम् । अहरिच्छति अहन् + क्यच, नः क्ये ङौ (२।१।२) इत्यनेन नकारस्य पदत्वम्, ततोऽहन्नसन्त्र प्रतिद्दौवामिति (१।३।२) नस्या[illegible]विसर्गः, अनेन च विसर्गस्थाने र्, अहर्य्य + ति(लट्) अहर्य्यति ; अहरिवाचरति अहन् + क्यङ्, (२।१।२) इत्यनेन पदत्वं, (१।३।२) नस्थाने विसर्गः, अनेन विसर्गस्थाने र्, अहर्य्य + ति, क्यशब्देनाऽत्र क्यच्-क्यङोर्ग्रहणम् । चन्द्रस्तु रेफएव परे रेफं नेच्छति, तन्मते अहोरथन्तरमित्यात्रापि भवत्येव । वृत्तिकृता तु प्रत्युदाहरणमेवं दर्शयता चन्द्रमतस्य सन्दिग्धत्वं सूचितम् । गतमहोऽ मित्याद्युदाहरणेन असमासेऽपि भवतीति सूचितमिति गोयीचन्द्रः । लुकीति ग्रहणेन लुपि नास्य प्राप्तिरेवेति दीर्घाहो निदाघ इत्याद्युदाहरणैः सूचितमेव । क्लीबे तु दीर्घाह्वं हे दीर्घाऽह्नम इति बोद्धव्यम् । उषसि प्रातः बुध्यते, उषः + बुधः इति स्थिते, रत्वापवादेन रत्वं निपात्यते, अग्निभिन्नार्थे तु उषोबुध इति भवत्येव, नृपतेरिदं "नार्प-

निपातनाच्चोत्वविसर्गौ। चतुर्थ (१) इति निपातनात्।

## १९। अहरादेर्वा पत्यादिषु।

[अहरादेः (अहः-आदि) ६।, वा ०।, पत्यादिषु ७॥] (२)

एषां पत्यादौ परे विसर्गस्य रो भवति। अहर्पतिः, अहस्पतिः; गीर्पतिः, गीष्पतिः।*

## २०। भोभगोऽघोऽवर्णेभ्यो योऽचि लोपो वा।

[भोभगोऽघोऽवर्णेभ्यः (भोस्, भगोस्, अघोस्, अवर्ण) ५॥, यः १।, अचि ७।, लोपः १।, वा ०।]

वाशब्दोऽत्र समुच्चयार्थः (३)। अचि परे भोःप्रभृतेर्विस-

---

नम्" रः खरवसानयोरसुपि (१ ३।१) इत्यस्यापवादः, आदिशब्दात् नार्पालं, नार्कुटं, नार्पतमित्यादीनां ग्रहणम्, रकारस्य लुप्तत्वप्राप्तौ (लुकारलाडावित्यर्थः) एवाऽयं विधिः, यत्र लुङा आरि कृते न विसर्गः स नार्पतादौ गणनीयः इति भावः, नान्यत्र। तथाहि नारीशब्दात् क्विच्, टिलोपः, नारिधातुः, ततः क्विप्, क्विपि परे णिचो लुकि च कृते नार् इति शब्दस्ततः नारः कपालमिति षष्ठीसमासे नाःकपालमिति गोयीचन्द्रः।

(१) चतुर्णां पूरणः इति डट्प्रत्यये विसर्गाभावो निपातनात्।

(२) आदिशब्दात्, सुवर्णैकः, सुपुत्र इत्यादीनां संग्रहः; इयं गीः पतिरस्या इत्यत्र नास्य प्रवृत्तिरिति गोपद्विः। पतिः, सखः, पुत्र इति पत्यादिः गणपाठः।

* संक्षिप्तसारमते गीष्पतिरित्यसाधु। गीःपतिरिति साधु। तत्रैतत्सूत्रस्य उपर्युक्त इत्युदाहरणं सम्प्रदायविरुद्धमेव पत्यादिषु सुपशब्दस्याऽपाठात्।

(३) पूर्वसूत्रादेव वाऽनुवृत्तौ सूत्रेऽस्मिन् वाग्रहणं निरर्थकमिति चेदाह "वाशब्दोऽत्र समुच्चयार्थः," अत्र वाशब्दस्य विभाषार्थो न, किन्तु समुच्चयरूपोऽर्थः, लोपो वा लोपश्च भवतीति भावः। क्रमदीश्वरस्तु 'अ' इत्यस्मिन् परे नित्यमेव लोपमिच्छति।

र्गस्य लघुप्रयत्नतरो (१) यो भवति ; लोपो वा। भोयत्र, भोऽत्र ; भगोयागच्छ, भगोआगच्छ ; अघोयेहि, अघोएहि। अवर्णान्तात्—कयास्ते, कआस्ते ; देवायिह, देवाइह। कथं देवोऽत्र इति निरवकाशा हि विधयः सावकाशान् विधीन् बाधन्ते इत्युक्तं भवति। (२)

## २१। व्योश्च। [व्योः (व्, य्) ६॥, च ०।१] (३)

क्वचिदेकदेशोऽप्यनुवर्त्तते इति पदान्तेऽचि परे वकार-यकारयोर्लोपो वा भवति।

---

(१) लघुप्रयत्नतरः=लघूच्चारणः, यस्योच्चारणे जिह्वाग्रोपाग्रमध्यमूलानां शैथिल्यं स लघूच्चारणः इति सिद्धान्तकौमुदी।

(२) निरवकाशा नाम स्वल्पप्रसराः, सावकाशा बहुप्रसराः, तथाहि केवलादकारात् उत्तरतो विसर्गस्य स्थाने अकारे परे विहितस्य उत्वस्य, अकाराकाराभ्यामुत्तरतो विसर्गस्थाने अचि परे विहितयोर्यत्वलोपयोरपेक्षया निरवकाशत्वं, यत्वलोपयोश्च उत्वापेक्षया सावकाशत्वम्, अत उत्वविधिना यत्वलोपविधिर्बाध्यते:, अन्यथा "पूर्व्वविप्रतिषेधे परद्वार्य्य"मित्यनेन यत्वलोपयोरेव प्रवृत्तौ अतो हशतो वः (१।३।१६) इत्यस्य वैयर्थ्यापत्तिः।

(३) ननु एकयोगविनिर्द्दिष्टानां सह वा प्रवृत्तिः, सह वा निवृत्तिरिति न्यायात्, भोःप्रभृतेरेवाऽनुवृत्तिरुचिता, तत् कथं अवर्ण एवाऽनुप्रवर्त्तते ? इत्यत आह "क्वचिदेकदेशोऽप्यनुवर्त्तते" इति, "यावत्सम्भवस्तावद्विधि"रिति न्यायमूलमिदम्, भोःप्रभृतेरुत्तरौ व्यौ न स्तः, कथं तयोर्लोपोविहितः स्यात्, अस्ति यकारस्य सम्भव इति चेत्तस्य लोपे तदादेशविधेर्वैयर्थ्यमेवापद्येत, अतः केवलाऽवर्णस्याऽनुवृत्तिः। "एकदेशोऽपि लोपो वेतिरूपः तस्याऽनुवृत्ति"रिति पद्मनाभपञ्जिका। वस्तुतस्तु अनन्तरस्य विधिः प्रतिषेधो वेति न्यायात् लोप एवाऽनुवर्त्तते नान्यः। मण्डूकप्लुत्या पूर्व्वतरविधेः (१।३।१८) काङ्क्षा:

वटवृदम्, वटविदम्; द्वाआनय, द्वावानय; तयाहुः, तआहुः; तस्माइदम्, तस्मायिदम्। इह वृक्षवृक्षमाचष्टे णौ विच्-णिलोपः वृक्षआयाहि, वृक्षवायाहि।

## २२। हशि नित्यम्। [हशि ७।, नित्यम् ०२।]

हशि परे भोःप्रभृतेर्विसर्गस्य व्योश्च नित्यं लोपः स्यात्। भोगच्छ, भगोगच्छ, अघोयाहि, देवागच्छन्ति। व्योश्च—वृक्षयाति; देवोयातीति उत्वविधेर्निरवकाशत्वात्। हशीति किम्? भोःपाहि, वृक्षव्करोति;—व्योरिति निवृत्तम्।

## २३। तदेतदोः सोरकोरनञ्समासे हलि।

[तदेतदोः (तत्, एतत्) ६॥, सोः ६।, अकोः ६॥, अनञ्समासे ७।, हलि ७।]

एतयोरककारयोः सोः सम्बन्धिनो विसर्गस्य हलि परे लोपः स्यात्। सकर्त्ता, एषयाति; क्वचिदित्येके (१) "सो-वा

सङ्गच्छते, परसूत्रे नित्यग्रहणाच्च। पाणिनिमते भोःप्रभृतेरुत्तरतोऽपि यकारलोपः स्यादेव, तथाहि भोती गार्ग्यस्य (८।३।२०) इति पाणिनिसूत्रम्। वृक्षवृक्षमाचष्टे इति सुपस्तत्करोतीत्यादिना (३।१।२४) णिच्, इष्टवत्त्वात् टिलोपे प्राप्ते यावत्सम्भवस्तावद्विधिरिति न्यायेन वृक्षित्यस्य ककारादयोर्लोपः, ततो वृक्षवीति नामधातुः, ततो विच्, विचो लोपः णिलोपश्च, वृक्षव् इति शब्दः, तस्य प्रथमैकवचने वृक्षव्, वृक्षव्+आयाहि वृक्ष आयाहि वलोपः। एवं अश्वयुजमाचष्टे इति णिच् टेः (युजित्यस्य उ,जयोः) लोपः, अश्वयि नामधातुः, ततोविच्, विचो लोपः णिलोपः, अश्वय्+आयाति, अश्वआयाति यलोपः

(१) क्वचिदिति शिष्टप्रयोगेषु समर्थनीयम्, एवं "सो वा सो वा भवाम्यहम्" इत्यत्राऽपि। इणधातोर्विच्यन्त एष इति रूपं, तत्र तु एषो वर्तत इत्युत्वमेव, तथा यथं

भवेन्नहि भवेदिति मे वितर्कः" "एषो हनूमान्"। अकोरिति किम्? सकोराजा, एषकोयाति ; अनञ्समासे इति किम्? असोवा अनेषोवा ; हलीति किम्? सोऽयम्।

## २४। वा शरि खर्परे। [वा ०१, शरि ७।, खर्परे ७।] (१)

खर्परे शरि परतो विसर्गस्य लोपो वा स्यात्। कश्चोतति, कःश्चोतति ; कष्ठीवति, कःष्ठीवति ; कस्तम्भः, कःस्तम्भः। खर्पर इति किम्? कःस्वरः।

## २५। शरि शर्। [शरि ७।, शर् ०१।]

शरि परे विसर्गस्य सदृशतमः शर् वा स्यात्। कश्शेते, कःशेते ; कष्षण्डः, कःषण्डः ; कस्साधुः, कःसाधुः।

## २६। चछे शः सोऽप्यनन्तस्य।

[च,छे ७।, शः १।, सः ६।, अपि ०१।, अनन्तस्य [न-अन्त ६।]

च,छयोः परतो विसर्गस्य शो वा स्यात्। कश्चरति, कःचरति ; कश्छात्रः, कःछात्रः ; अपदान्तस्य सस्य च नित्यमेकपदे तथति।

---

वांचिन: सम्प्रदस्य सोवर्ण इति प्रयोगः। यत्र नञा सह न समासस्तत्र भवत्येव, न स कर्ता नैष याति।

(१). खर परो यस्मात् इति बहुव्रीहिः।

२७। टठे षः। [ट,ठे ७।, षः १।]

ट,ठे परतो विसर्गस्य षो वा स्यात्। कष्टीकते, कः-टीकते ; कष्ठकारः, कःठकारः ।

२८। तथे सोऽप्यसपरे।

[त,थे ७।, सः १।, अपि ०१।, असपरे (न-सपर) ७।]

त,थे परतो विसर्गस्य सो वा स्यात्। कस्तपस्वी, कः-तपस्वी ; कस्थकारः, कःथकारः ; असपर इति किम् ? कः-त्सरुः ।

२९। नश्चामस्य चादौ तथैवाऽतुकि।

[नः ६।, च ०१।, अमस्य (न-म) ६।, चादौ (च-आदि) ७।, तथा ०१।, एव ०१।, अतुकि (न तुक्) ७।] (१)

च,छे, ट,ठे, त,थे परतोऽमस्य नस्य च तथैव श,ष,सा भवन्ति। भवांश्चरति, भवांश्छादयति, भवांष्टीकते, भवांष्ठकारः, भवांस्तरति, भवांस्थुड़ति। अमस्येति किम् ? प्रशान्-चिनोति ; अतुकीति किम् ? भवाञ्छेते ; असपर इति किम् ? भवान्त्सरुः ।

(१) क्रमदीश्वरेण केवलं प्रशानित्यस्यैव वर्ज्जनं कृतम्, तेन तन्मते दम उपशमे इत्यस्मात् क्विपि प्रदानिति रूपं भवति, ततः प्रदान् + चिनोति इत्यत्र प्रदांश्चिनोतीति भवत्येव। तन्मतेऽस्य सूत्रे पदान्तस्यानुवृत्तिः।

## ३० । कानि कान: स: ।

[कानि ७।, कान: ६।, स. १।] (१)

कानि परे कानित्यस्य नकारस्य स: स्यात् । स्थानिवत्त्वाद्विसर्गो नेष्यते । कांस्कान् ।

## ३१ । पे नॄन: । [पे ७।, नॄन: ६।] (२)

पकारे 'नॄन्' इत्यस्य नस्य स: स्यात् । नॄंस्पाहि ।

## ३२ । म: सुटि । [म: ६।, सुटि ७।] (३)

सुटि परे समो मस्य स: स्यात् । संस्स्कर्त्ता, सुटि सलोपो वा संस्कर्त्ता ।

---

(१) कानिति द्वितीयाबहुवचनान्तपदमनुक्रियते । कानि द्विरुक्त इत्यध्याहार्य्यं, यत्र कानित्यस्य द्विरुक्तिस्तत्रैवाऽयं विधिस्तेन 'हकान्कानेष्यति' इत्यत्र न स्यात् । ननु नकारस्य सकारे कृते विसर्ग: कथं न विधीयते ? इत्यत आह स्थानिवत्त्वादिति । कांस्कानित्यत्रानुस्वाराऽनुनासिकाभ्यां द्वैरूप्यम् । काँस्कानिति रूपान्तरम् । कान् कान् पश्यसि इत्यत्र प्रथमकिंशब्दस्य प्रश्नार्थकत्वात्, द्वितीयस्य कुत्सितार्थकत्वाच्च कान् कुत्सितान् पश्यसीति तदर्थ:, अत्रापि द्विरुक्त्यभावादस्य सूत्रस्य प्रवृत्ति: ।

(२) नॄन् इति द्वितीयान्ताऽनुकरणम्, तस्य षष्ठ्येकवचने नॄन: । तत्राऽनुनासिकानुस्वाराभ्याम् द्वैरूप्यम् नॄँस्पाहीति रूपान्तरम् । श्रीपतिस्तु 'नॄन्' इति लुप्तषष्ठ्येकवचनान्तं पदं कृत्वा नकारस्य विभाषाऽनुनासिकाऽनुस्वारोपाध्मानीयविधानेन पञ्च रूपाण्याह,—तथाहि पद्मनाभमते नॄंस्पाहि, नॄँस्पाहि इति पदद्वयम् ; श्रीपतिमते नॄंस्पाहि, नॄँस्पाहि, नॄं ꣳपाहि नॄंपाहि, नॄन्पाहीति पञ्च पदानि ; सिद्धान्तकौमुद्यान्तु नॄꣳपाहि, नॄंपाहि, नॄँ:पाहि, नॄंꣳपाहि, नॄन्पाहीति पञ्च पदानि सन्ति ।

(३) सुटि मकारस्याऽन्यस्यासम्भवात्समो मकार एवाऽवधीयते इत्याह समइति । सम्+कृ+ता, सम्पर्युपादिस्यादिना (३।१।१३८) सुट्, सम्+स्कर्त्ता, इति स्थिते

## ३३। पुमः खय्यम्परे चुट्वोस्तु शषौ।

[पुमः ६।, खयि ७।, अम्परे ७।, चुट्वोः ७॥, तु ०१।, श,षौ १॥] (१)

खयि परे पुमो मस्य सः स्यात्। च,छे, ट,ठे तु श,षौ; अनेनाऽत्र प्रकरणे विसर्गस्याऽकरणं प्रत्येतव्यम्। पुंस्कामा, पुंस्त्वम्, पुंश्चली, पुंष्टीकः; अम्परे इति किम्? पुंक्षीरम्।

अनेन सूत्रेण सत्वे संस्स्कर्त्ता सँस्स्कर्त्ता इति पदद्वयम्, समो वा लोपमेके इति भाष्यम्, ततः सलोपे संस्कर्त्ता, सँस्कर्त्ता इति चान्यत्पदद्वयम्, ततोऽनचीति (१।२।६९) सकारस्य द्वित्वपक्षे संस्स्स्कर्त्ता, सँस्स्स्कर्त्ता इति च त्रिसकाररूपद्वयम्, अनुस्वारस्याप्यच्त्वादिति सिद्धान्तोक्तिः। ततोऽनुनासिकवतां त्रयाणां झरः खयः (१।२।७०) इत्यनेन ककारस्य द्वित्वे संस्स्क्कर्त्ता, संस्क्कर्त्ता, सँस्स्क्कर्त्ता, संस्स्कर्त्ता, सँस्कर्त्ता, सँस्स्क्कर्त्ता इति षट् पदानि; अनुस्वारवतामनुस्वारस्याऽपि द्वित्वे द्वादश। एषामष्टादशानाम् (अनुस्वारवताम् १२+ अनुनासिकवताम्६ = १८) तकारस्य—झयाम् यय् (१।२।६६) इति द्वित्वे, ततो यणो वर्ग्यस्येति (१।२।७०) पुनर्द्वित्वे तु एकतं, द्वितं, त्रितमिति चतुष्पञ्चाशत् (१८ × ३ = ५४), ततोऽणोऽप्रगृह्यस्याऽनुनासिकः (१।२।४८) इत्याकारस्य विभाषयाऽनुनासिकत्वेऽष्टोत्तरशतम्(१०८) इति सिद्धान्तकौमुदी। मिश्रास्तु चतुर्विंशतिरूपाण्याहुस्तच्चिन्त्यम्।

(१) अस्मिन् वाक्यभेदः, सामान्यतः खयि प्राप्ते च,छ,ट,ठयोस्तालव्य-मूर्द्धन्यौ भवतः इति भिद्यते। अत्र 'पुम्' इति संयोगान्तलोपे कृतेऽवशिष्टस्याऽनुकरणम्, संयोगान्तस्येति (३।१।११०) सकारलोपे मकारस्यैव कार्यित्वात्। ननु सकारस्य विसर्गे कृते चछे, टठे (१।२।२९, १।२।२०) शषाभ्याम् भवितव्यम् किं चुट्वोः शषाविति करणेनेत्याशङ्क्याह अनेनेति, अत्र प्रकरणे सकारस्य विसर्गो न कर्त्तव्य इति भावः। "ख्याञा-देशे न"ति वार्त्तिकबलात् पुंख्यानमित्यत्र भविष्यति।

## ३४ । अच नमः प्रागनुनासिकोऽनुस्वारो वा ।

[अच ७।, न,मः ५।, प्राक् ०१।, अनुनासिकः १।, अनुस्वारः १।, वा ०१।]

भवाँश्चरति, भवांश्चरति ; पुंस्कामा, पुँस्कामा । पदान्त इति निवृत्तम् ।



## अथ षत्वप्रकरणम् ।

## ३५ । इच्कुरो नुम्विसर्गव्यवायेऽपि सः षः प्रत्ययादेश-शासिघसिवसामपदाद्यन्तसाताम् ।

[इच्कुरः (इच्,कवर्गः, रः) ५।, नुम,विसर्ग,व्यवाये ७।, अपि ०१।, सः ६।, षः १।, प्रत्ययादेश-शासि,घसि,वसाम् ६॥, अपदाद्यन्तसाताम् (न-पद-आदि,अन्त,सात्) ६॥] (१)

इच्, कवर्ग, रेफेभ्यः परस्य प्रत्ययादीनां सकारस्य षो भवति । अग्निषु, वायुषु, पितृषु, गोषु, नौषु, वाक्षु, कुङ्क्षु,

(१) इच् (इ, उ, ऋ, लृ, ए, ओ, ऐ, औ), कु (क, ख, ग, घ, ङ), र, एतेषां समाहारे द्वन्द्वः, ततः पञ्चम्येकवचनम् । व्यवायशब्दस्य व्यवधानरूपोऽर्थः, नुम्-विसर्गाभ्यां (नुम-नुमागमः, विसर्गः प्रसिद्ध एव ताभ्याम्) व्यवधाने कृतेऽपि, अपिशब्दाद्व्यवहिते काव्ये व्यवहितेऽपीष्टमिति गम्यते । अथेहादेशत्वादेव घसेः षत्वे सिद्धे किं घसिग्रहणेन, उच्यते—आदिश्यते इत्यादेशः सकारः, यत्र सकार एवादिश्यते तत्र षत्वं, यत्रान्येन सहादेशस्तत्र न स्यादिति घसादेशे घकारसहितादेशात्तद्ग्रहणम् । अन्ये तु समस्तादेशानां शासि-घस्योरेव सः ष इति नियमार्थमिदं ग्रहणमिति व्याचक्षते ।

वापुः । "ष्वाच । ष्वात् (ल्, व्, य्) ५।, च १०।"—ष्ठलुषु, ष्ठष्वषु, ष्वयुषु ; आदेशस्य—सिषेच, सुष्वाप ; "अच्तवर्गपराः सादयः सोपदेशाः"(१)—ष्वि, ष्विदि, ष्वदि, ष्वञ्जि, ष्वपयश्च, ष्टपि, ष्टजि, ष्टृ, स्तृ, स्त्या, सेक, ष्ट,वर्ज्जमिति, तथाच—सूच, सूत्र, स्तन, संग्राम, साम, सभाज, स्तेन, स्तोमानामसोपदेशत्वम् । शासि, घसि, वसां—शिष्टम्, जक्षुः, उषितम् ।

(१) अथ केषां धातूनां सकारादेशः सम्भवतीति दर्शयन्नाह—अच्-तवर्गपरा इति । अच् (अ-औ) च, तवर्गः (त—न) च, अच्तवर्गौ, तौ परौ येभ्यः ते अच्-तवर्गपराः । अस्मिन्नर्थे यद्यपि अच्तवर्गपरत्वं धातोरेव प्रसज्यते, न सस्य, तथापि "सविशेषणे विधिनिषेधौ विशेषणमुपसंक्रामतो विशेष्ये बाधिते सति"* इत्यनेन विधिरूपस्य अच्तवर्गपरत्वस्य विशेष्येण धातुना सहान्वयबाधे विशेषणे सकार एव प्रवृत्तिः । शिष्ट—शास+क्त, "शासः शिघङ्हलोरनाङः" (३।३।४३) इत्यनेन शासस्थाने शिस्+त इति स्थिते अनेन षत्वम् शिष्+त इति जातं, ततः "ष्टुना ष्टुरिति" (१.२ ६८) तस्थाने टत्वं शिष्ट ; जक्षुः—घस+उस् (लिट्), "भुङघनपि—लिटि वा".

* विशेषणेन सह वर्त्तते इति सविशेषणं पदं तस्मिन् विधिश्च निषेधश्च तौ ; सविशेषणे पदे यौ विधिर्निषेधो वा यथासम्भवं विधिनिषेधयोरन्यतर इति भावः, विशेष्ये बाधिते सति (विशेष्येण सहाऽन्वययोगाऽसम्भवे सतीति भावः) विशेषणं पदं उपसंक्रामतः सङ्क्रान्तः, यथा "शिखी विनष्टः पुरुषो न नष्टः" इत्यत्र शिखाविशिष्टत्वेन शिखी सविशेषणं पदम्, 'विनष्टः' इति विधिः, तस्य 'पुरुषो न नष्ट' इत्युत्तरवाक्यात्, विशेष्येण पुरुषेण सहाऽन्वयबाधे, विशेषणे शिखायामेव प्रवृत्तिः, एवं "एकतारं नभो नैव द्रष्टव्यं सुखमिच्छता" इत्यत्र नभसोऽतीन्द्रियत्वात् न द्रष्टव्यमिति निषेधः विशेषणे एकतारायामवगन्तव्यः । एवमत्र सोपदेशाः सादयोऽच्तवर्गपराः, अत्र अच्तवर्गपरा इति विधिः, तस्य विशेष्येण धातुना सहाऽन्वयबाधे विशेषणे सकार एव प्रवृत्तिः ।

नुमादिव्यवायेऽपि सर्पींषि, सर्पिःषु, परत्वात् षत्वे कृते विसर्गस्य "शरि शर् (१।३।२५)" सर्पिष्षु, नेह निंस्से। अपदाद्यन्तसातामिति किम्? पदादेः दधिसेकः, व्यतिसे; पदान्तस्य अग्निस्त्व। सात्—अग्निसात्। इच्कुर इति किम्? दासगति,

(३।२।१०१) इत्यनेन अदस्थाने घस्लृ, घस्+उस् "द्विरार्द्धेकाचः" (३।४।२) इति द्वित्वम्, "घझगह्रो जः" (३।४।३०) इत्यनेन अभ्यासस्य घस्य जकारः, जघस्+उस् इति स्थिते 'गम, हन, जन, खन घसामिति" (३।३।८३) इत्यनेन उपधालोपे जघ्स्+उस् इति स्थिते,अनेन षत्वे, "खरि प्रथमः" (१।२ ५४) इत्यनेन घस्थाने कत्वम्, "रुसोः पदान्ते" इति (१।३।१) उस्-सस्थाने विसर्गः, जक्ष्+उः. = जक्षुः। उषितम् — वस+क्त, क्षुधिवसतिविमोहनार्थेति (३।४।१४६) इट्, "वचिस्वपी"ति (३ ३।१३२) वस्थाने उ, अनेन च षत्वम् = उषितमिति सिद्धम्। "आदेशप्रत्यययोः षत्वे सरकः प्रतिषेधः" इति भाष्यम् — यथा.क्सरः, धूसरः*। नुम्व्यवधानस्योदाहरणम्—सर्पींषि, सृपधातोरिस्-प्रत्ययेन सर्पिस्शब्दो जातः, तस्य प्रथमाबहुवचनान्तं पदमिदम्, सर्पिस्+जस् "जश्शसोः शिर्झलचोर्नुम् च"(२.३ ६४)इत्यनेन जस्स्थाने शि ( इ f ) नुमागमश्च, ततः "सान्त महत" इति (२।३।८७) दीर्घः सर्पीन् स् इ, अनेन षत्वम्, "नश्चापदान्ते झली"ति (१।२।४१) नकारस्याऽनुस्वारः, सर्पींषि। सर्पिःषु—सर्पिस्+सु, रुसोः [illegible] सस्थाने विसर्गः, सर्पिःसु इति स्थिते, अनेन प्रत्ययस्य सस्य षत्वम्, सर्पिःषु इति षत्वकरणाऽनन्तरं "शरि शर"-इत्यनेन विसर्गस्य षत्वम् सर्पिष्षु इति सिद्धम्। प्रत्युदाहरति निंस्से इत्यादि निसि चुम्बने अदादि लट् से, नुमागमः, निंस्स अत्र निसधातोः सकारस्यापदान्तत्वेन विसर्गाभावात् न 'से' प्रत्ययसम्बन्धिनः सस्य षत्वम्। दध्ना सेकः दधिसेकः, वि+अति+अस+से, 'श्नसतोर"रित्यनेन (३।३।८) अकारलोपः, "सः सि" (३।३।१०) इति

* .भाष्यमते आदेशो य. सः प्रत्ययस्य (अवयवं षष्ठीप्रत्ययावयवीभूत इत्यर्थः) यः स इति योगविभाग. कर्त्तव्य.।

श्रेयांसि, पयःसु । टोश्चापदान्ते सः ष इति वक्तव्यम् । रारट्षि, पाणिनीये । ष्टुत्वं, रारट्टि ।

## ३६ । स्तौतिण्योरेव सनः षत्वेऽभ्यासादसह-स्वदस्विदाम् ।

[स्तौतिण्योः (स्तौति = स्तु, णि — णिजन्त) ६॥, एव ०१।, सनः ६।, षत्वे ७।, अभ्यासात् ५।, असहस्वदस्विदाम् (न सह, स्वद, स्विद) ६॥] (१)

सनः षत्वे स्तौतेर्ण्यन्तानाञ्च अभ्यासादिचः परस्य षत्वं स्यात् । तुष्टूषति ; ण्यन्तानां—सिषेचयिषति, सिष्वञ्जयिषति ; असहादेरिति किम् ? सिसाहयिषति, सिस्वादयिषति, सिस्वेदयिषति ; नियमः किम् ? सिसिक्षति, सुसूषते ; षत्व इति किम् ? इह नियमो मा भूत् ; सुषुप्सति, तिष्ठासति ।

---

सलोप ; उभयत्र सकारस्य पदादौ वर्तमानत्वात् न षत्वम् । टोश्चाऽपदान्ते इति वार्तिकम्, अपदान्तविषये टवर्गादुत्तरस्यापि सकारस्य षः स्यात् इति तदर्थः । एतद्धि पाणिन्यनुमोदितमिति 'पाणिनीये' इत्यनेन सूचितम् (पा. ८।४।४१) ; रारट्टि इत्यत्र तेनैव पाणिनिसूत्रेण सकारस्य टत्वम् ।

(१) एवकारोऽत्र नियमार्थः, सिद्धे सत्यारम्भो नियमः (सिद्धे सति पूर्वसूत्रेणेति शेषः पुनस्तत्साधनार्थम् आरम्भः (प्रयत्नः) नियमः, अत्र "इण्कुः" इत्यनेन षत्वसिद्धौ पुनरेतत्सूत्रकरणप्रयत्नो नियमार्थमेव) ; तथाहि सनः षत्वे सति स्तौतिण्योरेवाभ्यासादिचः परस्य नाऽन्यस्मात् निमित्तात्, अनेन षत्वस्य स्तौतिण्योरन्येन योगो व्यवच्छिन्न इत्यन्ययोगव्यवच्छेदकार्थायमेवकारः । इह नियमो मा भूत, सुषुप्सति, तिष्ठासतीत्यादौ सनः षत्वाऽभावेऽपि अभ्यासादिचः परस्य सस्य षत्वं कृतमित्यर्थः । स्तौतीति स्तुधातुः, णिः णिच्प्रत्ययान्तः । अन्यदपि ज्ञेयं यत् सनि स्तौतिण्योरेवेति नियमो न तु स्तौतिण्योः सनेऽपि, तथात्वे तुष्टावित्यत्र षत्वं न स्यात् ।

## ३७। ह्रस्वात्तसितादितद्धितयोरतिङः।

[ह्रस्वात् ५।, तसितादितद्धितयोः (तसि-त आदि-तद्धित) ७॥, अतिङः ५।]

पदान्तार्थं वचनम्। तसौ, तादितद्धिते च परे ह्रस्वात् परस्य सस्य षत्वं स्यात्। सर्पिष्टः, वपुष्टः, चतुष्टयम्; ह्रस्वादिति किम्? गोस्तः, भूस्त्वम्; अतिङ इति किम्? भिन्द्युस्तराम्। (१)

## ३८। निसस्तपतौ सकृत्सेवने।

[निसः ६।, तपतौ ७।, सकृत्-सेवने ७।] (२)

तपतौ परे निसः षत्वं स्यात् सकृत्सेवनञ्चेत्। निष्टपति सुवर्णम्, निष्टापः।

(१) सर्पिस्+तस्, वपुस्+तस्, चतुः+तयम् (तद्धित-तयट्प्रत्ययः)। गो+तस्, भूः+त्वम् (तादितद्धितप्रत्ययः)। भिद+युस् (लिङ्) भिन्द्युस्+तराम्। सत्यप्यव्यभिचारे हि विशेषणमनर्थकं भवतीति ह्रस्वादिति विशेषणमिदं च इत्यस्यैवानुवृत्तिर्नार्थेषां, तेन पयस्तरीमित्यत्र न षत्वप्रसङ्ग इति गोयीचन्द्रः। तादितद्धिते पदान्तत्वादि च कुर इत्यनेनाप्राप्ते विधिरयमतएवोक्तं "पदान्तार्थं वचन"मिति। तसौ च परे पदान्तत्वाभावात् प्राप्ते नियमार्थं—ह्रस्वादेव तसौ परे षो भवति नान्यत इति च गोयीचन्द्रः। तन्मते तेन, चाच् प्रभृतिषु तादितद्धितेषु न भवत्येव, तथाहि सर्पिस्तैलं, यजुस्ताकरोति।

(२) सेवनम् अर्थो करणं। निस इति सान्तप्रकृतिरथवा निरो भविष्यत्सकारेण निर्देशः, तथाहि निरस्तपौ सकृत्सेवने इति संक्षिप्तसारसूत्रम्। सकृदिति किम्? बहुधा निस्तपति सुवर्णम्। तपतेरन्यत्र न, निस्सरति।

## ३९ । अम्बादेः स्थस्य ।

[अम्बादेः (अम्ब आदि) ५।, स्थस्य ६।]

पदाद्यर्थोऽयमारम्भः । अम्बादेः परस्य स्थस्य षत्वं स्यात् । अम्बष्ठः, आम्बष्ठः; गोष्ठम्, गोष्ठः, संज्ञायामेव, अन्यत्र गोस्थः ; भूमिष्ठः ; सव्यष्ठः, अपष्ठः । अम्ब, आम्ब, गो, भूमि, सव्याऽप, द्वि, त्रि, कु, शङ्कु, अङ्कु, मञ्जि, पुञ्जि, परम, बर्हिः, दिव्यग्नि (दिवि-अग्नि) (१) । प्रष्ठोऽग्रगामिणि । स्थग्रहणान्नेह गो-स्थानम् । इतः पदादौ विधिः ।

## ४० । विकुशमीपरिभ्यः स्थलस्य ।

[वि, कु, शमी, परिभ्यः ५॥, स्थलस्य ६।]

एभ्यः स्थलस्य षत्वं स्यात् । विष्ठलम् ; कुष्ठलम् ; शमी-शब्दस्य संज्ञायां ह्रस्वः शमिष्ठलम् (२) । कपिष्ठलो गोत्रे । कपिष्ठलः स्यात् गोत्रमादिपुरुषश्चेत् ।

(१) अम्बादेरिति किम् भूस्थः, स्थस्येति किम् गोस्थितिः-स्त्र स्थ इति स्वरूपस्य न तु स्थाधातोर्ग्रहणमिति भावः । अम्बायां तिष्ठतीति अम्बा + स्था + क आतः प्रादेरिति (४।१।३९), ततः "आतो लुगिड़िति (३।३।८८) 'स्था' इत्यस्याकारलुक्, अम्बा + स्थ इति स्थिते 'ड्यापोर्नाम्नि बहुलमिति' । अम्बाया आकारह्रस्वः अम्बष्ठः । परमे तिष्ठतीति कः परमेष्ठः ततः किन् औणादिकः परमेष्ठीति पञ्जिका ।

(२) शमीस्थलमित्यत्र ह्रस्वपक्ष एव षत्वमिति मिश्राः । गोत्रादन्यत्र कपिस्थलो गिरिः। यत्पूर्व्विका सन्ततिः स आद्यपुरुषो गोत्रमुच्यते ।

## ४१ । निनदीभ्याम् स्नातेः कौशले ।

[नि, नदीभ्याम् ५॥. स्नातेः ६।, कौशले ७।] (१)

आभ्यां स्नातेः कौशले गम्ये षत्वं स्यात् । कार्य्ये निष्णातः, नदीष्णः, नदीज्ञ इत्यर्थः । प्रतिष्णातं सूत्रे । प्रतिष्णातं स्यात् सूत्रञ्चेत् ।

## ४२ । मातृपितृभ्यां स्वसुः षष्ठ्यलुकि वा ।

[मातृ पितृ-भ्याम् ५॥, स्वसुः ६।, षष्ठ्यलुकि (षष्ठी अलुक्) ७।, वा ०१।]

मातृष्वसा, पितृष्वसा ; षष्ठ्यलुकि वा मातुःस्वसा, मातुःष्वसा ; पितुःस्वसा, पितुःष्वसा ।

## ४३ । सुविनिर्दुर्भ्यः सुपिसूतिसमानाम् ।

[सु, वि, निर्,-दुर्भ्यः ५॥, सुपि, सूति, समानाम् ६॥] (२)

एभ्यः सुप्यादेः षत्वं स्यात् । सुषुप्तः, विषुप्तः, निःषूतिः, दुःषमम् ; सुपीति निर्द्देशः किम् ? सुस्वपिति । विष्टारञ्छन्दसि

---

(१) अत्र यद्यपि स्नातेरेव षत्वं विहितम्, तथाऽपि शिष्टप्रयोग एव शरणमिति मिश्राः । चान्द्रास्तु निष्णातस्यैव षत्वं वदन्ति, तच्च प्रमाणदर्शनोपचेपेण दूषितमेवेति गोयीचन्द्रः । तन्मते नि+स्ना+क्तनि ञिटि निपातनाविधि भवति । कौशलं नैपुण्यम्, तदभावे नदीस्नातः । नदीष्णः-नद्यवगाहनकुशलः । प्रतिष्णातं सुविशुद्धम् । सूत्र इति किम् ? प्रतिस्नातम् शिरः ।

(२) सुपीति 'वचि स्वपीत्यादिना (३।३।१२२) कृतसंप्रसारणस्य ग्रहणं, तथाहि सुपेः षत्वं स्वपौ मा भूत्, (भाष्यम्) । विस्वप्नः, विस्वप्नमिति, विसुष्वापेति च ; ननु विषुषुपतुरित्यत्र द्विरुक्तिसम्बन्धिनः (सु)इत्यस्य कथं षत्वमिति चेत्, सुपः षत्वे कृते पश्चाद्द्वित्वमिति बोध्यम् ।

स्यात्, विष्टारः पङ्क्तिनाम च्छन्दः। (१) अभिनिष्टानो वर्णे। स्यात्—स्तनतेरभिनिष्टानो विसर्गाख्यो वर्णः। (२)

## ४४। विष्टरो वृक्षासनयोः।

[विष्टरः १।, वृक्षासनयोः ७॥]

स्तृञो निपात्यते। वृक्षासने विष्टरो।*

## ४५। समासेऽङ्गुलेः सङ्गस्य।

समासे ७।, अङ्गुलेः ५।, सङ्गस्य ६।

षत्वं स्यात्। अङ्गुलिषङ्गो यवागूः; वाक्ये तु (३) अङ्गुलेः सङ्गं पश्य।

## ४६। अग्निष्टुदायुष्टोमाग्निष्टोमज्योतिष्टोमाग्नीषोमभीरुष्ठानगविष्ठिरयुधिष्ठिराः।

[अग्निष्टुत्, आयुष्टोम, अग्निष्टोम, ज्योतिष्टोम, अग्नीषोम, भीरुष्ठान, गविष्ठिर, युधिष्ठिराः १॥]

---

(१) छन्दसीति किम् ?—विस्तारः पटस्य।

(२) अत्र "स्तन वन शब्दे" इत्यस्य भौवादिकस्यैव ग्रहणं, न चौरादिकस्यादन्तस्येति स्तनतेरित्यनेन सूचितम्। एवञ्चाऽभिनिसमस्तपूर्व्वस्यैव नतु व्यस्तस्य तथैव संज्ञाविधानादित्यपि चावधेयम्। इह 'वर्णपदेन विसर्गाख्य इति काशिकामतम्' वर्णमात्रे विमर्गे चाऽभिनिष्टान इति" सिद्धान्तकौमुदी, वर्ण इति किम् अभिनिस्तानो गर्भिण्याः।

* अन्यत्र वाक्यस्य विस्तरः ; छन्दोनाम्नि षत्वञ्च विष्टारं छन्दः।

(३) वाक्ये तु इति "तु" शब्दाद्विदवाक्ये न स्यादित्यर्थः।

अष्टौ निपात्यन्ते। अग्निष्टुत् क्विबन्तः। (१)

## ४७। सुषामादिषु च।

[सुषामादिषु (सुषाम-आदि) ७॥, च ०१।] (२)

एषु षत्वं स्यात्। सुषामा, दुःषामा, सुषन्धिः, दुःषन्धिः, दुन्दुभिषेवणम्, परमेष्ठी, हरिषेणः, सुष्ठु, दुष्ठु, दिविषदित्यादि।

## ४८। तुरादेः साढः। [तुरादेः ५।, साढः ६।]

सहेः साढभूतस्य षत्वं स्यात्। तुराषाट्, जनाषाट्; साढ इति किम्? तुरासाहौ। आसेत्रादड्व्यवायेऽपि। सेव

(१) अत्राऽपि समासे इत्यस्याऽनुवर्त्तनम्। समास इति किम्? अग्निः स्तुतम् प्राप्नोति, आयुः सोमं याञ्छति, ज्योतिः सोमं दर्शति, भीरुः स्थानं पश्यति, गवि स्थिरो भ्रातः, युधि स्थिरो जनः। भाष्यमते देवताद्वन्द्वे एवाग्नीषोमौ, अन्यत्र अग्निसोमौ (नवामकौ) माणवकौ।

(२) सुषामादिषु च (८।३।९८) पाणिनिः, शोभनं साम यस्य सुषामा, सुषामादयो यथा, सुषामा, निःषामा, दुःषामा, सुषेधः, निषेधः, निःषेधः, दुःषेधः, सुषन्धिः, निःषन्धिः, दुःषन्धिः, सुष्ठु, दुष्ठु। गौरिषक्थः संज्ञायाम्। प्रतिष्णिका, जलाषाहं, नौषेचनम्, (दुन्दुभिषेवणम्) दुन्दुभिषेचनम्। एति संज्ञायामगात्। नक्षत्राद्वा। हरिषेणः, रोहिणीषेणः, स्था, स्थिन, स्थूना"मिति सर्व्वेषु, "णत्वं नास्ति" (एकारे परे अकारान्तस्य सस्य षत्वम्, हरिषेणः, भानुषेणः, वायुषेणः; एतीति किम्? हरिसोता; नाम्नीति किम्? पृथ्वी सेना यस्य पृथुसेनः; अक इति किम्? विष्वक्सेनः; एवं सुषम, गोषा, सुषा, नौषेति काशिका।

पर्य्यन्तं (१।३।५७) अड्व्यवधाने षत्वं वक्तव्यम् (१), तद्यथा अभिषुणोति, अभ्यषुणोत् ।

## ४९ । स्थादेरभ्यासव्यवाये चाभ्यासस्य च ।

[स्थादि (स्था-आदि) ६।, अभ्यास-व्यवाये ७।, च ०।, अभ्यासस्य ६।, च ०।]

स्था सेनयप्रभृतेरासेवादड्भ्यासव्यवाये चाभ्यासस्य षत्वं वक्तव्यम् । इजन्ताभ्यासादादेशसकारस्य षत्वे सिद्धेऽपि नियमोऽणिजन्तादपि तथा स्यात् । (२) परितष्ठौ, अभिषिषेणयिषति ।

## ५० । उपसर्गात् सुवति सुनोति सो स्तु स्तुभ स्था सेनय सञ्ज स्वञ्जाम् ।

[उपसर्गात् ५।, सुवति, सुनोति, सो, स्तु, स्तुभ, स्था, सेनय, सञ्ज, स्वञ्जाम् ६।] (३)

---

(१) षत्वविधिरुपसर्गाद् विधीयमानोऽभ्यासान्तरेऽपि भवतीति वक्तव्यम् ।

(२) ननु किमर्थमभ्यासव्यवधाने षत्वं विधीयते, यावता परितिष्ठासतीत्यादौ षत्वमिष्यत इत्यनेनैव सामान्यलक्षणेन सिद्धमत आह "इजन्ताभ्यासादि"ति । नियमो विधिः । अभ्यासस्येति वचनं नियमार्थं स्थादिष्वेवाभ्याससकारस्य षत्वं ना नाऽन्यत्र अभिसुसूषति, परिसिसासति । स्थादीत्यादिपदेन स्था, सेनय, सेध, सिच, सञ्ज, स्वञ्जाः ; तथाहि पाणिनिसूत्रम्—उपसर्गात् सुनोति, सुवति, स्यति, स्तौति, स्तोभति, स्था, सेनय, सेध, सिच, सञ्ज, स्वञ्जाम् (८।३।६५)।

(३) सुङ् प्रेरणे, षूञ् अभिषवे, विकरणदर्शनात्तयोरादि-सु ग्रहणं भवति । परिषुवति, अभ्यषुणोत्, षोऽन्तकर्मणि परिष्यति, ष्टुञ् स्तुतौ परिष्टौति, ष्टुभ स्तम्भे परिष्टोभते,

प्रादिस्थनिमित्तादेषां षत्वं स्यात्। परिषुवति, पर्य्यषुवत्, अभ्यषुणोत्, परिष्यति, परिष्टौति, परिष्टोभते, अधितष्ठौ, सेनयाऽभिमुखं याति अभिषेणयति, अभिषजति, परिष्वजते ; इच्कुर इत्येव—प्रसुवति, प्रस्तौति ।

## ५१ । सेधतेरगतौ । [सेधतेः ६।, अगतौ (न गति) ७।](१)

प्रादिस्थनिमित्तात् सिधः षत्वं स्यात्। निषेधति ; अड्भ्यासव्यवधानेऽपि न्यषेधत् ; निषिषेध । अगताविति किम् ? अनुसेधति गां गोपः, श्यपा निर्द्देशान्नेह निषिध्यति ।

## ५२ । सिचेरयङि । [सिचः ६।, अयङि (न यङ्) ७।]

प्रादेः सिचः षत्वं स्यात्। अभिषिञ्चति, अभ्यषिञ्चत्,

अट् गतिनिवृत्तौ अधितष्ठौ, सेनयति व्यन्तः, पत्र मङ्, ... परिष्वङ्गे। उपसर्गादिति किम् ? दधि सिञ्चति, निर्गताः सेचका यस्मात् निःसेचको देश इति सिद्धाः। सिच् धातोः सुवत्यादावगणनान्नात्र प्राप्तिरेवेति न वाच्यम् पाणिनिना सूत्रादिषु सिचो निर्द्देशात्। एवं सुनोतेर्ण्वुल्प्रत्ययेन सावक इति स्थिते क्वचि अभिसावकीयतीत्यत्र सुनोतिं प्रत्युपसर्गयोगाऽभावात् न षत्वम्। यत्क्रियां प्रति प्रादीनां विशेषणत्वम्, तत्क्रियां प्रत्येवोपसर्गत्वमिति नियमः, तेन निर्गतः सावको यस्मात् निःसावक इत्यादिष्वपि न षत्वम्। सुवतीत्यादीनां श्तिपा निर्द्देशात्, सेनयति च शपा निर्द्देशात् तेषां यङ्लुकि षत्वं न इति सिद्धान्तकौमुदीटीका।

(१) सेधतीति शपा निर्द्देशात् दैवादिकस्य सिध्यतेरिति बोध्यम्।

अभिषिषिचति* ; अयङीति किम् ? परिसेसिच्यते। प्रसज्य-प्रतिषेधोऽयम् (१), तेनोभयसकारस्यैव निषेधः ; अभ्यासेऽपि न सेसिच्यते।

## ५३। सदेरप्रतेः। [सदेः ६।, अ(न) प्रतेः ५।]

प्रादेः सदेः षत्वं स्यात्। निषीदति, न्यषीदत् ; अप्रतेरिति किम् ? प्रतिसीदति।

## ५४। स्तम्भेरुपाच्चाऽचङि।

[स्तम्भेः ६।, उपात् ५।, च ०१।, अचङि (न-चङ्) ७।] (२)

स्तम्भेरिजन्तात् प्रादेरुपाच्च षत्वं स्यात्। विष्टभ्नाति, उपष्टम्भः ; अचङीति किम् ? व्यतस्तम्भत्।

## ५५। अवात् सामीप्यालम्बनयोः।

[अवात् ५।, सामीप्यालम्बनयोः (सामीप्य-आलम्बन) ७।।] (३)

* अभिषिषिचतीति प्रमादपाठ इति यदुक्तं तद्धेयमेव स्यादिषु सिचः पाठादुभयत्रैव षत्वप्रसक्तेः।

(१) नञस्तावत् द्विविधः प्रसज्यप्रतिषेधपर्युदासभेदात्,—तथाहि—"अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता। प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ्॥ प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता। पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्॥" इति प्रसज्यनञो निषेधप्राधान्यात् यङि सिच्सम्बन्धिनः सस्य षत्वनिषेधे, प्रादेः परस्य, अभ्यासादुत्तरस्य च सिच्सम्बन्धिनः सस्य षत्वनिषेधः स्यादेव।

(२) उपादित्यपाणिनीयम्।

(३)* सान्निध्ये यति सान्द्रा, पौरुषेयं बलं यथा यष्टी मल्लस्यावष्टम्भः। अन्योऽपि दृष्टान्तोपदेशमभिधास्यन्ति।

अवात् स्तम्भेः षत्वं स्यात्। सामीप्ये—अवष्टब्धा सेना; आलम्बने—अवष्टभ्य दण्डं स्थितः; अन्यत्र अवस्तब्धः शीतेन।

## ५६। व्यवात् स्वनो भोजने।

[व्यवात् (वि, अव) ५।, स्वनः ६। भोजने ७।]

आभ्यां स्वनः षत्वं स्यात्। विष्वणति भक्तम्, अवष्वाण; भोजन इति किम्? विस्वनति ढक्काम्।

## ५७। निविपरिभ्यः सेवसितसयसिवुसहसुटामसोढः।

[नि, वि, परि भ्यः ५॥, सेव, सित, सय, सिवु, सह, सुटाम् ६॥, असोढः ६।] (१)

न्यादेः सेवादीनां षत्वं स्यात्। निषेवते, निषेवणम्, व्यषेवत, परिषिषेवे—आसेवादिति निवृत्तम्; सितः—परिषितः; सयः—विषयः; सिवु—निषीव्यति; सह—विषहते। असो नाऽभ्यासस्य। अभ्यासादिचः षत्वं सिद्धमेव, निसिषेव; परेः सुट् सम्भवति—परिष्कुरु, परिष्कारः; असोढ इति हलन्ताऽनुकरणात् सोढरूपस्यैव न भवति। परिसोढुम्, परिसोढः।

---

(१) षेवृ सेवृ सेवने, षिञ् बन्धने, षिवु तन्तुसन्ताने, षह मर्षणे। सम्पर्युपादिस्यादिना (३।१।१२८) सुट्, स चाव परेरेव सम्भवति, तेन चाविष्कारः, पारस्करः इति निपातेन मूर्द्धन्यः। "न चात्वमारोपसर्गस्य विगताः सेवकाः यस्मात् स विसेवकोऽस्मः। अभिसावयति, अभिसावकीयतीति" क्रमदीश्वरः।

## ५८। न्यादेः सिवादिस्तुस्वञ्जां वाऽड्-व्यवाये।

[न्यादेः (नि आदि) ५।, सिवादि (सिव आदि), स्तु, स्वञ्जाम् ६।॥, वा ०।, अड् व्यवाये ७।]　(१)

नि,वि,परि-भ्यः सित्,सह,सुट्,स्तु,स्वञ्जाम् अड्व्यवाये षत्वं वा स्यात्। न्यषीव्यत्, न्यसीव्यत्; व्यषहत, व्यसहत; पर्य्यष्करोत्, पर्य्यस्करोत्; न्यष्टौत्, न्यस्तौत्; पर्य्यष्वजत, पर्य्यस्वजत।

## ५९। परेः स्कन्देर्व्वैरनिष्ठायाम्।

[परेः ५।, स्कन्देः ६।, वेः ५।, अनिष्ठायाम् (अ-निष्ठा) ७।]　(२)

अतोऽषोपदेशार्थं वचनम्। आभ्यां स्कन्देः षत्वं वा स्यात्। परिष्कन्दति, परिस्कन्दति; विष्कन्दति, विस्कन्दति; वेरनिष्ठायामिति किम्? विस्कन्नम्, विस्कन्नवान्; इह भवत्येव—परिष्कण्णम्।

---

(१) सिवादिशब्दात् सहसुटौ गृह्येते, स्तु,स्वञ्जोः (१।२।५०) इत्यनेन प्राप्ते विभाषा।

(२) स्कन्द गतिशोषणयोः, भ्वादि। इह भवत्येव—वेः पृथक् योगात् विपूर्व्वस्यैव स्कन्देर्निष्ठायां न स्यात्, तेन परिष्कण्णमित्यत्र षत्वं स्यादेव। पाणिनिना तु 'परि-स्कन्दः प्राच्यभरतेष्विति (८।३।७५) सूत्रेण परेः स्कन्देरपि निष्ठायाञ्च षत्वाऽभावो निपात्यते। "परिस्कन्दो षपि प्राच्यभरतविषये क्त तस्योपश्च। परिस्कन्दः। अप्राच्यभरत-विषये तु परिष्कन्दः, परिष्कण्णः।" इति क्रमदीश्वरः।

## ६०। स्फुरस्फुलोर्निर्निविभ्यः।

[स्फुर, स्फुलोः ६।।, निर्, नि, विभ्यः ५।।।] (१)

एभ्योऽनयोः षत्वं वा स्यात्। निष्फुरति, निस्फुरति ; विष्फुलति, विस्फुलति।

## ६१। स्यन्देर्व्यनुपर्यभिनिभ्योऽप्राणिषु।

[स्यन्देः ६।, व्यनुपर्यभिनिभ्यः (वि, अनु, परि, अभि, नि) ५।।, अप्राणिषु (न—प्राणिन्) ७।।।] (२)

एभ्यः स्यन्देः षत्वं वा स्यात्। विष्यन्दते विस्यन्दते तैलम् ; अप्राणिष्विति किम्? परिस्यन्दते मत्स्यः।

## ६२। वेः स्कभ्नेर्नित्यम्।

[वेः ५।, स्कभ्नेः ६।, नित्यम् ०२।] (३)

अस्य नित्यं षत्वं स्यात्। विष्कभ्नाति, विष्कम्भः।

## ६३। प्रादुरुपसर्गाभ्यामस्तेर्यचोः।

[प्रादुरुपसर्गाभ्याम् (प्रादुस्, उपसर्ग) ५।।, अस्तेः ६।, यचोः (य, अच्) ७।।](४)

आभ्यां यकारे, ऽचि परे अस्तेः षत्वं स्यात्। यि—प्रादुः-

---

(१) स्फुर स्फुरणे, स्फुल सञ्चये तुदादावेतौ। एतयोः क्रमेण घञि स्फार स्फाला-देशेऽपि षत्वं स्यात्।

(२) स्यन्दू स्रवणे भ्वादावात्मनेपदी।

(३) स्कभि प्रतिबन्धे भ्वादिः, सौत्रो वा, स्कभ्नातेर्नित्यमिति काशिका। स्कभ्नाति-निर्देशात् विस्कभ्नातीत्यत्र षत्वं न भवतीति गोयीचन्द्रः।

(४) अनुपसर्गत्वात् प्रादुःशब्दस्य पृथङ्निर्देशः। अस्य कृभ्वस्तिभिरेव प्रयोगः। तथाहि

थात्, अभिथात् ; अचि—प्रादुःषन्ति ; याऽचोरिति किम् ? परिस्तः ; इचकुर इत्येव—प्रस्यात् ।

६४। न सोः पूजायाम्। [न० १।, सोः ५।१। पूजायाम् ७।]

येषां सुशब्दात् षत्वमुक्तम् तेषां पूजार्थे षत्वं नास्ति। सुसिक्तं, सुस्तुतं त्वया। (१)

६५। अतेरतिप्रवृत्तौ च।

[अतेः ५।१, अति-प्रवृत्तौ ७।, च १।] (२)

अतेः पूजायामतिक्रमणे च षत्वं नास्ति। अतिसिक्तं त्वया।

६६। अपेः स्तोकार्थसम्भावनाऽन्ववसर्गगर्हा-समुच्चयेषु।

[अपेः ५।१। स्तोकार्थ, सम्भावना, अन्ववसर्ग, गर्हा, समुच्चये-षु ७।।] (३)

एष्वर्थेषु वर्त्तमानादपि-शब्दात् परस्य षत्वं नास्ति। सर्पिषोऽपि स्यात् ; सम्भावना योग्यता अपि स्येत् पर्व्वतं

---

"प्रादुःशब्दस्य नियतविषयः कृभ्वस्तियोग एव वर्त्तते" इति भाष्यम्। अचास्तेः सकार-एवाकारे लुप्ते क्रियावाचित्वादुपसर्गप्रादुर्भ्याम् परः स सम्भवति नाऽन्यः तत् कथमनि षकारमिति चेत् न, अनुसूतेः क्विप् अनुसूः, अनुस्वः अपत्यम् आनुसेयः इत्यापि मन्दधीः शङ्कित।

(१) सुरुपसर्गः। सेकादीनामतिशय एवाऽत्र पूजा। पूजायामिति किम् ? सुषेकः।

(२) अतिशयिता प्रवृत्तिः, फलोदयभूतेऽपि प्रवृत्तिरित्यर्थः। उपसर्गादित्यनेन षत्वप्राप्तिर्निषेधः।

(३) सर्पिषोऽपि स्यात् अत्र स्तोकार्थेऽपिः, प्रादुरुपसर्गाभ्याम् (१।३।६९) प्राप्तं षत्वं

हरिः ; अन्ववसर्गः कामचाराऽभ्यनुज्ञा, अपि सिञ्च, अपि स्तुहि च ; गर्हायां—अपि सिञ्चेत् पलाण्डुं विप्रः, अपि स्तूयात् वृषलम् ; समुच्चये—अपि सिञ्च च, अपि स्तुहि च ।

## ६७ । प्रतिपर्य्यऽन्वभिभ्यो द्वितीयार्थेभ्यः ।

[प्रतिपर्य्यऽन्वभिभ्यः (प्रति, परि, अनु, अभि) ५॥, द्वितीयार्थेभ्यः ५॥] (१)

एभ्यो द्वितीयार्थेभ्यः परस्य धातोरुक्तं षत्वं नास्ति ।[२] वृक्षं प्रतिस्तीयते ; वृक्षं वृक्षं परिसिञ्चति ; तमनुस्तौति ; मामभिस्यात् ।

## ६८ । सुञः स्यसनोः । [सुञः ६।, स्य,सनोः ७॥] (२)

---

निषिध्यते । अपि स्येत्—हरिरिन्द्रः पर्व्वतं अपि स्येत् छिन्द्यात् इति सम्भाव्यते । उपसर्गादित्यनेन (१।३।५०) प्राप्तं षत्वं निषिध्यते ; कामचाराभ्यनुज्ञा यथेष्टानुमतिः, अत्राऽपि उपसर्गादित्यनेन प्राप्तं षत्वं निषिध्यते ; समुच्चयो नामैकत्राऽनेकप्रयोगः, सिञ्च, स्तुहि च इत्युभयं कुर्व्वित्यर्थः ।

(१) येष्वर्थेषु द्वितीया विधीयते त एव द्वितीयार्था लक्षणादयः "लक्षणवीप्सेत्थं-भूताख्यानभागे" (२।२।१५) प्रत्यादिर्न्निविषयतया नु पुनर्वाचकतया तेषां द्योतकत्वादित्यभिप्रायः। अत्र चतुर्णामुदाहरणानां प्रथमतृतीययोः "उपसर्गादिति" प्राप्तं षत्वं निषिध्यते, द्वितीयचतुर्थयोस्तु यथाक्रमेण "सिचैरयङि" (१।३।५२) "प्रादुरुपसर्गाभ्यां" (१।३।६२) इत्येताभ्याम् प्राप्तं षत्वं निषिध्यते। अत्र केचन(कातन्त्राः) कर्म्मप्रवचनीयानां साक्षाद्धातुयोगो नास्तीत्यनुपसर्गता सिद्धैव किं तन्निमित्तकषत्वनिषेधवचनेनेति वदन्ति ।

(२) उपसर्गादिति प्राप्तं षत्वं निषिध्यते । स्तौतिण्योरेव सनः षत्वम् इति नियमा-

अनयोः सुञः षत्वं नास्ति। अभिसोष्यते ; सनः क्विप्—अभिसुसूः।

## ६९। सिवुसहोश्चङि। [सिवु, सहोः ६॥, चङि ७।](१)

अनयोश्चङि षत्वं नास्ति। पर्य्यसीसिवत्, व्यसीसहत्।

## ७०। सदिस्वञ्जोः परस्य लिटि।

[सदि, स्वञ्जोः ६॥, परस्य ६।, लिटि ७।] (२)

अनयोर्लिटि परस्य षत्वं नास्ति। विषसाद, परिषस्वजे।

## ७१। सुस्थादिषु च।

[सुस्थादिषु (सुस्थ आदि) ७॥, च ०१।] (३)

एषु षत्वं नास्ति। सुस्थः, दुःस्थः, प्रतिस्तब्धः, निस्तब्धः, परिस्थितम्।

इति श्रीपद्मनाभदत्तकृतौ सुपद्मे व्याकरणे प्रथमाऽध्यायस्य तृतीयः पादः।

---

सनि सुञः षत्वं न स्यादेव किं सनि निषेधकवचनमित्याह "सनः क्विप्" इति सुञ सनः षत्वे नियमात् क्विपि तन्नाप्नोति प्राप्तिं निषेधः।

(१) उपसर्गाश्रयो विधिरनेन बाध्यते।

(२) लिटि द्विर्वचनं सिद्धमत उभयोर्निषेधे प्राप्ते परस्येत्युक्तम्, विषसादेत्यत्र "सदेरप्रतेरिति (१।३।५३) प्राप्तं षत्वं निषिध्यते ; परिषस्वजे इत्यत्र उपसर्गादिति प्राप्तं निषिध्यते।

(३) उपसर्गादिति प्राप्तं निषिध्यते, एवं सुस्थितिः, निःस्तब्ध इति ; निप्रतिभ्यां स्तम्भेरिति श्रीपतिसूत्रात् 'निष्टब्ध' इत्युक्तम् प्राक् इति दिक्।

| पदान्ते अपदान्ते वा | उत्तरतः | स्थाने | आदेशः, लोपो वा | परे | निषेधः |
|---|---|---|---|---|---|
| पदान्ते | | वकारस्य यकारस्य च | लोपः (१।३।२१) | अचि | |
| | | विसर्गस्य | शर(श,ष,स) (१।३।२५) | शरि(श,ष,स) | |
| | | विसर्गस्य | शः (१।३।२६) | च, छे परे | |
| | | ,, | षः (१।३।२७) | ट, ठे परे | |
| | | ,, | सः (१।३।२८) | त, थे परे | |
| | | नस्य, मस्य च | श,ष,साः (१।३।२९) | च छ ट,ठ, * त,थे परे | |

* (१।३।३० — १।३।३४) विशेषनियमाः द्रष्टव्याः ।

---

## षत्वचक्रम् ।

| पदान्ते, अपदान्ते वा | उत्तरतः | स्थाने | आदेशः | परे, व्यवधाने वा | निषेधः | सूत्रसंख्या |
|---|---|---|---|---|---|---|
| | इजन्त, कवर्ग रेफेभ्यः | प्रत्ययादेश, शसि, घसि, वसाम् सस्य | षत्वम् | नुम्, विसर्ग व्यवधानेऽपि ... | पदादि, पदान्त, सात्, तान्तस्तन | १।३।३५ |
| | सुधातोः, ष्विभसेश्च | अभ्यासात् सम्प्रत्ययस्य सस्य | षत्वम् | ० | सह, स्वद, स्विदामन | १।३।३६ |
| अपदान्ते | इण्वात् (अ, इ,उ,ऋ,लृ) | सस्य | षत्वम् | तसौ, तादि-तद्धिते च | | १।३।३७ |
| | अम्ब, आम्ब, गो भूमि, सव्य, आपद्व्यादिभ्यः | स्थस्य-सस्य | षत्वम् | | | १।३।३९ |

| पदान्ते, अपदान्ते वा | उत्तरतः | स्थाने | आदेशः | परे, व्यवधाने वा | निषेधः | सूत्रसंख्या |
|---|---|---|---|---|---|---|
| अपदान्ते | वि,कु,शमी परि-भ्यः | स्थलस्य सस्य | षत्वम् | ... | ... | १।३।४० |
| | नि,नदीभ्याम् | स्नातेः सस्य | षत्वम् | कौशलार्थे | | १।३।४१ |
| | मातृ,पितृ-भ्याम् | स्वसुः सस्य | षत्वम् | ... | षष्ठ्यलुकि वा | १।३।४२ |
| | सु,वि,निर्, दुर्-भ्यः | सुपि,सूति, समानां सस्य | षत्वम् | ... | ... | १।३।४३ |
| | तुरादेः .. | साढ़-सस्य | षत्वम् | ... | ... | १।३।४८ |
| | | स्थादेः,तेषां अभ्यासस्य च सस्य | षत्वम् | अभ्यास व्यवधानेऽपि | ० | १।३।४९ |
| | उपसर्गात् | सुवति,सुनोति, षी,स्तु इत्यादीनां सस्य | षत्वम् | | | १।३।५० |
| | ,, | सिधधातोः सस्य | षत्वम् | | गत्यर्थे निषेधः | १।३।५१ |
| | ,, | सिचधातोः | षत्वम् | | यङि निषेधः | १।३।५२ |
| | ,, | सद्धातोः सस्य | षत्वम् | | प्रतेरुत्तरतो निषेधः | १।३।५३ |
| | ,, उपात् | स्तम्भधातोः सस्य | षत्वम् | ० | चङि निषेधः | १।३।५४ |
| | ,, अवात् | ,, | ,, | सामीप्यालम्बनार्थयोः | ० | १।३।५५ |
| | वि,अवाभ्याम् | स्वनधातोः सस्य | षत्वम् | भोजनार्थे | ० | १।३।५६ |
| | नि,वि,परिभ्यः | सेव,सित,सय,सिवु,सह,सुटाम् सस्य | षत्वम् | ० | सोढरूपस्य निषेधः | १।३।५७ |

| पदान्ते, अपदान्ते वा | उत्तरत: | स्थाने | आदेश: | पर,व्यवधाने वा | निषेध. | सूत्रसंख्या |
|---|---|---|---|---|---|---|
| अपदान्ते | | ,, सुखप्रर्योग, सस्य | षत्वम्,वा | अड्व्यवधाने | ० | १।३।५८ |
| | परे: | स्कन्दः सस्य | षत्वम् | | | |
| | वे: | ,, ,, | ,, | ० | निष्ठायां निषेध: | १।३।५९ |
| | निर्, नि, वि भ्य: | स्फुर,स्फुली: सस्य | षत्वम् वा | ० | ० | १।३।६० |
| | वि अन,परि, अभि,नि भ्य. | स्यन्दे: सस्य | षत्वम् वा | | प्राणिषु निषेध: | १।३।६१ |
| | वे. | स्कन्दे: सस्य | षत्वम् | ० | ० | १।३।६२* |
| | प्रादुस्, उपसर्गेभ्य: | अस्ते: सस्य | षत्वम् | ये,अचि च परे | ० | १।३।६३ |

* १।३।६४—१।३।७१ नियमा: षत्वनिषेधविषया: ।

स्वभावतो मूर्द्धन्यषकारवन्त: शब्दा: ।

मञ्जूषे ष[illegible]दोषौ अषाढ़षभमषाषाढ़राष्ट्रोष्ट्रकष्टम्,
गोष्पीष्मग्रीष्मभीष्मा विषयविषविषाणानि कुष्माण्डषण्डौ ।
कल्माषं माषमेषानिमिषमिषमहिषा वेषपाषाणयोषित्-
ग्रीवाऽमर्षाङ्कुषारीषरकषपुरीषाऽम्बरीषा: करीषम् ॥
पीयूषं विपुषा हृषीकवषकावीषतृषत्किल्विषम्
प्रत्यूषे पुरुषाकषायकलुषं यषं भिषक्सर्षपौ ।
पुष्पं पुष्करबाष्पशष्पसुषिरं तुषखं तुरुष्कौषधे
मूर्धा गोष्पदपीवरं पषभित्येते तथाषाऽपरे ॥

श्लोकाविमौ श्रीमद्विद्यारत्नकृतमुग्धबोधटीकातो गृहीतौ ।

# प्रथमाऽध्याये चतुर्थः पादः ।

## णत्वप्रकरणम् ।

**१। रषृभ्यो नो णः स्वरकुपुयवहान्तरेऽप्यनन्तो नवर्ज्जमतुस्थः ।**

[र, ष, ऋभ्यः ५॥, नः १।, णः १।, स्वर (अ, आ, इत्यादि) कु (कवर्ग)-पु(पवर्ग) य व-ह-अन्तरे) ७।, अपि ०१।, अनन्तः-(न-अन्तः) १।, नवर्ज्जम ०२।, अतुस्थ-(न-तु(तवर्ग)-स्थ) १।] (१)

र, ष, ऋवर्णेभ्यः परः समानपदस्थो नकारो णो भवति, स्वर-कवर्गादि-व्यवधानेऽपि । तीर्णम्, पुष्णाति ; स्वरादिव्यवधानेऽपि, करणम्, भीषणम् ; स्वरधर्म्मत्वात् विसर्गाऽनुस्वारौ च स्वरौ—उरःकेण, उरःपेण, इत्यत्र एकाचीति णत्वम् (१।४।१५) ; बृंहणम् ; कु—अर्केण, मूर्खेण, गर्गेण, अर्घेण, शृङ्गेण ; पु—

---

(१) रषृभ्य इत्यत्रेतरेतरद्वन्द्वः, रेफ,षकार,ऋवर्णेभ्य इत्यर्थः, पूर्व्वपदादित्यस्य वक्ष्यमाणत्वात् समानपद इति समानशब्दोऽत्र "एक"पर्य्यायः । स्वरः (अ, आ इत्यादि), कुः (कवर्ग.) पुः (पवर्गः), यः, वः, हः तैरन्तरं व्यवधानमिति तृतीयातत्पुरुषः, अट् अजिति प्रत्याहारं वर्ज्जयित्वा स्वरग्रहणं विसर्गाऽनुस्वारलाभार्थमिति पद्मनाभपञ्जिका । ननु अर्द्धमात्राकालो रेफ ऋकारेऽस्तीति केचित्, मात्राचतुर्थभागो रेफऋकार इत्यपरे, इत्युभयमतेऽपि ऋकारे रेफसद्भावात् कथम् ऋकारस्य पृथग्ग्रहणं कृतमिति चेदाह भाष्यकारः "नहि वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते ये व्यपवृक्ता अपि वर्णा भवन्तीति" । 'कु'व्यवाये तु—हादेशेषु (हकारादिष्टकवर्गव्यवधाने) प्रतिषेधो वक्तव्यमिति, तेन वृत्रघ्नः,

दर्पेण, रेफेण, सर्व्वेण, दर्भेण, धर्म्मेण ; य—कार्य्येण, सूर्य्येण, व—कुर्व्वाणः ; ह —वर्हेण ; अनन्त इति किम् ? विप्रान् ; अनुस्थ इति किम् ? क्रन्दति, कन्धन्, कुर्व्वन्ति ; न-वर्ज्जमिति किम् ? नकारस्थो नो णो भवत्येव, नुन्नः, ट्वत्वे परणकारस्य णत्वम् ।

## २। पूर्व्वपदात् संज्ञायामगः ।

[पूर्व्वपदात् ५। संज्ञायां ७।, अगः ५।] (१)

पूर्व्वपदस्थ-रषृभ्यो नो णः स्यात् । नारायणः, सूर्पणखा ; संज्ञायामिति किम् ? दीर्घनयना ; अग इति किम् ? ऋगयनम् ; स्वरादिव्यवाय इत्येव, अर्द्धनसः । अतः पूर्व्वपदाद्विधिः ।

---

मृन्न इत्यादौ न णत्वमिति भाष्यकारः । सत्यर्थम्—र, ष, ऋवर्णेभ्यः परः एकपदस्थितो नकारो णो भवति, स्वर कवर्गादीनां व्यवधानेऽपि, स्वरादयो यदि तादि नकाराणां मध्ये तिष्ठन्ति तथापि णत्वं स्यादेव, पदस्यान्ते स्थितस्य नकारस्य न णत्वं भवेत्, तथा तवर्गयुक्तस्यापि नकारस्य न णत्वम् किन्तु तवर्गान्तर्गतनकारयुक्तस्य स्यादेव । पुणाति, पुष् +ना+ति (पुष+[illegible]त) इति स्थिते टुना ष्टुः (१।२।६०) इत्यनेन टुत्वेऽपि नकारः मूर्द्धन्यः स्यादेव किमनेनोदाहृतेनेति चेत् नैवं निरवकाशत्वात् परत्वाच्चास्यैवाऽयं विषयः नाऽन्यस्येत्यदोषः । उरःकेण, उरःपेण इत्युदाहरणद्वयं स्वरादिव्यवधानस्यैव, णत्वस्य सूत्रस्य एतयोर्हि (२।४।१५) सूत्रेण णत्वम्, उरसः कः, उरः करोतीति वा उरःकः, उरः पातीति उरःपः, तेन । विसर्गाऽनुस्वारयोः स्वरधर्मो व्यञ्जनता, णत्वविधौ च स्वरता, इति पूर्व्वाचार्य्यनियमः, तथाहि विसर्गानुस्वारजिह्वामूलीयोपाध्मानीयास्त्वागोऽमी योगवाहाः स्वरधर्म्मा इति, एवञ्च उर $\times$ केण, उर$\asymp$पेणेत्यत्रापि णत्वम् । संज्ञिमसाम्मते मनोः कृतमितं मूढं वा अपत्यमित्यर्थे मानव इति भवति :

(१) पूर्व्वपदे ये र, ष, ऋवर्णेभ्यः परस्य नकारस्य संज्ञायामेव णत्वमिति

**३। वनस्याग्रेशारिकामिश्रकासिध्रकाकोटरा-पुरगाभ्यः।**

[वनस्य ६।, अग्रे, शारिका, मिश्रका, सिध्रका, कोटरा, पुरगाभ्यः ५।॥]

एभ्यः संज्ञायां वनस्य नो णः स्यात्। अग्रेवणम्, शारिकावणम्, इत्यादि; नियमः किम्? इन्द्रवनम्।

**४। प्रनिरन्तःशरकार्ष्याम्रखदिरेक्षुप्लक्षपीयूक्षाभ्योऽसंज्ञायाञ्च।**

[प्र, निर्, अन्तर्, शर, कार्ष्य, आम्र, खदिर, इक्षु, प्लक्ष, पीयूक्षा-भ्यः ५।॥, असंज्ञायाम् ७।, च ०१।]

प्रादेः संज्ञायामसंज्ञायाञ्च वनस्य नो णः स्यात्। प्रवणम्, निर्वणम्, अन्तर्वणम्, शरवणम्, कार्ष्यवणम्, आम्रवणम् इत्यादि। (१)

नियमः। भाष्यमते असंज्ञायामपि तद्धितपूर्व्वपदस्थस्याऽपि निमित्तत्वमस्ति। पूर्व्वपदाऽवयवा रेफादयः पूर्व्वपदशब्देनोच्यन्ते, समुदायेषु हि वृत्ताः शब्दा अवयवेष्वपि वर्त्तन्ते इति भाष्यम्। ऋचामयनं यत्र इति ऋगयनम्। अहँ नासिका यस्य सः अहंनसः।

(१) अग्रे शब्दोऽयमधिकरणप्रधानमव्ययम्। 'अग्रं वनं' इत्यादि वाक्ये समासं कृत्वा निपातनादेकार इति गोयीचन्द्रः। जिनेन्द्रस्तु वनस्याग्रे षष्ठीसमासः, राजदन्तादित्वात् वनशब्दस्य परनिपातः, संज्ञाया सप्तम्या अलुक्।

## ५। वा ह्रस्वौषधिभ्योऽव्यधिकाचोऽतिरिकादेः।

[वा ०१।, वृक्षौषधिभ्य. (वृक्ष, ओषधि) ५।॥, अत्र्यधिकाचः (न-त्रि-अधिक अच्) ५।, अतिरिकादेः (न तिरिक-आदि) ५।]

वृक्षौषधिस्थनिमित्तादनस्य नो णो वा स्यात्। शिरीष-वणम् शिरीषवनम्, गम्भारीवणम् गम्भारीवनम्; ओषधेः—दूर्व्वावणम्, दूर्व्वावनम्; अत्र्यधिकाच इति किम्? देवदारु-वनम्; अ-तिरिकादेरिति किम्? तिरिकावनम्, तिरिका, इरिका, हरिद्रा, तिमिरा, विदारी, कर्म्मारः। स्वरादिव्यवाय इत्येव—सूरणवनम्।

## ६। अह्नस्यादन्तात्।

[अह्नस्य ६।, अदन्तात् (अत् अन्त) ५।] (१)

अदन्तस्थनिमित्तादह्नस्य नो णः स्यात्। पूर्व्वाह्णः, पराह्णः; अदन्तादिति किम्? निरह्नः।

## ७। वयसि त्रिचतुर्भ्यां हायनस्य।

[वयसि ७।, त्रि-चतुर्भ्याम् ५॥, हायनस्य ६।] (२)

---

(१) अह्नस्येति टप्रत्ययान्तस्य कृताकारादेशस्यैव ग्रहणं, तेन दीर्घाह्नी प्रावृट् इत्यादौ न स्यादिति मिश्रः, भाष्यकारस्तु "अदन्तादह्नस्येति" वक्तव्यम् इह मा भूत् दीर्घाह्नी शरदिति। दीर्घाणि अहान्यस्याः इति बहुव्रीहिः, ङी अकारलोपश्च। न तु समासान्तः।

(२) नियमार्थोऽयं योगः। प्राणिजीवितकालो वयः। वयसीति किम्? त्रिहायणाः शालाः।

वयसि गम्ये आभ्यां हायनस्य नो णः स्यात्। त्रिहायणो वत्सः, चतुर्हायणी गौः।

## ८। अयनस्य परादेरन्तरस्त्वदेशे।

[अयनस्य ६।, परादेः (पर-आदि) ५।, अन्तरः ५।, तु ०।१।, अदेशे (न देश) ७।] (१)

परादेरयनस्य नो णः स्यात्। परायणम्, पारायणम्, उत्तरायणम्; अन्तरयणम्। अदेश इति किम्? अन्तरयनो देशः।

## ९। नियोऽग्रग्रामात्।

[नियः ६।, अग्र-ग्रामात् ५।] (२)

आभ्यां नियो णत्वं स्यात्। अग्रणीः, ग्रामणीः।

## १०। वाहनस्याहितवाह्यात्।

[वाहनस्य ६।, आहित-वाह्यात् ५।] (३)

अस्माद्वाहनस्य णत्वं स्यात्। दर्भवाहणो वरः, इक्षुवाह-

(१) अय गतौ, इण गतौ वा ल्युट्, अयनम्; तु-शब्दो भेदे, अन्तरस्तु देशार्थ एव निषेधः।

(२) निय इति क्विबन्तस्यैव ग्रहणं तेन ग्रामनेता, अग्रिनायकः इत्यत्र न णत्वम्। अग्रग्रामादिति किम्? पूर्व्वनीः।

(३) उच्यते ऽनेन तद्वाहनं निपातनादुपधादीर्घः, वहतीति वाहनमिति वा। आहित शब्देन वाहने यदारोपितं तदुच्यते, अत्र आप्यत्वस्यार्थतत्त्वाधकत्वमविवक्षितम् कुमारीभ्य-मात्रमपि, तदाहि "यदा वाहने नारोपितं, अपि तदर्थमुपकल्पितं तदा भवत्येव" इति

णो गौः ; आहितवाह्यादिति किम् ? इन्द्रसम्बन्धि वाहनं = इन्द्र-वाहनम्, आहितादिन्द्रवाहणमेव।

## ११। पानस्य देशे। [पानस्य ६।, देशे ७।]

पूर्व्वपदस्थनिमित्तात् देशे गम्ये पानस्य नो णः स्यात्। सुरापाणाः प्राच्याः, सौवीरपाणाः वाह्लीकाः, कषायपाणाः गान्धाराः ; देश इति किम् ? सुरापानो नरः। (१)

## १२। वा भावकरणयोः। [वा ०१।, भाव-करणयो. ७॥]

अनयोः पानस्य णत्वं वा स्यात्। सुरापाणं वर्त्तते, सुरापानं वा ; पीयूषपाणं वर्त्तते, पीयूषपानं वा ; करणे—पीयतेऽनेनेति पानः, क्षीरपाणः कंसः, क्षीरपानो वा। (२)

काशिका। आहितशब्देन भूतकालक्रियानिर्देशात् यदा वाह्यं नारोपितं केवलं सन्निहितं तदा न प्राप्नोतीति कैयटः। केचित्तु वाहनं वाह्यादित्याहुः, वाह्यात् वाहनीयवाचिनः, तेन वाहनं यदा वहनशक्तिविकलं तिष्ठति तदा माभूत्, यथा गर्गाणां वाहनं गर्गस्वामिकवाहनमित्यर्थः ; यदा गर्गा वाह्यत्वेन विवक्ष्यन्ते न तु स्वामित्वेन तदा णत्वं भवत्येव इति तेषामभिप्रायः। अनारोपितेष्वपि इक्षुषु, इक्षुषु उह्यन्ते येन तदिक्षुवाहण मभिधीयते इति गोयीचन्द्रः।

(१) ननु सुरापाणादयः प्राच्यादिदेशविशेषणीभूताः सन्तो मनुष्ये वर्त्तन्ते, तत् कथं देशस्य वाच्यतेति चेदुच्यते देशसम्बन्धद्वारेण यन्मनुष्ये प्रवृत्तिः, एतावता देशपदेनाऽभिधानम् ; अथवा सुरापानं यत्र देशे ते सुरापाणाः, यत्र तु तथा नास्ति तत्र णत्वं न स्यात्, यथा सुरापानो नरः, नाऽत्र देशसम्बन्धेन मनुष्ये प्रवृत्तिः।

(२) क्षीरपाणः कंसः इत्यत्र करणस्य वाच्यलिङ्गता, तथाहि गुण-द्रव्य-क्रिया-योगोपाधिभिः परगामित्व इति न्यायः।

## १३ । गिरिनद्यादीनाञ्च ।

[गिरिनदी-आदीनाम् ६॥, च ०१।] (१)*

एषां णत्वं वा स्यात् । गिरिणदी, गिरिनदी ; स्वर्णदी, स्वर्नदी ; चक्रणदी, चक्रनदी ; चक्रणितम्बा, चक्रनितम्बा ।

## १४ । प्रातिपदिकान्तनुमविभक्तीनामयुवादेः ।

[प्रातिपदिकाऽन्त, नुम, विभक्तीनाम् ६॥, अयुवादेः (न-युव आदि) ६।]* (२)

एषां णत्वं वा स्यात् । प्रातिपदिकान्तस्य—व्रीहिवापिणौ, व्रीहिवापिनौ ; नुम्—माषवापाणि, माषवापानि ; विभक्तेः—तन्त्रवायेण, तन्त्रवायेन ; अयुवादेरिति किम् ? विप्रयूना, प्रपक्केन, अग्रगामिनौ ; शास्त्रवाक्यानि, छात्रगामिना । स्वरादिव्यवाय इत्येव—गर्दभवाहिनौ ।

(१) गिरिनदी, गिरिनख, गिरिनद्ध, गिरिनितम्ब, चक्रनदी, चक्रनितम्ब, तूर्यमान, माषोन, आर्गयन इति गिरिनद्यादिः । आकृतिगणो[illegible] । स्वर्णदीशब्दो वामनाद्यसम्मतोऽपि चन्द्रसम्मत एव ।

(२) अत्र सूत्रे द्वन्द्वसमासेऽल्पाच्. प्राक् निपातस्य नक्रमेण प्राक् निपातविधयो व्यभिचारित्व इति सूच्यते, प्रातिपदिकस्य नुमो विभक्तेश्च नकाराणां णत्वं स्यादिति सूत्रार्थः । अन्तशब्दश्चाऽवसानवर्ण्येकदेशवाचीति कैयटः । प्रातिपदिकान्तस्य णत्वे समासान्तग्रहणं कर्त्तव्यम् किं प्रयोजनमसमासान्तप्रतिषेधार्थमिति भाष्यम्, तेन गर्गाणां भगः गर्गभगः, गर्गभगोऽस्या अस्तीति गर्गभगिणीत्यत्र णत्वं, गर्गाणां भगिनी गर्गभगिनीत्यत्र तु न । समासान्तेत्यस्य कैयटेन समस्तस्य प्रातिपदिकस्य योऽन्त्यो नकारस्तस्य णत्वमित्यर्थः कृतः, उत्तरपदं यत्प्रातिपदिकं तदन्तस्यैव णत्वमिति सिद्धान्तकौमुदी च । माषवापिणीत्यत्र

## १५। एकाचि कुमति चोत्तरपदे नित्यम्।

[एकाचि ७।, कु-मति ७।, च ०१।, उत्तरपदे ७।, नित्यम् ०२।] (१)

एकाच्युत्तरपदे कवर्गवति च प्रातिपदिकान्तादीनां तेषां नित्यं नो णः स्यात्। एकाचि—वृत्रहणौ, क्षीरपाणि, क्षीरपेण; कुमति—पुष्पयोगिणौ, सर्व्वाङ्गाणि, नगरकार्केण, दत्तमखेण, सर्व्वभोग्येण; अयुवादेरिति किम्? अग्रगामिनौ।

## १६। उपसर्गान्नोपदेशाह्हिनुमीनानिपाम्।

[उपसर्गात् ५।, नोपदेशाह्हिनुमीनानिपाम् (न-उपदेश, हिनु, मीना, आनिप) ६।।।] (२)

---

नकारस्य प्रातिपदिकान्तत्वाभावादेतल्लक्षणस्य प्राप्तिः स्यान्न वेति जिज्ञासायामुच्यते स्त्रीप्रत्ययात् प्रागेव वापिन्शब्देन समासस्ततः स्त्रीप्रत्ययः, तथाप्युक्तम् गतिकारकोपपदानां कृद्भिः सह समासवचनं सुबुत्पत्तेः प्रागिति। माषकुम्भवापेण, व्रीहिकुम्भवापेणे-त्यादीनां णत्वस्य नित्यत्वं वैकल्पिकत्वं वेति शङ्कायामाह भाष्यकारः "यदा तावदेतद्वाक्यम् भवति कुम्भस्य वापः कुम्भवापः, माषाणां कुम्भवापः माषकुम्भवाप इति, तदा नित्यं णत्वेन भवितव्यम्; यदा त्वेतद्वाक्यम् भवति माषाणां कुम्भः माषकुम्भः, माषकुम्भस्य वापः माषकुम्भवाप इति, तदा विभाषया भवितव्यमिति।

(१) एकाजिति बहुव्रीहिः, कुः (कवर्गः) विद्यतेऽस्येति कुमान्, समासान्तभूतस्य शब्दस्योत्तरपदत्वं रूढिः, उत्तरपदे एकाचि, कवर्गवति च प्रातिपदिकान्तानां नकाराणां नित्यं णत्वमिति सूत्रार्थः। अत्रोत्तरपदग्रहणं स्पष्टार्थम्। एकाचीति प्रकृत्यैव एकाच्‌विशिष्टे इति बोध्यम्, तेन क्षीरपीणा इत्यत्र न णत्वं, क्षीरपीवन् शब्दस्य तृतीयैक-वचने अनोऽल्लोपे इत्यकारलोप एव एकाच्त्वं न तु प्रकृत्या।

(२) अनन्यार्थे—धात्वन्तरोपसर्गो न भवतीत्यर्थः, यथा प्रणायक इत्यत्र प्रइत्यस्य न नीधातोरुपसर्गत्वम्। एवं प्रनिनंसति नमेः; सन्नन्तस्य धातुसंज्ञायां प्रकर्षद्योतनार्थः

उपसर्गस्थनिमित्तादेषां णत्वं स्यात्। सर्व्वे नादयो णोपदेशाः, नृति, नर्दि, नन्दि, नक्कि, नटि, नाथृ, नृ वर्ज्जम् —प्रणमति, परिणिनीषति, प्रणायकाः; नान्यार्थे—प्रणतो नायको यस्मात् स प्रनायको देशः; णोपदेश इति किम्? प्रनर्दति; हिनु—प्रहिणोति; मीना—प्रमीणाति; आनिप् (लोटः)—प्रवपाणि; स्वरादिव्यवाय इत्येव—प्रददानि।

**१७। नसश्च।** [नस. ६।, च ०१] (१)

प्रादिस्थनिमित्तान्नसो णत्वं स्यात्। प्रणसं मुखम्।

**१८। अनितेरन्तश्च।** [अनितेः ६।, अन्त. १।, च ०१]

---

प्रशब्द अनन्तस्य उपसर्गः, नतु नमः। यदा नमः प्रमस्तस्य पश्चात् अनविधानं तदा णत्वं स्यादेव प्रणिनमति। हिनु-मीनेत्यत्र हिनोति-मीनात्योर्श्निलोपश्छान्दसः, छन्दोवत् कवयः सूत्राणि कुर्व्वन्तीति उद्दाऽनुगमनस्मरणात्। हिनोति मीनात्योर्विकृतमपि गृह्यते, अन्तादेशस्य स्थानिवत्त्वात्, एकदेशविकृतमनन्यवदिति न्यायाच्च प्रहिण्वन्ति, प्रमीणीतः इत्यादि।

(१) नासिकाया नसादेशस्यैवाऽत्र ग्रहणम्, नत्वनसच्छब्दस्य स्थाने नसादेशस्य। ननु उपसर्गात्वं विधीयते, धातोः पूर्व्ववर्तिनाञ्च प्रादीनामुपसर्गसंज्ञा, तत् कथं प्रणसमित्यत्र णत्वप्रसङ्गः प्रगता नासिका यस्मादिति वाक्ये—प्र-शब्दस्य उपसर्गाभावात्, सत्यम्, क्रियाद्योतका उपसर्गाः, क्रिया क्वचित् तिरोहिता, तथोभयक्रियासत्त्वे यत्क्रियाद्योतकाः प्रादयस्ते प्रत्युपसर्गाः इत्युक्तं, अत्र तु गम्यमानक्रियाद्योतकत्वमेव, अथवा उपसर्गप्रतिरूपक एवाऽत्र उपसर्ग उच्यते। एवं निर्णसमित्याद्यपि ज्ञेयम्; अप्रादेरपि खरणसः, खुरणसः, द्रुणस इत्यादयो दृश्यन्ते।

प्रादेरनो णत्वं स्यात्। प्राणिति; अन्तश्च—हे प्राण्(१)।

## १९। उभौ द्विरुक्तस्य। [उभौ १॥, द्विरुक्तस्य ६।]

द्विरुक्तस्यानितेरुभौ नकारौ णौ स्याताम्। प्राणिणिषति। (२)

## २०। निंसनिक्षनिन्दां वा।

[निंस, निक्ष, निन्दाम् ६॥, वा ०१।] (३)

एषां णत्वं वा स्यात्। प्रणिंस्ते, प्रनिंस्ते; प्रणिक्षति, प्रनिक्षति; प्रणिन्दति, प्रनिन्दति।

## २१। हन्तेरतोऽन्तरस्त्वदेशे।

[हन्तेः ६।, अतः ५।, अन्तरः ५।, न ०१।, अदेशे (न-देशे) ७।] (४)

(१) अत्र प्राणनं ब्रदादिः, हे प्राणित्यत्र प्रपूर्व्वकस्य तस्य क्विप् उभः क्विप्फली-वित्ति दीर्घः, न सम्बुद्धाविति नलोपाभावश्च। एवं परिपूर्व्वकस्य तस्य क्विपि पर्य्या-निति। केचिदिह परेः प्रतिषेधमिच्छन्ति पर्य्यानिति बोपतिः। अन्तग्रहणं सम्बुद्धार्थ-मिति भाष्यम्, तेनाऽन्यत्र प्राणिति, तन्मतेऽपि परेर्निषेधः।

(२) प्रादिस्थनिमित्तादिति हत्तौ निवेशनीयम्। ननु कृतणत्वस्य निर्व्वचने कृते-ऽपीष्टलाभः किमनेन सूत्रेणेति चेत् उच्यते, मैवं प्रणिनाय, प्रणिनीषतीत्यादिष्वपि णत्व-द्वयप्रसङ्गः स्यात्।

(३) इहाऽपि हत्तौ प्रादिस्थनिमित्तादिति वक्तव्यम्।

(४) अत्राक्षरणेन कृव्यवाये हादेशेषु प्रतिषेध इति भाष्यम्। देशे अन्तर्देशे उत्पन्न णत्वं स्यादेवेति केचित्।

प्रादेर्हन्तेरतो णत्वं स्यात् । प्रहणनं, परिहण्यते ; अन्तरस्त्वदेशे—अन्तर्हणनम् ; देशे तु अन्तर्हननो देशः ; अत इति किम् ? प्रघ्नन्ति, प्राघानि ; अतुस्थ इत्येव—अन्तर्हन्ता ।

## २२ । वमोर्वा । [वमो ७॥, वा ०१।]

वमयोः परयोः हन्तेर्णत्वं वा स्यात् । प्रहण्वः, प्रहन्वः ; प्रहण्मः, प्रहन्मः ।

## २३ । कृतोऽचोऽभाभूपूकमिगमिप्यायिवेपाम् ।

[कृतः ६।, अचः ५।, अ(न) भा, भू, पू, कमि, गमि, प्यायि, वेपाम् ६॥] (१)

उपसर्गाद्रादेरन्यधातूनां कृतो नः अचः परो णः स्यात् ; अन,मानाऽनीय,नीन् (नि,इन्),निष्ठादेशेषु सम्भवः । प्रयाणम्, निर्यायमाणम्, प्रयाणीयम्, परिहाणिः, प्रयायिणी, प्रक्षीणः ; अच इति किम् ? प्रमग्नः ; उपसर्गादित्येव—नरयानं ; स्वरादिव्यवाय इत्येव—प्रदानम् ; अभादीनामिति किम् ? प्रभानम्, प्रभवनम्, प्रपवनम्, प्रकमनीयम्, प्रगमनीयम्, प्रप्यायनम्, प्रवेपनम् ; कृत इति किम् ? लोट्—प्रभाणि, इत्त भवत्येव ।

---

(१) अच इति नकारस्य विशेषणं न तु कृतः ; अन इति अन-टनयोरुपलक्षकं मान इति शान-कानयोः ; नि इत्यनेन अनिप्रत्ययस्यापि ग्रहणम् ; अच निर्विण्णस्योपसंख्यानं कर्त्तव्यमिति भाष्यम् ।

## २४। णेर्वा। [णेः ५।, वा ०१।] (१)

ण्यन्तात्कृतो नः, अचः परो णो वा स्यात्। प्रयापणम्, प्रयापनम्; प्रहापणीयम्, प्रहापनीयम्; अभादीनामित्येव— प्रभापनम्, प्रभावनम्।

## २५। नोपधादिजादेरेव।

[नोपधात् (न उपधा) ५।, इजादेः (इच् आदि) ५।, एव ०१।] (२)

इजादेरेव नोपान्ताद्धातोः कृतो नोऽचो णः स्यात्। इन्ख—प्रेङ्खणम्, उन्भ—प्रोम्भणम्; इजादेरिति किम्? प्रमङ्गनम्; कथं प्राङ्गणम्? पृषोदरादिसिद्धेः।

## २६। हलादेरिजुपधाद्वा।

[हलादेः (हल् आदि) ५।, इजुपधात् (इच् उपधा) ५।, वा ०१।] (३)

इजुपान्ताद्धलादेर्धातोः कृतो नोऽचो णो वा स्यात्। प्रकोपणम्, प्रकोपनम्; निर्गूहणम्, निर्गूहनम्; हलादेरिति

(१) मार्दवात्त्वस्मात् ण्यन्ताद्धातोः कृतो नो णो वा स्यादित्येव सूत्रार्थोऽर्थः। णेरिति-र्विहितविशेषणा पञ्चमी, तेन प्रयाप्यमानमित्यत्र यकारव्यवायेऽपि णत्वं स्यात्। पूर्व-सूत्रस्य नित्यत्वात्प्राप्ते मोहतृण कृतस्तथा नुमयोर्विभाषयोर्मध्ये यो विधिः स नित्य इति परिभाषा।

(२) इजादेरेव सनुम इति नियमः, तेन प्रमङ्गनमित्यत्र न णत्वम् धातोरिजादित्वा-भावात्। कैसंचित्मतान्तरेण निर् इत्यस्मादपि कृत्यस्य णत्वं स्यात् निर्विंशम्।

(३) कृत्यचः (१।४।२९) इत्यादिना नित्यं प्राप्ते विकल्प आरभ्यते।

किम्? निरूहनम्; इजुपधादिति किम्? प्रवहणम्—नित्यं पूर्व्वेणैव।

## २७। नेर्गदनदपतपदवहिवपिहन्तिद्रातिघुमायाशमुसोचिञिदिहिवातिप्सातिष्वड्व्यवायेऽपि।

[नेः ६।. गद. नद, पत, पद, वहि, वपि, हन्ति, द्राति, घु (दा,धा), मा, या, शमु, सो, चिञि, दिहि, वाति, प्साति षु ७॥, अड्व्यवाये ७।, अपि ०१।] (१)

एषु धातुषु परेषु उपसर्गादुत्तरस्य नेर्णत्वं स्यात्। प्रणिगदति, प्रण्यगदत्; प्रणिद्राति, घु—प्रणिददाति, प्रणिदधाति; मा, माङ, मेङाम्=मा—प्रणिमाति, प्रणिमिमीते, प्रणिमयते; दिह—प्रणिदेग्धि; प्रणिप्साति।

## २८। शेषे वाऽकखादावषान्ते च पाठे।

[शेषे ७।, वा ०१।, अ(न) क,खादौ ७।, अ(न)-षान्ते ७।, च ०१।, पाठे ७।]

शेषे क,खादि,षान्तवर्ज्जिते धातौ परे नेर्णत्वं वा स्यात्। प्रणिपचति, प्रनिपचति; शेष इति किम्? प्रणिनादः; अकखादाविति किम्? प्रनिकर्त्ता, प्रनिचखाद। अषान्त इति किम्? प्रनिपिनष्टि; पाठे षान्तस्य निषेधादिह भवति, प्रणिवष्टि, प्रनिवष्टि। निर्व्विण्णः—क्तौ णत्वं निपात्यते।

---

(१) अत्र [illegible] प्रयोगस्य [illegible] तत् किमकृत्वापि [illegible] विधिर्विधीयते।

## २९। नशेर्न षत्वे। [नशः ६।, न ०।, षत्वे ७।]

नशः षत्वे णत्वं नास्ति। प्रनष्टः; षत्व इति किम्? प्रणाशः।

## ३०। षात् पदान्तात्। [षात् ५।, पदान्तात् ५।]

पदान्तात् षकारात् णत्वं नास्ति। निष्पानं, दुष्पानं, दुर्ष्खेन।

## ३१। अनाङ्पदव्यवाये च।

[अनाङ् पदव्यवाये (न-आङ्-पद व्यवाये) ७।, च ०।]

आङोऽन्यपदस्य व्यवधाने णत्वं नास्ति। रोषभीमुखेन, प्रावयानम्; अनाङ् इति किम्? पर्य्याणद्धं, निराणद्धम्।

## ३२। क्षुभ्नादिषु च।

[क्षुभ्नादिषु (क्षुभ्ना आदि) ७।।, च ०।] (१)

---

(१) क्षुभ्ना, नृनमन, नन्दिन्, नन्दन, नगर, एतान्युत्तरपदानि संज्ञायां प्रयोजयन्ति, हरिनन्दी, हरिनन्दनः, गिरिनगरम्; नृति यङि प्रयोजयन्ति, नरीनृत्यते, नर्तनम्; गहन, नन्दन, निवेश, निवास, अग्नि, अनूप, एतान्युत्तरपदानि प्रयोजयन्ति, परिनर्तनं, परिगहनम्, परिनन्दनम्, शरनिवेशः, शरनिवासः, शराग्निः, दर्भानूपः, आचार्यादणत्वञ्च, आचार्यभोगीनः; आकृतिगणोऽयम्। एवं सुमन्तनिवः, त्रिनेत्र, खमानः, नरनाहन इत्यादिष्वपि न णत्वम् इति संक्षिप्तसारः। संक्षिप्तसारमते रसार्थे तरणमनाद्विषु णयनं कृदन्तमित्यर्थः। तथा नमुशब्देऽह्मशब्दे च परे हन् इत्यस्य नकारे णः स्यात्, अणोवसु वृत्रघ्नम्, वृत्रघ्नः।

एषु णत्वं नास्ति। क्षुभ्नाति, नरीनृत्यते, नर्नृत्तः, नरीनर्त्ति ; तृप्नोति, नृनमनः कश्चित्, दुर्नयः, दुर्नीतम्, हरिनन्दनः, हरिनन्दी, ब्रह्मघ्नः, दौर्भागिनेयः, पुनर्नवा ; आकृतिगणोऽयम् ।

इति श्रीपद्मनाभदत्तकृतौ सुपद्मव्याकरणे प्रथमोऽध्यायः ।

| पदान्ते अपदान्ते वा | उत्तरत: | नस्य | णत्वम् | परे, व्यवधाने, पक्षे वा | निषेध: | सूत्रसंख्या |
|---|---|---|---|---|---|---|
| | उपसर्गात् | णोपदेश,हिनु, मीना,आनिपाम नस्य ... | ,, | ० | ० | १।४।१६ |
| | ,, | नशस्य | ,, | ० | ० | १।४।१७ |
| | | आनिते: नस्य | ,, | ,, | | १।४।१८ |
| | | निंस, निक्ष, निन्दाम् नस्य | ,, | वा | ० | १।४।२० |
| | अत: | हन्ते: नस्य | ,, | ,, | अन्तरस्य देशार्थे निषेध: | १।४।२१ |
| | | अम: परस्य कृतौ नस्य | ,, | ,, | भा.भू.पू., कमि,गमि, प्यायि,वेपाम् निषेध: | १।४।२२ |
| | | ने: नस्य | ,, | गद,नद,पत, पद,वहि,वप इत्यादिषु | | १।४।२५ |

# अथ द्वितीयाध्याये

## प्रथमपादः ।

—•—

### कारकप्रकरणम् ।

**१ । कारके ।** [कारके ०१।]

अधिकारोऽयम् । क्रियानिमित्तं कारकम् कर्त्रादि ; (१)

---

(१) कारके इति सूत्रे "कारके" इति सप्तम्यर्थप्रतिपादक-सप्तम्यन्तोऽनुकरण-लुप्तप्रथमैकवचनान्तं पदम् । इदञ्चाधिकारसूत्रम् । अनेन हि वक्ष्यमाणसूत्रेषु "कारके" इत्यस्याधिकारः कृतः । अतः परमधिकरणलक्षणपर्य्यन्तं सर्व्वेषु सूत्रेषु "कारके (कारक-विषये)" इत्यस्योपस्थितिर्भविष्यति । ननु सङ्केतितस्यैवाधिकारोयुक्तः "कारक" इत्यस्य तु प्रथमं सङ्केताभावात्तस्याधिकारो न युक्त इत्याशङ्क्याह—"क्रियानिमित्तमिति—कारकं नाम क्रियानिमित्तं क्रियायाः निमित्तमिति षष्ठीसमासः, 'क्रियते' इति क्रिया कृञः 'श'प्रत्यये निपातः, सा हि द्विविधा—(१) धात्वर्थः, (२) करोत्यर्थो वा, तत्र धातोरर्थो धात्वर्थः, स च द्विविधः, कोऽपि परिस्पन्दन-साध्यो गमनादिः, कोऽप्यपरिस्पन्दन-साधनयोग्यो यथाऽवस्थानादिः ; सकलार्थसंग्राहक-सम्बन्धपरमप्याह करोत्यर्थोवेति करोतेरर्थः सर्व्वधात्वर्थानुगतः, किं करोतीति प्रश्ने पचति, गच्छतीत्याद्युत्तरं सम्भवतीति । यद्येवं कथमस्तीत्यादीनां क्रियात्वम् ? न हि किं करोतीति प्रश्नेऽस्तीत्युत्तरं सम्भवति, अत्रोच्यते प्रश्नकर्त्तुराशयाऽनुरूपमेवोत्तरं सम्भवति, यद्यस्तित्वसन्देहे किं करोतीति प्रश्न-स्तदोत्तरमेतादृशं सम्भवति अस्ति तावदिति, इति गोयीचन्द्रः । अनेन तु धात्वर्थकरोत्यर्थेति द्वैविध्येन सकर्म्मकाऽकर्म्मकोभयरूपाणामेव धातूनां संग्रहः कृतः । वस्तुतस्तु क्रिया त्रे-

सैव धात्वर्थरूपा ।* क्रियायां (क्रियासिद्धौ) निमित्तं † (व्यापारवत्तयाऽवश्यापेक्षणीयम्) यत् तत् क्रियानिमित्तं कारकम्, उक्तरूपाया द्विविधायाः क्रियायाः सिद्धौ (परिनिष्पत्तौ) यस्य व्यापारोऽवश्यमपेक्षणीयस्तदेव कारकमिति निष्कर्षः । तथाहि ओदनं पचति चैत्र इत्यत्र पाकक्रियायाः सिद्धौ चैत्रस्य काष्ठाद्याहरणकर्तृत्वरूपव्यापारमोदनस्य च स्वावयवविक्लित्तिजनकत्वरूपव्यापारमपेक्षते तयोर्व्यापारमन्तरेण पाकस्याऽनिष्पत्तेस्तत्तयोः कारकत्वं, तत्रैकत्र कर्तृत्वेनाऽपरत्र कर्मत्वेन व्यपदिश्यते । क्रियासिद्धौ यद्व्यापारस्यावश्यापेक्षा नास्ति न तस्य कारकत्वं, यथा चैत्रस्य तण्डुलं पचतीत्यत्र तण्डुलादिसम्पादनद्वारा चैत्रस्य पाकक्रियायामपेक्षणीयत्वेऽपि, तत्क्रियासिद्धौ तस्य व्यापाराभावान्न कारकत्वम् । तच्च कारकं कर्त्रादि (कर्त्रादिर्यस्य), कर्तृप्रभृतीनि षट्कारकाणि, तथाहि "कारकं षड्विधं कर्तृ-कर्मणी, करणन्तथा । सम्प्रदानमपादानं तथाधिकरणन्मतम् ।" अन्ये तु "अपादानसम्प्रदानकरणाधारकर्मणां

---

* क्रिया धात्वर्थ उच्यते इति कारकोल्लासः । धातोरर्थः क्रिया इति सारमञ्जरी । धातवश्च तावत् प्रथमं द्विविधाः—अकर्मकाः सकर्मकाश्चेति । तत्र वस्त्वन्तरं साधयितुमनीश्वराः सत्तामात्रार्थकाः भुवादयोऽकर्मकाः, एवञ्च—"वस्त्वन्तरं साधयितुं समर्था ये सकर्मकाः । उत्पादनार्थकास्ते विज्ञातव्याः कृञादयः । "सकर्मकाश्चाऽपि कतिचिदकर्मकाः सन्ति, ते हि—"स्वकीयार्थविशेषणा कर्मणो साधयन्ति वै ।" अन्येऽपि सकर्मकाकर्मकनिरूपणमस्ति ।

† निमित्तत्वं नामाऽवश्यापेक्षणीयत्वं, एवं यथाश्रुतोऽर्थश्चेद् गृह्येत तदा सम्प्रदानादेरनुपपत्तिप्रकाशनद्वारेव चैत्रस्य तण्डुलं पचतीत्यत्र तण्डुलादिसम्पादनद्वारा सम्बन्धिनोऽपि चैत्रस्य पाकादिक्रियानिमित्तत्वेन कारकत्वप्रसक्त्या अवश्यं लक्षणगमनादतिव्याप्तिः स्यादित्यत आह व्यापारवत्तयेति । व्यापारो नामोत्पादनाऽपरपर्यायश्चेष्टाविशेषः, स चास्यास्तीति व्यापारवान् तस्य भावः व्यापारवत्ता, तया । स च व्यापारः सचेतने वस्तुनि नैसर्गिक एव, यथा चैत्रो गच्छतीत्यत्र चैत्रस्य गमनानुकूलव्यापारः (चेष्टाविशेषः) नैसर्गिक एव ; अचेतने तु क्वचित् सचेतनकर्तृजन्यः—यथा तण्डुलान् पचतीत्यत्र तण्डुलस्य स्वाऽवयवविक्लित्तिजननव्यापारस्तु कर्तृव्यापारजन्यः ; क्वचिदुपचरितश्च, यथा 'नदी वहति' इत्यत्राचेतने नद्यां वहनानुकूलचेष्टा उपचरितैव, परिकल्पिता इत्यर्थः ।

कारकशब्दोऽयं निमित्तपर्य्यायः (१)। अतः अरं यद्वक्ष्यते तत्कारकविषये वेदितव्यम् (२)।

---

कर्त्तुश्च भेदतः षोढा कारकं परिकीर्त्यते इत्येवं रीत्या गणयन्ति ।*

(१) करोतीति कारकमिति भाष्यमतं गौरवं मन्वानः प्रत्याचष्टे कारकशब्दोऽयमिति । अयं कारकशब्दः निमित्तपर्य्यायः, क्रियानिमित्तार्थक इत्यर्थः । †

(२) 'कारके' इत्यस्य सप्तम्यर्थमाविष्करोति—अतः परमिति, अत्र सप्तम्यर्थो विषय-

---

* अथ भाष्यकारः करोतीति कारकमित्याह, करोति क्रियां निर्व्वर्त्तयतीति क्रियाया निर्व्वर्त्तकस्यैव कारकसंज्ञेति कैयट, ततश्च—काष्ठैः स्थाल्यामोदनं पचतीत्यत्र आविक्लित्तिसंज्वलनक्रियां कुर्व्वत् काष्ठमपि, अधिश्रयणक्रियां कुर्व्वती स्थाल्यपि, स्वावयव-विक्लित्तिं कुर्व्वदन्नमपि कारकम् । एवं वृक्षात्पर्णं पततीत्यत्र वृक्षतः पत्रस्य विभागं प्रत्यात्मनो निमित्ततां कुर्व्वाणो वृक्षोऽपि, विप्राय गां ददातीत्यत्र गोस्वीकारं कुर्व्वन् विप्रोऽपि कारकः, तेषां काष्ठादीनाम् आयोजनं कुर्व्वन् स्वतन्त्रो देवदत्तश्च कर्त्तृकारकम् । एवञ्च क्रियाजनकत्वेन सर्व्वेषां कर्त्तृत्वे प्राप्ततेऽपि स्वस्वावान्तरव्यापारविवक्षयैव करणत्वादिकं, यथोक्तम् हरिणा—"निष्पत्तिमात्रे कर्त्तृत्वं सर्व्वत्रैवाऽस्ति कारके । व्यापारभेदापेक्षायां करणत्वादिसम्भवः ।" क्वचित् "निष्पत्तिमात्रे" इत्यत्र "स्वव्यापारे हि" इति पाठोवर्त्तते । स च व्यापारभेदो मञ्जूषायां दर्शितो यथा—कर्त्तुः कारकान्तरप्रवर्त्तनव्यापारः, करणस्य क्रियाजनकाऽव्यवहितव्यापारः, क्रियाफलोद्देश्यत्वव्यापारश्च कर्म्मणः, कर्त्तृकर्म्म-व्यवहितक्रियाधारणव्यापारोऽधिकरणस्य, प्रेरणाऽनुमत्यादिव्यापारः सम्प्रदानस्य, अवधि-भावोपगमव्यापारोऽपादानस्य । तत्र करणाधारकर्म्मकर्त्तृणां क्रियाजनकत्वं सुव्यक्तं तैर्विना क्रियाऽनुत्पत्तेः, अपादानस्यावधिभावोपगमेन हेतुत्वात्, सम्प्रदानस्य च दानबुद्धिस्थतया पूर्व्वकालीन हेतुत्वाच्च क्रियानिर्व्वाहकत्वम् । करणादिषु तु स्वातन्त्र्येण क्रियां कुर्व्वत्सु कर्त्तृत्वविवक्षया काष्ठं पचति, स्थाली पचति, ओदनः पच्यतेत्यादि प्रयोगा भवन्ति । अपादानसम्प्रदानयोस्तु न कर्त्तृत्वविवक्षा अनभिधानात् तदुक्तं भाष्ये —"पर्य्याप्त' करणाधिकरणकर्म्मणामेव कर्त्तृत्वं निदर्शितमपादानादीनां कर्त्तृत्वानिदर्शनात् ।"

† कारकशब्दश्चाऽयं लोकप्रसिद्धोऽव्युत्पन्नो निमित्तपर्य्यायः, यदि वक्ष्यमाणः

एव, तत्पश्चात् परं यद्वक्ष्यते तत् कारकविषये वेदितव्यम्। कारकाणाञ्च विवक्षावशात् प्रयोग* इत्यग्रे प्रपञ्चयिष्यते। केचित्तु जाति,द्रव्य,गुण,क्रिया,स्वरूप भेदात् कारकं पञ्चविधमाहुः†। जातिः—वृक्षः, द्रव्यं—दण्डः, गुणः—शुक्लः, क्रिया—पाकः, स्वरूपं—चैत्रः। सर्व्वत्राचेतनकर्त्रादौ व्यापारवत्त्वमसम्भाव्य केचित्तु विभक्त्यर्थद्वारा क्रियाऽन्वयित्वं कारकत्वमिति कारकसामान्यलक्षणमाहुः, यो नामार्थो विभक्त्यर्थद्वारा क्रियायामन्वयी तत् कारकमिति तदर्थः, यथा 'वृक्षात्पतनम्' (वृक्षावधिकविभागानुकूलपतनम्), अत्र नामार्थः वृक्षः, क्रिया पतनम्, पञ्चमीविभक्त्यर्थश्च विभागः, अत्र नामार्थो वृक्षः स्वावधिकत्वसम्बन्धेन विभक्त्यर्थं विभागं द्वारीकृत्य पतनक्रियायामन्वयं लभते, इति तस्य कारकत्वम्, एवमन्यत्र। विभागस्तु स्वाऽनुकूलत्वसम्बन्धेन पतने विशेषणीभूय भासते, चैत्रस्य पचति इत्यत्र तु नामार्थः चैत्रः, क्रिया पाकः, षष्ठीविभक्त्यर्थः सम्बन्धः, स च विभक्त्यर्थः सम्बन्धो न क्रियायां पाके प्रकारीभूतः, न वा तं (सम्बन्धं) द्वारीकृत्य चैत्रस्य पाकक्रियायामन्वयः, षष्ठ्या पदान्तरार्थसाकाङ्क्षतया, क्रियाया अपि कर्म्मादि-वाचकसाकाङ्क्षतया, चैत्रपाकयोः परस्परमाकाङ्क्षाभावात् चैत्रस्य सम्बन्धित्वं पाक-क्रियायां नाऽन्वेति, किन्तु तण्डुलादिपदाध्याहारेणैव, यथा—चैत्रस्य तण्डुलं पचति (चैत्रसम्बन्धितण्डुलकर्म्मताकपाकानुकूलकृतिमान्) एवं रूपेऽन्वयबोधो जायते, अतएव सम्बन्धस्य क्रियासम्बन्धाभावान्न कारकत्वम्, ततश्चोक्तम्—"शेषः सम्बन्ध-

स्यात् तदा कर्त्तृशब्देन सह समानार्थः स्यात्, एवं सति क्रियामुख्यस्यैव कारकपदेनाऽभिधानं भवेदिति जयादित्यानां मतमिति गोयीचन्द्रः।

* गृहे प्रविशतीत्यादौ गृहादेः कर्म्मतया द्वितीयाप्राप्तौ, अधिकरणविवक्षया सप्तमी महाकविप्रयोगादयो विवक्षया समाधानीयाः स्थितेर्गतिश्चिन्तनीयेतिन्यायात्। तेन विवक्षया ग्रामे गच्छतीत्यादि प्रयोगो न कर्त्तव्य इति साम्प्रदायिकाः। उभयोर्युगपत्प्राप्तौ तु—कर्त्ता, कर्म्माऽधिकरणं, करणं, सम्प्रदानकं, अपादानञ्च सन्देहे परं पूर्व्वेण बाध्यते इति वचनात् व्यवस्था; यथा पश्य मृगो धावतीत्यत्र कर्त्ता कर्म्मणोबाधः। अग्रेऽप्येतस्य प्रपञ्चनं भविष्यति।

† जातिद्रव्यगुणादीनामेव क्वचित् कस्यचित् कर्त्तृत्वं, कर्म्मत्वं करणत्वादिकं वा भवतीति, एतद्भिन्नपदार्थकल्पनायां मानाभावश्चेति तेषामभिप्रायः।

# २। स्वतन्त्र-तत्प्रयोजकौ कर्त्ता।

[स्वतन्त्र-तत्(स्वतन्त्र)प्रयोजकौ १॥, कर्त्ता १।] (१)

---

इष्यत" इति। "मैत्रस्य पाकः" (मैत्रकर्त्तृकपचनं), 'ओदनस्य भोक्ता' (ओदनकर्म्मताकभोजनाऽनुकूलकृतिमान्) इत्यादौ षष्ठ्या कर्त्तृकर्म्मविहितत्वात्, कर्त्तृत्वकर्म्मत्वाद्यर्थप्रख्यापनाच्च कारकविभक्तित्वमेव। "गुरुविप्रतपस्विदुर्गतानां प्रतिकुर्व्वीत भिषक् स्वभेषजैः," "पद्मस्यानुकरोत्येष कुमारीमुखमण्डलः" इत्यादौ "मातुः स्मरति," "चौरस्य हिनस्ती"त्यादाविव क्रियाविशेषयोगे कारकार्थैव षष्ठी, तथाह्येतेषामर्थश्च—गुरुविप्रतपस्विदुर्गतान् प्रतिकुर्व्वीत, पद्ममनुकरोतीत्येवंरूपएव। अन्ये तु "गुरुविप्रतपस्विदुर्गतानां"मित्यत्र 'रोगानि'ति कर्म्मपदस्य "पद्मस्यानुकरोती"त्यत्र श्रियमिति कर्म्मपदस्य चाध्याहारं कुर्व्वन्ति। अपरे तूक्तोदाहरणेषु धात्वर्थे षष्ठ्यर्थस्य सम्बन्धस्यान्वयमङ्गीकृत्य कर्त्तृकर्म्मादिषट्काऽन्यतमत्वे सति क्रियान्वयित्वं कारकत्वमिति कारकलक्षणं कर्त्रादिषट्स्वेव निरूढयन्ति। एवं सा स्वकीयमुपकुरुते यथा परेषामित्यादिष्वपि बोध्यम्। स्तोकं पचतीत्यादौ क्रियाविशेषणीभूतानां स्तोकादीनां न कारकत्वं, स्तोकादयो हि स्वयमेव क्रियायां प्रकारीभूता अन्वयं लभन्ते न च विभक्त्यर्थं द्वारीकुर्व्वन्ति। जगदीशस्तु [illegible] सुबर्थः यद्धातूपस्थाप्यतादृशार्थेऽन्वयप्रकारीभूय भासते, तद्धातूपस्थाप्यतादृशक्रियायां स (सुबर्थः) कारकम्। तथाहि वृक्षात्पतति (वृक्षावधिकविभागाऽनुकूलपतनक्रियावान्) इत्यादौ पतप्रभृतिधात्वर्थे पतनादौ पञ्चम्याद्युपस्थापितो विभागादिः प्रकारीभूय भासते इति विभागादिकमेव तत्तद्धातूपस्थापिततत्तत्क्रियायां कारकम्। स्वावधिकत्वसम्बन्धेन तादृशधात्वर्थपतनादौ परम्परया प्रकारीभावात् वृक्षादेरपि गौणं कारकत्वमित्याह।

(१) क्रमप्राप्तं कर्त्तृलक्षणमाह—स्वतन्त्रेति—स्वतन्त्रश्च, तत्प्रयोजकः (तस्य स्वतन्त्रस्य प्रयोजकः) च तौ कर्त्ता (कर्त्तृकारकम्) ; कर्त्तेत्येकवचनं विधेयप्राधान्याद्वा, सूत्रे लिङ्गवचनमतन्त्रमिति विवक्षाया वा, अन्योऽन्यम् अथवः सूत्राणि कुर्व्वन्तीतिव्याख्यानान्तरात्।

क्रियायां साध्यायां कारके प्रधानभूतो योऽर्थः सः स्वतन्त्रः, स च तत्प्रयोजकश्च कर्त्तेत्युच्यते। यथा देवदत्तः काष्ठैः

---

अथ कः स्वतन्त्रः? कोवा तत्प्रयोजकः? इति जिज्ञासायां प्रथमं तावत् स्वतन्त्रं व्याचष्टे क्रियायामिति—क्रियायामुक्तरूपायां द्विविधायां साध्यायां निष्पाद्यायां सत्यां कारके कारकाणां कारकेषु वा मध्ये प्रधानभूतः प्रधानं (भूतशब्दः स्वरूपार्थः, प्राधान्यञ्च करणादीनामितरेषामायोजनार्हत्वं, तद्वत् प्रधानं) योऽर्थः पदार्थः पूर्व्वोक्तानां जातिद्रव्यादीनामन्यतमः, तस्य (स्वतन्त्रस्य) प्रयोजकः (नियोजकः तत्प्रयोजकः); स च (स्वतन्त्रश्च), तत्प्रयोजकश्च कर्त्ता (कर्त्तृकारकम्) उच्यते इति शेषः। स्वतन्त्रः कर्त्ता, तत्प्रयोजकश्च कर्त्ता इति प्रत्येकमन्वीयते। "स्वतन्त्रप्रयोजकौ कर्त्तेति सूत्राकारे" कृतेऽप्यभीष्टसिद्धौ तद्यत्कृतं स्पष्टार्थमस्ति च "क्रियामुख्यप्रयोजकौ कर्त्ता"त्यैन्द्रं सूत्रम्। उदाहरति—देवदत्त इति—(काष्ठकरणक-स्थाल्यधिकरणकौदनकर्म्मताक-पाकानुकूलयत्नवान् देवदत्त इति शाब्दबोधः)। पचिरत्र विक्लेदनार्थः, सा च विक्लेदना देवदत्तसाध्या भवत्येव तस्य तत्प्रवर्त्तनत एवाऽस्य सकर्म्मकत्वमपि, यदा तु ओदनः पच्यते इति कर्म्मकर्त्तरि विषयः पचतिः, तदा प्रयोजके णिचि सति पाचयत्योदनं देवदत्त इति। पचतीत्यत्र "शेषात् कर्त्तरी"ति (१।१।१२८) परस्मैपदम्; "उक्तं तिङादिभिर्न्निर्द्दिष्टम्" (२।१।२६) इत्यनेन कर्त्तुरुक्तत्वात् "अर्थमात्रसम्बोधनयोः प्रथमे"ति (२।२।५) अनेन देवदत्त इत्यत्र प्रथमा। ननु यदि कारकाणामायोजनं कुर्व्वन्नेव कर्त्तृत्वं भजते तत् कथं विष्णुस्तिष्ठतीत्यत्र कारकायोजनाभावादपि विष्णोः कर्त्तृत्वमिति चेदुच्यते—इह कारकायोजनयोग्यतया कर्त्तृत्वमिति, यथाऽपचन्नपि सूपकारः पचनयोग्यतया पाचक इत्युच्यते। अन्ये तु धातूक्तक्रियां प्रति यस्य प्राधान्यं स स्वतन्त्रः* इत्याहुः, यस्य व्यापारो धातुनोच्यते स प्रधानं कर्त्तेति तेषामभिप्रायः

---

* कलापटीकायां स्वतन्त्रत्वस्यैवं लक्षणं कृतम्—यथा अथ किमिदं स्वातन्त्र्यम्? न तावत् पराप्रयोज्यत्वं राज्ञा भृत्यः कार्य्यं करोतीत्यादावव्याप्तेः। नाऽपि परप्रयोजकत्वम् देवदत्तो भवतीत्यादावव्याप्तेः। नाऽपि कार्य्यानुकूलविज्ञप्तिचिकीर्षाकृतिमाश्रित्वं रथो गच्छतीत्यादावचेतनत्वादव्याप्तेः। नाऽपि क्रियाश्रयत्वं—कर्म्मणः पचतिमांसं दधि स्थाल्योदनादीनां क्रियाश्रयत्वेन कर्त्तृत्वप्रसङ्गात्। किञ्च घटो भवतीत्यत्र कारकाऽपि कर्त्तृत्वं

स्थाल्यामोदनं पचति, तेनाऽन्यः पाचयति। "प्रवृत्तौ च

---

तेनास्ते विप्र इत्यत्रापि कर्तृत्वं स्यादेव। तथाचोक्तम् "धातुनोक्तक्रिये नित्यम् कारके कर्तृतेष्यते। व्यापारे च प्रधानत्वात् स्वतन्त्र इति चोच्यते इति। एवं स्वतन्त्रमुदाहृत्य तत्प्रयोजकमुदाहरति। तेनेति—तेन देवदत्तेन, अन्यो यज्ञदत्तादिः, पाचयतीत्यत्र प्रयोजकं णिच् देवदत्तकर्तृकपाकानुकूलव्यापारवानन्य इति तदर्थः। ननु पाचयतीत्यत्र द्वे क्रिये वर्तेते प्रयुक्तिक्रिया, पचिक्रिया च, तत्र प्रयुक्तिक्रियायां यज्ञदत्तस्य मुख्यतया कर्तृत्वे सिद्धे पचिक्रियायां प्रयोजकत्वेन कर्तृत्वं सिद्धसाधनादनर्थकमेव विहितमिति केचित्, तन्न साधीयः, प्रयुक्तिक्रियाया मुख्यत्वे पाचयतीत्यस्य पाकार्थप्रयोजयतीत्यर्थः स्यात्, ततश्च यथा देवदत्तं पक्तुं नियुङ्क्ते इत्यत्र नाऽवश्यं पाकनिष्पत्तिः प्रतीयते, तथा पाचयतीत्यत्रापि नियमसिद्धपाकनिष्पत्तिर्न प्रतीयेत, किञ्च प्रयुक्तिक्रियायामतीतायां पचिक्रियायां भविष्यन्त्यां देवदत्तेन यज्ञदत्तोऽपाचयदित्येव प्रयोगः स्यात्। अपि च—यदि पचिक्रियया प्रयोजकस्य कर्तृत्वसम्बन्धो न स्यात् तदा सूपकारैः पाचयते भूपः, इत्यत्र पाकक्रियायां भूपस्य कर्तृत्वाऽभावेन कर्तृक्रियाफलस्याभावात् "स्वरितञितः कर्तुः" (१।१।१२०) इत्यनेन तङ् न स्यात्, तस्माद्भूपादेः प्रयुक्तिक्रियायां मुख्यकर्तृत्वं पचिक्रियायाः प्रयोजककर्तृत्वमवश्यमङ्गीकार्यम्। एवञ्च प्रयोजकस्य स्वतन्त्रत्वे "प्रयोजके णिच्" (३।१.२६) इति सूत्रस्याऽपि प्रयोजकाऽप्रसिद्ध्या वैयर्थ्यं स्यात्।

---

स्यात् कालस्य सर्वाश्रयत्वेन क्रियाया अव्याप्यत्वात्। नाऽपि विवक्षितकारककलाप-व्यापारजनकीभूतव्यापारवत्त्वं तत्त्वं देवदत्तो भवतीत्यादौ विवक्षितकारककलापव्यापार-जनकताऽभावादव्याप्तिरिति चेदुच्यते—प्राधान्येन धातुवाच्यव्यापारवत्त्वं स्वतन्त्रत्वमिति। न चैवमात् कार्याऽनुपपत्त्यादयो व्यापारः करणादेरपीति वाच्यम्। करणादेः साक्षाद्धातुवाच्यव्यापाराऽसम्भवात् किन्तु परम्परयैव। न च पाचयति देवदत्तेनेत्यादौ पाचयतिना प्रयोजकस्यैव व्यापार उच्यते देवदत्तस्य कर्तृत्वं न स्यादिति वाच्यम्। यावता पाचयतीत्यन्तर्गतपचिना देवदत्तव्यापार उच्यते। तदुक्तं धातुनोक्तक्रिये नित्य-मित्यादि।

निवृत्तौ च कारकाणां य ईश्वरः । अप्रयुक्तः प्रयुक्तो वा स कर्त्ता नाम कारकम् ॥" निवृत्तौ—देवदत्तः कटं न करोति, अप्रयुक्तः कटं करोति चैत्रः ।

---

ननु क्रियां निष्पादयन्नेव कर्त्रादिः कारकव्यपदेशं भजते । यदा तु तथा व्यवसायो न स्यात् तदा कारकत्वं न भजतामित्याशङ्कानिराकरणाय ग्रन्थकृत् भर्तृहरिकृतां कारिकामवतारयति—

प्रवृत्तावित्यादि—प्रवृत्तौ क्रियानिष्पत्तौ कारकाणामीश्वरः प्रधानभूतः सर्व्वाधीनत्वाई-इति यावत् अन्येन (प्रयोजकेन) प्रेषितोऽप्रेषितो वा यथा कर्त्ता तथा निवृत्त्यावपि क्रियानिष्पत्त्यभावेऽपि । प्रवृत्तिप्रयुक्तयोरुदाहरणे दर्शितपूर्व्वे, सम्प्रति निवृत्यप्रयुक्तयो-रुदाहरणे क्रमेण प्रदर्शयति ।—निवृत्तौ देवदत्तः कटं न करोति (कटकर्म्मकताकृत्यनु-कूलव्यापाराभाववान् देवदत्तः इति तदर्थः) । अप्रयुक्तः, अप्रेषितः चैत्रः स्वेच्छया कटं करोतीत्यर्थः ।

कारकोल्लासे कर्तृलक्षणं यथा "मुख्यप्रयोजको कर्त्ता क्रियायामेव मुख्यता । कर्मो-ऽन्तोत्यादि खिल्विन् योग्यताश्रयणाद्भवेत् ।" "प्राधान्यञ्च क्रियायां भवतन्निमित्तभूतेष्वेव सञ्चरती"ति गोयीचन्द्रः ।

"यः करोति सकर्मेति सर्व्ववर्णादयोऽब्रुवन् ।"

षट्कारकव्याख्याने—"क्रियायां मुख्यभूतः स्वतन्त्रकः यत्तं प्रयुङ्क्ते स च तावुभौ कर्तृकारका"विति ।

कारकशर्म्मा—क्रियाऽनुकूलकृतिमत्त्वं कर्तृत्वम्—कर्तृपदस्य यत्नार्थकडुकञ्कधातो-र्व्युत्पन्नत्वात् अचेतनादौ भाक्त(गौण)कर्तृत्वव्यवहारः ।

शब्दार्थरत्ने—कर्तृत्वं नाम धातूपात्तव्यापाराश्रयत्वं धातुमोक्तक्रिये निवं कारके कर्तृत्वमुच्यते इति वर्द्धते । स च द्विविधः स्वतन्त्रः तत्प्रयोजककर्मेति भेदात् । तत्र स्वातन्त्र्यं नामेतरव्यापाराऽनधीनव्यापारवत्त्वं कारकान्तरप्रयोजकव्यापारवत्त्वं वा, यदोक्तं हरिणा—प्रागन्यतः शक्तिलाभात्, प्रामभावापादनादपि । तदधीनप्रवृत्तित्वात् प्रवृत्तानां निवर्त्तनात् । अदृष्टत्वात् प्रतिनिधेः प्रविवेके च दर्शनात् । आरादप्युपकारित्वात्

स्वातन्त्र्यं कर्तृत्वमिति। इति—अस्यार्थः—इतरव्यापारात् प्रागपि प्राधान्येनाश्रयले कर्तृव्यापारस्य सत्त्वात्, कारकान्तराणां स्वाधीनप्रवृत्तिनिवृत्त्योश्च कर्तुरेव प्रयोजकत्वात्, दात्रादेः कुठारादिवत् स्वस्य प्रतिनिध्यसम्भवात्, कारकान्तराप्रयोगेऽपि कर्तुः प्रयोगात्, साक्षाद्धातूपात्तफलजनकव्यापारवत्त्वाच्च कर्तुः स्वातन्त्र्यमिति। पाचयतीत्यादावपि प्रयोज्यस्य पाके स्वातन्त्र्यमस्त्येव वेतनादिलाभरूपस्वार्थेनिष्ठ एव तस्य प्रवृत्तेः—"निमित्तेभ्यः प्रवर्तन्ते सर्व एव स्वभूतये। अभिप्रायाऽनुरोधोऽपि स्वार्थस्यैव प्रवृत्तये।" इति हरिणा स्वार्थसिद्ध्यर्थप्रवृत्त्यैव स्वातन्त्र्यव्यवस्थापनात्। "स्वतन्त्रः कर्ता"ति सूत्रयता पाणिनिना स्वतन्त्रस्यैव कर्तृत्वमङ्गीकृतम्। तत्र स्वतन्त्रशब्दः कैयटेनैवं व्याख्यातः—यस्य धातुना व्यापारोऽगुणभावेनोच्यते स स्वतन्त्र इति। एवञ्च प्रयोज्यस्य प्रयोजकस्य च स्वस्वव्यापारे स्वातन्त्र्यसत्त्वादुभयोरेव कर्तृत्वम्।

जगदीशेन शब्दशक्तिप्रकाशिकायां कर्तृलक्षणं कारिकाद्वयेनोक्तम्, तत्र प्रथमा कारिका—"तिङा विकरणाक्तस्य धातोरर्थेन्तु यादृशः। स्वार्थे यादृशि बोध्यस्तत्कर्तृत्वं तदिहोच्यते।" द्वितीया—

"यगन्तभिन्नधात्वर्थवत्तया योऽनुभाव्यते।
स्त्रष्टा स्वार्थः स धात्वर्थः कर्तृता वा नियम्यते॥"

एतयोराशयस्तु धात्वर्थाऽन्वितयगाद्यसमभिव्याहृताख्यातबोध्यधर्मवत्त्वमेव कर्तृत्वम्। यगादीत्यादिना कर्मविहितसर्वप्रत्ययसंग्रहः। पचतीत्यत्र धात्वर्थः पाकः, आख्यातार्थः कृतिः, ततश्च पाकानुकूलकृतिमत्त्वमेव कर्तृत्वम्, जानातीत्यत्र ज्ञानाश्रयत्वमेव कर्तृत्वं, नश्यतीत्यत्र नाशप्रतियोगित्वं कर्तृत्वम्। यगाद्यसमभिव्याहृतेति कथनात् पच्यते तण्डुल इत्यादौ पाकजन्यफलाश्रयत्वेन तण्डुलादेर्बोधनात् न तस्य कर्तृत्वं, काष्ठैः स्थाल्या- मोदनं पचतीत्यादौ करणाधिकरणकर्मणां धात्वर्थाऽन्वितत्वधर्मवत्त्वेऽपि स धर्मो ना- ख्यातेन प्रतिपाद्यः। यदा च तादृशव्यापारतात्पर्येणाख्यातं प्रयुज्यते तदा काष्ठं पचति, स्थाली पचतीत्यादौ तेषां कर्तृत्वमिष्टमेव, तथा पच्यते ओदनः स्वयमेव इत्यादौ कर्मकर्तरि ओदनादेः कर्मणोऽपि कर्तृत्वं, तत्र हि तण्डुलव्यापारजन्यपाकजन्यफल- वानोदनः इति ओदनपदोत्तरप्रथमाया व्यापारो वाच्यार्थः, पाचयतीत्यादौ पाकानु-

## ३। क्रियाव्याप्यं कर्म्म ।

[क्रिया-व्याप्यम् १।, कर्म्म ०१।]

**क्रियया यद्व्याप्यते तत् कारकं कर्म्मसंज्ञं भवति । (१)**

---

कूलव्यापारो णिजन्तस्यार्थः तदनुकूलव्यापाराश्रयत्वात्तस्येति तदाश्रय एव कर्त्ता । अधातोरर्थार्थकत्वं, आश्रयार्थकजन्तकधातुव्युत्पन्नकर्त्तृपदस्य यथाश्रयबोधकत्वात् अचेतने कर्त्तृपद-प्रयोगो गौणः ।

(१) क्रियते इति क्रिया, धातूपात्तव्यापारविशेषः, व्याप्नोतेरावश्यके ण्यत्, व्याप्यं साध्यं, धातूपात्तव्यापारजन्य-फलद्वारा सम्बन्धनीयमित्यर्थः. क्रियया व्याप्यं क्रियाव्याप्यमिति घनघात्यवत् समासः । अत्र कर्त्तुरिति पदमवश्यमध्याहार्य्यं, ततश्च कर्त्तुः क्रियया यद्व्याप्यते, साध्यते, धातूपात्तव्यापारजन्यफलद्वाराऽभिसम्बध्यते इति यावत्, तत् कारकं कर्म्मसंज्ञं स्यात् । यत्र तु कर्त्तुः क्रियासाध्यत्वं नास्ति, तत्र न कर्म्मत्वं यथा मासमश्वं बध्नाति, अत्र कर्म्मणोऽश्वस्य बन्धनक्रियया मासो व्याप्यते (सम्बध्यते), न पुनः कर्त्तुः, यत्र चाऽवश्यव्याप्यत्वं तत्राऽपि न, यथा पयसा ओदनं भुङ्क्ते, अत्राऽवश्यभोज्य ओदनो न तु पयः* । कर्त्तृनिष्ठक्रियारूपव्यापारजन्यफलसम्बध्यत्वं कर्म्मत्वमिति फलितं । ननु धातोरर्थो व्यापारः, फलञ्च तत्र "फलव्यापारयोरेकनिष्ठतायामकर्म्मको धातुस्तयोर्धर्म्मिभेदे सकर्म्मक उदाहृतः" इति हर्य्युक्तेः सकर्म्मकस्थले व्यापारस्य कर्त्तृनिष्ठत्वेन फलस्य च कर्म्मनिष्ठत्वेन च कर्म्मणः 'कर्त्तृनिष्ठक्रियाजन्यफलशालित्वात् कश्चिद्दोषः, अकर्म्मकस्थले तु फलव्यापा-

---

* क्रमदीश्वरेण "तत्रमुद्दिष्टं कर्म" इति कर्मलक्षणं कृतम्, तेन, कर्त्रा, सम्यक् क्रियाफलमाप्तितयोद्दिष्टं कर्मसंज्ञं भवति, देवदत्त ओदनं पचतीत्यत्र देवदत्तस्य पाकक्रियया ओदनः सम्यगुद्दिष्टः, ग्रामं गच्छतीत्यत्र गमनक्रियया ग्रामः सम्यगुद्दिष्टः, यस्य सम्यगुद्देश्यत्वं नास्ति न तस्य कर्मत्वं, पयसा ओदनं भुङ्क्ते, यद्यपि कर्त्तुरुद्देश्यं न भवति, तद्यपि न कर्म मासेनाश्वं बध्नाति इत्यत्र कर्मत्वं उद्देश्या मासाः । धर्मं सूत्रं करोति धर्मं सूत्रयति, इत्यत्र सूत्रं करोतीत्यत्र सूत्रमेव कर्म. यद्यपि अन्तर्भूतकर्मका सूत्रयतिक्रिया संजाता, तथापि कर्त्तुरुद्देश्यो धर्म एव, बलिं बन्धयति बलिबन्धमाचष्टे, अत्र बन्धाख्यान-कर्त्तुर्बलिरेव उद्दिष्टः, एवं कंसं घातयतीत्यत्र कंसवधमाचष्टे इति वधाख्यानकर्त्तुः कंस एवोद्दिष्टः । इति श्रीधीचन्द्रः ।

तच्च त्रिविधम्—(१) निर्व्वर्त्त्यम्, (२) विकार्य्यम्, (३) प्राप्यञ्च । तत्र निर्व्वर्त्त्यमुत्पाद्यं, कटं करोति देवदत्तः, विकार्य्यमवस्था-

---

नयोः कर्तृभिन्नतया कर्त्तर्य्येव क्रियाजन्यफलशालित्वसत्त्वात् कर्तृनिष्ठक्रियाजन्यफल-सम्बन्धित्वं कर्म्मत्वमित्यत्रापि तथात्वादतिव्याप्तिरित्यतः कर्तृभिन्नत्वे सति क्रियाजन्यफलसम्बन्धित्वं कर्म्मत्वमिति कर्मलक्षणमत्रापि कार्य्यम् । सारमञ्जर्य्यां परसमवेतक्रियाजन्यफलशालित्वं कर्म्मत्वमिति कर्म्मलक्षणं कृतं, तत्र परसमवेतेति विशेषणात् ग्रामं गच्छतीत्यादौ कर्त्तुः संयोगरूपफलशालित्वेऽपि नाऽतिव्याप्तिस्तस्य फलस्य स्वसमवेतत्वादिति भावः, उत्तर-देशसंयोगफलिका क्रिया गमनं, कर्तृसमवेतस्य तादृशसंयोगरूपफलस्य ग्रामे सत्त्वात् ग्रामस्य कर्म्मत्वम् । एवं गां ददातीत्यत्र स्वस्वत्वध्वंसपूर्व्वकपरस्वत्वोत्पत्त्यवच्छिन्नत्यागो दानम् इति दाधात्वर्थः, अत्र कर्तृसमवेतत्यागक्रियाजन्यफलं स्वस्वत्वध्वंसपूर्व्वकपर-कीयस्वत्वोत्पत्तिः, तच्छालित्वात् गोः कर्म्मत्वम् । एवमन्यत्राऽपि । भवानन्देनैतल्लक्षण-स्यैव दूषणं कृतम्—नाऽपि तत् (कर्म्मत्वं) परसमवेतक्रियाजन्यफलशालित्वं गमि-पत्योः कर्म्मत्वस्य पूर्व्वस्मिन् देशे, त्यजेरुत्तरस्मिन्, स्पन्देश्च पूर्व्वापरदेशयोः प्रसङ्गात्, एवं नदी वर्द्धते इत्यादौ वर्द्धेरवयवोपचयस्य परम्परया तीरप्राप्तिफलकत्वात् तज्जन्यफलाश्रये तीरेऽतिव्याप्तिरिति । तेन हि तत्तद्धात्वर्थताऽवच्छेदकफलशालित्वं तत्तद्धात्वर्थकर्म्मत्वं, एवं हि त्यजेः विभागाऽवच्छिन्नस्पन्दोऽर्थो गमेश्चोत्तरदेशसंयोगावच्छिन्नस्पन्दो न तु स्पन्दमात्रं, ततश्च त्यजेर्विभागरूपफलशालित्वं नोत्तरदेशस्य, न वा गमेरुत्तरदेशसंयोगरूपफलशालित्वं पूर्व्वदेशस्येति न तत्राऽतिप्रसङ्गः । स्पन्देर्वृधधातोश्च फलावच्छिन्नव्यापाराऽबोधकत्वात् न पूर्व्वाऽपरदेशयोस्तीरस्य च कर्म्मत्वम् । ननु जानातीत्यत्र धात्वर्थावच्छेदकज्ञानरूपफल-शालित्वमात्मन एव तत् कथं घटं जानातीत्यादौ घटादेः कर्म्मत्वमित्यत आह, जानाती-त्यादीनान्तु विषयित्वरूपविभक्त्यर्थद्वारा नामार्थान्वयित्वमेव गौणं सकर्म्मकत्वम्, अतएव घटं जानातीत्यत्र घटविषयकज्ञानवान् इत्याकारकएव बोधो न तु घटवृत्तिफलकज्ञानाऽनुकूल-ज्ञानवानिति ।

(१) तच्चेति, चोऽत्र पुनरर्थे, तत् पुनः कर्म्म त्रिविधम्—निर्व्वर्त्त्यमित्यादि । तत्रे-त्यादिना तानि लक्षयति, तत्र तेषु त्रिविधेषु कर्म्मसु निर्व्वर्त्त्यम् नाम उत्पाद्यम्

न्तरं नेयम्, तण्डुलानोदनं पचति, प्राप्यं पृथगुपलभ्यम् क्रिया-

---

उत्पादयितुं शक्यमुत्पाद्यम्—प्रकृतिवाचकपदासमभिव्याहृतपदोपस्थाप्यत्वे सति क्रिया-जन्योत्पत्तिरूपफलवत्त्वं निर्वर्त्यत्वं, उत्पत्तिश्चात्मलाभस्वरूपा, प्रथमप्रकाशरूपा च, उदाहरति—कटं करोति (कटइतिकर्म्मतानुकूलकृतिमान्) कटादेः क्रियाजन्योत्पत्तिमत्त्वमस्तीति निर्व्वर्त्त्यत्वम् । ननु कटो नाम सिद्धः पदार्थः तस्य च सिद्धत्वेन क्रियाया अनिमित्तत्वात् कथं कटादेः कारकत्वं, सत्यं, कटशब्देनाऽत्र कटावयवं काशादिकं वाच्यमुपचारात्, एतदपि बोध्यम् यत् काशादेरुपचारेण कृतिविषयत्वेऽपि न काशादिकं करोतीति मुख्यतः प्रयोगः स्यादेव, करोति-समभिव्याहारकर्म्मवाचकपदस्याऽवयवे निरूढलक्षणानियमादित्याहुः प्राचः, एवमोदनं पचतीत्यत्र ओदनपदस्य तण्डुले तदवयवे वा लक्षणा । विकार्य्यं लक्षयति अवस्थान्तरं नेयमिति—अन्या अवस्था अवस्थान्तरं, तत्र नयनयोग्यम्, अवस्थान्तरं प्रापयितुं शक्यम्, तथाहि अवस्थितस्य धर्म्मिणः पूर्व्व-धर्म्मनिवृत्तौ धर्म्मान्तरोत्पत्तिर्विकृतिः, तां नेतुं शक्यमिति नेयमित्यस्यार्थः, प्रतीयमानप्रकृतिविकृतिभावत्वे सति क्रियानिर्व्वाह्यविशिष्टावस्थोत्पत्तिरूपाऽन्यतरफलवत्त्वं विकार्य्यत्वमिति फलितार्थः, उदाहरति—तण्डुलानोदनं पचति (इत्यत्र पचतीति द्व्यर्थः पचिः), तण्डुलान् पचन् ओदनं निर्व्वर्त्तयतीति भाष्यकारस्तन्मते तण्डुलाना-मोदनं पचतीत्यपि प्रयोगः स्यादेव, तदर्थस्तु तण्डुलविकारमोदनं निर्व्वर्त्तयतीति,—अत्र तण्डुलस्य पूर्व्वरूपाऽपायफलवत्त्वात् ओदनस्योत्पत्तिमत्त्वादुभयोरपि विकार्य्यत्वम्, अत्र हि ओदनानुकूलतण्डुलादिगतविक्लित्त्यवच्छिन्नव्यापारवानित्याकारको बोधो भवति.। एवं काष्ठं भस्म करोति, सुवर्णं कुण्डलं करोतीत्यादावपि विकार्य्यम्* । ननु निर्व्वर्त्त्यत्वमिहापि विद्यते कटं करोतीतिवदिति चेन् सत्यम्, यत्र विकाराश्रय एव प्रयुज्यते तत्र विकार्य्यत्वं—तथाचोक्तं "सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी । यस्य नाश्रियते तस्य निर्व्वर्त्त्यत्वं प्रचक्षते ।" इति, अस्यार्थस्तु—यस्य सती प्रकृतिः परिणामिनी नाश्रियते यस्य वा अविद्यमाना प्रकृतिस्तस्य निर्व्वर्त्त्यत्वम् । यथा कटं करोति, संयोगं जनयतीत्यादि । प्राप्यं लक्षयति पृथगुपलभ्यमिति—पृथक्

---

* विकार्य्यस्य कर्म्म द्वेधा भवति "प्रकृत्युच्छेदसम्भूतं किञ्चित् काष्ठादिभस्मवत् । किञ्चिद्गुणान्तरापाणात् सुवर्णस्य विकारवत्" इति हरिकारिका ।

कृतविशेषं, ग्रामं गच्छति, इदमपि प्राप्यं, कुञ्जं त्यजति कोकिलः; कुञ्जत्यागं प्राप्नोति।

---

निर्वर्त्त्यविकार्य्याभ्याम् अन्यप्रकारेणोपलक्ष्यते, क्रियाकृतविशेषं क्रियया कृतो विशेषो यस्य तत्, प्राप्तिमात्रं विभाव्यते तत् प्राप्यम् *। क्रियाकृतासाधारणधर्म्मप्रकारकप्रतीति-विषयताऽनाश्रयत्वे सति क्रियाजन्यफलशालित्वमीदृशत्वं प्राप्यत्वम्। उदाहरति ग्रामं गच्छति (ग्रामवृत्त्युत्तरदेशसंयोगजनकक्रियावान् इति बोधः) अत्र ग्रामादेः कर्तृसाधारण-संयोगरूपफलवत्त्वेऽपि * क्रियाकृतस्वमात्रवृत्त्यसाधारणविशेषफलस्याऽसत्त्वेन तादृशफल-प्रकारकबोधाऽविषयत्वात् प्राप्यत्वम्। ननु यत्र प्राप्तिमात्रं विभाव्यते तत् प्राप्यमिति स्थिते, यत्र प्राप्त्यभावस्तत्र कथं स्यादित्याह इदमपीति, इदं वक्ष्यमाणोदाहरणमपि, तद्यथा कुञ्जं त्यजति कोकिलः (कुञ्जवृत्तिपूर्वदेशविभागानुकूलव्यापाराश्रयः इति बोधः) इह कुञ्जत्यागप्राप्तौ कुञ्जत्यक्तिरूपवर्त्ततीति एतदेव विवृणोति कुञ्जत्यागमित्यादिना, कुञ्जं त्यक्तत्वेन संयुनक्तीत्यर्थः। अन्ये त्वाहुः त्यजिगमिप्रभृतीनां स्पन्दमात्रमर्थः न हि त्यजति गच्छतीत्यनयोः प्रतीत्योर्विशेषं कश्चिदनुभवति ततश्च गमेरुत्तरदेशसंयोगेन त्यजे-विभागेनाऽवच्छिन्नाः स्पन्दा वाच्याः, एवञ्च ग्रामं गच्छतीत्यत्र गमेरर्थः संयोगः क्रिया च, द्वितीयाया आधेयत्वं प्रतियोगित्वं वाऽर्थस्ततश्च ग्रामवृत्तिसंयोगप्रतियोगिको वा यः संयोग-स्तद्विशिष्टक्रियावान् इत्याकारको बोधः, तथा त्यजतीत्यत्र धात्वर्थो विभागः क्रिया च द्वितीयाया अर्थः आधेयत्वमवधित्वं वा, ततश्च तद्वृत्तिस्तदवधिको वा यो विभागस्त-द्विशिष्टक्रियावान् इत्याकारको बोधः। इति।

ननु क्रियानिमित्तं कारकमिति स्थिते निमित्तत्वस्य विद्यमानस्यैव सम्भवति क्रिया-साध्यस्य कर्म्मणः कथं क्रियानिमित्तत्वम्? तथाहि पूर्व्वमविद्यमानस्य निर्वर्त्त्यस्य क्रियैव हेतुः, न च कार्य्यं स्वतोनिमित्तं भवति इतरेतराश्रयत्वात्, एवं विकार्य्यप्राप्ययो-

---

† कर्म्म: क्रियाव्याप्तिमात्रं यत्र प्रतीयते न निष्पत्तिर्न च विकृतिः तत् प्राप्यमिति वोपदेवः। "क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते। दर्शनादनुमानाद्वा तत्-प्राप्य"मिति भर्तृहरिः।

तदीप्सित-मनीप्सित-मितरच्च—ईप्सितमुक्तम्, अनीप्सितन्तु विषं भक्षयति क्रुद्धः, इतरत्तु ग्रामं गच्छन् वृक्षमूलमुपसर्पति। (१)

---

रथस्यान्तरनयनं संयोगित्वञ्च क्रिययैव जन्यते, क्रियामन्तरेण तयोरभावादिति चेदुच्यते किमत्यन्तासत्साध्यते अथवाऽत्यन्तसत् यद्वा स्वरूपसत्. नाद्यौ—(१) अत्यन्तासत् सर्वथाऽविद्यमानं वस्तु न साध्यते, (२) न वाऽत्यन्तसत् सर्व्वदा विद्यमानं नित्यमिति यावत् वस्तु न साध्यते हेतुत्वाभावात्. न हि अत्यन्तमसत् खपुष्पादिकं उत्पादयितुं शक्यते नाप्यत्यन्तसदाकाशादि च, (३) तृतीयं स्वरूपसदेव साध्यते स्वरूपसन्नाम स्वरूपतस्तत्-कालवर्त्तमानं तस्य स्वगतो भवनलक्षणः कश्चिद्व्यापारोऽस्त्येव, तत्र (व्यापारे) प्राप्त-कर्त्तृभावस्य तस्योत्पाद्यमानत्वात् कर्त्तृत्वम्। ततश्च "व्यापारभेदाऽपेक्षायां करण-त्वादिसम्भवः", तथाहि कटं करोतीत्यत्र उत्पद्यमानं कटमुत्पादयतीत्यर्थः अनुत्पाद्य-मानस्योत्पादनाया अभावात्। तथाच "भवत्यर्थस्य यः कर्त्ता करोतेः कर्म्म जायते। करोत्यर्थस्य यः कर्त्ता भवतः स प्रयोजकः"। एवमन्ययोरपि कृती भवन् वा विकार्य्यते, प्रतिमाभासादयन् प्राप्यत इति; इयमेवाऽत्र निमित्तता यदेनमुद्दिश्य क्रिया प्रवर्त्तते। अथवा भाविनामपि निमित्तत्वं शास्त्रकारैरेवेति शूलपाणिः। कटज्ञानस्य निमित्तत्वात् कटादिरपि निमित्तमिति भावः।

(१). त्रिविधमपि तत्कर्म्म पुनरीप्सितादिभेदेन त्रिविधमिति प्रतिपादयन्नाह तदिति—तदपीप्सितमिति क्वचित्पाठः, तथापि त्रैविध्येनाऽपि कर्म्मणो न समाप्ति-रित्यवधिः सूच्यते, तत् कर्म पुनरपि त्रिविधं (१) ईप्सितम्, (२) अनीप्सितम्, (३) इतरत्। तत्र ईप्सितं कर्त्तुः कर्म्मेष्टम्, व्यस्य पुनरनीप्सितम्, इतरत् ताभ्यामन्य-दौदासीन्येन प्राप्तमित्यर्थः। तथाचोक्तं, ईप्सिताऽनीप्सिते चैव गौणञ्च कर्त्तृकर्म्म च, एवं चतुर्विधं कर्म्मेति। ईप्सितोदाहरणान्युक्तपूर्व्वाण्येव। ईप्सितस्यैव निर्वर्त्त्यादि भेदत्रयं, यदन्यदनीप्सितं तथाहि—न प्राप्यं न च निर्वर्त्त्यम् न विकार्य्यञ्च कर्हिचित्।

## सकर्मकाधातोर्भावेऽपि प्रत्यये क्रियाव्याप्तिरस्ति—सभां

अनभीष्टतया त्याज्यं तदनीप्सितमीरितम्। जहाति पापं साधुरित्यादि तदुदाहृतम्*। बलवदनिष्टानुबन्धित्वे सतीष्टसाधनत्वज्ञानविषयत्वमनीप्सितत्वमित्यर्थः यथा विषं भक्षयति मुग्धः, क्रोधाद्विषं बलवदनिष्टानुबन्धि ज्ञात्वाऽपि तद्भक्षयतीत्यर्थः, यदि भैषज्यमिति प्रीत्या तदा तदीप्सितमेव†। इतरत् पुनः ईप्सितादनीप्सिताच्चान्यत् गौणमित्यर्थः, यथा ग्रामं गच्छन् वृक्षमूलान्युपसर्पति, ग्रामगमने वृक्षमूलोपसर्पणं यदि मार्गवशाद्भवति तदैवेतरत्कर्म, यदि पुनरतिक्लान्तत्वेन विश्रामार्थं वृक्षमूलमुपसर्पेत् तदेप्सितमेव।

भर्तृहरिणा सप्तविधं कर्म प्रोक्तं निर्वर्त्यादिभेदेन त्रिविधमीप्सितमनीप्सितं चतुर्व्विधम् यथा—

औदासीन्येन यत् प्राप्यं यच्च कर्तुरनीप्सितम्‡।
संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्व्वकमिति॥

भरतमल्लिकेन तु कर्म्मण एवं विचारः कृतः—क्रियाव्याप्यं भवेत् कर्म तच्चतुर्द्धा मनीषिभिः। प्राप्यं विकार्य्यं निर्व्वर्त्यमनीप्सितमितीरितम्। यत्र हि क्रियया कर्तु-र्व्याप्तिमात्रं प्रतीयते। न वैकृत्यं न निष्पत्तिस्तत् प्राप्यं समुदाहृतम्। वनं गच्छति गोविन्दः प्राप्नोति गमने मतम्। यत् कर्तुः क्रिययाऽवस्थान्तरमापद्यते हि तत्। विकार्य्यं

* ग्रामं गच्छति, सूर्य्यं पश्यतीत्यादिषु यथा गमनादिक्रियया ग्रामादीनां प्राप्तिः प्रतीयते न तथा त्यागक्रियया पापस्य प्राप्तिः प्रतीयत इत्यतोऽनीप्सितं पृथगुक्तमिति गोयीचन्द्रः।

† विषभक्षणमपि कश्चिदीप्सितं भवति, यथा यदा मनुष्यो दुःखार्त्तो भवति, सोऽत्यन्तदुःखान्यनुनिशम्य विषभक्षणमेव श्रेयो मन्यते अनीप्सितं यत् तद्भक्षयतीति महाभाष्यम्। तत्र अनीप्सितेत्यत्र नञः पर्युदासतया ईप्सितादन्यदनीप्सितमितीतरदपि गृहीतम्।

‡ अनीप्सितस्य वर्ण्येति संज्ञान्तरम्, ईप्सितत्वं च इष्टसाधनत्वं इति क्रियाजन्यफलवत्त्वम्।

वा न प्रवेष्टव्यम्, कृतपूर्व्वी कटम् । (१) इष्टाऽपि भवति—(२)

---

तद्यथा वस्त्रं रञ्जति दहतीन्धनम् । यत्र कर्म्म: क्रियोत्पत्तिं प्रकाशं वा प्रयाति तत् । निर्व्वर्त्त्यं तद्यथा करोति कटं सूतवती सुतम् । न प्राप्यं, न च निर्व्वर्त्त्यम्, न विकार्य्यञ्च यद्भवेत् । अनभीष्टतया त्याज्यं तदनीप्सितमीरितम् । जहाति दुरितं साधुरित्यादि तदुदाहृतमिति ।

(१) ननु भावविहितप्रत्ययानां धात्वर्थमात्रवाचकत्वात् तत्र क्रियाव्याप्तिरस्ति वा नेत्यत आह सकर्म्मकादिति—सकर्म्मकधातोर्भावे प्रत्यये कृतेऽपि क्रियाव्याप्तिरस्ति—सामान्यधात्वर्थविवक्षायां भावे प्रत्यये कृते विशेषविवक्षायां क्रियाव्याप्तिं व्याहन्यत इत्यभिप्राय:, उक्तञ्च 'भावेऽपि धात्वर्थकृता व्याप्तिरस्ती'ति भावेऽपि हि प्रत्यये सकर्म्मकाद्धातो: कर्म्मसम्बन्धो भवत्येवेत्यर्थ:, इदन्तु विवक्षाधीनं शिष्टप्रयोगविषयं वेदितव्यम्, एतच्च कृत्पादे "कृत्यक्तखलर्था भावकर्म्मणो:" (४।१।१२४) इत्यस्य व्याख्यानावसरे "सकर्म्मकेभ्यश्च भावे विवक्ष्यन्त" इत्यनेन वक्ष्यत एव । श्रीपतिरपि "भावाख्यातं भीज्यात्" (अकर्म्मकात् भावाख्यातम्भवतीत्यर्थ:) इति नियमयन् "कृत्यक्तखलर्थास्त्विह सकर्म्मकेभ्योऽपि भावे स्युरेव—कां दिशं मया गन्तव्य"मित्याह । त्रिमुनिसंग्रहकारास्तु "पच्यते मासान्" इति सकर्म्मकेभ्योऽपि भावाख्यातमिच्छन्ति । सभां वा न प्रवेष्टव्यम् प्रवेष्टव्यमित्यत्र प्रपूर्व्वकाद्विशधातोर्भावे तव्यप्रत्यय:, कृतपूर्व्वी कटमित्यत्र कृतं पूर्व्वमनेनेति भावे क्त:, तद्धितार्थे सुप् सुपेति (४।३।२) समास: इष्टादिकृतपूर्व्वादेरिन् (५।४।१८२) इतीन्* ।

(२) इष्टापीति—इह (अकर्म्मकेष्वपि क्वचित्) क्रियाव्याप्तिरस्तीति भाव: ।

---

* कृतपूर्व्वीकटमित्यत्र प्रथमं कर्म्माविवक्षया भावे क्तप्रत्यये विहिते तदन्तेन, पूर्व्वादिभि: सुप् सुपेति समासे च कृते तत्पूर्व्वकात् पूर्व्वशब्दात् कर्त्तरि इन्प्रत्ययो भवति पश्चाच्च कर्त्तृगतक्रियाया: कर्म्मविशेषाकाङ्क्षायां कटादिकर्म्मणोऽन्वय: । उक्तञ्च हरिणा "अकर्म्मकत्वे सर्व्वत्र क्तान्ते भावाभिधायिनी । पश्चात् क्रियावता कर्म्मा योगो भवति कर्म्मणाम् । अविवक्षामताश्चैवा यथा ग्रामादिकर्म्मभि: । क्रिया सम्बध्यते तद्वत् कृतपूर्व्वादिषु स्थिता ।" इति वर्त्तुलीयकनिष्ठान्तगतपदोपस्थापनकर्त्तृकपदार्थविशेषा अपि यथा ग्रामं गत इत्यादौ भिन्नपदोपात्तैरपि ग्रामादिकर्म्मभि: क्रिया सम्बध्यते तथात्रापि ।

मासमास्ते; ओदनपाकं शेते, क्रोशं स्वपिति, कलिङ्गं वसति—यदाहुः "कालभावाऽध्वदेशानामन्तर्भूतक्रियान्तरैः। सर्व्वैरकर्म्मकैर्योगे कर्म्मत्वमुपजायते॥"

---

उक्तमेव पूर्व्वं सकर्मकाऽकर्म्मकभेदेन धातूनां द्वैविध्यमिति, तत्र "फलव्यापारयोरेकनिष्ठतायामकर्मकः। धात्वोस्तयोर्धर्मिभेदे सकर्मक उदाहृत" इति उक्तेः फलसमानाधिकरणव्यापारवाचकोऽकर्म्मकः, फलव्यधिकरणव्यापारवाचकः सकर्म्मक इति तयोः स्थूलो विभागः। फलं साध्यभूतो धात्वर्थः,* व्यापारस्तु फलसिद्ध्यनुकूलयत्नविशेषः, एतदुभयं यदैकनिष्ठं भवति तदाऽकर्म्मकत्वमेतयोर्भिन्नाधिकरणवर्त्तित्वे तु सकर्म्मकत्वम्; तथाहि अस्ति भवतीत्यादौ फलं सत्ता, तदनुकूलव्यापारश्च कर्तृनिष्ठाविति तेषामकर्म्मकत्वम्; ओदनं पचति, ग्रामं गच्छतीत्यादौ स्वावयवविक्लित्युत्तरदेशसंयोगादीनि फलानि ओदनग्रामादिमात्रवृत्तीनि, तदनुकूलव्यापाराश्च कर्तरि चौदनादिषु वर्त्तमाना इति फलव्यापारयोर्भिन्नाधिकरणवर्त्तित्वादेतेषां सकर्म्मकत्वम्। अकर्मकधातवस्तु—"सत्ता, लज्जा, स्थिति, जागरणं, वृद्धि, क्षय, भय, जीवित, मरणम्। शयन, क्रीडा, रुचि, दीप्त्यर्था नैते धातवः कर्मणि उक्ताः†॥" एतेषामकर्म्मकाणां धातूनां

* क्रियासाध्यं फलमिति वागीश्वरः।

† अथ चतुर्व्विधा अकर्मकधातवः सन्ति। तदुक्तं हरिणा "धातोरर्थान्तरे वृत्तेः धात्वर्थेनोपसंग्रहात्, प्रसिद्धेरविवक्षातः कर्म्मणोऽकर्मिका क्रिया"। (१) धातोः अर्थान्तरे वृत्तेः—सविजातीयार्थबोधकत्वात् यथा प्राधातुः प्राणार्थे सकर्मकः, स्त्यार्थेऽकर्मकः, न तु गतिवाची गम्यादिः प्रापणार्थेऽप्यकर्मकः तयोर्द्वयोरप्यर्थयोः सकर्मकत्वेन सजातीयत्वात्; (२) धात्वर्थेनोपसंग्रहात्, धात्वर्थेन कर्मण उपसंग्रहात् स्वशरीरे प्रवेशनात्, यथा जीवत्यादीनां प्राणधारणाऽनुकूलव्यापाररूपक्रियाऽर्थतया तत्कर्मणः प्राणादेः धात्वर्थएव प्रवेशः; (३) प्रसिद्धेः अकर्मकत्वेन प्रसिद्धेः सत्त्वादेः, (४) कर्मणोऽविवक्षातः गम्यादिरकर्मत्वविवक्षात् अकर्मकः। अविवक्षा च क्वचित् कर्मणोऽविवक्षा, यथा पचति; क्वचित् कर्मत्वाऽविवक्षा, यथा मातुः स्मर्यते, अत्र मातुरित्यस्य सम्बन्धित्वेन विवक्षायां न कर्मसंज्ञा,

योगे कालभावाध्वदेशानां चतुर्णामेव विभाषया कर्मत्वमामनन्ति केचिद्वैयाकरण-मुख्यास्तथाहि "कालादिभ्योऽव्यस्येति" श्रीपतिसूत्रम् "देशाध्वकालभावं वाद्रेः" (२८२) इति वोपदेवः। "कालानामध्वमानानां क्रियाणां गोहतामपि। आधारता ध्रौव्यधातोः कर्मता स्याद्विभाषये"ति कारिका च, तन्मते रात्रौ नदीः, वनेषु च उषित्वेति वैकल्पिकाधारता च भवति। वस्तुतस्तु "कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणा-मिति भाष्योक्तेः, "अकर्मकधातुभिर्योगे देशकालौ भावो गन्तव्योऽध्वा च कर्म-संज्ञक इति वाच्य"मिति वार्त्तिकाच्च कालादीनां कर्मताया नित्यत्वमेव प्रतीयते। उल्लिखितं भाष्यवचनं कैयटेनैवं विवृतं—मासादय एव कालवाचित्वेन लोके प्रसिद्धा न तु दोहनपाकादयइति सत्यपि भावस्य कालत्वे पृथगुपादानं कृतम्, अध्वा चासौ गन्तव्योऽध्वगन्तव्यः निपातनाद्विशेषणस्यापि परनिपातः, गन्तव्यतया लोके यः प्रसिद्धः क्रोशयोजनादिनियतपरिमाणः, तस्यैव कर्मत्वं नान्यस्येत्यध्वानं स्वपितीति न भवति। ननु "कालाध्वनो"रिति (२।१।८) द्वितीयासिद्धेः किं कर्मसंज्ञया? गोदोहादीनां काल त्वेनाऽप्रसिद्धत्वात् द्वितीया न प्राप्नोतीति भावस्य तावत् कर्मसंज्ञा विधेया। इति चेन्न कालाध्वनोः कर्मसंज्ञामन्तरेण "आस्यते मासः," "आसितव्योमासः." इत्यादि कर्मणि प्रयोगो न स्यादेव। हरिणा तु कालादीनां योगेऽकर्मकाणां धातूनामन्तर्भूतानि कान्यपि क्रियान्तराण्युपकल्पितानि, अतश्च कर्मत्वं, यथा विवृतमपि कारिकया—"कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैरिति" अन्तर्भूतं तिरोहितं गुप्तरूपेणाऽवस्थित-मिति यावत् क्रियान्तरं क्रियाविशेषो येषां ते तैः * तथाभूतैः सर्वैरकर्मकैर्योगे काला-दिष्वपि क्रियाव्याप्तिरस्तीति भावः। देशशब्देन कुरुपाञ्चालादिनाम्ना प्रसिद्धो भूभागो

---

स्वपादेः सकर्मकत्वेऽपि कर्मत्वेन कर्माऽव्ययाऽभावादकर्मकत्वं; तेन भावे कृत्यादयः, कश्चित् कार्यप्रवृत्तिवेलायां अविवक्षा, पश्चाद्विवक्षा यथा कृतपूर्वी कटम्, तत्रच हरिणा अकर्मकत्वे सत्येव कालो भावोऽभिधायिनि। पश्चात् क्रियायाः कर्मो योगो भवति कर्मणा-मिति।

यत्राभ्रमते तद्धि क्रियान्तरमभिव्याप्तिरूपम्।

**११—दुहादयो द्विकर्मकाः (१)—तत्रोपयोगकर्म प्रधानं, तन्निमित्तमप्रधानम्;—तद्यथा—गां दोग्धि पयो गोपः,**

न तु ग्रामादिरूपैकदेशमात्रं, तेन ग्रामं स्वपितीति प्रयोगो न स्यात्। कर्मत्वमुपजायत इति कर्मोपाधिकप्रत्ययं प्रत्येव इति मन्तव्यं, ततश्च घोषं स्वपिति, घोषः सुप्यते इत्यादिः प्रयोगः*। सर्वैरिति विशेषणोपादानात् सकर्मकधातुयोगेऽपि कर्मत्वं कालादे-रिति केचित्, कैयटोऽपि "अत्र दर्शने न केवलमकर्मकाणां कालादयः कर्मत्वं प्रति-पद्यन्ते अपि तु सकर्मकाणामिति" ततश्च रात्रिरोदनं पच्यते, रात्रिमोदनं पचतीत्यादि प्रयोगः। कैयटस्तु नान्तर्भूतक्रियान्तरमङ्गीकरोति तथाहि—"यदा त्वङ्गीकृतकर्म-कधात्वन्तरार्थे आसनादावासादयो वर्तन्ते तदापूर्वमेव (सूत्रेण) कर्मत्वं सिद्धम्, तथाहि मासमास्ते इत्यस्य "मासमासनेन व्याप्नोतीत्ययमर्थश्चेत् तदा कटं करोतीतिवत् प्राप्तमेव कर्म। मासमास्ते, (मासकर्मकासनवान् चैत्रः) एवमन्यत्रापि ओदनपाकं शेते इत्यादिष्वपि बोध्यम्। केचित्तु कर्मणोऽप्यधिकरणत्वमर्थं कुर्वन्ति, तन्मते तु "मासाधिकरणताकासनवानित्येवंरूपो बोधः स्यात्। कातन्त्रटीकाकारस्तु "धातोर्द्वेधा प्रणिगति (१) शयनादिमात्ररूपा (२) प्राप्तिविशिष्टशयनादिरूपा च, तत्र कालादिषु प्राप्तिविशिष्टशयनादिरूपोऽर्थो गृह्यते, अन्यत्र तु शयनादिमात्ररूप इत्याह।

(१) पूर्वं सकर्मकाऽकर्मकभेदेन धातूनां द्वैविध्यमुक्तम्—तत्र सकर्मकाश्च द्विविधाः एककर्मका द्विकर्मकाश्च; एककर्माऽन्वितस्वार्थबोधका एककर्मका गम्यादयः, द्विकर्मा-ऽन्वितस्वार्थबोधकाः द्विकर्मकाः दुहादयः, दुहादीनपि दुहियाचीत्यादिना वक्ष्य-न्ति, सम्प्रति तु बोधादरार्थं तानुपपादयति इतीति—इह(कर्मविधौ) दुहादयः (दुह आदिर्येषां धातूनां ते धातवः) द्विकर्मकाः (द्वे कर्मणी क्रियाव्याप्ये येषां ते) तत्र द्वयोः कर्मणोर्मध्ये उपयोगकर्म (उपयुज्यते इष्टसिद्ध्यै व्यापार्यते इत्युपयोगः कर्मणि

* माषोऽधीतः, रात्रिरधीता, कुरु स्वप्यते, कुरवः सुप्यन्ते इति क्रमदीश्वरः।

पौरवं गां याचते विप्रः, अजमवरुणद्धि गां गोपः, नैर्थ पन्थानं पृच्छति, पौरवं गां भिक्षते, वृक्षमवचिनोति फलानि दारकः, शिष्यं धर्म्मं ब्रूते, शास्तं शिष्यमनुशास्ति, चैवं शतं जयति, गार्गान् शतं दण्डयति, देवं वरं वृणुते, दधि मथ्नाति घृतम्, कूपं मन्त्रं वदति—

दुहि, याचि रुधि, प्रच्छि, भिक्ष, चिञो,
ब्रुवि, शासि, जि, दण्डि, वृ, मन्थि, वदः।
इति चोभयकर्म्म दुहादि विदुः;
कृषि, नी, वहि, हृ, प्रभृतीति परम्॥

---

यत्, स चाऽसौ कर्म्म चेतीति उपयोगकर्म्म। प्रधानं तदुद्दिश्य क्रियाप्रवृत्तिस्तस्य प्राधान्यम्, तथोपयोगं कर्म्म फलं पयःप्रभृति, तन्निमित्तं तस्य उपयोगस्य निमित्तं तत्साधनाऽनुकूलव्यापाराश्रयमिति यावत्, तादृशं कर्म्म चाप्रधानम् यथा गवादि. अत्र साक्षात् क्रियाऽन्वयित्वं प्रधानत्वं परम्परया क्रियाऽन्वयित्वमप्रधानत्वमिति केषाञ्चिद्विवेकः तन्नि-न्त्यम् गां दोग्धीत्यत्र दोहनक्रियया गौः पयसश्च साक्षादन्वयोऽस्त्येव, परन्त्वनयोरेकस्य (पयसः) फलस्वरूपतयाऽन्यस्य तु गवादेस्तदर्थतयेति भेदः। प्रधानाऽप्रधानविचारस्तु 'उक्त'विधौ (१।१।२६-२७-२८) उपयुज्यते। उदाहरति गां दोग्धि पय इत्यादि एतेषां शाब्दबोधदर्शनात् पूर्वं दुहादीनां संख्यामर्थांश्च विचारयामः—प्राचस्तु "दुह्, याच्, पच्, दण्ड्, रुधि, प्रच्छि, चि, ब्रू, शासि, जि, मथ्, मुषाम्। कर्म्मयुक् स्यादकथितं तथा स्यान्नी, हृ, कृष् वहा"मिति षोडश द्विकर्म्मकाः पठन्ति; भाष्ये तु "दुहि, याचि, रुधि, प्रच्छि, भिक्षि, चिञा-मुपयोगनिमित्तमपूर्वविधौ। ब्रुवि, शासि, गुणेन च यत् सचते तदकीर्त्तितमाचरितं कविना," इत्यष्टावेव पठिताः। ननु द्विकर्म्मका इत्यस्य द्विकर्म्मा-ऽन्वितस्वार्थबोधका इत्येवमर्थः ज्ञातः, तत् किमेकार्थस्य द्वे कर्म्मणी भवतो नानार्थौ पृथक् पृथक् कर्म्मद्वयं साधयत इत्यत आह—षष्ठी स्थल नानार्थानामपि, तथाहि—

व्यापारोऽपाश्चा कर्मत्वमानीयत इत्यवधेयम् । एवंविधसिद्धान्तस्य प्रयोजनं हि—पाणिनि-यन्थे "अकथितञ्चे"ति सूत्रमस्ति (१।४।५१) तदर्थस्तु अकथितं कारकं कर्मसंज्ञं स्यात् अकथितत्वञ्च कारकविशेषसंज्ञाऽन्तरेणाऽविवक्षितत्वे सति कर्मोपकारकत्वम् । अत्राऽविवक्षितत्वं नाम प्रसक्त्यप्रसक्तौ वा तत्त्वेन विवक्षाविषयत्वाभावः । अर्थात् यत्र कारकान्तरस्य प्रसक्तिर्नास्ति प्रसक्तौ वा विवक्षाभावस्तच्चेत् क्रियया कथमपि सम्बध्यते तदा कर्मसंज्ञं भवतीति सूत्रार्थः, भाष्यकारस्तु दुहादीनष्टौ गणयन् "अपूर्वविधा"वित्युक्तवान्, ईदृशी कर्मसंज्ञा पूर्वं न विहिता इति तस्याऽभिप्रायः, अथेदानीं यदि दुहादीनां द्विकर्माऽन्वितद्विव्यापारार्थकताऽङ्गीक्रियेत तदा द्वयोरपि कर्मणोः क्रियाव्याप्यत्वेन कर्तुरीप्सिततमत्वात्—"कर्तुरीप्सिततमं कर्म" (१।४।४९,पा.) अनेनैव पूर्वसूत्रेण कर्मसंज्ञाप्राप्तत्वेनापूर्वविधानाऽनुपपत्तेः, अतश्च भाष्ये गोरक्षाणां मध्ये द्विव्यापाराम् विहाय दुहादयोऽष्टौ एकव्यापारा एव संगृहीताः, तन्मते येषां पुनर्द्विव्यापारार्थकता तेषामीप्सिततमसूत्रेणैव कर्मसंज्ञा भवति, ते हि द्विकर्माऽन्वितद्विव्यापारा णिजन्तादिवदिति बोध्यम्। द्विकर्मकाश्च धातवो द्विकर्माऽन्वितद्विव्यापाराः । एकव्यापाराणां भाष्योक्तानां दुहादीनामष्टानामर्थश्च दर्शितः शब्दरत्ने, तथाहि—अन्तःस्थितद्रवद्रव्यविभागाऽनुकूलो व्यापारो दुहेरर्थस्तत्र विभागे गोरपादानत्वाऽविवक्षायां दुग्धोपयोगित्वात् कर्मत्वम् । स्वत्वनाशस्वत्वोत्पत्त्यनुकूलो व्यापारो देहीत्याद्यभिलापरूपो याचेरर्थस्तत्र धनिनि कस्याऽपि कारकस्याप्रसक्तौ धनादिसम्बन्धितया कर्मत्वम् । निर्गमप्रतिबन्धपूर्वकान्तःस्थित्यनुकूलव्यापारो रुधेरर्थस्तत्र स्थित्याधारस्य व्रजस्याऽविवक्षायां गवादिकर्तृकस्थितिरूपफलोपकारकत्वात् कर्मत्वम् । जिज्ञासाविषयार्थज्ञानाऽनुकूलो व्यापारः प्रच्छेरर्थस्तत्र कस्याऽप्यप्राप्तौ ज्ञानरूपफलोपयोगित्वात् कर्मत्वम् । ज्ञानञ्च यत् प्रष्टुरेव न प्रष्टव्यस्य । भिक्षेश्च याचिसमानार्थकः । विभागपूर्वकादानं चिञोऽर्थस्तत्र विभागेऽपादानत्वाऽविवक्षायां पुष्पादिकर्मोपकारकस्य कर्मत्वम् । ज्ञानाऽनुकूलशब्दप्रयोगो ब्रुवोऽर्थः प्रतिपादकः स एव शासेरर्थः तदर्थज्ञानकर्मीभूतज्ञानवत्त्वेनोद्देश्यस्य सम्प्रदानस्य तत्त्वाविवक्षायां तत्सम्बन्धिनः कर्मत्वम्, एवञ्च सम्प्रदानत्वविवक्षया तु "धर्मं ब्रूते"इत्यादिप्रयोगः, एवं दुहादीनामपि प्रायतनदृष्टाविवक्षया गोर्दोग्धीत्यपादानादिप्रयोगश्च । नव्यास्तु "अकथितञ्चे"ति सूत्रभाष्यादेर्वा द्विव्यापारार्थकताऽङ्गीकारे न कोऽपि हानिर्भवेदिति .

बोध्यम्। नैयायिकास्तु सर्व्वेषामेव दुहादीनामेकमेव व्यापारमामनन्ति, तथाहि शब्द-शक्तिप्रकाशे जगदीशः—"फलाऽवच्छिन्नक्रियाहेतुव्यापारवाचित्वादेव हि तेषां द्विकर्म्म-कत्वं दुहधातोर्मोचनाऽनुकूलव्यापारः अर्थः, मोचनञ्च क्षरणाऽवच्छिन्नव्यापारविशेषः, क्षरणं बहिःसंयोगरूपं तदेव फलम्, फलं—क्षरण, मोचनस्य तदवच्छिन्नव्यापाररूपत्वात् मोचनाऽनुकूलव्यापाररूपाऽर्थवाचकस्य दुहधातोः फलाऽवच्छिन्नक्रियाहेतु(मोचनाऽनुकूल) व्यापारवाचित्वमतो द्विकर्म्मकत्वम्; ततश्च दुहधात्वर्थाऽवच्छेदकीभूतं बहिःक्षरणरूपं फलमादाय पयसः, तदवच्छिन्नमोचनमादाय च गोः कर्म्मत्वमवसेयम्, एवमन्यत्राऽपि यथायथं ज्ञेयम्।

इदानीं प्रदर्शितोदाहरणानां शाब्दबोधः प्रदर्श्यते—(१) गां दोग्धि पयो गोपः (गोपः गामाकृष्य पयो मोचयतीति बालसुगमबोधः, अभिरूपबोधस्तु-गोप-कर्तृकव्यापारजन्यो यः पयोनिष्ठबहिःसंयोगाऽनुकूलव्यापारस्तद्वती गौरथवा पयःकर्मताकं यद्गोनिष्ठमोचनं तदनुकूलव्यापारवान् गोपः, एतेनैव पूर्व्वं यत् क्षार्य्यमाणं गोरेवापैतीति गोरपादानत्वप्राप्तौ तस्याऽविवक्षायां कर्म्मत्वमपादानत्वविवक्षायान्तु गोर्दोग्धीति प्रयोगो भवेत्, ननु गां दोग्धि पय इत्यस्य गोः पयःक्षरति गोपो यथा पयस्त्याजयतीत्येव-मर्थः क्रियेत चेत्तदा प्रयोजकव्यापारेणाप्यनागतस्य गोरीप्सिततमकर्म्मत्वसिद्धावकथितत्वेति सूत्रस्याऽऽनर्थक्यम् अत आह भाष्यकारः—"नैतदस्ति यथा ज्वलन्तेषु धातुषु क्रियाविशिष्टः प्रयु-ज्यत इति प्रतीतिः, नैवमिह निष्कृष्यस्याऽपि गवादेर्दोहनादिषु विनियोगात्"। (२) पौरवं गां याचते विप्रः (विप्रः पौरवं गां दातुं प्रेरयतीति बालबोधः, अभिरूपबोधस्तु पौरवनिष्ठं यद्गोदानं तदनुकूलप्रेरणावान् विप्रः, दानाय प्रेरणं याचधात्वर्थः, प्रेरणञ्च प्रवर्त्तनं तच्च दीयतामित्याद्यभिलापरूपम्), ननु याचिभिक्ष्योरेकार्थत्वात् किमर्थमुभयो-रुपादानमित्याशङ्क्याह कैयटः* "उच्यते—चतुरर्थकाऽपि याचिर्द्व्यर्थकम् तेना-

* एकार्थयोरपि याचिभिक्ष्योरुपादानं स्वरूपग्रहणमिति ग्रहणनिरासार्थेनाह भिक्षोर्व्यर्थग्रहणमिति न तु अर्थग्रहणनिरासाय अन्येषामपि अर्थग्रहणं स्यात्। भिक्षं धर्मं वदति, आचष्टे, उपदिशतीत्यादि स्यात् याचेः पुनरर्थान्तरनिवर्त्तनमिति सूचनार्थेति गोपीचन्द्रः।

कर्त्ता स्यात्। चैत्रो ग्रामं गच्छति, गमयति ग्रामं चैत्रं मैत्रः, यापयति चैत्रं ग्रामं, बोधयति शिष्यं धर्मं, वेदयति बटुं वेदम्, भोजयति पुत्रं भक्तम्, आशयति पुत्रं भक्तम्, शब्दार्थानां शब्दाकर्मकक्रियाणां—अध्यापयति बटुं वेदम्, पाठयति पुत्रं सूत्रम्, श्रावयति गीतं रसिकम्, अकर्मकाणां—आसयति मित्रम्, शाययति पतिम्;—एषां किम्? पाचयत्योदनं यज्ञदत्तेन देवदत्तः, अ-न्यादेरिति किम्? नाययति भारं दासेन साधुः, खादयति भक्तं पुत्रेण, ह्वाययति चैत्रेण मैत्रः, शब्दाययति छात्रेण, क्रन्दयति पुत्रेण। यदा तु प्रयोजकं कश्चिदपरः प्रयुङ्क्ते, तदा तस्य कर्मत्वं न भवति—न ह्यसौ गत्यर्थादीनां कर्त्ता किन्तर्हि अन्यस्य—तद्यथा गमयति ग्रामं चैत्रं मैत्रेण देवदत्तः। अथ प्रयोज्यक्रियाव्याप्तेरेव प्रयो-

कर्त्ता कर्म भवति, नी, खादि, अदि, शब्दाय, क्रन्दाम् गत्याहारशब्दार्थानान्तु प्रयोज्यकर्त्तुः कर्मत्वं न भवति, नी शिपश्च हरतेश्च गत्यर्थत्वेन प्राप्तौ निषेधः, खाद्यद्योराहारार्थत्वेन प्राप्तौ निषेधः, शब्दायक्रन्दोः शब्दार्थत्वेन प्राप्तौ निषेधः। अत्र नी,वही भारादेः संयतस्य उपसर्जनीभूतदेशान्तरप्रापणार्थं गत्यर्थत्वमभिमतः। उक्तञ्च हरिणा—"आहारगतिबोधार्थशब्दार्थोऽकर्मकां भवेत्। कर्म प्रयोज्यो नान्यत्राव्दायक्रन्दह्लायवताम्॥" अनियतादीति निषेधः प्रत्ययानिवेशनेन नी,खाद्यादीनां प्रयोज्यस्य कदाचिदपि कर्मत्वं न भवति। एतमिदं नियमार्थमिति "अभेद्यादिना वक्ष्यमाणसन्दर्भेण स्फुटीभविष्यति। सन्ति दुहादिष्वोऽन्ये केचिद्विकल्पा धातवो द्विकर्मकाः, ते हि द्विकर्मोऽभिहितक्रियापाद्युर्वकाः, तत्र व्यापारयोर्मध्ये धातुनैकव्यापारोऽभिधीयते द्वितीयश्च क्रिया, ततश्च. सर्वत्रैव प्रयोजकव्यापारे प्रयोज्यस्य कर्त्तुः प्रयोजकक्रियाव्याप्यत्वात् क्रियाव्याप्यं

नात् प्राणार्थादन्यत्रापि हवेः प्रयोज्यस्य कर्मत्वं भवतीति सूच्यते * । आहारार्थो यथा—भोजयति पुत्रं भक्तम् पुत्रः भक्तं भुङ्क्ते, तं पिताऽपि भोक्तुं प्रेरयति, पुत्रकर्तृकभोजनाऽनुकूलव्यापारवान् पिता । एवम् आशयति वटुम् पुत्रः अश्नाति तं पिता आशयति ओदनम् पूर्ववदेव । आहारो भोजनम्, तेन पुत्रं भक्तं भोजयति, भोजोऽहं भोजयिष्यामि भवतो भुवनत्रयमिति भट्टिः । यथाऽन्नादिभोजनवत् भुवनत्रयभोजनमपि तृप्तिकरमित्यभिप्रायः । शब्दार्थानां शब्दात्मकक्रियाणां शब्दात्मिका क्रिया येषां, पाणिनिना गत्यादिसूत्रे शब्दकर्मेति पदं पठितम् तस्य च भाष्यकारैरेवं व्याख्यानं कृतं, शब्दकर्मेति कथमिदं विज्ञायते शब्दो येषां क्रियेत्याहोस्वित् शब्दो येषां कर्मेति, शब्दकर्मनिर्देशे शब्दक्रियाणामिति चेत् ह्वयत्यादीनां प्रतिषेधः, (ह्वयत्यादयो धातवः शब्दायनाऽर्थं क्रियारूपं शब्दमभिदधतीति अतिप्रसङ्गे सति प्रतिषेधः, ह्वयत्यादयस्तु ह्वे, क्रन्द, शब्दायाः), तथा शृणोत्यादीनामुपसंख्यानञ्च, (शृणोत्यादयो हि शब्दोपलब्धिरूपेऽर्थे वर्तमानाः शब्दक्रियाः (शब्दात्मकक्रियाः) न भवन्ति, किन्तु शब्दकर्मकक्रियाः, अतश्चाऽप्राप्तौ पूर्वप्रयोजदर्शनाद्योपसंख्यानं कृतम्), शृणोत्यादयः शृणोति, जानाति, उपलभते, प्रयोगास्तु शृणोति देवदत्तः, श्रावयति देवदत्तं, विजानाति देवदत्तः, विज्ञापयति देवदत्तं, उपलभते देवदत्तः, उपलम्भयति देवदत्तम् । अत्र कैयटः—"न चैषां बुद्ध्यर्थत्वात् शृणोत्यादयो हि न ज्ञानसामान्यवचनाः, बुद्ध्यर्थास्तु ज्ञानानुपलब्धेरित्येते शब्दोपलब्धिवाचनौ तथाऽपि प्रयोजकव्यापारविवक्षायां गत्यादिसूत्रादन्यत्र शब्दविषयायामेवोपलब्धिं प्रत्याययतस्तस्यैवोपसंख्यानं कर्तव्यम्, वस्तुतस्तु बुद्ध्यर्थत्वादेवमी: सिध्यतीति विभाव्यमेतत्" —अत्र पुनर्भाष्यकारः—अस्तु तर्हि शब्दो येषां कर्मेति शब्दकर्मेव इति चेत् जल्पतिप्रभृतीनामुपसंख्यानं कर्तव्यम् जल्पत्यादयः शब्दनक्रियायां (शब्दात्मकक्रियायां वर्तन्ते) इति क्रियापक्षे सिध्यति न तु कर्मपक्षे इत्यतस्तेषामुपसंख्यानं जल्पत्यादयस्तु जल्पति, विलपति, आभाषते ; देवदत्तः जल्पति, जल्पयति देवदत्तम्, विलपति देवदत्तः, विलापयति देवदत्तं, आभाषते देवदत्तः, आभाषयति देवदत्तम् । अतएव शब्दा-

* क्षुधेत्यादि (७।१।२१) वार्त्तिकयोः पृथक्पठनात् प्राणार्थस्य ग्रहणे, न ] इत्यार्थस्य ग्रहणमिति श्रीपतिः, पाठकास्तैवमाहुरिति भिक्षुः ।

## ५। वहः सनियन्तृकः। [वहेः ६।, स-नियन्तृकः १।] (१)

वहेः सनियन्तृकः प्रयोज्यः कर्त्ता कर्म्म भवति। वाहयति यवान् वृषभान्; सनियन्तृक इति किम्? वाहयति भारं दासेन साधुः।

## ६। भक्षेर्हिंसायाम्। [भक्षेः ६।, हिंसायाम् ७।] (२)

हिंसायां भक्षेः प्रयोज्यः कर्त्ता कर्म्म भवति। भक्षयति शस्यं वृषभान् रक्षकः; हिंसायामिति किम्? भक्षयति पिण्डं पुत्रेण माता।

---

(१) नियन्ता सारथिरिति कैयटः, नियन्ता पशुप्रेरकमात्रं न सारथिरेवेति सिद्धान्तकौमुदीटीका, तेन वाहयति बलीवर्दान् यवानिति प्रयोगः, नियन्ता यत्र वर्त्तते इति सनियन्तृकः नियन्तोर्नेतावित्ति मत्वर्थकस्यैव वहेर्ग्रहणं, वहति यः परितः कनककशो-रिव भारवाही वहत्यतुः। स्वपर्दप्रमाणात् स्वयं वोढुं सक्षमाणैव वाहयिता नियन्तेति पद्मनाभपञ्जिका तेन वाहयति भारं दासेनेत्यत्र यदि दासोऽपि स्वयं भारं वोढुमक्षमः स्यात् कमपि चालकमपेक्षेत तदा वाहयति भारं दासमित्यपि प्रयोगः स्यात्।

(२) हिंसा नाम जीवविघातः, बीजादीनामपि जीवयोगः श्रूयते, तथाहि अन्तः संज्ञा भवन्त्येते सुखदुःखसमन्विता इति मनुः, सर्वे भावचेतनावन्त इति जिनमतदर्शन-मपि, अतएव कैयटः चैतन्यानां शरीरावयवानां यवानां भक्षणाद्धिंसा भवति, अवयवानां किञ्चिच्चैतन्याभ्युपगमात्, परकीयशस्यभक्षणे वा परो हिंसितो भवति। भाष्यकारेण कर्म्मणि प्राप्तं नियमोऽयम् यत्र भोजने हिंसाऽवयवसम्बन्धेऽस्त्यत्र विधिरिति नियमः। कैयट-स्तु हेतुमणिचो विधानात्, पुरिस्मासोऽप्यवयवकल्पत्वेऽन्यमानो विधिरिति।

## ७। हृक्रञ्लभा वा।

[हृ, क्रञ् (क्र), लभाम् ६॥, वा ०१।] (१)

एषामाहारा,ऽकर्म्म,गत्यर्थकत्वे प्रयोज्यः कर्त्ता कर्म्म भवति वा। हारयति भारं दासं देवदत्तः, दासेन वा, अभ्यवहारयति पिण्डं पुत्रं माता, पुत्रेण वा। कारयति कटं भृत्यं भृत्येन वा; विकारयति कामुकं वेश्या कामुकेन वा। पद्मानि विकाशं लम्भयति भानुः पद्मैर्वा।

## ८। दृश्यभिवाद्योरात्मनेपदे। (२)

[दृश्यभिवाद्योः (दृशि, अभि+वादि) ६॥, आत्मनेपदे ७।]

अनयोस्तङि प्रयोज्यः कर्त्ता कर्म्म वा स्यात्। दर्शयते नृपं भृत्यान् भृत्यैर्वा, अभिवादयते गुरुं पुत्रं पुत्रेण वा; तङि नियमादन्यत्र दृशेर्बुद्ध्यर्थत्वान्नित्यं कर्म्मत्वमिति जिनेन्द्रबुद्धिपादाः।—दर्शयति भृत्यं राजानं; नेह अभिवादयति गुरुं पुत्रेण।

(१) अभ्यवपूर्व्वस्य हरतेर्भक्षणार्थतया, विकारार्थकरोतेश्चाकर्म्मकतया च प्राप्ते, यदा हरति· कृञादौ करोतेश्च सकर्म्मकता तदा चाप्राप्ते, उभयत्र विभाषा, प्राप्ते नित्य-विधानं निषिध्य विकल्पविधिरप्राप्ते च विकल्पेनैव विधानमित्यर्थः। [illegible] कृतम्।

(२) दृशेर्बुद्ध्यर्थत्वात् प्राप्ते विभाषा, अभिवादेरप्राप्ते विभाषेति [illegible], अभिवादि दृशोरात्मनेपदे वेति वार्त्तिकम्। अभिवादयतावप्राप्ते कर्म्मसंज्ञा पक्षे विधी-

## ९। साधकतमं करणम्।

[साधकतमं १।, करणम् १। ] (१)

**क्रियासिद्धौ यत्प्रकृष्टमुपकरणं तत्साधकतमं करणसंज्ञं भवति। दात्रेण धान्यं लुनाति, अश्वेन याति।**

यते, दृशेर्बुद्ध्यर्थत्वान्नित्यम् प्राप्तौ पक्षे निवर्त्त्यते इति कैयटः। हृक्रोरिति वार्त्तिकमुपाश्रित्य सिद्धान्तकौमुदीकारेणैवं व्याख्यातम् सूत्रे गतिसामान्यार्थानामेव ग्रहणमतु तद्विशेषार्थानामित्यनेन ज्ञाप्यते, तेन चरति क्षिपतीत्यादीन् चारयति, घ्रापयति देवदत्तेन।

वृत्तिकारेण "जल्पतिप्रभृतीनामपि उपसंख्यानं" कृतम् तत्र सुबोधिन्यामेवं समर्थितम् न च जल्पभाषत्योः शब्दक्रियत्वेन गतिबुध्यतीति सूत्रेणैव सिद्धे उपसंख्यानमिदं व्यर्थमिति भणितव्यम् शब्दकर्म्मकाणामित्यस्य शब्दः कर्म्म कारकं येषामित्यर्थत्वात्, जल्पादयस्तु ता एव।

(१) साधयति क्रियां निर्व्वाहयति सम्पादयति वा साधकं अतिशयेन साधकतमं करणं नाम कारकम्। यथाह भाष्यकारः—तमपग्रहणं किमर्थम्? न साधकं करणमित्येवोच्येत; साधकं करणमितीयत्युच्यमाने सर्व्वेषामेव कारकाणाम् करणसंज्ञा प्रसज्येत सर्व्वाणि हि कारकाणि साधकानि, तमपग्रहणे पुनः क्रियमाणे न दोषो भवति: धनुषा विध्यतीत्यत्राऽपायस्याऽपादानं साधकत्वाच्च करणसंज्ञा प्राप्नोति तमपग्रहणे पुनः क्रियमाणे न दोषो भवति, पर्य्यवसाने तु भाष्यकारेण तमपग्रहणस्य वैयर्थ्यं प्रतिपादितम्, यथाहि "कारकसंज्ञायां तरतमयोगो न भवती' ति* तस्याऽभिप्रायस्तु साधकं करण-

* अत्र सूत्रे तमप्प्रत्ययो न किन्तु तदन्तकारकतमशब्द एव। तादृश-तमश्रुतिर्वै-तमप्प्रापयति प्रकर्षप्रत्ययस्य चमत्कारेणैव प्रकरणे सामर्थ्य-गम्यः प्रकर्षो नाश्रीयते। तेनि-तीऽप्यत्र च प्रकर्षकः, कल्पितापायेऽप्यपादानं भवति, एकदेशमात्राऽधिकरणेऽप्याधारो भवतीति।

## १० । दिवः कर्म च । [दिव. ६। कर्म १।, च ०।।]

मित्यंतावतैव साधकतमस्य प्राप्तिर्भवति यथाऽभिरूपाय कन्या देया इत्यनेनाऽनभिरूपाय न प्रवर्तयन्ति किन्तु तथाऽभिरूपतमायेति गम्यते तथाऽत्रैव न चाऽन्येषां कारकाणां करणसंज्ञा प्रसक्तिरन्येषां कारकाणां हि विषयभेदेन विशेषविशेषसंज्ञाश्रयणात् कासांचि(कारक-संज्ञाः) चाऽपवादत्वात् कासांच निरवकाशत्वादबाधिता भविष्यन्ति । अन्ये तु क्रियाया बहु-साध्यत्वात्तत्र साधकेषु सर्वेष्वप्रकृष्टस्यैव ग्रहणाय तमबग्रहणमित्याहुस्तदेव विवृणोति क्रिया-सिद्धाविति, अयमर्थः, क्रियायाः सिद्धिः क्रियासिद्धिः, तद्विषये प्रकृष्टमतिशयितं उपकारकं साधनं तत्करणं स्यादिति भावः । प्रकृष्टत्वं नाम स्वव्यापाराव्यवधानेन फलोत्पादकत्वम् तथाच कैयटः, यद्व्यापारानन्तरं क्रियाप्रसिद्धिरिति, यदि च क्रियायाः परिनिष्पत्तिर्यद्व्या-पारादनन्तरं विवक्ष्यते तदा तत्र करणत्वं तदाश्रितमित्याह 'विवक्ष्यते' इत्यनेन तादृशं करणत्वं प्रयोक्तुर्विवक्षाधीनमिति सूचितम् नाऽस्ति किमपि नियतं करणं प्रयोक्ता यत्कर-णत्वेनाऽभिप्रैति तस्यैव करणसंज्ञा भवतीति भावः, तदप्युक्तं हरिणा "वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम्. स्थाल्या पच्यत इत्येष प्रयोगो दृश्यते यतः" । अत्राधारस्यापि स्थाल्या विवक्षया करणत्वमिति । एवं हि योऽव्यवहितः क्रियां निष्पादयति तत्करणं यो हि तद्(करण)व्यवहितस्तां क्रियां निष्पादयति स कर्ता इति कर्तृकरणयोर्भेदः । ननु कर्तुः करणव्यवहितक्रियासम्पादने करणस्यैव प्राधान्ये न कर्तुरिति चेत् सत्यम् कर्त्रधीनत्वात् करणस्याऽप्राधान्यं कर्तुः स्वाधीनत्वात् धातूपात्तत्वाच्च प्राधान्यम्, तथाचोक्तम् "करणं नाम सर्वत्र कर्तृव्यापारगोचरः । तिरोदधाति कर्तारं प्राधान्यं तद्विवक्षणमिति । करणत्वं नामाऽव्यवहितक्रियाजनकविवक्षितव्यापारवत्त्वमिति मन्दावबोधनम् । शास्त्रसर्वस्वे साधकतमस्यैवं लक्षणं कृतम्—कारकान्तरासहकृतत्वे सति फलहेतुत्वम्, फलञ्च धात्वर्थावच्छेदकम् । कारकोल्लासे करणलक्षणं यथा—क्रिया-ऽभिसाध्यते कर्त्रा यदाश्रित्य वदन्ति तत् । करणं, तद्द्विधा बाह्यमभ्यन्तरमपि स्मृतम् ॥ शरीरावयवादन्यद्यत्तद्बाह्यमपि स्मृतम् । शरीरसमवेतं यत् तदभ्यन्तरमुच्यते ।

दिवः साधकतमं कर्म्म वा स्यात्। अक्षान् दीव्यति, अक्षैर्वा। (१)

## ११। परिक्रये वा सम्प्रदानम्।

[परिक्रये ७।, वा ०।।, सम्प्रदानम् १।।] (१)

परिक्रयो नात्यन्तिकः क्रयस्तेन वेतनादिनाऽनियतकालस्वीकारे साधकतमं सम्प्रदानसंज्ञं भवति। शताय परिक्रीतोऽनुब्रूहि शतेन वा।

---

(१) दिव इति उभयसंज्ञासमावेशः, तेन दिवः साधकतमस्य शक्तिद्वययोगो बोध्यते, तेन अक्षैर्देवयत इत्यादौ तृतीयापरत्वेऽपि सकर्म्मकत्वात् अकर्म्मप्रयुक्तपरस्मैपदाभावः, तृतीययैव शक्तिद्वयबोधनेन अकर्म्मकत्वाभावात्। अव्ययानामनेकार्थत्वाद्वाशब्दो यौगपद्यार्थः, तेन दीव्यतेः साधकतमं करणं कर्म्म चेति युगपदुभयसंज्ञा सिद्ध्यति। कारकविभक्तिस्तु पर्य्यायेणैव स्यात् युगपदुभयासम्भवात्। तेन अक्षा दीव्यन्त इति कर्म्मण्येव प्रयोगः स्यान्न त्वक्षैर्दीव्यत इति भावे करणत्वेऽपि धातोः सकर्म्मकत्वात्, अक्षा द्यूता इति कर्म्मण्येव क्तः स्यात् न त्वक्षैर्द्यूत इति कर्त्तरि, अक्षाणां देवक इति कर्म्मयोगषष्ठी च नित्यम् स्यात्, तेन अक्षैर्देवक इति न स्यादेव। तथा अक्षैर्देवयति छात्रेण इति दिवः सकर्म्मकत्वात् प्रयोज्यकर्त्तुः कर्म्मता न स्यात्। क्रीडार्थेनाऽकर्म्मकत्वे करणाऽवस्थायामेव कर्म्मसमावेशार्थमिति चान्द्राः।

(२) क्रयो हि विनिमयः परिशब्देन तस्य कालविशेषाऽवधिकत्वं द्योत्यते स तु वेतनादिना सम्भवति तदेव स्पष्टीकरोति वेतनादिनेति, कौमुदीकारस्तु नियतकालभृत्यास्वीकरणं परिक्रयणमित्याह। वेतनादीत्यादिशब्दात् "सम्भोगाय परिक्रीतः कर्त्तास्मि तव नाप्रियं" इति भट्टिः। करणं प्राप्ते सम्प्रदानमिति सुपद्मपञ्जिका।

## १२। प्रदानाभिसम्बुध्यमानं सम्प्रदानम्। (१)

[प्रदानाभिसम्बुध्यमानं (प्रदान अभि सम्बुध्यमान) १।, सम्प्रदानम् १।].

प्रदानमात्यन्तिकं दानं तेन यदभिसम्बध्यते, तत्कारकं सम्प्रदानसंज्ञम्भवति। विप्राय गां ददाति, गुरवे धनं निर्या-

---

'(१) दीयते यत् तत् दानं, दाधातोः कर्म्मणि ल्युटः, प्रकृष्टं दानं प्रदानं प्रशब्दार्थं व्याचष्टे आत्यन्तिकमिति, यस्य पुनरादानं नास्तीति यावत् तत्प्रदानं तेन (प्रदानेन) यदभिसम्बध्यते, तत्प्रदानं यत्सम्बन्धि क्रियते तत्कारकं सम्प्रदानसंज्ञम्भवति। दानन्तु स्वस्वत्वध्वंसपूर्व्वकपरस्वत्वस्योत्पादनं, ननु "स्वस्वत्वे विद्यमानेऽपि परस्वत्वं न विद्यते। परित्यज्य च दानञ्चेदौदासीन्यान्न सिध्यति" यावत् स्व-स्वत्वं विद्यते तावत् परस्वत्वोत्पत्तिरेव न स्वस्वत्वपरित्यागादनन्तरं परित्यक्ते वस्तुनि स्वत्वाऽभावात् परस्वत्वोत्पादनं न घटते, तदुक्तप्रकारं दानमेव न सम्भवतीति चेदुच्यते स्वस्वत्वध्वंसोपक्रम एव परस्वत्वोत्पादन-पर्य्यवसानं तेन स्वस्वत्वं परित्यजन् परस्वत्वमारोपयति इति ददात्यर्थोऽधिगम्यते। सम्प्र-दानलक्षणञ्च —सम्प्रदानं तदेव स्यात् पूजाऽनुग्रहकाम्यया, दीयमानेन संयोगात् स्वामित्वं लभते यदीति। सम्प्रदानस्य व्युत्पत्त्यर्थन्तु सम्यक् प्रकर्षेण दीयते यस्मै, तेन रजकाय वस्त्रं ददातीत्यत्र पूजाऽनुग्रहकाम्यानामेकतराभावात् न प्रकर्षदानम्। तच्च सम्प्रदानं त्रिवि-धम् प्रेरक,मनुमन्तृक,मनिराकर्तृकञ्चेति, तदुक्तं त्यागादिकर्म्मणा व्याप्तं प्रेरकञ्चाऽनु-मन्तृकम्, अनिराकर्तृकञ्चेति सम्प्रदानं त्रिधा मतम्। यत् देहीत्युक्त्वा दातारं प्रेरयति तत्-प्रेरकं, यथा विप्राय गां ददाति, यस्तुभ्यं ददामीत्युक्तो मह्यं देहीत्यनुमन्यते तदनुमन्तृ, यथा गुरवे धनं निर्यातयति, गुरुः नाऽनुमन्यते, नाऽपि प्रेरयति, न निराकरोति,अपि तु तूष्णीमास्ते तदनिराकर्तृ, यथा भवते भयं ददाति, ननु भये दातुर्यथेष्टविनियोगार्हत्व-लक्षणस्वत्वाभावात् तथैवमित्यादातुः स्वीकाराऽभावाच्च स्वस्वत्वध्वंसपूर्व्वकपरस्वत्वारोपण-दानलक्षणयोगात् कथं सम्प्रदानत्वम् चेदुच्यते अविच्छिन्नभावस्य द्रव्यत्वाङ्गीकारात् गौण-मेव सम्प्रदानम्, एवञ्च मयापि दत्त सीतायै सर्व्वा यूयं अलं मम इति भद्रो। एवं

रुच्यर्थधातुभिर्योगे, रुचिमान् योऽर्थः स सम्प्रदानं भवति । पोताय रोचते मोदकः, पोताय स्वदते मोदकः ।

## ३४ । श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ।

[श्लाघ, ह्नुङ्, स्था, शपाम् ६।३, ज्ञीप्स्यमानः १।१] (१)

एषां प्रयोगे बोधयितुमिष्टो यः, स सम्प्रदानं भवति । नृपाय श्लाघते बन्दी, पुत्रायाऽपह्नुते वणिक्, कान्ताय तिष्ठते कन्या, प्रियायै शपते पतिः ।

लोभित्वात् न तु दीप्त्यर्थस्य, न हि दीप्तिमान् स्वयमेव रोचते । रुचिर्विद्यतेऽस्येति रुचिमान्, रुच्यर्थानां धातूनां योगे रुचिमानभिलाषुकः, प्रीयमाण इति यावत् सम्प्रदानसंज्ञं स्यात् । प्रीत्यनुकूलव्यापारो रुच्यर्थः । अभिलष्यतेस्तु प्रीतिव्यभिचारव्यापारबोधकतया न रुच्यर्थत्वमिति न तत्र सम्प्रदानत्वम् । एवञ्च कर्मसंज्ञाप्राप्तौ अनेन तस्या बाधः । यदुक्तं हरिणा—

हेतुत्वे कर्मसंज्ञायां शेषत्वे वाऽपि कारके ।
रुच्यर्थादिषु शास्त्रेण सम्प्रदानत्वमुच्यते ॥

(१) ज्ञीप्स्यमानः, बोधयितुमिष्यमाणः, यो हि बोध्यते श्लाघया, अपह्नुत्या, स्थित्या, शपथेन च स एवेत्यर्थः, मारण-तोषण-निशामनेषु ज्ञा इति घटादिपठितः निशामनार्थः ज्ञाधातोः सनीमन्ते णिच् ततः सन् आप्ज्ञप्यृधामीत् (७।४।५५) इति प्रकृतेरीत ईत्, अभ्यासलोपश्च ततः कर्मणि शानः ज्ञापयितुमिष्यमाण इत्यर्थः । श्लाघधातुर्भ्वादिरात्मनेपदी अस्यार्थस्तु बोधविषय-गुणवत्त्वप्रातिपदिकशब्दप्रयोगः, ह्नुङ्धातुरदादिः, ङित्वादात्मनेपदी, अस्यार्थस्तु बोधविषय इतरादर्शनयोग्यदेशस्थापनम्, स्थाधातुर्भ्वादिः प्रकाशनस्थेयाख्ययोश्चेति (१।३।२३) तङ्, अस्यार्थस्तु स्वाभिप्रायबोधनानुकूल-

# १५ । स्पृहिधार्य्योरभीष्टधनिकौ ।

[स्पृहि-धार्य्यो. ६॥, अभीष्टधनिकौ १॥] (१)

---

स्थिति:, अत्र साहचर्य्यात् शपतिरिति भौवादिक एव गृह्यते शप: शपथे (२।१।६१) इति तङ्, अस्यार्थस्तु स्वाभिप्रायबोधनाऽनुकूलशपथकरणम्, नृपाय श्लाघते नृपं बोधयितुं गुणवत्त्वेन स्तौतीत्यर्थ:, वणिक् पुत्रं बोधयितुम् इतरदर्शनायोग्यस्थाने धनानि स्थापयतीत्यर्थ:, कन्या कान्तं बोधयितुं स्वाभिप्रायं प्रकाशत इत्यर्थ:, एवं पति: प्रिया बोधयितुं शपथं करोतीत्यर्थ:, कर्म्मनिवृत्त्यर्थोऽयं योग इति भाव: ।

(१) अभीष्ट: अभीप्सित:, धनिक: उत्तमर्ण: धनप्रयोक्ता इत्यर्थ:, स्पृह स्पृहायां चुरादिरदन्त:, धृङ् अवस्थाने तुदादि: भ्रियमाणं प्रयुङ्क्ते णिचि धारयति, स्वरूपेऽवस्थापयति इति काशिका, ततश्च अवस्थित्यनुकूलव्यापारो धारेरर्थ:, इच्छामात्रं स्पृहा तद्विषय: अभीप्सित: सम्प्रदानं भवति, धनाय स्पृहयति देवदत्त: देवदत्तनिष्ठेच्छाविषयो धनम् इति बोध:, ईप्सित: किम् ? पुष्पेभ्य: स्पृहयति वने अत्र पुष्पाण्यीप्सितानि न वनम्। ईप्सितमात्रे सम्प्रदानसंज्ञा, प्रकर्ष (ईप्सिततम) विवक्षायान्तु परत्वात् (तत्र कर्म्मण: सम्प्रदानस्य पश्चान्निर्द्देशात्) कर्म्मसंज्ञैवेति सिद्धान्तकौमुदी, पुष्पाणि स्पृहयति स्पृहणीया विभूतय:, स्पृहणीयगुणैर्महात्मभिरित्याद्युदाहरणानि, एवञ्च शेषत्वविवक्षायां तु कुमार्य्य इव कान्तस्य एष्यन्ति स्पृहयन्ति चेत्यत्र षष्ठ्यपीति हरदत्तादय:, वाक्यपदीय-हेलाराजीय-ग्रन्थयोस्तु स्पृहयतियोगे कर्म्मसंज्ञाया: शेषत्वषष्ठ्याश्च बाधिकेयं सम्प्रदानसंज्ञा, ततश्च वाक्यपदीयोदितग्रन्थानुरोधेन परस्परेण स्पृहणीयशोभमित्यादौ दानीयो विप्र इति यद्वाकुलकामसम्प्रदाने अनीय इति व्याख्येयम्, कुमार्य्य इव कान्तस्येत्यत्र तु एष्यतीत्येतदर्थतया सन्तार्थस्य कान्तस्येति षष्ठ्यन्तस्य विभक्तिविपरिणामेन कान्तां स्पृहयन्तीति व्याख्येयमिति केचित् ? मिश्रस्तु विवक्षैव शरणमित्याह ऋणम् अवश्यदेयं, उत्तमम् उद्देश्यत्वेन देयं ऋणं यस्येत्युत्पत्त्याऽवस्थितद्रव्यदातोद्देश्य उत्तमर्ण:, अतएव भक्ताय धारयति मोक्षं हरिरित्यत्र मोक्षस्य अवश्यदेयत्वेन ऋणत्वमत्र विवक्षितमिति भक्तस्य सम्प्रदानत्वं, गुरवे गां धारयते इत्यत्र जगदीशेनैवं व्याख्या कृता, अत्र धृता अवस्थितिविशेषता तदन्वितं कर्तृत्वं चतुर्थ्या च तन्निरिष्टरुद्धान्वितं सम्बन्धित्वमुपस्थाप्यते तेन गौ

स्पृहेः प्रयोगे ईप्सितो योऽर्थः, धारेश्च य उत्तमर्णः, स सम्प्रदानम्भवति।

## १६। क्रुधद्रुहेर्ष्यासूयार्थैः कोपस्थानम्।

[क्रुध, द्रुहेर्ष्या (द्रुह, ईर्ष्या),—असूया-ऽर्थैः ३।३, कोप-स्थानम् १।१] (१)

क्रोधोऽमर्षः, द्रोहोऽपकारः, ईर्ष्या=अक्षमा, असूया

कर्तृकाया गुरुसम्बन्धिरक्षाऽवस्थितेरनुकूलव्यापारवानित्याकारकस्तत्र बोधः धातूत्तरणिचा व्यापारवदिति कालापाः, पाणिनीयास्तु केचित् धारेरुत्तमर्ण इति सूत्रानुसारेण चैत्राय शतं धारयते इत्यादाविव गुरवे गां धारयते इत्यादावपि ऋणग्रहणं धारणं, दत्तत्वञ्च चतुर्थ्यर्थः, तथाच गुरुदत्तां गां ऋणत्वेन गृह्णातीत्याकारकस्तत्र वाक्यार्थः, पश्चाच्चोऽयत्वेनाङ्गीकृत्य गृहीतञ्च द्रव्यमृणमित्याहुः, नास्माभिः पाणिनीयसम्प्रदायिका ग्रन्था यद्यपि सम्यगधीतास्तथापि बोधं ध्यायते, तथाप्युक्तिरियं महामहोपाध्यायपाणिनीयधुरन्धरभट्टोजिदीक्षितस्य विरुद्धेव प्रतिभाति, यदि पश्चाच्चोऽयत्वेनाङ्गीकृत्य गृहीतं द्रव्यमृणं स्यात् तदा "भक्ताय धारयति मोक्षं हरि"रिति भट्टोजिदीक्षितस्योदाहरणमसङ्गतं स्यात् मोक्षो न द्रव्यं नाऽपि पश्चाच्चोऽयत्वेनाङ्गीकृत्य पूर्वं भक्तादगृहीतः, ऋणत्वावच्छेदकरूपेऽप्रदर्शितेऽर्थे तु न कुत्राप्यन्वेति, धारयन्निव चैतस्मै वासांसि प्रतिपद्यत इति भट्टिः भक्त मोक्षं ध्रियमाणं करोति इति प्रयोज्यकर्तरि भक्ते तृतीयाबाधनार्थमिदं सम्प्रदानसंज्ञावचनमिति हरदत्तादयः, मनोरमायान्तु षष्ठ्यां प्राप्तायामिदं वचनं क्लिष्टमिति दिक्। उत्तमर्ण इति किं—देवदत्ताय शतं धारयति ग्रामे।

(१) क्रुध् कोपेऽकर्मकः, कोपश्च वध्याद्यनुकूलचित्तवृत्तिविशेषः, तदर्थे चकारपाठकोऽयं विधिः ; द्रुह जिघांसायां, सा च दुःखजनकक्रियारूपाऽपकाररूपचित्तवृत्तिविशेषः ; उत्कर्षविरोधिकर्मारोपाऽनुकूलचित्तवृत्तिविशेष ईर्ष्यतेरर्थः, असूयतिश्च कण्ड्वादियगन्तः (३।१।२७) तदर्थश्च चाचारादिगुणविषये दम्भकृतत्वाद्यारोपाऽनुकूलचित्तवृत्तिविशेषः, कैयटमते क्रोधो रोषः, द्रोहोऽभिचारः, ईर्ष्या परगुणासहनम्, असूया परगुणविध्वं-

—गुणेऽपि दोषाविष्कारः,—क्रोधाद्यर्थैर्योगे कोपस्थानं सम्प्रदानम्भवति। पुत्राय क्रुध्यति, नृपाय द्रुह्यति, सपत्न्यै ईर्ष्यति, मैत्राय असूयति; कोपस्थानमिति किम्? भार्य्यामीर्ष्यति एनामन्यो मा द्राक्षीदिति।

---

सन्नित्याह एषामर्थ इव अर्थो येषां धातूनां ते तैः, एषां योगे कर्म्मोऽपवादकोऽयं विधिः, कोपस्थानं यं प्रति कोपः धात्वर्थमूलीभूतस्य कोपस्य च विषय इत्यर्थः, ननु क्रुधादीनां परस्परं भिन्नार्थत्वात् कथं सर्व्वत्र कोपस्थानसम्भव इति चेत् सत्यम्, अतएवात्र भाष्यकारः, कुपौ त्वेषां सामान्यमस्ति, न ह्यकुपितः क्रुध्यति, न वाऽकुपितो द्रुह्यति, न वाऽकुपित ईर्ष्यति, न वाऽकुपितोऽसूयतीत्याह, कोपपूर्व्वकाणामेव सर्व्वेषां ग्रहणार्थं यं प्रति कोप इति कैयटः, उदाहरति पुत्राय क्रुध्यति, अत्र विषयित्वलक्षणं सम्प्रदानं चतुर्थ्यर्थो बोधः पुत्रविषयकक्रोधवानिति बोधः, पुत्रे कोपो न युज्यते इत्यादौ क्रुदन्तस्य कोपपदस्यार्थे पुत्र इत्यस्याऽन्वयो न तु धात्वर्थे, एवमन्यत्र, मित्रं द्रुह्यति, शिष्यमीर्ष्यति, पुत्रमसूयतीत्यप्रयोगात् द्रुहादिकर्म्मणः सम्प्रदानत्ववैकल्पिकमित्युन्नीयत इति जगदीशः, कैयटस्तु एषां कोपपूर्व्वकाणां सम्प्रदानत्वविधानात् यत्र न कोपपूर्व्वकत्वं तत्र न भवतीत्याह यथा भार्य्यामीर्ष्यति, परैर्दृश्यमानां न सहते इत्यभिप्रायः, इति नास्ति कोपप्रभवत्वमिहेर्ष्यायाः॰; श्रीपतिस्तु कोपस्थानेऽनाप्ये इति सूत्रयन् अव्याप्यविषय एव कृतवान्, व्याप्यविषये तु द्वितीयामेव। ननु चित्तदोषार्थानामित्येतावतु किं क्रोधादीनां विशिष्योपादानेनेति चेदुच्यते चित्तदोषातिप्रसङ्गवारणाय विशिष्योपादानं तेन कोऽस्मान् द्वेष्टि, सत्र वयं द्विष इत्यत्र चतुर्थी न भवति, द्विविधं क्रोधार्थः किम्वन्निमण्डनार्थौ यथा चौषधं द्वेष्टि। ननु कोपपूर्व्वकाणां सम्प्रदानत्वे कथं कुप्यसि कस्मैचिदित्यत्र चतुर्थी न हि कोपस्य कोपपूर्व्वकत्वमिति चेदुच्यते कोपस्तावद्विविधः प्रथमोऽनद्भूतावस्थः मनोमात्राऽवस्थितः, द्वितीयश्चोद्भूतावस्थो वाक्कायव्यापाराऽनुमीयमानः, अनोद्भूतावस्थस्यैव कोपस्य प्रयोगः तस्य चाऽनुभूतकोपपूर्व्वकत्वमस्त्येव, अन्यैस्तु कुपिरत्र दृष्टार्थ इत्याहुः।

## ३७। क्रुधद्रुहोः प्राद्दः कर्म्म।

[क्रुध, द्रुहो: ६॥, प्राद्दः ५।, कर्म्म ०१।] (१)

प्रादिपूर्व्वयोः क्रुधद्रुहोः प्रयोगे कोपस्थानं कर्म्म भवति। चैत्रं संक्रुध्यति, मैत्रं संद्रुह्यति।

## ३८। राधीक्ष्योर्यस्य विप्रश्नः।

• [राधीक्ष्योः (राधि, ईक्ष) ६॥, यस्य ६।, विप्रश्नः १।] (२)

राधेरीक्षेश्च प्रयोगे यस्य विविधः प्रश्नः स सम्प्रदान-म्भवति। पुत्राय राध्यति, विप्राय ईक्षते, नैमित्तिकः विविध-प्रश्नेन तस्य दैवं पर्य्यालोचयतीत्यर्थः।

---

(१) इह प्रादिपदेनोपसर्गोऽभिमतः, अत क्रुधद्रुहौ नाऽर्थेपरौ तेन छात्राय प्रक्रुध्यति, छात्राय द्रुह्यतीत्यादौ न कर्म्मत्वं, किन्तु शिष्यस्याभिक्रोश, मैत्रस्याभिद्रोह इत्यादौ प्रयोगे कर्म्मणि षष्ठ्येव स्यात्।

(२) इह धातूनामनेकार्थत्वात् प्रश्नपूर्व्वकपर्य्यालोचनार्थाविमौ धातू, अत्र कर-चरणरेखाग्रहगत्यादिसूचितप्राचीनकर्म्मविपाकजनितफलं दैवं, तस्य विरूपणं विप्रश्नः, नोपतिरप्याह शुभाशुभं वा दैवं तस्य निरूपणं विप्रश्नः, तथाच काशिका नैमित्तिकः पृष्टः सन् तस्य दैवं पर्य्यालोचयतीत्याह, हरिदत्तस्तु किमयमाचरति का कीदृशी किमे-तत्र वेत्याकारपर्य्यालोचनाऽपि विप्रश्न इत्याह, तथाहि "ईक्षितव्यं परस्त्रीभ्यः स्वधर्म्मो रक्षणानव" इति भट्टिः, राध संसिद्धौ, ईक्ष दर्शने, अनयोश्चेह शुभाऽशुभपर्य्यालो-चनमर्थस्तत्र प्रश्नपूर्व्वकमिति धात्वर्थेनोपसंग्रहादकर्म्मकावेतौ ततश्च षष्ठ्यां प्राप्तायां वचन-मिदमिति तत्त्वबोधिनी, तादृशशुभाशुभसम्बन्धिन एव सम्प्रदानत्वम्। विप्रश्न इति किम् विप्रस्याराध्यतीक्षते।

## १९। अनुप्रतिगृणाङ्प्रतिशुवोः पूर्व्वस्य कर्त्ता। (१)

[अनु—शुवोः (अनु,-प्रति-गृ, आङ्,-प्रति-श्रु) ६॥, पूर्व्वस्य ६।, कर्त्ता १। ।]

अनु,प्रति-पूर्व्वस्य गृणातेः, आङ्,प्रति-पूर्वस्य शुवस्य प्रयोगे पूर्वक्रियायाः कर्त्ता सम्प्रदानम्भवति। होत्रे अनु-गृणाति, पोत्रे प्रतिगृणाति तं प्रथमं शंसन्तं कोऽपि जनः प्रोत्साहयति, विप्राय गामाशृणोति, विप्राय गां प्रतिशृणोति विप्रेण याच्यमानोऽङ्गीकरोत्यर्थः।

(१) अनुश्च प्रतिश्च अनुप्रती, तत्पूर्व्वो गृणातिः मध्यपदलोपी समासः, प्रतिश्-लोपश्छान्दसः एकदेशाऽनुकरणमित्येके, एवं आङ् च प्रतिश्च आङ्प्रती तत्पूर्व्वः शुवः पूर्व्वस्य धात्वर्थघटकविशेषणव्यापारस्य प्रवर्त्तनायाः कर्त्ता सम्प्रदानं भवति, होत्रेऽनु हर्षाऽनुकूलव्यापारलक्षणं प्रोत्साहनं गृणातेरर्थस्तदेकदेशे च हर्षे होत्रादेरन्वयः, होतृनिष्ठ हर्षाऽनुकूलव्यापारवानित्याकारकश्च बोधः, एवं देयत्वेनाऽभ्युपगमः शृणोतेरर्थस्तत्र गोर्विशेष्यत्वेन तदेकदेशे च दाने विप्रस्योद्देश्यत्वेनाऽन्[illegible]त्वेन विप्रोद्देश्यकदानकर्म्मत्वेन गामभ्युपगच्छतीति तत्र बोधः।

कर्म्मणा यमभिप्रैतीति पाणिनीयसम्प्रदानसूत्रे कर्म्मशब्दस्य पारिभाषिक(क्रिया-व्याप्य)कर्म्मपरत्वात् प्रकारान्तरेण सम्प्रदानलक्षणमाह वार्त्तिककारः—क्रियया यमभिप्रैति सोऽपि सम्प्रदानमिति स्वक्रिया यत्-क्रियोद्देशिका तदपि सम्प्रदानमित्यर्थः, यथा युद्धाय सन्नह्यते, युद्धविषयं सन्नाहनपूर्व्वकं निश्चयं करोतीत्यर्थः, पत्ये शेते पतिमुपच्छन्द्य शेते इत्यर्थः। अत्र क्रियाऽकर्म्मकैवेति सम्प्रदायविदः, "तस्मै भूमिपतिः पत्ये दर्शयन् प्रियदर्शनः" इत्यादौ तु नाऽनेन सम्प्रदानता, क्रियायोगे चतुर्थीत्र इति दर्शयतिरत्र सकर्म्मकत्वेऽपि न क्षतिः, कैयटस्तु यदा दर्शनादयो धात्वर्थान्तरेण विवक्ष्यन्ते तदैव सम्प-

# २० । अवधिरपायादिष्वपादानम् ।

[अवधिः १।१, अपायादिषु (अपाय-आदि) ७।३, अपादानम् १।१ ]   (१)

**अपायादिषु साध्येषु यदवधिभूतम्, तत्कारकमपादान-संज्ञं भवति । अपायः संश्लेषपूर्वको विश्लेषः—ग्रामाद्गतः,**

दानता अन्यदा तु कर्मत्वम् । सा च भेदाभेदविवक्षा प्रयोगदर्शनवशेन नियतविषयैवेत्याह । तिलानस्मै प्रतियच्छति, तुरगमस्मै विक्रीणीत इत्यादौ द्रव्यान्तरग्रहणपूर्वकं दानं प्रतिदानं, मूल्यग्रहणपूर्वकं दानमेव च विक्रय इति उक्तरूपप्रदानाऽभिसम्बध्यमानत्वाभावेऽपि अनेनैव वार्त्तिकबलेन सम्प्रदानत्वम् । अन्यच्च "एवमपि कर्मणः करणसंज्ञा सम्प्रदानस्य कर्मसंज्ञा" इति भाष्ये सामान्यतः कर्मणः करणसंज्ञायां सम्प्रदानस्य च कर्मसंज्ञायां विहितायामपि वृत्तिकारेण विशिष्याभिहितम् "यजेः कर्मणः करणसंज्ञा सम्प्रदानस्य च कर्मसंज्ञेति पशुना रुद्रं यजते पशुं रुद्राय ददातीत्यर्थः । एतच्छान्दसविषयमिति कैयटः ।

(१) "अपायादिष्वपादानमवधिः कारकं भवे"दिति कारिका तत्र विश्लेषजनकधात्वर्थानाश्रयत्वे सति तज्जन्यविश्लेषाश्रयत्वम् अवधित्वं तद्धि अवधिभूतं अपायादिषु साध्येषु अपादानं कारकं भवति, तत्राऽपायशब्दार्थं निर्वक्ति अपाय इत्यादिना सव्यापारोदासीनोभयसाधारणविश्लेषफलो धात्वर्थोऽपायः, सव्यापारः व्यापाराश्रयः, उदासीनो व्यापाराऽनाश्रयस्तदुभयनिष्ठविश्लेषरूपं फलं यस्य तादृशधात्वर्थः अपाय इत्यर्थः, विभागजनकक्रिया अपाय इति फलितं, विभागश्च न केवलं वास्तवसम्बन्धपूर्वको वास्तव एव किन्तु बुद्धिकल्पितसम्बन्धपूर्वको बुद्धिकल्पितश्च "मथुरा पाटलिपुत्रेभ्य आढ्यतरा" इति भाष्योदाहरणं तत्र प्रमाणं, तस्मिन् अपाये (विभागजनकक्रियायां) साध्ये निष्पाद्ये सति यदवधिभूतं कारकं तदपादानं स्यात्, अपायादीत्यादिपदेन वारणार्थादीनां संग्रहः, अपाये सोदाहरणविषयविभागा हरिणा दर्शिता यथा—"अपाये यदुदासीनं चलं वा यदि वाऽचलम् । ध्रुवमेव तदावेशात् तदपादानमुच्यते । पततो ध्रुव एवाश्वो यस्माद-

**रथात्पतितः ; वारणे—यवेभ्यो गां वारयति, भिक्षायां—उ-पाध्यायादधीते, ततः शृणोति ; नाभिक्षायां—नटस्य शृणोति ;**

अश्वात्पतत्यसौ । तत्राप्यश्वस्य पतने कुड्यादि ध्रुवमिष्यते । मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक् । मेषयोः स्वक्रियापेक्षं कर्तृत्वञ्च पृथक् पृथगिति । यदुदासीनं विभाग-जनकक्रियाऽनाश्रयः स्वयं चलं अचलं वा अतदावेशात् विभागजनकतत्क्रियाऽनाश्रयत्वा-देव ध्रुवं स्थिरं अवधीति यावत् कथ्यते, तस्य च ध्रुवस्य (अवधिरूपस्य अपादानसंज्ञा भवतीति तदर्थः, कुड्यात्पततोऽश्वात् मेषः पततीत्यत्र मेषस्य पतनक्रियायामश्वस्यावधित्वं अश्वस्य कुड्यमिति पतत इति कारिकया विवृतम्, कुड्यावधिकपतनाश्रयाश्वावधिकं मेष-निष्ठपतनमिति बोधः, अत्र च तत्क्रियाऽनाश्रयेष्वुक्तोभयकर्मजविभागस्थले न कर्तु-रपादानत्वमिति मेषान्तरक्रियापेक्षमिति कारिकयोक्तम् परस्परस्मान्मेषावपसरतः, इत्यत्र तु सुधांशुना गतिद्वयस्याऽप्युपादानादेकनिष्ठां गतिं प्रतीतिरन्यस्याऽप्यपादानत्वं न विरुध्यते । मेषपदोपात्तयोः क्रियाश्रयत्वात् कर्तृत्वम्, परस्परपदोपात्तयोश्चाऽवधिभूतत्वा-दपादानत्वमिति विवेकः । अत्रेदं बोध्यं पर्वतात् पततीत्यादौ पञ्चम्यर्थे अवधौ स्वीय-सम्बन्धेन प्रकृत्यर्थः पर्वतादि विशेषणं, पतनादिक्रियायान्तु सम्बन्धितया पञ्चम्यर्थस्य विशेषणत्वं, जगदीशस्तु यद्धातूपस्थाप्यव्यापारार्थे विवक्षावशात्पञ्चम्या यः स्वार्थोऽनु-भावयितुं शक्यः सः (पञ्चम्यर्थः) तद्धातूपस्थाप्यतावच्छेदकक्रियाश्रयस्यापादानत्वमुच्यते इत्याह वृक्षात्पतति इत्यत्र वृक्षावधिकविभागाऽनुकूलपतनकर्त्रैत्यन्वयबुद्धौ (पत)धातूपस्थाप्यपतन-क्रियायां पञ्चम्युपस्थाप्यो विभागः स्वाऽनुकूलत्वसम्बन्धेन प्रकार इति स एव (विभाग एव) तत्रापादानत्वम् । वस्तुतस्तु स्वाऽवधिकत्वसम्बन्धेन प्रकृत्यर्थो(वृक्षादि)न्वितस्य पञ्च-म्यर्थविभागस्य सामानाधिकरण्यानुकूलत्वोभयसम्बन्धेन धात्वर्थे (पतने)ऽन्वयस्य स्वीकृतत्वात् स्वस्मात् पतितश्चैत्र इति प्रयोगो न भवति चैत्राऽवधिकत्वविशिष्टविभागाधिकरणनिष्ठं यत् चैत्रविभागाऽनुकूलं पतनं तस्य चैत्रे बाधात् स्वावधिकत्वविभागस्य स्वनिष्ठत्वात् चैत्रः स्वयमेव विभागाश्रयो भवति विभागाऽनाश्रयस्यैवावधित्वाङ्गीकारादिति न तदा-ऽपादानत्वम् । —तत्रापादानं त्रिविधं—"निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा । अपे-

प्रतिग्रहे—पौरवाद्गृह्णाति; त्राणे—चौरात्त्रायते, रक्षतीत्यर्थः; भये—चौराद्बिभेति; अन्तर्द्धौ—उपाध्यायादन्तर्द्धत्ते निलीयत इत्यर्थः; प्रभवने—हिमवतो गङ्गा प्रभवति; जनने—गोमया-

पेक्षितक्रियञ्चेति त्रिधाऽपादानमिष्यते" इति हर्य्युक्तेः। निर्द्दिष्टविषयं—निर्द्दिष्टः श्रूयमाणो विषयो यस्य तच्छ्रूयमाणस्वाऽपेक्षितक्रियमित्यर्थः, यथा वृक्षात्पत्रं पतति अपादानविषयीभूतं पतनं श्रूयमाणम्। द्वितीयं उपात्तविषयं—उपात्तः क्रियान्तरघटकीभूतः विषयो यस्येति व्युत्पत्त्या स्वविषयक्रियाघटितश्रूयमाणक्रियान्तरमित्यर्थः, यथा मेघात् विद्योतते विद्युत् इत्यादौ निःसरणपूर्व्वकविद्योतनार्थक विद्योततियोगे मेघादेकदेशनिःसरणाद्यपादानत्वं; तृतीयं अपेक्षितक्रियं—अपेक्षिता क्रिया स्वविषयभूता येन तत्, कुतो भवानित्यादौ गमनक्रियाया अपेक्षा।

पतधातोरकर्मकत्वे वृक्षात्पतति इत्यत्र वृक्षावधिकविभागाऽनुकूलपतनकर्त्ता इति बोधः, तस्य सकर्मकत्वे वृक्षात् भूमिं पतति इत्यत्र वृक्षाऽवधिकविभागाऽनुकूलभूमिवृत्तिपतनकर्त्ता इति बोधः। ग्रामादागत इत्यत्र विभागपूर्व्वकोत्तरदेशसंयोगाऽनुकूलव्यापारस्य धात्वर्थकतया विभागाऽन्वयसम्भवादपादानत्वं, चलतेस्तु विभागपूर्व्वकचलनविषयायां ग्रामाच्चलति इति प्रयोगः, एवं त्यजतीत्यादौ विभागस्य बोधने तस्य व्यापारव्यधिकरणत्वेन कर्मत्वमपि परत्वात् कर्मणा बाधः, तथाचोक्तं—अपादानसम्प्रदानकरणाधारकर्म्मणाम्। कर्त्तुश्चोभयसम्प्राप्तौ परमेव प्रवर्त्तत इति। स्वार्थाद्धीयत इत्यत्र तु अपादाने च हीयरुहोरिति ज्ञापकात् कर्म्मप्रत्ययान्तहीधातुयोगे कर्त्तुरेवाऽपादानत्वं पुरुषस्य कर्म्मत्वाप्रकारिणीमतेति दिक्।

वारणे—प्रवृत्तिविघातो निवृत्तिस्तदनुकूलव्यापारो वारणं तस्मिन्—साध्ये यदवधिभूतं ईप्सितमनीप्सितं वा तदपादानमित्यर्थः, यवेभ्यो गां वारयति इत्यत्र गोनिष्ठाया भोजनधर्म्मिकयवप्रकारकनिवृत्तेरनुकूलव्यापारवानिति बोधः, तथाविधनिवृत्त्यनुकूलव्यापारश्च स्वामिद्वारा यवान् मा भुङ्क्ष्व इत्याद्यभिलापरूपः स्फुट एव, एवं कूपादन्धं वारयति, अन्धनिष्ठाया पतनधर्म्मिककूपप्रकारकनिवृत्तेरनुकूलव्यापारवानिति बोधः। निवाया-

दुर्भिक्षो जायते ; पराजये—रणात्पराजयते ; प्रमादे—धर्म्मात्प्रमाद्यति ; जुगुप्सायाम्—अधर्म्माज्जुगुप्सते ; विरामे—अधर्म्माद्विरमति ; आधिक्ये—शुक्लाच्छुक्लः, कालात्कृष्णः ।

## २१ । आधारोऽधिकरणम् ।

[आधारः १।, अधिकरणम् १।] (१)

आश्रयोऽधिकरणसंज्ञः स्यात् । स च—सामीप्यकौ, वैषयिक, आभिव्यापक, एव च । औपश्लेषिक इत्येवं स्यादाधार-

-शिक्षा नाम नियमपूर्व्वकविद्यास्वीकारः,—तस्यां साध्यायां योऽवधिभूतः तस्याऽपादानमित्यर्थः । भाव्यनिष्टस्य प्रतीकारासामर्थ्यज्ञानं भयं, अनिष्टवारणं त्राणं तत्र भयं भयैकदेशोऽनिष्टं तद्धेतुरपादानमित्यर्थः; चौरादबिभेतीत्यत्र हेतुत्वं अन्यत्वं वा पञ्चम्यर्थः तत्र भावित्वेन स्वानिष्टचिन्तनपर्य्यवसितस्य भयस्यैकदेशेऽनिष्टचिन्तन एव वाऽन्वितं, तथाच चौरहेतुकस्य स्वानिष्टस्य भावित्वेन चिन्तनवान् चौरहेतुकत्वेन भाव्यनिष्टधर्म्मिकचिन्तनवानिति बोधः । अन्तर्द्धौ—अन्यकर्त्तृकस्वकर्म्मकदर्शनेच्छया तदनुकूलव्यापारो व्यवहितदेशस्थित्यादिरूपोऽन्तर्धानं तदृष्टकमदर्शनमदर्शनं यस्मात्कर्त्तृकमिच्छति (यत्कर्त्तृकस्यात्मनो-दर्शनाभावमिच्छतीत्यर्थः) तदपादानं ; प्रभवनं प्रपूर्व्वकस्य भूधातोरर्थः प्राक् प्रकाशनं तत्र पञ्चम्या अधिकरणत्वमाधेयत्वस्य प्रत्याय्यते ततश्च हिमवद्वृत्तिप्रथमप्रकाशवती गङ्गा इति बोधः ; एवं अनिष्टसाधनताज्ञानाधीना निन्दा जुगुप्सा, कृत्यमात्राऽननुकूलव्यापारो विरामः, इष्टाऽनिष्टसाधनयोस्तद्विपरीतत्वधिया तत्र प्रवृत्तिनिवृत्ती प्रमादः, सर्व्वत्र च विवक्षितया शान्तत्वादौ अन्वयी अपादानसंज्ञः स्यादित्यर्थः ।

*

(१) आध्रियतेऽस्मिन्नित्याधारः, अधिकरणं च, किमाध्रियत इत्याकाङ्क्षायां क्रियैव लभ्यते, ततश्च क्रिया यस्मिन्नाध्रियते स आधारः, ननु क्रियायाः कर्त्तृस्थत्वेन कर्म्मस्थत्वेन च द्वैविध्यात् कर्त्तृकर्म्मणोरेव साक्षात् क्रियाधारत्वं न तदितरस्य कटादेः, तर्ह्याधा-

**श्चतुर्व्विधः,—गङ्गायां घोषः प्रतिवसति, वने सिंहः, तिलेषु तैलं, कटे आस्ते विप्रः ।**

---

धिकरणसंज्ञा पराभ्यां कर्त्तृकर्मसंज्ञाभ्यां बाधितैव तत् का गतिरिति चेदाह भट्टोजिदीक्षितः "कर्त्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणसंज्ञं स्या"दिति साक्षात् क्रियाधारभूतयोः कर्त्तृकर्मणोराधारत्वात् परम्परासम्बन्धेन क्रियाया आधारस्यैवाधिकरणसंज्ञेति बोध्यम्, तथाचोक्तं हरिणा—"कर्त्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम् । उपकुर्व्वत् क्रियासिद्धौ शास्त्रेऽधिकरणम् स्मृत"मिति । भूतले घटः इत्यादौ सर्व्वत्र अस्तीति क्रियाध्याहारो बोध्यः । एवं शेते, कटे आस्ते, वने सिंहः (अस्ति); तिलेषु तैलम् (वर्त्तते) इत्यादौ कटादीनां कर्त्तृद्वारा क्रियाधारत्वम् । कर्मद्वारा क्रियाधारस्योदाहरणं यथा स्थाल्यामोदनं पचतीत्यादौ ; स (आधारश्च) चतुर्व्विधः चतुःप्रकारः (१) सामीप्यकः, (२) वैषयिकः, (३) अभिव्यापकः, (४) औपश्लेषिकः, भट्टोजिदीक्षितेन "औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधो"क्तः ; समीपशब्दात् स्वार्थे ष्यञि सामीप्यं ततस्तत्र भवमित्यर्थे स्वार्थे कः समीपसम्बन्धिलक्षणा यत्र क्रियते स आधारः सामीप्यकः, यथा गङ्गायां घोषः प्रतिवसति, गङ्गायां शृङ्गवेरपुरं गोदावर्य्यामाश्रम इत्यादौ गङ्गादिशब्दा घोषाद्याधाराद्यन्वयमलभमाना लक्षणया तीरादिकं लक्षयन्ति । एवमङ्गुल्यग्रे करिशतमित्यत्राङ्गुल्यग्रपदेनाङ्गुलिनिर्द्दिष्टस्थानं लक्ष्यते । केचित्तु भवतु लक्षणया गङ्गादिशब्दैस्तीरादीनां बोधस्तत्र लक्षिते तीरादौ औपश्लेषिक एवाधारो युक्तः किं भेदान्तरेणेति साधु वदन्ति । तथा गोयीचन्द्रोऽपि "अत्र घोषस्याऽन्यथाऽनुपपत्त्या गङ्गाशब्देन तीरं लक्ष्यते तीरेण तु सहौपश्लेषो विद्यत" इत्याह । (२) वैषयिकः—विषिणोति संबध्नाति इति विषयः प्रतिपाद्यः, तत्र भवः वैषयिकः ; स च सामीप्यकादित्रितयविलक्षण एव, यथा धर्मे वेदाः प्रमाणं, पद्येषु छन्दांसि, गुरौ शिष्याः वसन्ति इति, ननु "आधारोऽधिकरण"मित्यत्राधारशब्देनाश्रय उच्यते आश्रयश्च संयोगसमवायाभ्यामन्यथा न सम्भवति, गुरुप्रभृतिषु शिष्यादीनां न तयोरन्यतरसम्बन्धोऽनुभूयते, तत् कथममुषामधिकरणत्वं ? नैवं यो हि यदधीनस्थितिः स संयोगसमवायाभ्यामन्तरेणापि तदाश्रितो भवति, यथा राजपुरुषः न

# २२। अधिशीङ्स्थासां कर्म।

[अधि—शीङ्, स्था, आसाम् ६।।।, कर्म ०१।] (१)

---

आऽस्व राजा सह पुरुषस्य संयोगसमवायौ स्तः, किन्तु तदधीनस्थितत्वात् पुरुषो राजाश्रय इति व्यवह्रियते लोके, तद्वद्गुरौ वसतीत्यादि बोद्धव्यम्। आभिव्यापकः—अभि समन्तात् व्याप्नोति इति अभिव्यापकः अभिव्यापक एव आभिव्यापकः स्वार्थेऽण्, य आधाराधेययोस्तुल्यजन्माऽपृथग्देशभागानभिव्याप्य तिष्ठति सोऽभिव्यापक इति यथा तिलेषु तैलम्, अत्र-ऽपि तैलस्य तिलैः सह संयोगस्तथापि देशाविभागादस्य उपश्लेष(संयोग)व्यवहारो नास्तीति पृथङ्निर्देशः। औपश्लेषिक इति—उपश्लेषः संयोगस्तत्र भवः औपश्लेषिकः, यथा कटे आस्ते शिशुः इत्यादि अन्ये तु सकलावयवव्यापकमभिव्यापकं, उप समीपे श्लेष उपश्लेषस्तत्कृतमौपश्लेषिकं, अथवा एकदेशावच्छेदेन श्लेषस्य समीपमुपश्लेषं तत्कृतमौपश्लेषिकमेताभ्यामतिरिक्तं सर्वं वैषयिकमिति व्याचक्षते। बोपदेवस्तु पूर्वोक्तान् चतुर्विधानाधारान् यथाक्रमं सामीप्यविषयाश्लेषव्याप्तिनामभिरभिहितवान्।

आधारत्वं नाम कर्तृकर्मव्यवहितक्रियाश्रयत्वं उच्यते (आश्रयरहिते) कर्तृकर्मणी न क्रियां जनयत इति आधारस्य क्रियोपकारित्वात् कारकत्वमिति मन्तव्यम्। कारकोक्तास् अधिकरणलक्षणं यथा—"आश्रित्य विषयीभूय यावत् कर्ताऽथ, कर्म वा। क्रियया सार्द्धमथवा क्रियाद्वारैव वर्तते। यत्रासेऽधिकरणं तत् स्यात्—आभिव्यापकऔपश्लेषिकसामीप्यकञ्चैव तथा। वैषयिकञ्च चतुर्धा मतमधिकरणं विशेषज्ञैरिति। तिलेषु तैलमित्यादावाभिव्यापकमिष्यते, वने सिंहो वसत्यत्र औपश्लेषिकमीरितम्। साधुर्वसति गङ्गायामित्यत्र सामीप्यकं मतं, धर्मे वेदाः प्रमाणं स्युरत्र वैषयिकं स्मृत"मिति, आधेयतावच्छेदकान्तरमेवाऽधिकरणं, तथाधेयताभेदेन भूतैव प्रतीयमानमपि कपालादिना कपालादेरिव अधिकरणत्वमत्रैवाखण्डेन तत्त्वेति जगदीशः।

(१) अत्रास्थीकोः साहचर्यात् तिष्ठतेरप्यकर्मकस्यैव ग्रहणं, तेन ग्रामे लोकमधितिष्ठतीत्यत्र न ग्रामस्य कर्मत्वं लोकस्य तु कर्तृसमुदिष्टत्वात् कर्मत्वमिति बोध्यम्; एवं गृहेऽधिशेते शय्यानिष्ठस्य शय्याया आधारो गृहम्। वने राजानमधितिष्ठति

एषामाधारः कर्म्म स्यात्। स्थलीमधिशेते, गिरिमधितिष्ठति, ग्राममध्यास्ते।

## २३। उपान्वध्याङ्वसो निवासे।

[उपान्वध्याङ्वसः (उप, अनु, अधि, आङ्—वस) ६।, निवासे ७। ] (१)

उपादेर्वसेराधारः कर्म्म स्यात्। ग्राममुपवसति, पल्लीमावसति, निवास इति किम्? ग्रामे उपवसति भोजननिवृत्तिं करोतीत्यर्थः; कथमेकादशीमुपवसन्ति निरम्बुभक्षाः? —उपादनिवासाऽर्थे वसः सकर्म्मकत्वात्।

---

अपेक्षते इत्यर्थः। उपसर्गान्तरितेन न स्यात् अध्यागाममध्यास्ते इत्यत्र न स्यात्। कर्मणि नकुलाधिष्ठितो हयः, भलैरध्युषितास्तस्य मलयाद्रेरुपत्यका इत्यादौ कर्मत्वं, एवमातिष्ठतीत्यत्र आदीङ्घात्वर्थत्वात् सकर्मकः स्थाधातुः।

(१) वस निवासे इत्यस्यैव ग्रहणमिति विष्णुमिश्रः, गोयीचन्द्रस्तु वसतिरिति निर्देशे वस आच्छादने इत्यादेः संग्रहाय, वसु स्तम्भे इति दिवादेश्च निरासार्थमित्याह, न तत् समीचीनं लुग्विकरणादलुग्विकरणम् बलीय इति न्यायेन वस निवासे इति भौवादिक एवात्र गृह्यते न तु वस आच्छादने इत्यदादिकस्य शबनुपविकरणस्य लुगन्तादित्याह अतिपा निर्दिशति वसतेरिति। अस्माकन्तु सूत्रे निवास इति पदकेनान्वार्थकस्य वसेर्निरासः एव क्रुतः। उपादिति—आकारमध्यत्वेनैव सकर्मकत्वमित्यर्थ इति बोध्यम्। एवं त्रपोष्य एकादशीमिश्रादावपि बोध्यम्। तीर्थे उपवसति तीर्थस्य उपवासाधारत्वाभावात् तीर्थे वसन् त्रिरात्रमुपवसतीत्यर्थः, तदुक्तम् वसतावप्यनुपतौऽपि देशोऽधिकरणं स्मृतम्। अप्रयुक्तं त्रिरात्रादि कर्म चोपवसेर्मतमिति कारिकायामादुपवसतेः कालस्य कर्मत्वं देशे चाधिकरणत्वमाहुः। क्वचिदपवादविषये उत्सर्गोऽभिनिविशत इति न्यायात् नगरेऽधिष्ठानं ग्रामे वसतीत्यादिकमपि स्यात्।

## २४। अभिनिविशो वा।

[अभि,नि,विश: ६।, वा ०१।] (१)

अस्याधारः कर्म्म स्यात्। ग्राममभिनिविशते, या, या संज्ञा, यस्मिन्, यस्मिन्नभिनिविशते, यं, यं वा। "भवन्ति हि विवक्षातः कारकाणि यथा तथा। एकत्र कारकद्वैधे पर-मेकं प्रवर्त्तते"।* गोभ्यो दोग्धि पयः, गोषु दोग्धि पयः,

---

(१) नेरल्पाच्कत्वेन पूर्व्वनिपाते कर्त्तव्ये विपरीतोच्चारणं विशिष्टसंघातस्य (अभि-नि) इत्येवंरूपस्य ग्रहणार्थम्, तेन प्रत्येकं विपर्य्ययेण वा योगे न स्यात्। अतएव "निविशते यदि शूकशिखा पदे" इत्यादौ न। "न्यविशत महाग्राहसङ्कुलं मकरालय"-मित्यादौ तु सकर्मक एव विशधातुः।

* यस्मिन् यस्मिन् यं यमिति द्विविधं प्रयोगं प्रति कारणमुपन्यस्यति। भवन्ति हीत्यादिना—वक्तुरिच्छा विवक्षा तस्या यत्र आयत्तता तस्मात्कारकाणि कर्त्रादीनि षट् भवन्ति, यदा यादृशी प्रयोक्तुर्विवक्षा भवति तदा तादृशं कारकं भवति, कर्मस्थले अपादानं, अपादानस्थले षष्ठ्यादीत्यभिप्रायः, तेनाऽभिनिविशश्च इत्यस्याधारस्य क्वचित् (२।१।२४) इति नियमसूत्रेण कर्मत्वं क्वचिच्च विवक्षाप्रभावादधिकरणत्वम्, एवं प्रविशति गृहं गृहे वा इत्यत्र गृहस्य कर्मसमुद्दिष्टविवक्षायां कर्मसंज्ञा तस्यैव यदौपश्लेषो विव-क्षितः तदाऽधिकरणत्वं, पुष्पाणि स्पृहयतीत्यत्र ईप्सितत्वाऽविवक्षायां कर्मसंज्ञा स्पृह-णीया विभूतय इति कर्मणि प्रयोगा अपि। ननु चैत्रोऽश्वेन ग्रामं न गच्छतीत्यत्र कथं चैत्रादीनां कर्त्तृ, करण, कर्मसंज्ञा यतः क्रियायां सिद्धायां कारकाणि भवन्ति, अत्र तु न क्रियासिद्धिः, इत्यत आह "कर्तृकरणकर्माऽन्तरादिप्रतिपन्ना चैत्रादौ कथञ्चित्प्रयुक्ता योग्याऽनुपलब्धा निषेद्धुं पश्चान्नञो योगः, पूर्वं नञो योगस्तु विरुद्ध एव यतःकर्तृकरणकर्म-विषया हि गमनक्रियाऽत्र निषेद्धुमिष्टा तस्याश्चाऽभावे विषयाभावादेव पूर्वं प्रतिषेधो-

कारकद्वैधे विप्राय गां दत्त्वा गृह्णाति, आरुह्य तिष्ठति गिरिम्, गृहं प्रविश्य निःसरति, अस्त्येष घटः पश्येत्यादि।

ऽयुक्त इति क्रमदीश्वरः। अतश्च प्रवृत्ताविव निवृत्तावपि कारकाणि भवन्तीत्युक्तमेव पूर्व्वम्। ननु क्रियानिमित्तं कारकं, तच्च द्रव्यगुणादिभेदेन पञ्चविधमिति यदुक्तं तत् द्रव्यादीनां स्वरूपतः क्रियानिमित्तमथवा तेषां शक्तिः इत्याकाङ्क्षायामाह द्रव्यादीनामेक-स्वभावानामनेकरूपताया अयुक्तत्वात् शक्तिः कारकं शक्तिश्च नानाविधा, शक्तेराधारा द्रव्यादयः स्युः, तत्र येन रूपेण शक्तिर्विवक्ष्यते तेन रूपेण सा कारकं विवक्षातः कारकाणि भवन्तीति श्रुतेः दृश्यते चैकवस्तुन्यभिन्नेऽपि पुत्रः, पिता, पितामहो, मातुल इति व्यपदेशः सम्बन्धभेदात्। उद्दिष्टोदाहरणयोर्गोभ्यो दोग्धि गोषु दोग्धि इत्यनयोर-पादानाधिकरणे विवक्षिते। एकत्रेति—एकत्र एकस्मिन् प्रयोगे कारकद्वैधे उभय-कारकप्राप्तौ परं अपादानमित्यादि श्रीकर्दर्शितं परोक्तं, न तु सूत्रकृतं, कारकं प्रवर्त्तते प्रवृत्तौ भवतीत्यर्थः, अपादानसम्प्रदानोभयप्राप्तौ सम्प्रदानस्यैव प्रवृत्तिर्भवेदित्यर्थः, पूर्व्वपरयोः परविधिर्बलवानिति न्यायात्। यथा अस्त्येष घटः पश्य इत्यत्र कर्मसंज्ञां बाधित्वा कर्तृ-संज्ञा, एवं वरायाङ्ग्य कन्यां ददाति, विप्रायार्चयित्वा धनुर्दीयते इत्यादौ ददातीत्यादि क्रियाणामेव साध्यत्वान्मुख्यत्वं, आङ्गानादीनान्तु तदर्थतया गुणभावः। अन्ये तु कारकद्वैधे एकस्मिन् प्रयोगे परं केवलमेव प्रवर्त्तते न तु द्वे इत्याहुः। न भिन्नक्रियायाः कारकयो-र्द्वैध परत्वमिति श्रीपतिः*।

---

* अत्रेदं तत्त्वं—"प्रधानाप्रधानयोर्मध्ये प्रधाने कार्य्यसम्प्रत्ययः" इति न्यायात् "गौण-प्रधानक्रिययोः प्रकारीभूतकारके, एकस्मिन् वा विभिन्ने वा प्रधानापेक्षया स्थितिः" (यत्र क्रियाद्वयं वर्त्तते एका प्रधानाऽन्या चाप्रधाना तत्र प्रधानक्रियामपेक्ष्यैव कारकाणामव-स्थितिर्भवति) इति जगदीशवचनाच्च विप्राय गां दत्त्वा गृह्णातीत्यत्र गृह्णातीति प्रधानक्रिया-पेक्षया विप्रस्यापादानत्वं दत्त्वेत्यप्रधानाऽपेक्षया सम्प्रदानत्वं ततश्च प्रधानाप्रधानयोरित्या-द्युक्तन्यायेन अपादानस्यैव प्रसक्तौ परत्वात् सम्प्रदानसंज्ञा जाता, एवं आरुह्य तिष्ठति गिरिमित्यत्र तिष्ठतीति प्रधानक्रियाऽपेक्षया गिरेराधारत्वप्रसक्तौ परत्वात् कर्मसंज्ञा एवं गृहं प्रविश्य तिष्ठतीत्यत्रापि, अस्ति एष घटः पश्य अत्राऽस्तीत्यपेक्षया घटस्य कर्तृत्वं,

## २६। मुख्यं कर्म्म द्विकर्म्मणाम्।

[मुख्यम् १।, कर्म्म ०१।, द्विकर्म्मणाम् ६॥ ] (१)

द्विकर्म्मणां धातूनां तिङादिभिर्मुख्यं कर्म्मोक्तं भवति। नीयते अजा ग्रामं दासेन, नेतव्या अजा ग्रामं; हृतो भारो ग्रामं; कष्टव्या शाखा ग्रामम्।

## २७। अप्रधानं दुहादीनाम्।

[अ (न)-प्रधानम् १।, दुह्-आदीनाम् ६॥ ] (२)

---

तस्य वा कर्म्मतया अन्वयो भवति यदि धात्वर्थविशेषस्य कर्म्मीभूतं किञ्चित् तत्समानकर्त्तृकस्यापरस्य कर्म्मत्वान्वयी भवेत् कर्म्मणि वाच्ये तत्र प्रथमैव भवेत् इति तदर्थः। इति जगदीशकारिकया प्रथमैवानुशिष्टा, शाकं पचता भुज्यते इत्यत्र पचधातोः कर्म्मणि शाके पाककर्त्तृकभोजनकर्म्मत्वस्याऽन्वयो भवति अस्य(शाकस्य) कर्म्मताक, पाककर्त्तृकर्त्तृकभोजनकर्म्मतावान् इति बोधः।

(१) मुख्यं कर्त्तुरीप्सिततमं, यदर्थं क्रियाप्रवृत्तिर्नीयते। इत्युदाहरणानि अप्रधानं दुहादीनामित्यस्य वक्ष्यमाणत्वात् गौ, बलि, कपोथानां च मुख्यं कर्म्म तिङादिभिरुक्तं भवति। दुहादीनाञ्च कर्म्म गौणवादे. प्रधानकमिति कारिका, एवञ्च गौणे कर्म्मणि दुह्यादेः प्रधाने नी, हृ, कृष्वहाम्। बुद्धिभक्षार्थयोः शब्दकर्म्मकाणां निजेच्छया। प्रयोज्य-कर्म्मण्यन्येषां ण्यन्तानां लादयो मता इति च कारिकान्तरम्। अस्ति प्रयोज्यस्य कर्म्मत्वे ण्यन्तानामप्येष नियमः, प्रयोज्यस्य कर्म्मत्वे तु तस्यैव गौणत्वं स्यात्, वाह्यते वाहो भारं, प्रयोज्यस्य कर्म्मत्वे वाह्यते गौर्वौ इत्यमः। नीयते अजा ग्राममित्यादौ ग्रामकर्म्मकगत्यनुकूलव्यापारजन्यगतिमत्यजा इत्येवंरूपो बोधः।

(२) अप्रधानं गुणीभूतम्, अस्ति प्रयोज्यस्य कर्म्मत्वे ण्यन्तानामप्येषामेव नियमः।

दुहादीनां द्विकर्म्मणां धातूनामप्रधानं कर्म्मोक्तम्भवति । दुह्यते गौः क्षीरं गोपेन, याच्यते वरं देवी देवदत्तेन, देवासुरैरमृतमम्बुनिधिर्ममन्थे, जितो मैत्रः शतम्, गर्गाः शतं दण्डनीयाः ।

## २८ । ण्यन्ते कर्त्ता च कर्म्म यत् ।

[ण्यन्ते (णि अन्त) ७।, कर्त्ता १।, च ०१।, कर्म्म ०१।, यत् ०१। ; (१)

ण्यन्ते यत्कर्त्ता कर्म्मभूतस्तत् तिङादिभिरुक्तम्भवति । गमयति ग्रामं विप्रं देवदत्तः, गम्यते विप्रो ग्रामं देवदत्तेन, बोध्यते शिष्यो धर्म्मम्, भोज्यते विप्रो भक्तम्, पाठ्यते पुत्रः सूत्रम्, आस्यते विप्रो मासम् । चकारात्(२) क्वचित् प्रतिषेधविषयेऽपि

---

दोह्यते गावः पयो भर्त्रेन, द्वितीयावद्भवतोः कर्म्मणोः षष्ठी चाप्नोति, यथा दोग्धा, क्षीरस्य गोरिति । दुह्यते गौः क्षीरमित्यादौ पयःकर्म्मकदोहनानुकूलव्यापारकर्म्मीभवनवती गौरित्येवं बोधः ।

(१) अण्यन्ते यः कर्त्ता ण्यन्ते स येन कर्म्मभूतस्तथैवोक्तत्वं भवतीत्यर्थः, इह कर्त्तृग्रहणं ज्ञापयति ण्यन्ते कर्त्तुं कर्म्मोक्तं भवति नान्यत्, विप्रो ग्रामं गच्छति, देवदत्तः विप्रं ग्रामं गमयति, विप्रो देवदत्तेन ग्रामं गम्यते, ग्रामकर्म्मकस्य व्यापारजन्यगमनस्य कर्त्ता देवदत्त इति बोधः, यत्र अण्यन्तकर्त्तुर्ण्यन्ते कर्म्मत्वं नास्ति तत्र मूलक्रियाव्याप्यमपि कर्म्मोक्तं भवेत् यथाऽसौ नाय्यते भारो ग्रामं दक्षेण साधुना, तथाच कारिका "अमुते कर्त्तु-कर्म्मत्वे पूर्व्व-कर्म्म तथोच्यते" । कर्म्मद्वैयन्तु ब्रूते धर्म्मं राजानं द्विजः, वाचयति धर्म्मं राजानं द्विजं गुरुः, वाच्यते धर्म्मं राजानं गुरुणा, अत्र द्विजस्याप्रयोगे राज्ञ एवोक्तत्वं भवेत्, वाच्यते धर्म्मं राजा गुरुणा, राज्ञोऽप्रयोगे धर्म्मस्योक्तत्वं वाच्यते धर्म्म इत्याह ।

(२) चकारः अनुक्तसमुच्चयार्थः, तेन यत्र प्रयोज्यस्य कर्म्मत्वं नास्ति तत्राऽपि क्वचन

अतः प्रयोगे कर्मत्वेनोच्यते ; तेन देवदत्तेन त्वं पूपं खाद्यमानो वाच्यसे, भक्तं खादयितव्योऽसीत्यादि ।

## २९ । प्रायो निपातेन ।

[प्रायः ०१।, निपातेन ३। ]

कर्म निपातेन क्वचिदुक्तं भवति । हरिरित्याह, विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् । (१)

## ३० । तिङां त्रिशः प्रथममध्यमोत्तमाः ।

[तिङाम् ६।॥, त्रिशः ०१।, प्रथममध्यमोत्तमाः १।॥ ] (२)

तिङां त्रीणि त्रीणि पदानि प्रथमपुरुष-मध्यमपुरुष-उत्तमपुरुषसंज्ञकानि भवन्ति । तिप्, तस्, अन्तीति प्रथमः,

---

कर्मत्वेनोक्तं समुचिनोतीत्यर्थः, प्रतिषेधविषये प्रयोज्यस्य कर्मत्वनिषेधविषये कर्मविहितस्य अतः प्रयोगे, कर्मत्वेन कर्मविहितप्रत्ययानुरोधार्थं उच्यते उक्तीक्रियते सकाम कर्माश्रयप्रयोगे च्णौ प्रसिद्धत्वाऽपि कर्मता, गुणार्क खाद्यमानस्त्वं वाच्यसे भृगुणा यथा ।

(१) छेत्तुं साम्प्रतं विषवृक्षः पक्ववागपि, क्रमादमुं नारद इत्यबोधि सः, समस्ति-गर्हितः पद्याः समानीकृतसाम्प्रतमित्यादीन्युदाहरणानि ।

(२) तिङ् इति च्लादेः तिङ्प्रत्याहारः गृह्यते, तिङश्च प्रतिलकारमष्टादश प्रत्ययास्तत्र च परस्मैपदसंज्ञकाः, आत्मनेपदसंज्ञकाश्च नव, त्रिश इति सुप्रत्ययान्तवचनं अतः त्रीणि त्रीणि त्रिशः संख्यैकवचनाद्वीप्सायां शस्, नवसु परस्मैपदेषु त्रयस्त्रिकाः आत्मने-पदेषु त्रिकाः यथाक्रमं प्रथममध्यमोत्तमसंज्ञकाः स्युः, परस्मैपदेषु प्रथमत्रिकाः प्रथम-पुरुषाः, द्वितीयत्रिका मध्यमपुरुषाः, अन्तिमत्रिका उत्तमपुरुषाः ; एवमात्मनेपदेष्वपि ।

सिप्, थस्, थ इति मध्यमः, मिप्, वस्, मस् इत्युत्तमः । आत्मनेपदे—ते, आते, अन्ते इति प्रथमः, से, आथे, ध्वे इति मध्यमः, ए, वहे, महे इत्युत्तमः । एवं लङादौ प्रतिपत्तव्यम् ।

### ३१ । नाम्नि प्रथमः । [नाम्नि ७।, प्रथमः १।] (१)

नाम्नि वाच्ये प्रथमः पुरुषो भवति । स, भवान् पचति, तौ पचतः, ते पचन्ति । स त्वया दृश्यते, तौ त्वया दृश्येते, ते त्वया दृश्यन्ते ।

### ३२ । युष्मदि मध्यमः । [युष्मदि ७।, मध्यमः १।] (२)

युष्मदि वाच्ये मध्यमः पुरुषो भवति । त्वं पठसि, युवां पठथः, यूयं पठथ । मया त्वं दृश्यसे, युवां दृश्येथे, यूयं दृश्यध्वे ; गम्यमानेऽपि नित्यसम्बन्धात् पठसि, दृश्यसे ।

### ३३ । अस्मद्युत्तमः । [अस्मदि ७।, उत्तमः १।] (३)

(१) नाम्नि नामसमाने ।

(२) त्वं वयं इत्यादावस्मदसंज्ञा इति न्यायाद्युष्मच्छब्दोऽत्र नार्थपरः स्वपर एव, तेन भवान् पचतीति भवत्येव न तु भवान् पचसीति । युष्मदि प्रयुज्यमाने गम्यमाने च विधिरयम् । नाम्नीत्यनेन काकोलिकावत् युष्मदि प्रयुज्यमाने इत्यर्थो लभ्यते, तेन चलं त्वं भवतीत्यत्रानभिधानात् मध्यमपुरुषः, एव मामतिक्रान्तः अतित्वमसित्यत्रापि न मध्यमः ।

(३) अत्रापि विशेषविधिः, अस्मच्छब्दः पूर्ववत् स्वपर एव, अस्मदि प्रयुज्यमाने गम्यमाने च विधिरयम् ।

अस्मदि वाच्ये उत्तमः पुरुषो भवति। अहं पचामि, आवां पचावः, वयं पचामः। त्वयाऽहं दृश्ये, आवां दृश्यावहे, वयं दृश्यामहे ; गम्यमानेऽपि पचामि, दृश्ये।

## ३४। परिहासे मन्ययोगे तु मध्यमो मनस्तत्रोत्तमैकञ्च।

(परिहासे ७।, मन्ययोगे ७।, तु ०१।, मध्यमः १।, मनः ६।, तत्र ७।, उत्तमैकम् (उत्तम एक) १।, च ०१।. (१)

परिहासेऽवगतौ मन्यतेः प्रयोगे अस्मदि वाच्ये मध्यमः स्यात्, मन्यतेश्च तत्र मध्यमे प्राप्ते उत्तमैकवचनं भवति। एहि मन्ये रथेन यास्यसि यातस्ते पिता। (२)

## ३५। सुप्तिङन्त्रिकमेकद्विबहुष्वेकवचनद्विवचनबहुवचनमेकशो विभक्तिश्च।

(१) परिहासः क्रीड़ासम्भाषणं तस्य अवगतौ ज्ञाने, तस्मिन् गम्यमाने सति। तु-शब्दोऽवधारणे इति पद्मनाभपञ्जिका, परिहासे मन्यतेरेव प्रयोगे युष्मदस्मदोर्विपर्ययो नान्यस्येत्यर्थः। तु-शब्दो भेदे इति मिश्रः, तत्र—मध्यमोत्तमयोः प्राप्तयोरुत्तममध्यमौ विधीयेते। मन्य इत्यत्र तिबन्तोपन्यासादत्र बहुत्वेऽप्येकवचनं स्यादित्यर्थः।

(२) एहि मन्ये ओदनं भोक्ष्यसे भुक्तः सोऽतिथिभिः, परिहास इति किं सुष्ठु मन्यसे, साधु मन्यसे। मन्ययोग इति किम्? रथेन यास्यामि यातस्ते पिता।

[सुप्तिङाम् ६॥, त्रिकम् १।, एक, द्वि, बहुषु ७॥, एकवचन, द्विवचन, बहु-वचनम्, १।, एकशः ०१।, विभक्तिः १।, च १।] (१)

**सुप्तिङाम् त्रिभिस्त्रिभिर्विभक्तानां त्रिकमेकैकश एक-वचन, द्विवचन, बहुवचनसंज्ञकं विभक्तिसंज्ञकञ्च एक, द्वि, बहु-**

(१) अत्राऽपि व्यक्त्यपेक्षम् बहुवचनं तत एव त्रिकमीति त्रिभिस्त्रिभिर्विभक्तानामि-तीति - सुप एकविंशतिवचनानि—१ सु औ जस् । २ अम् औट्-शस् । ३ टा-भ्याम् भिस् । ४ ङे भ्याम् भ्यस् । ५ ङसि भ्याम् भ्यस् । ६ ङस् ओस् आम् । ७ ङि-ओस् सुप् । २१ ।

तिङ्—लट्,लृट् तिप्, तस्, अन्ति । सि, थस्, थ । मिप्, वस्, मस् । परस्मैपदानि १८

ते, आते, अन्ते । से, आथे, ध्वे । ए, वहे, महे । इत्यात्मनेपदानि ३६

लोट्—तुप्, तां, अन्तु । हि, तं, त । आनिप्, आवप्, आमप् । इति,प ४५

तां, आतां, अन्ताम् । स्व, आथां, ध्वं । ऐप्, आवहैप्, आमहैप् । इति आ ५४

लुङ्, लङ्, लृङ्—दिप्, तां, अन् । सिप्, तं, त । पम्, व, म, इति प ८१

त, आतां, अन्त । थास्, आथां, ध्वम् । इ, वहि, महि । इति आ १०८

लुट्—ता, तारौ, तारस् । तासि,तास्थस्, तास्थ । तास्मि, तास्वः, तास्मः इति प ११७

ता, तारौ, तारस् । तासे, तासाथे, ताध्वे । ताहे, तास्वहे, तास्महे । इति आ १२६

लिट्—णल्, अतुस्, उस् । थल्, अथुस्, अ । णल्, व, म । इति प १३५

ए, आते, इरे । से, आथे, ध्वे । ए, वहे, महे । इति आ १४४

विधिलिङ्—यात्, याताम्, युस् । यास्, यातं, यात । याम्, याव, याम । इति प१५३

ईत, ईयाताम्, ईरन् । ईथास्, ईयाथां, ईध्वं । ईय, ईवहि, ईमहि । इति आ १६२

आशीर्लिङ्—यात्,यास्तां,यासुस्। यास्,यास्तं,यास्त । यासम्,यास्व,यास्म । इति प १७१

सीष्ट,सीयास्तां,सीरन् । सीष्ठाः,सीयास्थां,सीध्वम् । सीय,सीवहि,सीमहि । इति आ१८०

त्रिकम् त्रीणि त्रीणि वचनानि, एकैकशः प्रत्येकं (यथासंख्यम्) एक, द्वि, बहुषु अर्थेषु एकवचन, द्विवचन, बहुवचन संज्ञं स्यादित्येकं सूत्रम्, विभक्तिसंज्ञकञ्चेति द्वितीयम् । एकैकश इति वीप्सैकशब्दात्कारक एकैकशो ददातीति प्रयोगात्, एकैकशो विनिव-

व्यर्थेषु भवति। एकं वक्तीत्येकवचनं—सु, अमादि, तिप्, सिपादि च, एकस्मिन्नर्थे—स भाति; द्वयोर्द्विवचनं—औ, तसादि, तौ भातः; बहुषु बहुवचनं—जस् अन्तीत्यादि, ते भान्ति। एवं तं, तौ, तानित्यादि। प्रकृतिप्रत्ययौ प्रकृत्यर्थ-विशिष्टं प्रत्ययार्थं सह ब्रूतः—एक, द्वौ, बहव इति प्रकृत्यर्थः प्रत्ययार्थेनाऽनूद्यते। (१)

क्तीति महाभारतम्, दुर्गसिंहोऽपि एकैकश इति प्रायुङ्क्त। एकं वक्तीति एकवचनं कर्त्तरि टनः, द्वे वक्तीति द्विवचनम्, बहूनि वक्तीति बहुवचनम्। संख्याद्यर्था विभज्यन्ते-ऽनयेति विभक्तिः, वि+भज+करणे क्तिन्।

(१) प्रकृतिप्रत्ययाविति—अर्थैकवचनादेरेकार्थवाचित्वम् प्रकृतिसहकारितया पृथक्त्वेन वा इत्याशङ्क्याह प्रकृतिप्रत्ययाविति—प्रकृतिर्नामार्थावबोधहेतुः प्रत्ययविधि-नाऽनभिभूतः शब्दविशेषः, सर्व्वेषामेव प्रत्ययानां प्रकृतिं निमित्तीकृत्यैवोत्पत्तिः, अवधित्वञ्च पूर्व्वापरत्वरूपं ग्राह्यं तेन बहुत्वादेर्निमित्तप्रकृतौ नाप्रसङ्गः। भाष्यकारस्तु तावेव सुप्-तिङौ यौ ततः परौ नैव प्रकृतिर्नावेति प्रकृतिलक्षणमाह, अस्यार्थस्तु—ततः विधानावधेः यौ परौ, तावेव सुप् तिङौ, या च तयोराद्या विधानाऽवधिभूता सैव प्रकृतिरिति तदर्थः। हरिणा चैतदनुमतं लक्षणं कृतम्—तथाहि यः शब्दः स्वेतरस्यार्थे स्वार्थस्याऽन्वयबोधने, तदपेक्षतयोः पूर्व्वा प्रकृतिः, प्रत्ययः परः। इति प्रकृतिप्रत्ययलक्षणं कृतम्। अत्र पूर्व्वत्वं बोधकशब्दविधानावधित्वमेव। वस्तुतः प्रकरोति स्वमर्थं बोधयति व्युत्पत्तिसत्त्वात् प्रकृतिशब्दो योगरूढ इति बोध्यम्। प्रत्ययस्तु प्रकृतिमधिकृत्य विधीयमानः स्वार्थबोधकः शब्दविशेषः, प्रत्याययति स्वार्थमिति प्रत्ययः, प्रत्ययः पर इति हरिवाक्येन परत्वेन विधीयमानत्वं प्रत्ययत्वमुक्तम्। परपदेनाऽवधित्वमात्रं, नत्विह पूर्व्वापरीभावः, एवञ्च प्रकृत्यन्तःपात्यविकार्ये विकरणागमादीनां प्रत्ययत्वमौपचारिकं परत्वमात्रं प्रत्ययत्वम्

## ३६। विंशत्यादेरेकत्वमनावृत्तौ।

[विंशत्यादेः (विंशति-आदि) ६।, एकत्वम् १।, अनावृत्तौ (न-आवृत्ति) ७।]

विंशत्यादेरनभ्यावृत्तौ संख्यायां संख्येये च एकवचनमेव स्यात्। संख्यायां विंशतिः पुरुषाणाम्, शतं स्त्रीणाम्; संख्येये—विंशतिः पुरुषाः, शतं स्त्रियः। आवृत्तौ तु—द्वे

बोध्यम्। स्वार्थिकाः प्रत्ययाः केचित् प्रकृत्यर्थानुवादिनः, ततश्च शैषरादौ—स्व (प्रत्यय), स्व प्रकृत्यन्यतरप्रत्यायकत्वं प्रत्ययानामुक्तम्। विकरणादयः पुनः सर्व्वथा निरर्थकाः तेषां द्योतकत्वाद्यनङ्गीकारात्, तदतिरेकेणाऽपि क्वदादौ धातुमात्रादेवार्थप्रतीतिदर्शनात्। उक्तञ्च वाक्यपदीये—"यत्र वाऽव्यभिचारेण तयोः शक्तिप्रकल्पनं। नियमस्तत्र नियमो नत्वेनं ग्र्यन्म्वादिष्विति"। यत्र ययोरव्यभिचारेणाऽन्वयव्यतिरेकाभ्यां नियमः अर्थप्रतीतिनियमस्तयोः प्रकृतिप्रत्ययोः शक्तिकल्पनम्। यत्र चैवं न नियमस्तत्र श्वादिषु न तथाः शक्तिकल्पनं नेत्यर्थः। सिद्धान्ते अवयवशक्त्यस्वीकारेण कृत्तद्धितादौ समुदायशक्तिस्वीकारात् निपातादीनां निर्व्विभक्तिकत्वपक्षे द्विविधैव प्रकृतिर्नामधातुभेदात्। अवयवशक्तिस्वीकारे तु तद्धितेषु नामादीनामिव निपातानामपि प्रकृतित्वमिति द्रष्टव्यम्। प्रत्ययोऽपि सिद्धान्ते द्विविध एव सुप्तिङ्भेदात्, अवयवशक्तिस्वीकारे तु कृत्तद्धितसनादिभेदेन नानाविध इत्यवधेयम्। पदमानन्तु प्रत्ययात् पूर्व्वं श्रूयते इति प्रकृतिः सुबाद्याः प्रत्ययाः पर इति प्रतीयन्ते विधीयन्ते इति प्रत्ययः, प्रकृत्यर्थः प्रत्ययार्थेनान्वीयते। इति यथा एकद्विबहुप्रकृतिरेकार्थं वक्ति, तथा एकवचनं सुबन्तमेकार्थं वक्ति, तमर्थं प्रकृतिप्रत्ययौ सह ब्रूतः, एवं द्विवचनेऽप्यपि ज्ञेयम् अतएव क्रमदीश्वरः एकत्वादित्वादौ प्रकृत्यर्थः प्रत्ययेनानूद्यते, इति पक्षेण प्रकृतिप्रत्ययौ प्रकृत्यर्थविशिष्टं प्रत्ययार्थं सह ब्रूत इत्यन्ये। ननु प्रत्ययार्थस्य वैशिष्ट्याभावे तत्प्रयोगस्य किमर्थोऽजनमित्याशङ्क्याह क्रमदीश्वरः केवलाप्रयोगित्वात्, आह्नो नापदं प्रयुञ्जीतेति भाष्यवचनात् केवलायाः प्रकृतेः प्रयोगाऽनर्हत्वात् प्रत्ययप्रयोगस्याऽवश्यकत्वमित्यर्थः।

विंशती नराणाम्, तिस्रो विंशतयः स्त्रीणाम्; संख्येये—द्वे विंशती नराः, तिस्रो विंशतयः स्त्रियः। अष्टादशपर्य्यन्ता च संख्या संख्येये वर्त्तते, न संख्याने, यदाह भाष्यकारः—"आदशभ्यः संख्या संख्येये वर्त्तते ततः परा संख्या संख्याने संख्येये-चे"ति। व्यभिचारश्च दृश्यते—लक्षाणां पञ्च लेभे वररुचिरिति कालिदासः। (१)

## ३७। जात्यर्थे वैकस्मिन् बहुवचनमसंख्या-प्रयोगे।

[जात्यर्थे (जाति-अर्थे) ७।, वा ०१।, एकस्मिन् ७।, बहुवचनम् १, असंख्याप्रयोगे ७।]

जात्यर्थे गम्ये एकस्मिन्नर्थे बहुवचनं वा स्यात्। गौरयं शुक्लः, गाव इमे शुक्लाः, व्रीहिः सम्पन्नोऽयं व्रीहयोऽमी सम्पन्नाः, असंख्याप्रयोग इति किम् एको गौः, एको यवः सम्पन्नः।

## ३८। अस्मदो द्वयोश्चाऽविशेषणात्।

[अस्मदः ५।, द्वयोः ७।, च ०१।, अ(न)विशेषणात् ५।]

अविद्यमानविशेषणादस्मद एकत्वे द्वित्वे बहुवचनं वा स्यात्। अहं ब्रवीमि, आवां ब्रूवः, वयं ब्रूमः। अविशेषणादिति किम्? कविरहं, आवां कवी।

---

(१) आदशभ्य इति अभिविधावाङ् अष्टादशपर्य्यन्ता संख्या संख्येये गुणीभूतविशेषणे वर्त्तते ततः उभयत्रैवेति विपर्ययो दृश्यते। लक्षाणि पञ्चेति भवितुमर्हति।

## ४० । युष्मदो गौरवे । [युष्मदः, ५।, गौरवे ७।]

युष्मद् एकत्वे द्वित्वे गौरवे बहुवचनं वा स्यात् । त्वं गुरुः, युवां गुरू=यूयं गुरवः ।

## ४१ । भे फल्गुनीप्रोष्ठपदाभ्यो द्वित्वे ।

[भे ७।, फल्गुनीप्रोष्ठपदाभ्यः ५।।।, द्वित्वे ७। ]

फल्गुनीभ्यां प्रोष्ठपदाभ्याञ्च नक्षत्रे द्वित्वे गम्ये बहुवचनं वा स्यात् । पूर्व्वे फल्गुन्यौ, पूर्व्वा फल्गुन्यः, पूर्व्वे प्रोष्ठपदे, पूर्व्वाः प्रोष्ठपदाः ।

## ४२ । एकादन्यार्थे ।

[एकात् ५।, अन्यार्थे (अन्य-अर्थे) ७। ]

बहुवचनं वा स्यात् । एको वदति, एके वदन्ति । नञः संख्यार्थे च । अनेके वदन्ति ।

## ४३ । दारादेर्नित्यम् ।

[दारादेः (दारा-आदि) ५।, नित्यम् ०१। ] (१)

एभ्यो नित्यम् बहुवचनं स्यात् । दाराः, आपः, वर्षाः, जलौकसः इत्यादि ।

---

(१) स्त्रियामपि दारादिषु पश्यति, पुंसि गृहाश्च । सुमनोऽप्सरोवर्षाजलौकसो वा । वामनवर्त्ती अमरः इत्येकवचनान्यनुमतम् । आदिशब्दादत्र बहुला अदया इत्यादयः इति प्रथमासप्तमिका ।

## ४४। पुष्यार्थपुनर्वसुभ्यां भे द्वन्द्वे द्विवचनं बहुत्वे।

[पुष्याऽर्थ.पुनर्वसुभ्याम् ५॥, भे ७।, द्वन्द्वे ७।, द्विवचनम् १।, बहुत्वे ७। ]

पुष्य एकः, स च तदर्थश्च, पुनर्व्वसू द्वौ, तेभ्यो नक्षत्रे द्वन्द्वे बहुत्वे प्राप्ते द्विवचनं स्यात्। उदितौ पुष्यपुनर्व्वसू, तिष्यपुनर्व्वसू, सिद्धपुनर्व्वसू। बहुत्व इति किम्? समाहारे इदम्—तिष्यपुनर्व्वसु। (२)

## ४५। तन्नोभयात्।

[तत् ०१।, न ०१।, उभयात् ५। ] (३)

तदिति द्विवचनं उभयशब्दान्नास्ति। उभयो मुनिः, उभये देवमनुष्याः।

## ४६। लुपि युक्तवल्लिङ्गसंख्ये।

[लुपि ७।, युक्तवत् ०१। लिङ्ग-संख्ये १॥ ]

लुपि लुबर्थे युक्तवत् प्रकृत्यर्थवत् लिङ्गवचने भवतः। वङ्गानां निवासो वङ्गा जनपदः, तेषां निवास (५।२।१३८) इत्यण् जनपदवरणादिभ्यो लुप् (५।२।७४१) पञ्चालाः, पुण्ड्राः,

---

(२) उभ एव द्विवचनपर्यायोऽस्य:, न तु उभय:।

(३) अयं पुनर्व्वसुः इयं विशाखा इत्यादयोऽपशब्दा अपि दृश्यन्ते।

कुरवः। हरीतक्यादिषु,(४) लिङ्गं न, संख्या—हरीतक्यः फलानि। खलतिकादिषु, संख्या न, लिङ्गम्—खलतिकस्य गिरेरदूरभवानि खलतिकं वनानि—अदूरभवश्चेत्यण् जनपद-वरणादिभ्यो लुप् (५।२।१४१) समासे चोत्तरपदस्य बहुवचन-विषयस्य युक्तवत्। मथुरपञ्चालाः, उत्तरपदस्येति किम्? पञ्चाल-मथुरे।

इति श्रीपद्मनाभदत्तकृतौ सुपद्मे व्याकरणे द्वितीयाध्यायस्य प्रथमः पादः।

---

(४) हरीतक्या लिङ्गं फलानीत्यस्य वचनं, खलतिकस्य वचनं, वनानीत्यस्य लिङ्गमिति ज्ञेयम्।

## कारकचक्रम् ।

पुरुषाः

| प्रथम (युष्मदस्मद्भ्यां भिन्ने नाम्नि वाच्ये) | | | मध्यम (युष्मदि वाच्ये) | | | उत्तमाः (अस्मदि वाच्ये) | | | अवस्थायां | कारकम् |
|---|---|---|---|---|---|---|---|---|---|---|
| एक. (संख्यैकत्व बोधकत्वे) | द्वि. (संख्याद्वित्व-बोधकत्वे) | बहु. (संख्याबहुत्व-बोधकत्वे) | एक. | द्वि. | बहु. | एक. | द्वि. | बहु. | | |
| सः, एषः, | तौ, एतौ | ते, एते | त्वं | युवां | यूयम् | अहं | आवां | वयम् | स्वातन्त्र्य (क्रिया-कर्तृत्वे वा (क्रियाकर्तृ) प्रयोजकत्वे | कर्तृत्वम् |
| यः, कः, | यौ, कौ | ये, के | | | | | | | | |
| भवान्, | भवन्तौ | भवन्तः | | | | | | | | |
| गौः, | गावौ | गावः | | | | | | | | |
| द्युः | द्यवौ | द्यवः | | | | | | | | |
| इत्यादि | इत्यादि | इत्यादि | | | | | | | | |
| तं | तौ | तान् | त्वां | युवां | युष्मान् | मां | आवां | अस्मान् | क्रियाव्याप्यत्वे | कर्मत्वम् |
| एतं | इत्यादि | एतान्, | | | | | | | | |
| यं, कं | | यान्, कान् | | | | | | | | |
| भवन्तं | | भवतः | | | | | | | | |
| गावं | | गाः | | | | | | | | |
| द्युवम् | | द्युवान् | | | | | | | | |

पुरुषाः

| प्रथम (युष्मदस्मद्भ्यां भिन्ने नामि वाच्ये) | | | मध्यम (युष्मदि वाच्ये) | | | उत्तमाः (अस्मदि वाच्ये) | | | अवस्थायां | कारकम् |
|---|---|---|---|---|---|---|---|---|---|---|
| एक. | द्वि. | बहु. | एक. | द्वि. | बहु. | एक. | द्वि. | बहु. | | |
| तेन, येन, | ताभ्यां | तैः | त्वया | युवाभ्याम् | युष्माभिः | मया | आवाभ्यां | अस्माभिः | क्रियासाधकतमत्वं | करणत्वम् |
| गवा | गोभ्यां | गोभिः | | | | | | | | |
| हरिणा | हरिभ्यां | हरिभिः | | | | | | | | |
| तस्मै, | ताभ्यां | तेभ्यः | तुभ्यं | युवाभ्यां | युष्मभ्यम् | मह्यं | आवाभ्यां | अस्मभ्य | प्रदानाभिसम्बध्यमानत्वं | सम्प्रदानत्वम् |
| गवे | गोभ्यां | गोभ्यः | | | | | | | | |
| हरये | हरिभ्यां | हरिभ्यः | | | | | | | | |
| तस्मात् | ताभ्यां | तेभ्यः | त्वत् | युवाभ्यां | युष्मत् | मत् | आवाभ्यां | अस्मत् | अवधित्वं | अपादानत्वम् |
| गोः | इत्यादि | इत्यादि | | | | | | | | |
| हरेः | | | | | | | | | | |
| तस्मिन् | तयोः | तेषु | त्वयि | युवयोः | युष्मासु | मयि | आवयोः | अस्मासु | आधारत्वं | अधिकरणत्वम् |
| गवि | गवोः | गोषु | | | | | | | | |
| हरौ | हर्योः | हरिषु | | | | | | | | |

# द्वितीयाध्याये

## द्वितीयपादः ।

## १ । अधातुविभक्त्यर्थवत् प्रातिपदिकम् ।

[अ, न, धातु विभक्ति ०१, अर्थवत् ०१, प्रातिपदिकम् १ । ] (१)

धातुविभक्तिवर्ज्जमर्थवच्छब्दरूपं, (यत्), तत्प्रातिपदिकसंज्ञं भवति । विप्रः, कर्त्ता, कुण्डं ; दाक्षिः, राजपुरुषः ; च, वा,

(१) धातवो भुवादयः, सुपः, तिङश्च विभक्तयः, धातुश्च विभक्तिश्चेति समाहारे द्वन्द्वः, ततः क्लीवैकवचनं धातुविभक्ति, ततो न धातुविभक्ति अधातुविभक्तीति पर्य्युदासेन नञा समासः, धातुविभक्तिभ्यामन्यदित्यर्थः, धातुविभक्तिभ्यामन्यत् यत् अर्थवत् (शब्द-रूपं) तत् प्रातिपदिकमित्यन्वयः, अर्थशब्दोऽत्राभिधेयार्थकः, तच्च अभिधेयं शब्दोच्चारणाद-नन्तरमेव प्रतीयमानं वस्तुमात्रं, यदुक्तं "शब्देनोच्चार्य्यमाणेन यद्वस्तु प्रतिपद्यते, तस्य शब्दस्य तद्वस्तु ज्ञायतामर्थसंज्ञयेति" प्राञ्चः । ननु लाघवार्थमर्थशब्दादिनुप्रत्ययेनार्थीति कथं न कृतमिति चेन्न अर्थिशब्दो हि याचक एव रूढः अर्थी प्रार्थक इति । अतो मतुप्प्रत्ययान्तमर्थवदिति गृहीतं अर्थः अभिधेयं विद्यतेऽस्य, यत्किञ्चिदर्थवच्छब्दरूपं प्रातिपदिकमिति द्योतयन्नाह अर्थवच्छब्दरूपमिति, तेनाऽनुकरणस्य स्वरूपमात्रार्थवत्त्वोऽपि प्रातिपदिकत्वं सिद्धं । अर्थस्तु चतुर्द्धा जातिगुणक्रियाद्रव्यरूपः, तथाच "शब्दैरेभिः प्रतीयन्ते जातिद्रव्यगुणक्रियाः । चातुर्व्विध्यादमीषान्तु शब्द उक्तश्चतुर्व्विधः" इति मीमांसकाः । तत्र जातिर्नाम पदार्थस्य सामान्यव्यवहारहेतुः कश्चिन्नित्यो धर्म्मः, यथा गोषु गोत्वं ; गुणश्च विशेषाधानहेतुः कश्चित् सिद्धो धर्म्मः, यथा शुक्लः, पूर्व्वापरीभूतावयवः साध्यो धर्म्मः क्रिया, यथा पाकः ; द्रव्यञ्च यदृच्छया सन्निवेशितोऽर्थविशेषः, यथा डित्थः ; अतएव गौः शुक्लश्चलो डित्थ इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिरिति महाभाष्यकारः । अर्थशब्दस्याभिधेयमात्रार्थकत्वात् शशविषाणा-दिकाल्पनिकस्वरूपेष्वपि न प्रातिपदिकसंज्ञाया अप्रसङ्गः स्यात् अभावानामप्यभिधेयत्वात्

वे, उच्चैः ; यदृच्छाशब्दस्यार्थवान्—डित्थः, डवित्थः अर्थवदिति किम्? वनमिति प्रत्येकमनर्थकं भवति—तेन 'न'-लोपो न स्यात्—समुदायेनादन्तमर्थवदेव, अधातु विभक्तीति किम्? लङ्-अहन्—'न'-लोपो न स्यात्; कुण्डे, त्रपुणी; क्लीवे प्रातिपदिकान्तस्य ह्रस्वो न स्यात्।

## २। सुबाद्याः प्रत्ययाः परे।

[सुबाद्याः (सुप् आद्य) १।३, प्रत्ययाः १।३, परे १।३] (१)

---

अतएव "एवं वन्ध्यासुतो याति खपुष्पकृतशेखरः। मृगतृष्णाम्भसि स्नातः शशशृङ्गधनुर्द्धरः" इत्यादि प्रयोगाः। प्रातिपदिकमित्यन्वर्थोऽयं शब्दः पदं पदं प्रतिपदमिति वीप्सार्थेऽव्ययीभावस्ततः प्रतिपदं गच्छतीति ठिकन् अतः पदैकदेशस्यैवायं संज्ञा, न समर्थपदसमूहस्य। भाष्यकारस्तु "कृत्तद्धितसमासाश्चे"ति वचनेन कृदन्ततद्धितान्तसमासान्तानामपि प्रातिपदिकत्वमाह, एतेन हि कृत्तद्धितान्तस्यैव प्रत्ययान्तस्य प्रातिपदिकसंज्ञा नान्यस्य, तथा समास एवार्थवतां पदसमुदायानां प्रातिपदिकसंज्ञा नान्येषामिति च नियमः कृतः। अर्थवदिति व्यपदेशाय वर्णानां मा भूदिति भाष्यकारः। अनर्थकस्य तु प्रातिपदिकसंज्ञायां प्रत्याख्यातव्यस्यार्थस्याभावात् समुदायादिव प्रतिवर्णं विभक्त्युत्पत्तिप्रसङ्ग इति कैयटः, नस्य लोपेऽपि (१।३।१०६) नलोपप्रसङ्गश्च। अहन् = हन + लङ्-दिप्, धातोः प्रातिपदिकत्वनिषेधात् नस्य लोप इत्यनेन 'न'-लोपो न स्यात्। कुण्डे कुण्ड + औ, औङः, शी नपुंसकाच्चेति शी + औ, कुण्ड + ई, कुण्डे, त्रपुणी त्रपु + औ। शी + औ, इकोऽचि विभक्तौ (२।१।५५) नुम्। अत्र शीभावस्य विभक्त्यादेशस्य विभक्तिरूपत्वात् प्रातिपदिकत्वाभावात् ह्रस्वो नपुंसके इत्यनेन (२।१।६२) न ह्रस्वः। प्रातिपदिकसंज्ञायदंशास्तु प्रातिपदिकादित्येव(२।२।३)मादयः।

(१) सुबिति प्रत्याहारः सु, औ, जस् इत्यादि; सुबाद्या इति सन्, काम्य, क्यच्, क्यङ्, णिच्, णिङ्, आय, इयङ् इत्यादि; लङादि—लट्, लिट्, लुट्, लोट्, लङ्,

सुप्, सनादि, लड़ादि, विकरण, कृत्, तद्धिताः प्रत्यय-संज्ञकाः प्रकृतेः परे भवन्तीति परिभाषिताः। कथं बहुत्वं ? सुपो बहुत्वं पूर्व्वे तु (५।४।१५८) विशेषवचनात्।

## ३। प्रातिपदिकात्। [प्रातिपदिकात् ५।]

अधिकारोऽयम्।

## ४। सु, औ, जस्, अम्, औट्, शस्, टा, भ्यां, भिस्, ङे, भ्यां, भ्यस्, ङसि, भ्यां, भ्यस्, ङस्, ओस्, आम्, ङि, ओस्, सुप्। [सु—सुप् ०१।]

एते स्वादयः प्रत्ययाः प्रातिपदिकात् परे भवन्ति। देवः, देवौ, देवा इत्यादि।

## ५। अर्थमात्र सम्बोधनयोःप्रथमा।

[अर्थमात्र-सम्बोधनयोः ७॥, प्रथमा ०१।] (१)

अर्थमात्रे=अव्यतिरिक्त प्रातिपदिकार्थे=सत्तामात्रे सम्बोधने च प्रथमा विभक्तिर्भवति। विप्रः, विप्रौ, विप्राः,—

---

तिङ्, लुङ्, लृङ्, लिङ् इत्यादि ; विकरण इति शप्, सिच्, कसु, चङ्, चण्, इण्, यक्, शप्, श्यन्, श्नु श, श्नम् चङ्, श्ना इत्यादि ; कृत्—तव्य, शानच्, क्वसु, कान, तव्य, अनीय इत्यादि ; तद्धिताः—अण्, ठक्, स्त्रीविहित ङी, चाप् प्रभृतयश्चेति बहवः। प्रतीयन्ते विधीयन्ते इति प्रत्ययाः, अतोऽन्ये आगमादेशा इति।

(१) स्वार्थो द्रव्यञ्च लिङ्गञ्च संख्या कर्मादिरेव च, अमी पञ्चैव लिङ्गार्थास्त्रयः केषाञ्चिदग्रिमाः। स्वार्थो विशेषणं, द्रव्यं विशेष्यम्, लिङ्गं पुंस्त्वादि, संख्या एकत्वादि।

## ६ । सम्बोधनैकवचनं सम्बुद्धिः ।

[सम्बोधनैकवचनं (सम्बोधन + एकवचन) १।, सम्बुद्धि १। ]

अस्यैकवचनं सम्बुद्धिरुच्यते । भानो इति ।

## ७ । अनुक्ते । [अनुक्ते (न-उक्त) ७। ]

अतोऽनभिहित इत्यधिकारः ।

## ८ । कर्म्मणि द्वितीया । [कर्म्मणि ७।, द्वितीया ०१। ] (१)

अनुक्ते कर्म्मणि द्वितीया विभक्तिर्भवति । तं, तौ, तान् ।
अनुक्त इति किम् ? हरी दृश्यताम् ।

## ९ । कालाध्वव्याप्त्यतिसंयोगे ।

[कालाध्वनोः (काल अध्वन्) ६॥, अतिसंयोगे ७। ] (२)

क्रियागुणद्रव्यैः साकल्येन सम्बन्धः अत्यन्तसंयोगः तत्र

(१) उक्तं अभिहितं, अभिधानञ्च प्रायेण तिङ्कृत्तद्धितसमासैर्भवति । तत्र तिङ्, कृत्, तद्धित, समासैरनुक्ते, अनभिहिते प्रातिपदिकार्थव्यतिरिक्तार्थान्विते कर्म्मणि प्रातिपदिकात् द्वितीया भवति । अनुक्ते तिङादिभिरवाच्यत्वात् द्वितीयादयो न भवन्ति, 'तत्र विभक्त्यधिकारेऽपीति' येन उक्ते कर्म्मणि प्रथमाविधानं सामान्यं, ततः तत्रापि तस्मिन् विशेषणस्थानापन्नो विहितः स्यादेव, हरी दृश्यतामित्यत्र कर्म्मणि द्वितीयाया एव प्राप्तिः स्यात्, अनुक्त इति कथनेन न तथा प्राप्तिरवकाशत्वात् ।

(२) अतिसंयोगः अभिव्याप्तिः, व्याप्ते तु पृथग्द्रव्याणामसंयोग एव द्वितीया भवति ।

कालाध्वभ्यां द्वितीया स्यात् । मासमधीते वेदं, वर्षं कल्याणी मासं गुडधानाः ; अध्वनः—क्रोशमधीते वेदं, योजनं कुटिला मही, क्रोशं पर्व्वतः । अतिसंयोग इति किम् ? मासस्य द्विरधीते, क्रोशस्यैकदेशे पर्व्वतः । यथान्तर्भूतक्रियान्तरं नास्ति तदर्थं वचनमिदं—कलिङ्गं वसतीत्यादि प्राकृतमेव कर्म्म ।

## १० । तृतीयाऽपवर्गे । [तृतीया ०१, अपवर्गे ७ ] (१)

फलप्राप्तौ क्रियापरिसमाप्तिरपवर्गस्तत्र कालाध्वभ्यामतिसंयोगे तृतीया स्यात् । मासेनाधीतो मन्त्रः, क्रोशेनाधीतो वेदः ; अपवर्ग इति किम् ? मासमधीतोऽनुवाको न चानेन गृहीत इति ।

---

ननु कर्म्मसंज्ञाया एव कर्म्मणि द्वितीयेति द्वितीया सिद्धा, किमनेनेत्याह यथान्तर्भूतक्रियान्तरमिति । कालाध्वभ्यां द्वितीया विहिता देशभावाभ्यां तत्र भवेदिति मुग्धबोधः । यद्वा पदिकराह कलिङ्गं वसतीत्यादिषु प्राकृतं क्रियाव्याप्येति सूत्रविहितं कर्म्मैव, अन्तर्भूतक्रियान्तरत्वात् । मासमधीते इत्यत्र क्रियायाः संयोगः सकलं मासमित्यर्थः, एवं वर्षं कल्याणीति कल्याणगुणेन संयोगः, मासं गुडधाना इति द्रव्येण । योजनं मह्येकत्र मार्गेणेति पदार्थसम्बन्धः, कुटिलेति कौटिल्यं गुणः, क्रोशं पर्व्वत इति द्रव्यं । मासस्य द्विरधीते मासस्य मध्ये वारद्वयमधीते इत्यर्थः ।

(१) फलप्राप्तिपूर्व्वकसमाप्तिरपवर्ग इति केचित्, मासेनाधीत मासाभ्यन्तरेण समाप्त इत्यर्थः । मासेनाधीतमपि नाधिगत कश्चन इत्यत्र कारणमेव ।

## ११ । सप्तमीपञ्चम्यावन्तरे ।

[सप्तमी, पञ्चम्यौ १।२, अन्तरे ७।१] (१)

व्यवधानवृत्तिभ्यां कालाध्वभ्यामेते स्याताम् । अद्य भोक्ता, द्व्यहे भोक्ता, द्व्यहाद्भोक्ता, इहस्थोऽयं धन्वी क्रोशे लक्ष्यं विध्यति, क्रोशाल्लक्ष्यं विध्यति ।

## १२ । पर्य्युभयसर्व्वाभितसा । (२)

[परि,-उभय, सर्व्व, अभि, तसा ३।१]

पर्य्यादिभिस्तसन्तैर्युक्ताद्द्वितीया स्यात् । परितो ग्रामं, उभयतो ग्रामं, सर्व्वतो ग्रामं, अभितो ग्रामं ।

---

(१) यतश्चाध्वकालनिर्म्माणं तत्र पञ्चमी, तद्युक्तादध्वनः प्रथमासप्तम्यौ, कालात् सप्तमी च वक्तव्या इति वार्त्तिकम्—यतो यदवधित्वेनाध्वनः कालस्य च निर्म्माणं परिच्छेदनम् (देशकालयोः परिच्छेदावधिभूतवाचकात्) पञ्चमी स्यादित्यर्थः, तद्युक्तादध्वनः प्रथमासप्तम्यौ, कालात्तु सप्तमी यथा वनात् ग्रामो योजनं योजने वा, कार्त्तिक्या आग्रहायणी मासे ।

(२) परितश्च, उभयतश्च, सर्व्वतश्च अभितश्च पर्य्युभयसर्व्वाभितसः, तैर्युक्तात्, इत्यर्थः तसा प्रत्येकं सम्बध्यते इत्याह पर्य्यादिभिस्तसन्तैरिति, परित इति सर्व्वतोऽर्थे अभित इत्युभयतोऽर्थे, आभिमुख्यार्थे च अभितः, परितोऽव्ययमिति निपातः, समन्तादर्थेऽभित इत्याभिमुख्यादौ, समन्ततस्तु परितः सर्व्वतो विष्वगित्यपि, समीपोभयतः शीघ्रसाकल्याभिमुख्येऽभित इत्यमरः । पर्य्यादिभिः किं मध्यतो ग्रामस्य ; सर्व्वत्रापवादोऽयं विधिः ।

## १२ । समया, निकषा, ऽन्तरा, ऽन्तरेण, हा, धिक्, अधोऽधो, ऽध्यध्युपर्युपरि (उपरि उपरि)भिश्च ।

[समया—उपरिभिः १२] (१)

एभिर्युक्ताद्द्वितीया स्यात् । समया ग्रामं, निकषा ग्रामं, अन्तरा त्वाञ्च माञ्च कमण्डलुः—तव मम मध्ये इत्यर्थः,—अन्तरेण पुरुषकारं किञ्चिन्न लभ्यते, हा देवदत्तं, धिक् त्वां, अधोऽधो ग्रामं, अध्यधि ग्रामं, उपर्युपरि ग्रामं ; न सम्बुद्धौ—हा राम, धिक् देवदत्त ;—चकारात् यावच्चैत्रं प्रीतं, बुभुक्षितं न प्रतिभाति किञ्चित्,अभि रामं, राधिकामधिवचनं जातम् ।

(१) विभक्त्यर्थात् समयादयोऽव्यया एव गृह्यन्ते । समया निकषाशब्दौ समीपवचनाविति दुर्गादासः । समयान्तिकमध्ययोः, अन्तरे अन्तरा, अन्तरेण च मध्ये स्युरित्यमरः । अन्तरेण शब्दो विनार्थः । अधोऽध इत्यादि शब्दानां सामीप्य एव द्वित्व विधानात् तदर्थ एव योगे द्वितीया, तेन उपर्युपरि बुद्धीनां चरन्ति राजपुरुषाः, इत्यादौ न द्वितीयेति बोध्यम् । द्विरुक्तानामेतेषामिति विद्वांसः । अधोऽधोऽध्यध्युपर्युपरि आम्रेडितस्यैव ग्रहणम् । क्रमदीश्वरस्तु अनुपर्यधिषीनाम् उपर्युपरि बुद्धीनामिति । धिगि-त्यादिपदैरित्यादिषु "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" । यावता चर्येति च, यावता पश्यामीत्यपि पठन्ति । आमादयावदर्थं पीडा, यावच्चैत्राच्चीतम् । आरात्शब्द योगेऽपि द्वितीया यथा "अवरत्वीथेमाराद्विति अभिधानमकुन्नयम् ; अभिशब्दयोगे राधिकामधि वचनजातमिति लघर्देव. ।

## १४ । उपेन हीने । [उपेन ३।, हीने ७।] (१)

हीने द्योत्ये उपेन युक्तात् द्वितीया भवति । उप रामं धन्विनः रामाद्धीना इत्यर्थः ।

## १५ । लक्षणवीप्सेत्थंभूताख्यानभागे प्रति-परि-अनुना सहहेतुहीने च । (२)

[लक्षण, वीप्सेत्थंभूताख्यान(वीप्सा, इत्थंभूत-आख्यान),भागे ७।, प्रति, परिभ्यां ३॥, अनुना ३, सह,हेतु,हीने ७। च ०१। ]

(१) उपादीनां येष्वर्थेषु कर्मप्रवचनीयसंज्ञा तेष्वर्थेषु द्वितीया, कर्म क्रियां प्रोक्तवन्त इति कर्मप्रवचनीयाः, कर्तरि भूते अनीयप्रत्ययः, ते न सम्प्रति क्रियां न कथयन्ति, नापि द्योतयन्ति, किन्तु क्रियानिरूपितसम्बन्धविशेषं द्योतयन्ति यथोक्तं हरिणा –

क्रियाया द्योतको नायं सम्बन्धस्य न वाचकः ।

नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदकः ॥ इति

एतदेव विवृणोति हीनद्योत्य इत्यादिना—हीनशब्दो न्यूनार्थः, स चोत्कृष्टापेक्षः, तेन हीनोत्कृष्टसम्बन्धे गम्ये इत्येवं परिहाय हीने द्योत्य इति । यदुक्तं तद्विवक्षाभिप्रायेण, तथापि हीनत्वं विशेषणं उत्कृष्टत्वं विशेष्यं, विशेष्यविशेषणभावसम्बन्धमनयोरुपशब्दो द्योतयति, कथावान् अति उत्कृष्टेनैवास्य योगः विशेष्यत्वेन प्राधान्यात् । उपोऽधिके चेति (१।४।८७) पाणिनीयम्, अधिके हीने च द्योत्ये उपेत्यव्ययं प्राक्संज्ञः (कर्मप्रवचनीयसंज्ञः) स्यात्, अधिके (अधिकार्थे, तत्र) सप्तमी वक्ष्यते (हीने द्वितीयेति) सिद्धान्तकौमुदी ।

(२) लक्षणशब्दं भावाभिधेयहेतुचिह्नविशेषोद्भविषयः, युगपद्व्याप्तुमिच्छा वीप्सा, क्रियागुणद्रव्यैर्युगपत् प्रयोक्तुमिच्छेत्यर्थः, द्विर्वचनम् तद्द्योतकं तदर्थस्य तद्रूपस्या-

चिह्नादौ गम्ये प्रत्यादियुक्ताद्द्वितीया स्यात्। वृक्षं प्रति विद्योतते विद्युत्, वृक्षं परि, वृक्षमनु;—युगपद्व्याप्तुमिच्छा वीप्सा गृहं गृहं प्रति गीतं, गृहं गृहं परि, गृहं गृहमनु, किञ्चित्प्रकारापत्तिरित्थंभूताख्यानं मातरं प्रति साधुः, मातरं परि, मातरमनु, भागे यस्मां प्रति स्यात्, यस्मां परि, यस्मामनु, अनुना सह,हेतु,हीने च गङ्गामनु वसिता पुरी तया सह बद्धेत्यर्थः, वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः, हेतौ—कन्यामनु शोकः, हीने अर्जुनमनु योद्धारः ततो हीना इत्यर्थः।

## १६। अभिना चिषु लक्षणादिषु।

[अभिना ३।, चिषु ७॥, लक्षणादिषु (लक्षण-आदि) ७॥]

लक्षणवीप्सेत्थंभूताख्यानेऽभिना युक्ताद्द्वितीया स्यात्। वृक्षमभि विद्योतते विद्युत्, वृक्षं वृक्षमभि सिञ्चति, मातरमभि

---

भावान्, इत्थंभूत. किञ्चित्प्रकारं प्राप्तः स आख्यायतेऽनेनेति इत्थंभूताख्यानं प्रकारविशेषनिरूपणं, लौकिकमातापुत्रभावः, इह भावनक्रियाजनितः, लोकाचारजनितो वा स्वस्वामिलक्षणः सम्बन्धः, भावस्वामिप्रत्यादिभिर्युक्तो भवति। एतेषु चतुर्ष्वर्थेषु गम्येषु प्रतिपरिभ्यामनुना च युक्ताद्द्वितीया स्यात्, सह,हेतु,हीनेषु त्रिष्वर्थेषु च केवलेनानुना युक्ताद्द्वितीया स्यात् इति योगविभागः, एकसूत्रीकरणं सुखोच्चारणार्थम् वस्तुतस्तु सूत्रद्वयकरणमुचितमासीत्। गङ्गामनु वसितेत्यत्र अनुवसितेति पदं अन्वयाभ्यां परस्य विपूर्वकस्य इत्यस्य क्तप्रत्यये रूपम्। अत्र कथमवोपसर्गस्याकारलोप इति जिज्ञासायामाह वष्टि भागुरिरिति भागुरिनामा कविमुनिरवाप्योः (अव अपि) उपसर्गयोरकारलोपं वष्टि कामयते। * कन्यामनु शोक इत्यत्र हेत्वर्थतृतीया द्वितीयया बाधिता, यतो शोको निष्पन्नो भवति तस्माद्द्वितीया, अन्यत्र हीनार्थविषय इति बुधः।

साधुः; त्रिष्विति किम्? भागे यच्चामभि स्यात्—अद्वितीयार्थात् षत्वञ्च। (१)

## १७। कर्त्तृकरणयोस्तृतीया।

[कर्त्तृ करणयोः ७॥, तृतीया ०१।]

अनुक्ते कर्त्तरि करणे च तृतीया स्यात्। विप्रेण पच्यते काष्ठैः। (२)

## १८। सहार्थेनाप्रधाने। (३)

[सहार्थेन (सह अर्थे) ३।, अ(न)प्रधाने ७।]

सहार्थेन युक्तात्तृतीया स्यात्, पुत्रेण सहागतः पिता, पुत्रेण सार्द्धं वन्धुरः, पुत्रेण समं गोमान्, पितुरत्र क्रिया-गुण-

---

(१) प्रादुरुपसर्गाभ्यामस्तेर्यचोरित्यनेन षत्वम्। पाणिनीयमते पूजार्थे सुयुक्ताद्द्वितीया भवति, सु सिक्तं, सु स्तुतं, अनुपसर्गत्वान्न षत्वम्। अतिक्रमणार्थेऽतिना युक्तात् द्वितीया स्यात्, अति देवान् कृष्णः।

(२) पच्यत इति कर्मणि प्रयोगः, भावकर्मणोः (३।१।४।३) इति तङ्। पाचयत्योदनं देवदत्तेन यज्ञदत्त इति प्रयोज्यकर्त्तुरुदाहरणम्।

(३) अप्रधाने अप्रधानेऽर्थे वर्त्तमानात् सहार्थयुक्तात् तृतीया स्यात्, सहार्थस्तु समभिव्याहृत-तत्तत्क्रियासमानकालीनत्वं, सहार्थशब्दाश्च साकं सार्द्धं समं सह प्रभृतयः। क्रिया, गुण, द्रव्यैः यस्य सम्बन्धः साक्षात् प्रतिपाद्यते तत् प्रधानं, यस्य तु न तथा तद-

द्रव्य-सम्बन्धीयोऽर्थः सहार्थेनोच्यते पुत्रस्य प्रतीयमानत्वा-द्‌प्राधान्यम्। गम्ये च वृद्धो यूना।

## १९। येनाङ्गविकारः।

[येन ३।, अङ्ग ६।, विकारः १।] (१)

येनेति सम्बन्धिसम्बन्धादङ्गमाक्षिप्यते; येनाङ्गेनाङ्गी विकृतो लक्ष्यते ततस्तृतीया स्यात्। अक्ष्णा काणः, पृष्ठेन कुब्जः।

## २०। चिह्नप्रकृत्यादिभ्यः।

[चिह्न,-प्रकृति आदिभ्यः ५।] (२)

चिह्नार्थात् प्रकृत्यादेश्च तृतीया स्यात्। अपि भवान् कम-

प्रधानम्. साक्षादुभयोः क्रियासम्बन्धाभावे हि पित्रा सहागत इति प्रयुक्तं, अन्यथा "सह तौ गततां धर्मा निति वत् पितृपुत्रौ सहागताविस्येवं स्यात्। पुत्रेण सहागतः पिते-त्यत्र पुत्रकर्तृकागमनसमानकालीनागमनकर्त्ताभिन्नः पितेति बोधः। पितुश्च क्रिया-गुणद्रव्यसम्बन्धौ, क्रियादिभिर्विद्यमानसम्बन्धयुक्तः पुत्रस्त्वर्थेन सहार्थेनोच्यते, तेन तस्य क्रियाद्रव्ययोः प्रतीयमानत्वात् तस्याऽप्रधानमिति भावः। गम्ये च—यत्र साक्षात् सहार्थयोगो नास्ति तत्र सहार्थस्य गम्यमानत्वात् तृतीया स्यात्। अप्रधाने इति किम्? शिष्येण सहोपाध्यायस्य गौः, यद्यपि उपाध्यायस्य गां प्रति विशेषणत्वेनाप्राधान्यं तथापि शिष्यं प्रति प्राधान्यमिति न तृतीया।

(१) ननु कथमङ्गेन विकृतोऽङ्गी विकृतो भण्यते? उच्यते, अवयवधर्मस्य समुदायेऽध्यारोपात् येनेति करणे तृतीया, सम्बन्धिशब्दः सम्बन्धिनमाक्षिपतीति न्यायात् येनेति सर्वनाम्ना प्रकृत्यर्थभूतोऽवयवो गृह्यते। अक्ष्णा काण इत्यादौ अक्षिप्रयुक्तकाणत्ववानिति बोधः।

(२) चिह्नं लक्षणं, प्रकृतिः स्वभाव आदिर्येषां ते प्रकृत्यादयः, चिह्नञ्च प्रकृत्यादयश्च

एड्लुना छात्रमद्राक्षीत्? शिखया परिव्राजकमपश्यत्? प्रकृत्यादेः—प्रकृत्याभिरूपः, मुखेन त्रिलोचनः, गोत्रेण गार्ग्यः, प्रायेण याज्ञिकः, समेन धावति, विषमेण धावति, द्विद्रोणेन धान्यं विक्रीणीते, पञ्चकेन पशुं विक्रीणीते।

## २१। संज्ञः कर्म्मणि वा।

[संज्ञः ६।, कर्म्मणि ७।, वा ०।।] (२)

संजानीतेः कर्म्मणि तृतीया वा स्यात्। पित्रा संजानीते, पितरं वा; संज्ञ इति किम्? स्वरेण पुत्रं जानाति।

लभ्यः, प्रकृतिश्च यावदाश्रयभावी धर्म्म इति शब्दरत्नम्। प्रकृत्या चारुरित्यत्र प्रकृत्यभिन्न-चारुत्ववानिति बोधः। स बाल आसीत् वपुषा चतुर्भुजः मुखेन पूर्णेन्दुमुखस्त्रिलोचन इति प्रकृत्याद्युदाहरणानि, प्रायेण याज्ञिक इत्यत्र प्रायशब्दस्य सम्भावनारूपोऽर्थः। एवं स्वरूपेण प्रियंवदः, जात्या ब्राह्मणः, नाम्ना सुतीक्ष्ण इत्युदाहरणान्तराणि।

(२) संपूर्व्वकात् ज्ञाधातोः क्विप्, आगमानित्यत्वात्लोपः (१।१।१४४), संप्रतिभ्या-मनाध्याने (१।३।८१) इत्यात्मनेपदम्, संपूर्व्वोऽपि ज्ञानार्थः, यदा तु स्मरणार्थस्तदा कर्म्मत्वं, स्मरणार्थदयेशां कर्म्मणीति (२।३।५०) षष्ठी, तदभावेऽनेन तृतीया च। प्रियस्य, प्रियेण, प्रियं वा, संजानाति। क्वचित्तु भाष्यवार्त्तिकयोरपि षष्ठीव—विप्रतिषेधे परं कार्य्यमिति न्यायात् यथा मातुः संजानाति। संजानीते—सम् + ज्ञा + लट्-ते, ज्ञाजनोर्जा इति आदेशः (७।३।७९), ईश्नाभ्यस्तयोरातः (६।४।११३)।

## २२ । हेतोः । [हेतोः ५।१ ] (१)

फलसाधनयोग्यपदार्थो हेतुस्तस्मात् तृतीया स्यात् । धनेन कुलं, विद्यया यशः, अन्नेन वसतिः; हेत्वधीनः कर्त्ता, कर्त्रधीनं करणमिति हेतुकरणयोर्भेदः ।

## २३ । ऋणादकर्त्तुः पञ्चमी ।

[ऋणात् ५।१, अकर्त्तुः ५।१, पञ्चमी १।१ ] (२)

---

(१) फलं कार्य्यं, तस्य साधनं निष्पत्तिः, तस्य योग्यः (योगमर्हतीति योग्यः, कार्य्याभिव्यक्तिं जनयतीत्यर्थः) यः पदार्थः, स तथा अनिष्पादयन्नपि फलं योग्यतामात्रेण जनयतीति प्रयोक्तुं योग्यमित्युक्तं, यथा विद्यया यशः । अन्वयव्यतिरेकाभ्यां कार्य्यप्रकाशकः हेतुः, यथा धूमवत्त्वाद्वह्निमान् पर्व्वतः, अथ धनेन कुलं भवतीत्युक्ते कथं तत्तथा भवतीत्यत आह हेत्वधीनः कर्त्तेति । धनाधीनं कुलमित्यर्थः, कर्त्रधीनं करणं—दानेन गुणातिशयः, इत्यत्र दायकाधीनं दानमित्यर्थः । हेतुकरणयोर्भेदः विशेषः । हेतुत्वं नाम क्रियाजनकव्यापारवत्त्वे सति प्रयोजकत्वं, यथोक्तं हरिणा—"अनाश्रिते तु व्यापारे कारणं हेतुरिष्यते, द्रव्यादिविषयो हेतुः कारणं नियतक्रियम्" इति । द्रव्यादिकाधारः निर्व्यापारसाधारणश्च हेतुत्वं, करणत्वन्तु क्रियामात्रविषयं व्यापारनियतञ्चेति (सिद्धान्तकौमुदी), गम्यमानापि क्रिया विभक्तौ प्रयोजिका । अलं श्रमेण, श्रमेण साध्यं नास्तीत्यर्थः, इह साधनक्रियां प्रति श्रमः करणम् । शतेन शतेन वत्सान् पाययसि पयः, शतेन परिच्छिद्येत्यर्थः । अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया, दास्या संयच्छते कामुकः, धर्म्मे तु भार्यायै संयच्छति ।

(२) उत्तमर्णाद्धमर्णेन गृहीतं धनमृणमुच्यते, स चेद्धेतुः कस्यचित् तत पञ्चमी स्यादिति । शतेन बन्धितः इत्यत्र शतस्य कर्तृत्वं व्याख्येयम् । श्रीपतिमते विवक्षितविषयहेतौ विभाषा न यथाऽऽलस्यं विभवाः स्युरिति व्याहारकर्मणीरिति ।

ऋणाद्धेतोः पञ्चमी स्यात्। शताद्बद्धः, अकर्त्तुरिति किम्? शतेन प्रयोजकेन बन्धितः।

## २४। गुणादनद्याापो वा।

[गुणात् ५।, अनद्याापः (अ(न), नदी, आप्) ५।, वा ०१। ] (१)

गुणाद्धेतोः पञ्चमी वा स्यात्। जाड्याद्बद्धः, जाड्येन बद्धः; धूमादग्निः, धूमेनाग्निः; उपलब्धेः सन्, उपलब्ध्या सन्। अनद्याप इति किम्? मैत्र्या साधुः, प्रज्ञया धीरः।

## २५। षष्ठी हेतुप्रयोगे।

[षष्ठी ०१।, हेतु-प्रयोगे ७। ] (२)

हेतुशब्दप्रयोगे षष्ठी स्यात्। अन्नस्य हेतोर्व्वसति, अल्पस्य हेतोर्बहु हातुमिच्छन्।

---

(१) पराश्रितो गुणः; धूमस्याग्न्याश्रितत्वाद्गुणत्वम्, एवं योग्यानां गच्छतेऽर्थाना-मभावोऽनुपलब्धितः। हेत्वर्थे पञ्चमी विद्याद्भयं व्याघ्रमगणितः॥ एवञ्चाभिपतितुः-मना लघुत्वमितीत्यादीनि स्त्रियामप्युदाहरणानि सन्ति। गुणादिति किम्? धनेन कुलम्। एवं हरिण दाक्षिण्य धार्म्यं लुनातीत्यत्र कृपास्य हेतुत्वेऽपि गुणत्वाभावान्न तत्र पञ्चमी।

(२) हेतुशब्दयोगे विधीयमाना पर्य्यायशब्दयोगे न स्यात्, तत्प्रयोग एव स्यादित्यर्थः; पुरुषोत्तमस्तु यत्र हेतुशब्देन सह समासस्य समुदायादेव षष्ठी, यथा बाधकोषहेतोर्व्यावृत्ते। हेतुप्रयोग इति किम्? निमित्तैर्बहुभिर्ज्ञातम्।

## २६। सर्व्वाः सर्व्वनाम्नो हेत्वर्थैः।

[सर्व्वा १॥, सर्व्वनाम्न ५।, हेत्वर्थैः (हेतु अर्थ) ३॥] (१)

हेत्वर्थशब्दैर्योगे सर्व्वनाम्नः सर्व्वा विभक्तयो भवन्ति ; हेत्वर्थस्य च विशेषणविशेष्यत्वात्। को हेतुरागमनं तव? कं हेतुमागतः, केन हेतुना, कस्मै हेतवे, कस्माद्धेतोः, कस्मिन् हेतौ ; एवं निमित्तकारणप्रयोजनानाञ्च,—किं निमित्तं, केन निमित्तेन, के कारणे, द्वयोः कारणयोः, भवतस्तु कारणेषु सोढं, किं प्रयोजनमित्यादि।

## २७। सम्प्रदाने चतुर्थी। [सम्प्रदाने ७, चतुर्थी १।]

सम्प्रदाने चतुर्थी स्यात्, प्रातिपदिकात्। विप्राय गां ददाति, नारदाय रोचते, पुष्पेभ्यः स्पृहयति।

## २८। तादर्थ्ये। [तादर्थ्ये ७।] (१)

तस्मै इदं तदर्थं, तदर्थस्य भावः तादर्थ्यं, तदर्थभावे गम्ये

---

(१) सर्व्वनाम्नो हेत्वादिना प्रथमा तृतीया पञ्चमी षष्ठ्य इति श्रीपतिः, हेतुकारण निमित्तं हेत्वादि। वार्त्तिककारमतानुयायिनां मते सर्व्वनाम्नो निमित्तकारणहेतुभिस्तृतीया पञ्चमी षष्ठ्यः, सर्व्वनाम्नो हेत्वर्थे चादितीयेति वर्द्धमानः. भाष्ये त्विह सर्व्वाऽप्युदाहृताः विभक्तयः। सर्व्वं हेत्वर्थविधिरयमित्यस्मिं असर्व्वनाम्नः प्रथमाद्वितीये न स्त इति भट्टोजिदीक्षितः।

(१) मुख्यम् एव तादर्थ्यं स चोपकार्य्योपकारकभाव एव, यदा तु तात्पर्य्यस्य सम्बन्धवन्मात्रं तदा षष्ठी, सम्बन्धस्य विवक्षितेऽपि षष्ठीविशेषणपदादेव चतुर्थी बोध्या न तु विभ-

चतुर्थी स्यात्। यूपाय दारु, अश्वाय घासः, रन्धनाय स्थाली, कुण्डलाय हिरण्यं, एधेभ्यो व्रजति, भूतये धावति, उच्चाराय कल्पते माषः, वाताय कपिला विद्युत्, वृष्टये चोन्मुखी विद्युत्, आतपाय लोहिनी विद्युत्, युद्धाय सन्नह्यते भटः, आह्वाय गमयते, पत्ये शेते। गत्यर्थानाञ्च तादर्थ्ये परिस्पन्दनगतौ। ग्रामाय गच्छति, रणाय प्रस्थितः, ग्रामाय गन्ता, उत्पथेन पथे गच्छति। नाऽपरिस्पन्दनगतौ—मनसा पाटलिपुत्रं गच्छति, क्व गच्छसीत्याधारविवक्षायां। तादर्थ्य इति किम्? वनं याति, पन्थानं गच्छति। चान्द्रे तादर्थ्ये सर्व्वमिदमुक्तम्।

---

स्यात्, तस्य कर्म्मकरणादिभावया बाध्यत्वात्, अश्वाय इत्यत्र अश्वशब्देन तदभिलक्ष्यते, एधशब्देन एधानयनम्, एधानाहर्त्तुमित्यर्थः, भूतिशब्देन तत्प्राप्तिरेवमन्यत्रापि ज्ञेयम्। क्लृपि सम्पद्यमाने चेति वार्त्तिकम्। कृप्यर्थधातुप्रयोगे सम्पद्यमाने कर्त्तरि तादर्थ्यस्य विद्यमानत्वात्, तथाहि स उच्चाराय कल्पते, स उच्चारार्थो भवत्येव। वाताय कपिला विद्युदित्यादौ उत्पाते ज्ञापिते चेति वार्त्तिकानुसरणं कर्त्तव्यम्। उत्पातो नामाकस्मिक-महाभूतादिविकारः, विद्युतो वातार्थत्वमुक्तं यथा "पीता वधाय विज्ञेया दुर्भिक्षाय तथा सिता। वाताय कपिला विद्युदातपायातिलोहिनीति, अत्र ज्ञाप्यज्ञापकसम्बन्धरूप-तादर्थ्ये। क्रियायोगे चतुर्थी निरुक्तेत्यत आह युद्धाय सन्नह्यते, युद्धार्थं सन्नहनं करोतीत्यर्थः।

क्रियार्थोपपदस्य च कर्म्मणि स्थानिनः (२।३।१४), क्रियार्थो क्रिया उपपदं यस्य क्रियाफलकक्रियावाचकमुपपदं यस्येत्यर्थः, एवंविधस्याप्रयुज्यमानस्य तुमुन. कर्म्मणि चतुर्थी स्यादिति यत् पाणिनीयसूत्रं, फलेभ्यो याति फलान्याहर्त्तुं यातीत्युदाहरणकमस्ति, तस्यापि तादर्थ्यान्तर्गतत्वं। तुमर्थाच्च भाववचनात् (२।३।१५) इति यत् सूत्रं, यागाय याति यष्टुं यातीत्युदाहरणकमस्ति, तस्यापि तादर्थ्यान्तर्गतत्वम्।

## २९। शक्तार्थ, हित, नमः, स्वस्ति, स्वाहा, स्वधा, वषट्, योगे। [शक्तार्थ—योगे ७।]

एभिर्योगे चतुर्थी स्यात्। शक्तो मल्लो मल्लाय, अलं मल्लो मल्लाय, पर्य्याप्तः प्रभुः*, समर्थश्च शक्तार्थाः; हिताद्यैः—रोगिणे हितमौषधं, गवे हितो धूमः, नमः शिवाय, नमश्चकार देवेभ्यः, कथं मुनित्रयं नमस्कृत्य†—नमसः समासे कृञ्परत्वेन क्रियात्मकत्वात्, स्वस्ति‡ प्रजाभ्यः, स्वाहा अग्नये, स्वधा पितृभ्यः, वषड़िन्द्राय।

## ३०। मन्यकर्म्मण्यवज्ञार्थादनावादेर्व्वा।

[मन्यकर्म्मणि ७।, अवज्ञार्थात् ५।, अनावादेः (अ(न)नौ-आदि) ५।, वा ०१।]

मन्यतेः कर्म्मणि अवज्ञार्थाच्चतुर्थी स्यात्। न त्वा तृणाय मन्ये, न त्वा तृणं मन्ये, न त्वा शुने मन्ये, न त्वा श्वानं मन्ये। श्यना§ निर्द्देशः किम्? न त्वा तृणं मन्वे। अवज्ञार्थादिति किम्? अश्मानं दृषदं मन्ये। अनावादेरिति किम्? न त्वा नावं मन्ये। नौ, अन्न, काक, शुक, शृगालाः नावाद्याः।

---

* प्रभ्वादियोगे षष्ठ्यपीति सिद्धान्तकौमुदी, ततश्च प्रभुर्बुभूषुर्भुवनत्रयस्येति सिद्धम्।

† स्वयम्भुवे नमस्कृत्येत्यत्र स्वयम्भुवमनुकूलयितुं नमस्कृत्येति क्रियार्थोपपदाच्चतुर्थी।

‡ आशिषि च चतुर्थ्येव, स्वस्ति गोभ्यो भूयादिति, न तु गवाम्।

§ श्यना निर्द्देशात् दिवादिरेव गृहीतः, नतन्वादिगणीयः।

## ३१ । अपादाने पञ्चमी । [अपादाने ७।, पञ्चमी ०१।]

अपादानकारके पञ्चमी विभक्तिर्भवति । ग्रामादागच्छति, अध्ययनात्पराजयते । यब्लोपे कर्म्माधिकरणयोः ।* प्रासादमारुह्येति प्रसादात् प्रेचते, आसने उपविश्येति आसनात् प्रेचते । प्रश्नाख्यानयोः । कुतो भवान् ? पाटलिपुत्रात् । यतः कालाध्वनोर्म्मानं, काले सप्तमी, अध्वनः प्रथमा सप्तमी च । फाल्गुण्याश्चैत्रमासे, चम्पातः सोमतीर्थं पञ्चयोजनानि पञ्चयोजनेषु वा ।

## ३२ । सीमाभिविध्योराङ्योगे ।

[सीमाभिविध्योः (सीमा-अभिविधि) ७।, आङ्योगे ७। ]

अनयोराङ्योगे पञ्चमी स्यात् । अपत्रिगर्त्तेभ्यो वृष्टो देवः, परि परित्रिगर्त्तेभ्यो वृष्टो देवः, तान् वर्ज्जयित्वा इत्यर्थः—अत्र वर्ज्जने द्वित्वम् ।

## ३३ । प्रतिनिधि-प्रतिदानयोः प्रतिना ।

[प्रतिनिधि-प्रतिदानयोः ७॥, प्रतिना ३। ]

सदृशप्रत्यर्पणयोः प्रतिना युक्तात् पञ्चमी स्यात् । अभिमन्युरर्ज्जुनतः प्रति, माषानस्मै तिलेभ्यः प्रतियच्छति ।

* एवं श्वशुराज्जिह्रे ति, श्वशुरं वीक्ष्येत्यर्थः

## ३४ । अन्यारादितरर्त्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते । (?)

**३४ । अन्यार्थारादाञ्चाहिवहिर्दिक्शब्दैः ऋते द्वितीया वा ।**

[अन्यार्थ—शब्दैः (अन्यार्थ, आरात्, आच्, आहि, वहिः, दिक्,-शब्द) ३॥, ऋते ०१।, द्वितीया ०१।, वा ०१। ]

एभिर्योगे पञ्चमी स्यात् ऋते (योगे) द्वितीया वा (पक्षे पञ्चमी)। अन्यो मैत्रात्, अन्येतरविलक्षणव्यतिरिक्तभिन्नाद्या अन्यार्थाः ; आराद्ग्रामात् ; आच्—दक्षिणा ग्रामात् ; दक्षिणाहि ग्रामात् ; वहिस्—वहिर्ग्रामात् ; दिक्शब्दः—पूर्वं ग्रामात्, प्राक् ग्रामात् ; ऋते—ऋते पार्थं, ऋते पार्थाद्वा ।

**३५ । पृथग्विनानानाभिस्तृतीया च ।**

[पृथक्, विना, नानाभिः ३॥, तृतीया ०१।, च ०१। ]

एभिर्योगे द्वितीया, पञ्चमी, तृतीया च भवति । पृथक् चैत्रं, पृथक् चैत्रात्, पृथक् चैत्रेण ; विना वातेन, विना वातात्, विना वातम् ; नाना ग्रामेणेत्यादि ।

**३६ । करणे वा स्तोकाल्पकृच्छ्रकतिपयादसत्त्वे ।** [करणे ७।, वा ०१।, स्तोक, अल्प, कृच्छ्र, कतिपयात् ५।, अ(न)सत्त्वे ७।]

स्तोकादेरद्रव्यवर्त्तमानात् करणे पञ्चमी स्यात् । स्तोकात् मुक्तः, कृच्छ्रात् मुक्तः, कृच्छ्रेण मुक्तः ; कतिपयात् मुक्तः, कतिपयेन मुक्तः । असत्त्व इति किम् ? स्तोकेन विषेण हतः ।

## ३७। दूरान्तिकार्थैः षष्ठी वा तेभ्योऽपि सप्तमी पञ्चमी तृतीया द्वितीयाः।

[दूरान्तिकार्थैः (दूर, अन्तिक + अर्थ) ३॥, षष्ठी ०१।, वा ०१।, तेभ्यः ५॥, अपि ०१।, सप्तमी—द्वितीयाः १॥ ]

दूरार्थैरन्तिकार्थैश्च योगे षष्ठी वा स्यात्, तेभ्यो दूरान्तिकार्थेभ्योऽपि सप्तम्यादयः स्युः, पक्षे पञ्चमी च। ग्रामस्य ग्रामात्, दूरे दूरात् दूरेण दूरं वा वसति, ग्रामस्य विप्रकृष्टे वसति, ग्रामस्य ग्रामादन्तिकेनान्तिकं वा वसति, एवं ग्रामस्याभ्याशे वसति। असत्त्व इत्येव, दूरः पन्थाः।

## ३८। सम्बन्धे षष्ठी। [सम्बन्धे ७।, षष्ठी ०१।] (१)

स्व-स्वाम्यादिसम्बन्धे षष्ठी विभक्तिर्भवति। स च सम्बन्धो द्विविधः, संयोगः समवायश्च। राज्ञः पुरुषः, पशोः पादः; क्रियासम्बन्धे—रजकस्य वस्त्रं ददाति; नाग्निस्तृप्यति काष्ठानां।

---

(१) स्व-स्वाम्यादीत्यादिपदेन जन्यजनकावयवावयविप्रभृतयः। ते सर्व्वेऽपि द्वैविध्येनैव संगृहीताः संयोगः समवायश्च, पृथग्भूतानां सम्बन्धः संयोगः, समवेतानामभिन्नानामवयवावयवि-द्रव्यगुणादीनां सम्बन्धः समवायः। सम्बन्धश्च क्रियामूलक एव, यथोक्तं हरिणा—'सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्व्वकः। अश्रुतायां श्रुतायां वा क्रियायामभिधीयते॥" तत्र राज्ञः पुरुष इत्यादौ सेवनादिक्रियायाः अश्रुतायाः कर्तृत्वादिना उपकार्योपकारकभावः। बोधस्तु राजनिरूपितस्वत्ववत्सम्बन्धवान् पुरुष इति। राज्ञः सम्बन्धविवक्षायां पुरुषस्य राजा इत्यपि भवत्येव, तत्र पुरुषनिरूपितस्वत्व-

## ३९। अतसर्थैरनञ्चेः।

[अ(त)तसर्थैः (तस् अर्थ/ ३।।।, अनञ्चेः (न-अञ्चि) ५।] (१)

**अतसर्थप्रत्ययैर्योगे षष्ठी स्यात्, अञ्चिसम्बन्धिनं वर्जयित्वा। दक्षिणतो ग्रामस्य, पुरस्तात् ग्रामस्य। अनञ्चेरिति किम्, प्राग्**

---

सम्बन्धात् राजेति बोधः। एवञ्च सम्बन्धस्योभयनिष्ठत्वेऽपि प्रतियोगिपदादेव षष्ठी नानुयोगिपदादित्यवगन्तव्यम्। यथोक्तं हरिणा,—

"द्विष्ठोऽप्यसौ परार्थत्वात् गुणेषु व्यतिरिच्यते।
तत्राभिधीयमानश्च प्रधानेऽप्युपचर्यते।
षष्ठी यद्यपि सम्बन्धः षष्ठ्यन्यभिन्न भेदकात्॥"

न च वक्तव्यम् सम्बन्धस्य गुणत्वात् द्रव्याश्रितत्वे कथमेकत्वादिकं प्रतीयत इति, यथा शक्ति कारकत्वेन तदाश्रितद्रव्यगतसंख्याभेदनिबन्धनो वचनभेदस्तद्वदत्रापि। सम्बन्ध कुतः प्रतीयते? न तावद्राजपुरुषाभ्यां तयोः प्रातिपदिकार्थत्वात् सम्बन्धस्य तदतिरिक्तत्वात् तस्मात् सम्बन्धो नास्त्यप्रतीतिः खपुष्पवत् सत्यं, राज्ञः पुरुष इत्युक्ते सम्बन्धादेव राजपुरुषाववगम्येते, सम्बद्धता च सम्बन्धं विना नोपपद्यते इति सम्बन्धोऽनुमेयः। तदुक्तं—कार्यानुमेयः सम्बन्धो रूपं तस्य न विद्यते। सम्बन्धाज्ञानतः सत्तो यतस्तं प्रतिजानत इति। अथ सम्बन्धः केन सम्बध्यते? न तावत् सम्बन्धान्तरेण अनवस्थापातात् नैवं, सम्बन्धः स्वं प्रकाशयन्नपरं संबध्नाति, यथा प्रदीपः स्वप्रकाशो घटं प्रकाशयति। कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येवेति सिद्धान्तकौमुदी, मातायामस्मरणात्, शिरसि कस्यचित्, एधोदकस्योपस्कुरुते, सर्पिषो जानीते, फलानां तृप्तः। केनचित् फलानां तृप्तः आश्रित इत्यादि प्रयोगसिद्ध्यर्थं करणे षष्ठ्यर्थयोरिति सूचितं, तदिह न वक्तव्यम्, सम्बन्धविवक्षायामेव तेषां सिद्धत्वात्।

(१) अतस्, अस्, अस्तात्, रिष्टात्, आत्, एन, आजादयः, इत्येते अतसर्थप्रत्ययाः। पञ्चमीबाधिकेयं। तत्र, पश्चात् पच्यते, भज्यते वेत्यादि भाष्यप्रयोगात्

ग्रामात् । एनेन वा द्वितीया । दक्षिणेन गयां महाबोधिं, दक्षिणेन गयाया वा ।

४० । करणे ज्ञोऽज्ञाने । [करणे ७।, ज्ञः ६।, अ(न)ज्ञाने ७।] (१)

वेत्येव, अज्ञानार्थस्य ज्ञः करणे षष्ठी वा स्यात् । सर्पिषो जानीते, सर्पिषा वा ; तेन प्रवर्त्तत इत्यर्थः ।

४१ । स्मरणार्थेशदयां कर्म्मणि ।

[स्मरणार्थेशदयां (स्मरण अर्थ, ईश, दय्) ६।।, कर्म्मणि ७। ] (२)

एषां कर्म्मणि षष्ठी वा स्यात् । मातुः स्मरति, मातरं वा ; पितुरध्येति, पितरं वा ; ईश—सर्पिष ईष्टे, सर्पिषो दयते ।

पश्चाच्छब्दयोगेऽपि पञ्चमी भवतीति गम्यते, तथाच नेयं तदपवादिका, तेन पश्चादित्यपि प्रयोगो भवतीति बोध्यम् ।

(१) मिथ्याज्ञानहेतुकप्रवृत्तिवचने जानातिरिति जयादित्यमतमाविष्कुर्व्वन्नाह- तेन प्रवर्त्तत इति । त्रिलोचनस्तु सर्पिषा रक्तो यावद्घटादिकं पश्यति तत्सर्पिरित्यध्यवस्यति, तत्र सर्पिषोऽसतः क्रियासिद्धौ करणत्वाभावात् सम्बन्ध एव षष्ठीति मिथ्याज्ञानवचनो जानातिरित्याह ।

(२) "अनुभूतिः स्मृतेरन्या, स्मृतिः संस्कारमात्रजा" इति तदर्थौ येषां ते स्मरणार्थाः, ते च, ईश च, दय् च तेषां प्रयोगेऽनुक्ते कर्म्मणि षष्ठी विधीयते । इह स्मरणार्थग्रहणे इत्यकरणात् दयतेरेव ग्रहणं, मातुः स्मरति, मातरं स्मरतीत्याद्यपि ध्येयं । दयत इति दय दानगतिरक्षणहिंसादानेष्विति भौवादिकं रक्षणार्थे प्रायः षष्ठी "तेषां दयसे न कस्मादिति" भट्टिः । भावकर्म्मणोरेतेषां प्रयोगे षष्ठी वेति क्रमदीश्वरसूत्रं, यथा भक्तस्य दय्यते, मातुः स्मर्य्यते, भक्तानामीश्यते, मातुः स्मृतिरित्यादि, विमुनिसंघहङ्कारमते-

## ५२। रुजर्थानां भावकर्त्तृकाणामज्वरिसन्ताप्योः।

[रुजर्थानां (रुज् अर्थ) ६॥।, भावकर्त्तृकाणां ६।।, अज्वरि-सन्ताप्योः ६॥ ] (१)

भावकर्त्तृकानां रुजर्थधातूनां कर्म्मणि षष्ठी वा स्यात्। चौरस्य रुजति रोगः, चौरस्यामयत्यामः; भावकर्त्तृकाणामिति किम्? चौरं ज्वरयति ज्वरः, चौरं सन्तापयति सन्तापः।

## ५३। जासिनिप्रहणनाटक्राथपिषां हिंसायाम्।

[जासि, नि,-प्र+हन, नाट, क्राथ, पिषां ६॥, हिंसायाम् ७ ]

हिंसार्थक्रियाणामेषां कर्म्मणि षष्ठी वा स्यात्। जासुश्चौरा-

---

नैव सकर्म्मकाद्भावाख्यात स्यादिव, प्रवलीकृत्य मातुः अर्यते। अनुक्त इति किम्? माता स्मर्यते। कर्म्मणि किम्? मातुर्गुणस्मरणमित्यत्र शेषषष्ठीसमासो भवत्येव, प्रतिपदविधाना षष्ठी न समस्यते इति निषेधः, तथात्र शेषे इत्यस्य सम्बन्धानुवर्त्तनेऽपि समासनिषेधार्थमेषां सूत्राणां प्रवृत्तिरित्याकरे स्पष्टमित्यपि समासयोग्यताप्रदर्शनार्थं सर्व्वत्र कृदन्तग्रहणेनोदाहरणमित्यनुसन्धेयम्। हरिणाऽपि—

कारकव्यपदिष्टे च सूत्रमाधिकिं पुनः।

प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये इति॥ स्पष्टमुक्तम्।

प्रतिपदं सकारप्रत्ययप्रयोगे, न तु कृद्योगे। हरिस्मृतिरित्यादौ च हरेः शेषत्वेनाविवक्षायां कर्म्मतया कृद्योगे कर्म्मणिष्ठ्या समास इति ग्रन्थरवम्।

(१) भावः केवलो धात्वर्थः कर्त्ता येषां तेषाम्, रोगश्च चौरज्वरः, चौरसन्तापो वा, रोगकर्त्तृकचौरसम्बन्धिज्वरादिकमित्यर्थः। अत्र कृदर्थानामित्यस्याप्रवृत्तौ शेषषष्ठी, तेन समास इति भावः।

दिकः, चौरस्योज्जासयति ; नि,प्र,हन संघातविपर्य्यस्तग्रहणं(१), चौरस्य प्रणिहन्ति, प्रहन्ति, निहन्ति, निप्रहन्ति ; चौरस्योन्नाटयति ; क्राथे घटादेर्निपातनादेत्वम्, धैर्य्यस्योत्क्राथयति शोकः विवेकस्य ; हिंसायामिति किम्(२) ? धानाः पिनष्टि।

## ४४। व्यवहृपणदिवां व्यवहारे।

[व्यवहृ (वि, अव, हृ), पण, दिवां ६।॥, व्यवहारे ७।] (३)

एषां व्यवहारे कर्म्मणि षष्ठी वा स्यात्। शतस्य व्यवहरति, सहस्रस्य पणते, शतस्य दीव्यति, सहस्रस्य प्रतिदीव्यति।

## ४५। कृत्वोऽर्थैः कालेऽधिकरणे।

[कृत्वोऽर्थैः (कृत्वस्-अर्थ) ३।॥, काले ७।, अधिकरणे ७।] (४)

कृत्वोऽर्थप्रत्ययैर्योगे कालेऽधिकरणे षष्ठी वा स्यात्। पञ्चकृत्वो दिवसस्य भुङ्क्ते, द्विरह्नि वा। अधिकरण इति किम् ? द्विरह्ना भुङ्क्ते।

---

(१) संघातः समस्तः, विपर्य्यस्तो व्युत्क्रमस्थः, निप्रहण, प्रणिहन, प्रहण, निहन इति आनुरूप्यम्।

(२) प्राणवियोगफलव्यापारो हिंसा, धानानां तदभावः।

(३) व्यवहारोऽत्र द्यूतक्रयविक्रयरूपः। पण इव अनुपसर्गे इति केनचित् सूचितं, तदिह न बलाध्यमित्याह सहस्रं प्रतिदीव्यतीति। व्यवहार इति किम् ? दीव्यति राजानं, स्तौतीत्यर्थः।

(४) अधिकरणे सप्तम्यां प्राप्तायां पक्षे षष्ठ्यर्थं वचनमिदम्। कृत्वोऽर्थ इवाऽर्थो येषां ते कृत्वोऽर्थाः प्रत्ययाः, कृत्वस्, धा, सुच ; बहुधा दिवसस्य भुङ्क्ते दिवसे वा, इत्याद्युदाहरणान्यूह्यानि।

## ४६। कृत: कर्त्तृकर्म्मणो:।

[कृत: ६, कर्त्तृकर्म्मणो: ७॥] (१)

कृत: प्रयोगे कर्त्तरि कर्म्मणि च षष्ठी स्यात्। वेति निवृत्तं, पुन: कर्म्मग्रहणात्। भवत: शायिका, भवतोऽग्रशायिका। कर्म्मणि—अपां स्रष्टा, पुरां भेत्ता। न कर्म्मणि कर्त्तृकृतो गत्यर्थस्य—वनं गन्ता। न तद्धितप्रयोगे—कृतपूर्व्वी कटं, भुक्तपूर्व्वी ओदनं। अनुक्त इत्येव—शयिता देवदत्त:। अथास्या-नित्यता च दृश्यते, धारे रामो रघूत्तममिति भट्टि:।

## ४७। उभयप्राप्तेरनिकापो: कर्त्तरि वा।(२)

[उभयप्राप्ते: ६।, अनिकापो: (न-इक,-आप) ६॥, कर्त्तरि ७।, वा ०१।]

उभयो: कर्त्तृकर्म्मणो: प्राप्तिर्यत्रैकस्मिन् कृति तस्य प्रयोगे

---

(१) इह कर्म्मणि षष्ठीविधानात् अधिकरणव्यवधानेन पुन: कर्म्मग्रहणादिति निवृत्तं ज्ञापयति। नन्वत्र कर्त्तृकर्म्मभ्यां क्रिया आक्षिप्यते तद्वाची तु धातुरेव, धातोश्च द्विविधा एव प्रत्यया:, तिङ: कृतश्चेति, तत्र तिङ्प्रयोगे न लोकाव्ययादिना (२।२।५०) षष्ठी-निषेधेन परिशेषात् कृत्येवेदं सूत्रं प्रवर्त्तिष्यतेऽत: किं कृतीति चेदाह—कृतपूर्व्वी कटमित्यत्र करोति-क्रियाविषयमनभिहितं कर्म्मत्वं कटस्यास्त्येवेति, तत: षष्ठी मा भूदित्येतदर्थं तद्धिता-न्तादिव्यावृत्तये कृतीति ग्रहणमिति भाव:। अत्र कर्त्तृसाहचर्य्यात् कर्म्मापि धात्वर्थ-भेदेनान्वय्येव गृह्यते, तेन स्तोकं पाचक इत्यादौ क्रियाविशेषणरूपे अभेदान्वयिनि कर्म्मणि न षष्ठीति शब्देन्दुशेखर:।

(२) उभयो: प्राप्तिर्यस्मिन्निति तेनैकनिमित्तसद्भावे—ओदनस्य पाक:, ब्राह्मणानां प्रादुर्भाव इत्यादौ विभिन्नक्रियाया: कर्त्तृकर्म्मणो: षष्ठीप्राप्तौ नायं नियम इति भाव:।

कर्त्तरि षष्ठी वा स्यात्। कर्म्मणि तु नित्यं पूर्व्वेणैव। आश्चर्यो गवां दोहो अगोपालकेन अगोपालकस्य वा, शब्दानामनुशासनमाचार्य्येण आचार्य्यस्य वा, विचित्रा सूत्रस्य कृतिः पाणिनिना पाणिनेर्व्वा। अनिकापोरिति किम्? (इकण आपश्च तयोर्न विकल्पः इत्यर्थः) भेदिका तव काष्ठीनां, चिकीर्षा रवेरालोकानाम्। कथं पाचयिता भुक्तं चैत्रेण मैत्रः, नात्रोभयप्राप्तिर्न उक्तं ण्यन्तस्य कर्म्म. णेः कर्त्ता मैत्रः स च उक्त एव, तृण्प्रत्ययान्तोऽयं, तेन न लौकिनव्ययेत्यादिना षष्ठीनिषेधः।

## ४८। क्तस्य वर्त्तमानाधारयोः,—वा भावे।

[क्तस्य ६।, वर्त्तमानाधारयोः (वर्त्तमान-आधार) ७।।, वा ०।।, भावे ७।]

अत्र क्तस्य प्रयोगे षष्ठी स्यात्, वक्ष्यमाणनिषेधापवादोऽयम्।

प्रातिपदिकेन चोभयप्रयोग एवाऽयं इति ध्वनितम्। उभयशब्देन कर्तृकर्म्मणी परामृश्येते पूर्व्वसूत्रेण प्राप्ते नियमार्थमिदम्, पाणिनिना कर्म्मण्येव नियमः कृतः। वार्तिककारैस्तु शेषे विभाषेति वार्त्तिकेन कर्त्तर्य्येव विभाषा न तु कर्म्मणीति नियमितं, तदनुसारतः पद्मनाभोऽप्याह कर्म्मणि तु नित्यं पूर्व्वेणैवेति। अत्रैते प्राचीनश्लोकाः—

"षष्ठी संभाविता यत्र युगपत् कर्तृकर्म्मणोः।
अस्त्रीविहितकप्रयोगे कर्म्मण्येव न कर्त्तरि॥
तव्यादीनां प्रयोगे च द्वयोरेव हि नेष्यते।
कर्तृविभाषया केचित् कर्म्मणोऽपि तदिष्यते॥
प्रधाने नियता षष्ठी गुणे तूभयथा भवेत्।
प्रधाने प्रथमाश्रित्य द्युः षष्ठीं कुर्य्यात्तथा गुणैः।"

केचित् स्त्रीप्रत्यये कर्त्तरि विभाषामिच्छन्ति, अन्ये तु स्त्रीभिन्नप्रत्ययेऽपि वदन्ति।

वर्त्तमाने—राज्ञां मतः, राज्ञां बुद्धः, सतां पूजितः ; आधारे—इदमेषामासितं, शयितं, भुक्तं, पीतम्, गतमित्यादि ; वा भावे—छात्रस्य हसितं छात्रेण वा, मयूरस्य हसितं मयूरेण वा ।

## ४९ । कृत्यस्य नोभयप्राप्तेरन्यस्य तु कर्त्तरि वा ।

[कृत्यस्य ६।, न ०।१।, उभयप्राप्तेः ६।, अन्यस्य ६।, तु ०।१।, कर्त्तरि ७।, वा ०।१।] (१)

उभयप्राप्तेः कृत्यस्य प्रयोगे उक्ता षष्ठी न भवति । दुग्धा गौः क्षीरं गोपेन, नेया अजा ग्रामं भृत्येन, गमयितव्यो ग्रामं चैत्रो मैत्रेण ; अन्यस्य तु कर्त्तरि वा, यत्रोभयप्राप्तिर्नास्ति—कर्त्तव्यः कटो मैत्रेण मैत्रस्य वा, करणीयं कार्य्यं चैत्रेण चैत्रस्य वा । कर्त्तुरिति किम् ? कर्म्मणि तु नित्यं पूर्व्वेणैव—उपस्थानीयः शिष्यो गुरोः । गेयादयो बहुलमिति कर्त्तर्य्यनीयः ।

## ५० । नलोकिनव्ययनिष्ठाखलार्थतृणामुकस्याप्यकर्मेः ।

[न ०।१।, लोकिनव्ययनिष्ठाखलार्थतृणाम् (ल-उ-किन-अव्यय-निष्ठा-खलार्थ-तृण) ६।।, उकस्य ६।, अपि ०।१।, अकर्मेः ६।] (२)

---

(१) इह कृत्यपदेन तव्यानीय-ण्यप्-यत्-यतौ गृह्यन्ते, न केलिमः, तस्य कर्म्मकर्त्तरि विहितत्वात् ।

(२) लः = लादेशः तिप्, तस् इत्यादयः, उ = उकारान्ता उ, कु, इष्णु प्रभृतयः, किन्, अव्ययं = क्त्वा प्रभृति, निष्ठा = क्त, क्तवतू, खलार्थप्रत्ययः = खल्, युच् प्रभृतयः,

पूर्व्वस्यापवादोऽयम्। लादेशानां उकारान्तादीनाञ्च कृतां प्रयोगे उक्ता षष्ठी न भवति। लः—कटं कुर्व्वाणः, ओदनं भुञ्जानः, सोमं पवमानः, विशेषं विद्वान्, अन्नं पेचिवान्; उ—कटं चिकीर्षुः, धनं गृध्नुः, कन्यामलङ्करिष्णुः; किन्—भारं सासहिः, कटं चक्रिः; अव्ययं—कटं कृत्वा, सुखं प्राप्य, मधु पायं पायं; निष्ठा—ओदनं भुक्तमनेन; खलार्थः—ईषत्-करः कटो भवता; तृण्—कर्त्ता कटान्; उकस्यापि—परस्त्री-मभिलाषुकः; अकर्मेरिति किम्? दास्याः कामुकः। द्विषः शतुर्व्वा। चौरं द्विषन् चौरस्य द्विषन्।

## ५१। णकेनोर्भविष्यदाधमर्ण्ययोः।

[णकेनोः (णक इन्) ६॥, भविष्यदाधमर्ण्ययोः (भविष्यत्-आधमर्ण्य) ७॥]

अनयोरर्थयोर्णकेनोः प्रयोगे षष्ठी न भवति। भविष्यति—ओदनं भोजको व्रजति, ग्रामं गामी; आधमर्ण्ये—सहस्रं दायी; भविष्यदाधमर्ण्ययोरिति किम्? यवानां लावकः, अवश्यं-कारी कटस्य। भविष्यति णकस्य तु तुमर्थस्यैव निषेधो नान्यस्य, तेन शलस्य पूरकः, पुत्रपौत्राणां दर्शकः।

---

तृण्,—णवो प्रत्ययानां तथा उकस्यापि उक्ता कर्तृकर्म्मणोः षष्ठी न स्यात्, उकस्येति विभागः कृतः कंसमर्दिनोकस्य ग्रहणार्थः। उकस्य योगे कृतः कर्तृकर्म्मणोः षष्ठी स्यादेवेति आभाय। सिद्धान्तकौमुद्यां दृश्यते प्रत्याहारः प्रत्ययश्च, तत्र प्रत्याहारः शत्र शान कसु-कानकसः ततश्चानीया कृत्प्रत्ययेऽपि न प्रतिषेधः।

## ५२। तुल्यार्थैरतुलोपमाभ्यां तृतीया वा।

[तुल्यार्थैः (तुल्य अर्थ, ३।॥, अतुलोपमाभ्याम् (अ,न, तुला-उपमा) ३॥, तृतीया ०१।, वा ०११ ]

तुल्यार्थैर्योगे तृतीया वा स्यात् पक्षे षष्ठी च। तुल्यश्चन्द्रेण तुल्यश्चन्द्रस्य वा, सदृशश्चन्द्रेण सदृशश्चन्द्रस्य वा। अतुलोपमाभ्यामिति किम्? स्त्रीमुखस्य तुला पद्मं, स्त्रीमुखस्योपमा शशी।

## ५३। चतुर्थी चाशिष्यायुष्यमद्रकुशलसुखार्थहितार्थैः।

[चतुर्थी ०१।, च ०११, आशिषि ७।, आयुष्य-मद्र-कुशल-सुखार्थ-हितार्थैः ३॥ ]

आशंसायां आयुष्याद्यर्थैर्योगे चतुर्थी वा स्यात्, पक्षे षष्ठी च। आयुष्यं ते भूयात्, तव वा; चिरं जीवितं राज्ञे भूयात्, राज्ञो वा; भद्रं, मद्रं ते भूयात्, तव वा; कुशलं, निरामयं ते भूयात्, तव वा; सुखं, शर्म्म ते भूयात्, तव वा; अर्थः, प्रयोजनं ते भूयात्, तव वा; हितं, पथ्यं ते भूयात्, तव वा।

## ५४। अधिकरणे सप्तमी।

[अधिकरणे ७।, सप्तमी ०१। ] (१)

अधिकरणकारके सप्तमी विभक्तिर्भवति। कटे आस्ते विप्रः।

---

(१) अधिकरणलक्षणं यथा—"कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम्, उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्" इति।

## ५५। निमित्तात् कर्म्मसंयोगे।

[निमित्तात् ५।, कर्म्मसंयोगे ७।]

कर्म्मणा संयोगे निमित्तात् सप्तमी भवति। चर्म्मणि द्वीपिनं हन्ति, दन्तयोर्हन्ति कुञ्जरं, केशेषु चमरीं हन्ति, सीम्नि पुष्कलको हतः (१)।

## ५६। कर्म्मणीनन्तक्तस्य। [कर्म्मणि ७।, इनन्तक्तस्य ६।]

तद्धितेनन्तक्तस्य प्रयोगे कर्म्मणि सप्तमी स्यात्। अधीती व्याकरणे, पठिती तन्त्रे, भावक्तान्तादिष्टादिगणपूर्व्वादेरिन्।

## ५७। अधिनैश्वर्य्ये। [अधिना ३।, ऐश्वर्य्ये ७।]

ऐश्वर्य्ये गम्ये अधिना युक्तात् सप्तमी स्यात्, स्व-स्वामिभ्यां। अधिपञ्चालेषु ब्रह्मदत्तः, अधिब्रह्मदत्तेषु पाञ्चालाः।

## ५८। उपेन यस्मादधिकम्।

[उपेन ३।, यस्मात् ५।, अधिकम् १।]

उपेन यस्मादधिकं विवक्षितं, ततः सप्तमी स्यात्। उपखार्य्यां द्रोणः।

(१) पुष्कलकः गन्धमृगः। द्वीपिचर्म्मणोरवयवावयविभावात् समवायः पुनरत्रैव संयोगः। मुक्ता फलाय करिकुम्भयोरेव क्रियाविषयत्वाद्वधौ। यद-पादानादेर्न्नाऽविषयोऽपि न क्रियोद्देश्यमात्रं तदिह निमित्तम्।

## ५८। साधुनिपुणाभ्यां प्रशस्ये।

[साधु निपुणाभ्यां ३॥, प्रशस्ये ७।

आभ्यां योगेऽर्चायां सप्तमी स्यात्। मातरि साधुः, पितरि निपुणः (१)।

## ६०। यस्य क्रिया क्रियाचिह्नम्।

[यस्य ६।, क्रिया ०१।, क्रियाचिह्नं १।] (२)

यस्य क्रिया क्रियान्तरचिह्नं भवति, ततः सप्तमी स्यात्। गोषु दुह्यमानासु गतः, दुग्धास्वागतः। अर्हानर्हयोश्च। द्विजेषु भुञ्जानेषु वृषला आसते,वृषलेषु भुञ्जानेषु द्विजा आसते। क्रियेति किम्? यो जटाभिः स भुङ्क्ते। क्रियाचिह्नमिति किम्? यो भुङ्क्ते स देवदत्तः।

## ६१। षष्ठी चाऽवज्ञायाम्।

[षष्ठी ०१।, च ०१॥, अवज्ञायाम् ७।]

अनादरे गम्ये यत् क्रियान्तरचिह्नं भवति, ततः षष्ठीसप्तम्यौ भवतः। रुदतः प्राव्राजीत् रुदति वा, क्रोशतः प्राव्राजीत् क्रोशति वा; रुदन्तं क्रोशन्तं अवज्ञायेत्यर्थः।

(१)* असाधुप्रयोगे च, यथा असाधुः मातुले।

(२) चिह्नं परिच्छेदकम्।

## ६२। स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च।

[स्वामि-ईश्वर-अधिपति-दायाद साक्षि प्रतिभू प्रसूतैः ३।।, च ०।। ]

स्वाम्याद्यैर्योगे षष्ठीसप्तम्यौ स्याताम्। गवां स्वामी, गोषु स्वामी ; गवामीश्वरः ; गवामधिपतिः।

## ६३। आयुक्तकुशलाभ्यां तात्पर्य्ये।

[आयुक्त कुशलाभ्यां ३।।, तात्पर्य्ये ७ ]

तात्पर्य्ये गम्ये आभ्यां षष्ठीसप्तम्यौ भवतः। आयुक्तः कटकरणे, कटकरणस्य वा ; कुशलः सेवायां, सेवाया वा। तात्पर्य्य इति किम् ? आयुक्तो गौः शकटे।

## ६४। यतो निर्द्धारणम्। [यतः ५।, निर्द्धारणम् ०।। ]

यतो जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्-करणं (निर्द्धारणं) ततः षष्ठीसप्तम्यौ स्याताम्। नृणां क्षत्रियः शूरतमः, नृषु वा ; गवां कृष्णा गौः सम्पन्ना क्षीरतमा, गोषु वा ; अध्वगानां धावन्तः शीघ्रतमा, अध्वगेषु वा।

## ६५। विभक्तात् पञ्चमी। [विभक्तात् ५।, पञ्चमी ०।। ]

विभक्ताद्युक्तान्निर्द्धारणे पञ्चमी स्यात्। मथुरा पाटलिपुत्रेभ्यः आढ्यतरा, अन्यनरेभ्यः क्षत्रियः शूरतमः।

## ६६ । प्रसितोत्सुकाभ्यां तृतीया वा ।

[प्रसित-उत्सुकाभ्यां ५।२, तृतीया ०।१, वा ०।१ ]

आभ्यां योगेऽधिकरणे तृतीया वा स्यात्, पक्षे सप्तमी च। केशैः प्रसितः, केशेषु वा ; केशैरुत्सुकः, केशेषु वा ।

## ६७ । लुबन्तनक्षत्राच्च ।

[लुबन्त(लुप् अन्त)नक्षत्रात् ५।१, च ०।१]

अस्मात् तृतीयासप्तम्यौ भवतः। पुष्येण पायसमश्नीयात्, पुष्ये वा । लुब्विशेषेऽणो लुप । अधिकरण इत्येव, अद्य पुष्यः ।

इति श्रीपद्मनाभदत्तकृतौ सुपद्मव्याकरणे द्वितीयस्याध्यायस्य

द्वितीयः पादः ।

---

## विभक्ति-चक्रम् ।

| प्रथमा | द्वितीया | तृतीया | चतुर्थी | पञ्चमी | षष्ठी | सप्तमी |
|---|---|---|---|---|---|---|
| उक्तकर्त्तरि | अनुक्ते | अनुक्त- | सम्प्रदाने | अपादाने | सम्बन्धे | अधिकरणे |
| उक्तकर्म्मणि* | कर्म्मणि* | कर्त्तरि*, | | | | |
| | | करणे | | | | |

* कर्त्तरि वाच्ये कर्तुरुक्तत्वं, कर्म्मणि वाच्ये कर्त्तुरनुक्तत्वं ; कर्म्मणि वाच्ये कर्म्मण उक्तत्वं, कर्त्तरि वाच्ये कर्म्मण अनुक्तत्वम् ।

## सुवर्थनिर्णयः

सुपश्च प्रथमादिभेदेन सप्तधा (१) प्रथमा, (२) द्वितीया, (३) तृतीया, (४) चतुर्थी, (५) पञ्चमी, (६) षष्ठी, (७) सप्तमीति। ता विभक्तयश्च प्रत्येकं एकवचनद्विवचनबहुवचनभेदेन त्रिविधाः। एकं वक्तीति एकवचनं एकत्वमात्रबोधकमित्यर्थः, एवं द्वित्वमात्रबोधकं द्विवचनम् बहुत्व बोधकं बहुवचनम्, बहुत्वञ्च त्रिप्रभृति परार्धावधित्वम्। अथेदानीं सुवर्था निरूप्यन्ते—

| सुपः | वचनानि | | |
|---|---|---|---|
| प्रथमा | ए व सु | द्वि व औ | बहु व जस |
| द्वितीया | „ अम् | „ „ औट् | „ „ „ शस् |
| तृतीया | „ „ टा | „ „ भ्याम् | „ „ भिस |
| चतुर्थी | „ „ ङे | „ „ भ्याम् | „ „ भ्यस् |
| पञ्चमी | „ „ ङसि | „ „ भ्याम् | „ „ भ्यस् |
| षष्ठी | „ „ ङस | „ „ ओस् | „ „ आम् |
| सप्तमी | „ „ ङि | „ „ ओस् | „ „ सुप् |

क्रमेणासामर्थाः।

प्र। प्रतिपदिकार्थमात्रम्, लिङ्गपरिमाणवचनमात्रञ्च, तिङ् सामानाधिकरण्यम् सम्बोधनञ्च।

द्वि। क्रियाजन्यफलाश्रयत्वम्।

तृ। यदा कर्त्तरि—धात्वर्थव्यापाराश्रयत्वम्; यदाकरणे-प्रधानेनफलजनकव्यापारवत्ता।

च। उद्देश्यम् (कर्मणा यमभि प्रैति।)

प। अवधि।

ष। सम्बन्धः शक्तिश्च।

स। अधिकरणं तच्च कर्त्तृ कर्म्मव्यवहितामसाक्षाद्धारयेत् क्रियाम्। उपकुर्य्यात् क्रियासिद्धौ शास्त्रेऽधि करणं स्मृतम्॥

## नामनिरूपणम्।

नामत्वं नाम सुबुत्पत्तिनिमित्तशब्दत्वं। तच्च नाम प्रातिपदिकापरपर्य्यायकम्। प्रातिपदिकलक्षणन्तु धातुविभक्ति भिन्नमर्थवद्रूपं प्रातिपदिकम्, कृत्तद्धितसमासान्तश्च। नामानि प्रक्रियादशायां चतुर्व्विधानि रूढ़ लक्षक यौगिक योगरूढ़भेदात्। तत्र रूढ़ं प्रसिद्धं अखण्डशक्त्या अर्थवोधकत्वं रूढत्वमिति फलितम् यथा गोघटादिः समुदायशक्त्यैव गोत्वाद्यवच्छिन्नस्य वोधनात्। लक्षकत्वं नाम लक्षणया वृत्त्यार्थवोधकत्वं लक्षणा च शब्दस्य काचित् शक्तिरूपा मुख्यार्थवाधे तत्सम्बन्धिनमर्थं वोधयति यथा गङ्गायां घोष इत्यत्र गङ्गापदेन गङ्गातीरस्य वोधः। यौगिकत्वं खण्ड-शक्त्या उपस्थापितार्थयोर्य्योगेनार्थवोधत्वं यथा पाचकादौ प्रकृति प्रत्ययाभ्यां पाकतत्कर्त्तृयोगेन पाककर्त्तृत्वार्थवोधनम् योग रूढत्वन्तु तथाभूतयोगेनार्थवोधकत्वे सति समुदायशक्त्या विशिष्टार्थवोधकत्वं यथा पङ्कजादि।

## नामार्थनिरूपणम्।

उक्तं हि हरिणा एकं द्विकं त्रिकञ्चाऽथ चतुष्कं पञ्चकं तथा। नामार्था इति सर्व्वेऽमी पक्षाः शास्त्रे निरूपिताः। एकं जातिः जातिरेवैका नामार्थः जातिस्तु गवादिषु गोत्वादिका इत्येकः पक्षः। द्विकं जातिर्व्यक्तिश्च, अत्रापि मतद्वयं जातिव्यक्त्योः पर्य्यायेणैव नामार्थता कदाचित् जातिरेव कदाचिच्च व्यक्तिरेवेत्येकः। तयोः समु-

न्वयेन बोधइत्यपरः। व्यक्तिरेकत्वप्रतिपादिका। त्रिकं लिङ्ग सहितं प्रागुक्तत्रयम् चतुष्कं संख्यासहितं जात्यादित्रिकम्। पञ्चकं कारकसहितं पूर्व्वोक्तं चतुष्कं। तदेतदन्यत्राप्युक्तं "स्वार्थो द्रव्यञ्च लिङ्गञ्च संख्या कर्म्मादिरेव च। अमी पञ्चैव लिङ्गार्थास्त्रयः केषाञ्चिदग्रिमा इति। चतुष्कादिमतद्वये विभक्तेर्निरर्थकत्वं द्योतकत्वं वेति बोध्यम्। तथाहि द्योतिका वाचिका वास्युर्द्वित्वादीनां विभक्तयः। स्याद्वा संख्यावतोऽर्थस्य समुदायोऽभिधायक इत्युक्तेः विभक्तेर्द्योतकताया एव स्वीकारात्।

राजायते पदत्वान्नलोपः न इति किम्? वाच्यति, तपस्यति, पुंस्यति न कुत्व-विसर्ग-सलोपाः प्राप्ताः, अङ्गावितिकिम्? राजनीवाचरति राजन्यति गुरौ।

## ३ ॥ सुप्तङिते ऽयचि ॥

सुप्तङिति (सुप् तङित) ७।, अयचि (न य् अच्) ७।

१। याद्यजादि वर्जिते सुप्तङिते परे पूर्व्वं पदसंज्ञं भवति। राजा, राजभ्याम्, राजत्वम्, राजतमः; अयचीति किम्? साम्नि साधुः सामन्यः राजानौ।

## ४ ॥ न तसौ मत्वर्थे ॥

न १। त सौ १॥, मत्वर्थे (मतु अर्थ) ७।

मत्वर्थप्रत्यये तान्तसान्तौ पदे न स्याताम्। मरुत्वान्, यशस्वी। वति नभोऽङ्गिरोमनुषः। वति ७। नभोऽङ्गिरोमनुषः नभस्, अङ्गिरस्, मनुषः ६।० वति नभ आदीन (पदत्वं न) नभइव नभस्वत्, अङ्गिरस्वत् मनुष्वत्।

## ५ ॥ यचि भमसादिस्थाने ॥

यचि। (य् अच्) ७।, भम् १।, असादिस्थाने (न सादिस्थान) ७।

यादावजादौ च परे सादिस्थानवर्ज्जिते पूर्व्वं भसंज्ञं स्यात्। यि गार्ग्यः, अचि-राज्ञः-भत्वादल्लोपः, असादिस्थान इतिकिम्? राजानौ, सामानि।

---

[illegible] (३।१।७) [illegible] (३।१।८) [illegible] (३।१।१५) [illegible] (३।१।२८) [illegible]

११ ॥ इतोलोपः। (इतः ६।, लोपः १।)

इत्संज्ञकस्य लोपः स्यात्। बुभूषति, संवित्।

१२ ॥ सुपोलुगव्ययात्। [सुपः ६।, लुक् १।, अव्ययात् ५।]

अव्ययात् परस्य सुपोलुक् स्यात्। स्वः, प्रातः, च, वा, वै, विप्रवत्, कृत्वा, कर्त्तुं, उच्चैःकारम्।

१३ ॥ ऐकार्थ्ये च। (७) [ऐकार्थ्ये ७।, च०१]

एकार्थे भावे सुपोलुक् स्यात्। पुत्रीयति, हंसायते, राजपुरुषः, पौर्वशालः।

१४ ॥ सूत्रे बहुलम्। [सूत्रे ७।, बहुलम् ०१]

सूत्रे क्वचित् सुपोलुक् स्यात्। स्त्रीपू इत्यादौ।

१५ ॥ अव्ययीभावादनतः। (८)

[अव्ययीभावात् ५।, अनतः (न-अत्) ५।]

---

(७) परस्परं सम्बद्धानां पदानां योगरूढकार्ये इति शब्दानां शक्तिः। लौकिकता ऐकार्थ्ये इतिवृत्तिकार्यमुपलभ्यते। ऐकार्थ्यमापन्नेषु पदेषु प्रत्ययेषु च सुपोलुप्यन्ते। पौर्वशालः पूर्वस्यां शालायां भव इति वाक्ये सुप्सुपासमास अथवा पूर्वा चासौ शाला पूर्वशाला तस्यां भवः इत्यण्।

(८) इह सू० कर्म शब्दसामर्थ्यं तिव्यायादव्ययीभावपदेनाव्ययीभावसमास एवोच्यते। येन विधिस्तदन्तस्य (१।१।७१) मिति न्यायादनत इत्यनेनादन्तोऽव्ययीभावोऽस्य इति। ननु कथं उपपादिः, अव्ययपदः इत्यादौ न विभक्तिलोप इति सत्यं गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति न्यायात् बहुव्रीहिरन्यपदप्रधानत्वादव्ययीभावार्थे गौणतां स्यात्। उपमीपादौ इत्यादौ कर्मधारयस्योत्तरपदप्राधान्यात् विभक्तिलोपः स्यादेव। आम्र-पदार्थे शब्दानुकरणे च। इति संक्षिप्तसारस्य अस्यार्थः इत्यात् सुपोलुग्विधेयस्या-न्यपदार्थे वर्त्तमानात्, शब्दस्यानुकृतौ प्रयुक्तात् पूर्वलक्षणप्राप्तोलुग् न भवति। स्वार्थे न भवत्येव; अन्यपदार्थे बहुव्रीहिरिति। प्रादुस् इति प्रशब्दोऽव्ययं शब्दानुकृतौ प्रयुक्त, एवं प्रातरधिरिति येन स प्रातरधिरितिः, स्वरितकान्ता अतिस्वर। अन्यपदार्थोद

अव्ययीभावात् सुपो लुक् स्यात्। उपाग्नि, अधिस्त्रि, अमत इति किम्? उपकुम्भम्।

१६ ॥ अतोऽमपञ्चम्यास्तृतीयासप्तम्योश्च वा। (९)

[अत: ५।, अम् ०१।, अपञ्चम्या (न-पञ्चमी) ६।, तृतीया-सप्तम्यो: ६॥, च ०१।; वा ०१।]

अदन्तादव्ययीभावात् सुपोऽम् भवति। उपकुम्भं, अपञ्चम्या इति किम्? उपकुम्भादागत:। तृतीयासप्तम्योश्च वा उपकुम्भेन उपकुम्भं; उपकुम्भे, उपकुम्भं वा। व्यवस्थितविभाषया क्वचिन्नदीसमासे नित्यम् सप्तम्या: सुमद्रं उन्मत्तगङ्गं धेहि। अत इति किम्? उपाग्नि।

१७ ॥ हलङ्याप: सुलोपो दीर्घात्। (१०)

[हलङ्याप: (हल्, ङी, आप्) ५।, सुलोप: १।, दीर्घात् ५।]

---

नाच लुग्भवत्येव। परमस्त्र: पतति, इन्द्रस्त्रिस्तिष्ठतीति (इन्द्रस्य स्त्रियाः समीपम् तिष्ठतीत्यर्थ.) इति गोयीचन्द्र:।

(९) न पञ्चमी अपञ्चमीति सूत्रत्वात् क्रियासापेक्षत्वेऽपि नञा तत्पुरुष:, न तु बहुव्रीहि: तथासति कप्समासान्तापत्तिरिति केचित्, अस्माकं मते बहुव्रीहिरेव समासान्तविधेरनित्यत्वात् न कप्, अपञ्चम्या इति सुपो विशेषणं स्त्रीत्वेऽपीति नदी संज्ञा, अपञ्चम्या इति प्रतिषेध: अमएव न तु लुगभावस्य तेन पञ्चम्याश्चाम्, लुक् च न भवत: उपकुम्भादिति तृतीयासप्तम्योश्च वेति च शब्दो वाक्यभेदे, ऋद्धिनदी-समासे नित्यं सप्तम्या इति तद्रूप लक्षणं, तेन संख्यार्थसमासेऽपि तथाच ऋद्ध्यर्थनदीसंख्याव्ययीभावादय: सप्तम्या इति श्रीपतिसूत्रम् ऋद्ध्यर्थं, नदीवाचिना, विद्यया जन्मना वा एक लक्षण: सन्तानो वंश: अस्य वैयाकरणवंश: त्रिमुनिवंश:, तदर्थावंश्यस्य अव्ययीभाव समासान्नित्यं सप्तम्या अम् भवतीति। कश्चित् ऋद्धिनदीसमाससंख्याव्ययेभ्यो नित्यमिति पठति। मद्राणां समृद्धि: सुमद्रं उन्मत्ता गङ्गा यस्मिन् देशे उन्मत्तगङ्गं उपाग्नि अग्ने: समीपमिति वाक्यम्। बहुलवचनात् सुमद्र सुभागमनुमितादौ नित्यमम्भाव इति सिद्धान्तकौमुदी।

(१०) ननु ङ्यापौ स्वत एव दीर्घौ तत् किं दीर्घेति विशेषणेनेत्याह : बहुव्रीहावना

हलन्तादेः सुलोपः स्यात्। वाक्, नदी, माला। आप इति आपतापादेरेकदेशस्यापि ग्रहणम् कारीषगन्ध्या देवता। हल-ङ्याप इति किम्? धीः, लक्ष्मीः शुभंयाः, दीर्घादिति किम्? निर्व्वा-राणसिः गोस्त्रियोरन्यार्थे (४।३।११५) इति ह्रस्वः घृतमालः।

## १८ ॥ एङ्ह्रस्वात् सम्बुद्धेः।

[एङ् ह्रस्वात् ५।, सम्बुद्धेः ६।]

एङोह्रस्वात् सम्बुद्धेः सुलोपः स्यात्। हे वाले, हे वायो हे विप्र।

## १९ ॥ ह्रस्वस्य गुणो वातु क्लीवे। (११)

[ह्रस्वस्य ६।, गुणः १।, वा ०१।, तु ०१।, क्लीवे ७।]

सम्बुद्धि सम्बन्धिनो ह्रस्वान्तस्य गुणः स्यात्। हे कवे, हे धेनो, हे कर्त्तः, वातु क्लीवे हे वारे, हे वारि वा, हे कर्त्तः, हे कर्त्तृ; वा कथं हे नदि? ह्रस्वविधानसामार्थ्यान्न गुणः।

## २० ॥ मातुर्मातोऽर्हत्पुत्रार्थेऽकपि। (१२)

[मातुः ६।, मातः १। अर्हत्पुत्रार्थे (अर्हत्पुत्र-अर्थे) ७।, अकपि (न कप्) ७।]

---

पदार्थे वाच्ये गोस्त्रियोरन्यार्थं इत्यनेन (४।३।११५) निर्व्वारणसिः घृतमाल इत्यादौ ह्रस्वे कृते एकदेशविकृतमनन्यवद्भवतीति न्यायात् तयोर्यथाक्रमं ङीत्वं आप्त्वं वा न नष्टं भवति, किन्तु दीर्घत्वमेव नष्टं दीर्घेति विशेषणाभावे निर्व्वारणसिरित्यादावपि सुलोपः प्रसज्येत।

(११) ह्रस्वस्य गुणः—सम्बुद्धाविति विषयसप्तमी। दीर्घान्त-सुतनु, वरतनू शब्दयोस्तु यथाक्रमं सुतनु वरतन्विति रूपम् सुतनु सत्य मलङ्करणाय ते, वरतनु सम्प्रवदन्ति कुक्कुटाः। इति क्रमदीश्वरः। न नद्यादीनामिति संक्षिप्तसार एव हे नद्यः हे मन्थाः हे सम्पुष्याः इत्युदाहरणानि। सम्बुद्धौ प्राप्तान् विधीन् गुण एव बाधते तेन हे कर्त्तः हे सखे इत्यादौ चात्-सुपीति प्राप्तं बाधित्वा गुण एव।

(१२) मातुर्मातः पुत्रेऽर्हणपदार्थे मातच् सौ इति क्रमदीश्वरः। माता स्तुतिः मात-

अर्हत् पुत्रार्थे मातुः सम्बन्धे मातः स्यात् । हे गार्गीमातस्त्वं धन्योसि अकपोति किम् ? हे गार्गीमातृक ।

॥ २१ ॥ ह्रस्वोऽम्बार्थनदीपुं चतुरनडुहाम् ।

[ ह्रस्वः १।, अम्बार्थ (अम्ब + अर्थ), -नदी, -पुम्, -चतुर्, -अन डुहाम् ६॥ ]

सम्बुद्धेरेषां ह्रस्वः स्यात् । हे अम्ब, हे अक्क, हे अल्ल, हे अत्त ; नद्यादेः हे नदि, हेलक्ष्मि, हेवधु, हेपुमन्, हेप्रियचत्वः, हे अनड्वन् । भ्रुवस्यान्यपदार्थे । हेसुभ्रु ॥ डलकवतीनामम्बार्थानां निषेधः । हे अम्बाड़े, हे अम्बाले हे अम्बिके । नदीतिकिम् हे श्रीः हेभ्रूः हेधीः । *

॥ २२ ॥ एदापः । [ एत्०१।, आपः ६। ]

सम्बुद्धे राप एद्भवति । हे वाले ।

॥ २३ ॥ भवद्भगवदघवताम्वा वन उस् । (१३)

[ भवत्, भगवत्, अघवताम् ६॥, वा०१।, वनः ६।, उस्०१। ]

एषां सम्बुद्धेर्व्वन उस् वा स्यात् । हे भोः, हे भवन् ; हे भगोः, हे भगवन् ; हे अघोः, हे अघवन् ।

स्तुतिः आढ्यगुणतया महाकुलसम्भूततया वा मातृस्तुतिर्गम्यते तदैव पुत्रस्यापि स्तुतिर्भवतीति । गौरीचन्द्रः कपिस्तु हे गार्गीमातृकः ।

* भूवद्वति बहुव्रीहौ क्वचित् तत्पुरुषे च भू शब्दस्य ह्रस्वः ।

(१३) अव्ययोऽपि भोः शब्दोऽस्ति नैव भो शब्दोऽपि, भोरित्यदन्तः तथाच भाष्यम् अव्ययमेव भोः शब्दो नैषा भवतः प्रकृतिरिति भगोः शब्दस्याघोः शब्दस्य चास्तित्वं वस्तुतः अत्रा व्यवस्थितं मन्यते भगोरित्यदन्ता भगोमनुष्या इति स्यादेव ।

## २४ ॥ उशनःसोनो वा लुग्वा च । (१४)

[ उशनः सः ६।, नः १।, वा ०१।, लुक् ०१। वा ०१।, च ०१। ]

उशनः सम्बुद्धेः सस्य नोवा स्यात्, लुग्वाच हे उशनन्, हे उशनृ हे उशनः ।

## २५ । प्रचेतसोराजनि रो वा । (१५)

[ प्रचेतसः ६।, राजनि ७।, रः१।, वा०१। ]

सम्बुद्धेरस्य राजनि परे सोरोवा स्यात् । हे प्रचेताराजन्. हे प्रचेतोराजन् । सम्बुद्धेरिति गतम् ॥ "

## २६ । अष्टन आद्वा सुपि ।

[ अष्टनः ६।, आत्०१।, वा०१।, सुपि ७। ]

सुपि अष्टनः सम्बन्धिनो नस्याद्वा स्यात् । अष्टौ, अष्ट वा अष्टाभिः अष्टभिर्वा, अन्यार्थेऽपि प्रियाष्टाः प्रियाष्टौ, पक्षे प्रियाष्टा प्रियाष्टानौ प्रियाष्टानः ।

(१४) प्रचेतसोराजनि-प्रकरणनियमात् राजन् शब्दोऽपि सम्बुद्धि विषय एव ग्राह्यः । अथवा राजनीति सम्बुद्धिपदविषय एव नेह भवति हे प्रचेतोराजानि ।

(१५) [illegible] ।

## २७। जश्शसोरष्टाभ्य औः स्वार्थे ।

[ जश्शसोः ६।। अष्टाभ्यः ५।।।, औः १।, स्वार्थे ७।]

कृतात्त्वादष्टन्-शब्दात् जश्शसोरौः स्यात् । अष्टौ, अष्टौ, परमाष्टौ स्वार्थे इतिकिम् ? प्रियाष्टाः विप्राः ।

## २८। डतिषानसंख्याभ्योलुक् ।

[ डति षान् (ष,-ण्-अन्), संख्याभ्यः ५।।।, लुक्०१। ]

डति प्रत्ययान्त, षकारनकारान्ताभ्यः संख्याभ्यो जश्शसोर्लुक् स्यात् ॥ कति, सन्ति कति पश्य, षट्, पञ्च, सप्त, नव स्वार्थइत्येव. प्रियकतयः प्रियकतीन्, प्रियपञ्चानः, प्रियपञ्चनः । //

## २९। अम्यतैकः पूर्व्वोऽक् ।

[ अमि ७।, अता, ३।, एकः१। पूर्व्वः १।, अक् ०१। )

अमि परे तस्य अता सह पूर्व्वोऽगेको भवति । देवं, कविं, धेनुं, गन्धं वन्धुं ।

## ३०। शसि दीर्घः पुंसि तु सश्च नोऽगवादेः ।

(शसि ७।० दीर्घः १।, पुंसि ७।, तु०१।, सः ६।, च०१।, नः १।, अगवादेः (न-गवादि) ६।)

शसि परे तस्य अता सह पूर्व्वोऽग् दीर्घोभवति । जायाः नदीः, वधूः, धेनूः मातॄः ; पुंसि तु सश्च नः विप्रान्, कवीन्, वायून् अगवादेरिति किम् ? गाः स्तुङ्गान्, † अवृजाः, अग्ने गाः, उदधिक्राः ॥ हाहास्तु वा ॥ हाहाः हाहः, हाहान् वा ।

† तुङ्गानिति विशेषणं पुंस्त्वप्रतिपत्त्यर्थम् अजा इत्यादि अग्रे जायते, अग्रे गच्छति, उदधिं क्रामति इति वाक्ये क्विपि क्रियर्गार्मक्षणमिति पञ्चमलोपोदीर्घश्च ।

३१। नामि। (नामि ७।)

आमादेशे नामिपरे पूर्व्वाङ्ग दीर्घोभवति। देवानाम्, अग्नीनाम्, वधूनाम्, धेनूनाम्, पितॄणाम् नामीति किम् ? कर्म्मणाम्।

३२॥ नृणाम् वा॥ (नृणाम् ०१। वा ०१।) (१६)

नृशब्दस्य दीर्घोवा स्यात्। नृणां नृणाम् वा।

३३॥ न तिसृचतसृोः। (न०१, तिसृ, चतसृोः ६॥)

अनयोर्नामि न दीर्घः। तिसृणाम्, चतसृणाम्।

३४॥ त्रिचतुरोः स्त्रियां तिसृचतसावचि तु रान्तावनामि।

(त्रि, चतुरोः ६॥, स्त्रियां ७।, तिसृ, चतसौ १॥, अचि ७।, तु०१।, रान्तौ १॥, अनामि (न-आम्) ७।) (१७)

स्त्रीलिङ्गे त्रिचतुरोः स्थाने तिसृचतसौ भवतः। तिसृभिः, चतसृभिः, अचितु-रान्तौ तिस्रः चतस्रः आमि निषिद्धौ तिसृणां चतसृणां, स्त्रिया अन्यलिङ्गत्वे च प्रियास्तिस्रो यस्य स प्रियतिसा, प्रियचतसा, प्रियतिसौ प्रियचतसौ, नान्यलिङ्गस्य स्त्रीत्वं प्रिया त्रयोयस्याः सा प्रियत्रिः, प्रियचत्वाः स्त्री।

(१६) नृणामिति षष्ठ्यन्तानुकरणं लुप्तप्रथमैकवचनान्तं पदं। तेन पक्षे दीर्घाभावः।

(१७) स्त्रीलिङ्गे वर्त्तमानयो स्त्रिचतुरोरित्यन्वयात् स्त्रियामिति त्रिचतुरोर्विशेषणम्।

## ३५ ॥ आमोनां रषनान्त-संख्या-ह्रस्वनद्यापस्त्रिस्त्रयश्च। (१८)

(आमः ६।, नाम् ०१।, र-ष-नान्त संख्या, ह्रस्व, नद्यापः (नदी, आप्) ५।, त्रेः ६।, त्रयः १।, च०१।)

रेफ, षकार, नकारान्त संख्याभ्यो, ह्रस्वान्तात्, नदीसंज्ञकाश्च, परस्यामो नामादेशो भवति। र-ष-नान्त संख्याभ्यः स्वार्थएव-चतुर्णाम्, षण्णाम्, पञ्चानाम् परमपञ्चानाम्, नेह प्रियपञ्चआम्; ह्रस्वात्—विप्राणाम्, कवीनाम्, वायूनाम्, तिसृणाम् नद्यादेः—नदीनाम्, लक्ष्मीनाम्, नारीणाम्, भीरूणाम्, आपः खट्टानाम् त्रेस्त्रयश्च स्वार्थएव त्रयाणाम्, नेह प्रियत्रीणाम्; एभ्य एवेति किम्? खलपूाम्, ग्रामन्याम्, हाहाम्।

अचि तु रान्ताविति आमोऽनात्विन् अचि रान्तौ तिसृचतसाविति त्रयंरूपीभवतः। ननु इको यणचीत्यनेनैव रान्तादेशे सिद्धे किं पुनरेतेनेति चेत् न इकोयणचीत्यस्य बाधकानि ऋती ङौटोः प्रभृतीनि यानि सूत्राणि सन्ति तेषामपि बाधकार्थं। न नु आमीनामादेशस्य नित्यत्वात् अजादित्वाभावात् नरेफ प्रवृत्तिरस्ति कथं निषेध प्रवृत्तिरिति चेत् न नित्यादन्तरङ्ग इति न्यायादन्तरङ्गः प्रकृत्याश्रितादेशः प्रत्ययादेशं बाधितुमिष्टः। अतएव न तिसृचतसॄरिति दीर्घनिषेधोयुज्यते। नामीति (न-आमि) वक्तव्ये यदनामीतिसमस्तं निर्दिष्टं तज्ज्ञापयति नकारोपलक्षिते रैफान्तादेशोन प्रवर्त्तते। तेनान्यापि यानुमागमनकारोपलक्षिता आतिसृवर्णापि न प्रवर्त्तते प्रियतिसृणी कुले। यदा त्रिचतुरोः स्त्रीलिङ्गयोः समासादन्यलिङ्गता तदापि तिसृचतस्रादेशः, अन्यलिङ्गयोस्तु समासात् स्त्रीलिङ्गत्वे निषेधः।

(१८) रश्च, षश्च, नश्च—रषणा स्तेऽन्ते यस्याः सा रषनान्ता सा चासौ संख्या चेति कथा, ततो द्वन्द्वः, ननु विधयेविशेषणमन्त्यमिति न्यायात् रषनान्तसिद्धेः किमन्तग्रहणेनेति चेत् नैवं सर्वत्र द्वन्द्वसमासनिरासार्थं। रषनान्तसंख्याभ्यः स्वार्थएव परमपञ्चानामिति कर्मधारयस्योत्तरपदप्राधान्यात्। त्रेस्त्रयः स्वार्थएव।

## ३६ । टाङसियामदोषेः । (१९)

[टा ०१।, ना ।१, अस्त्रियाम् (न—स्त्री) ७ ।, अदोषेः (अदस्-घि) ५ १) ।

अदसो घ्यन्ताच्च परस्टा ना स्यात् । अमुना, वायुना, मधुना पूर्वे विप्रतिषेधे नुम् न भवति । अस्त्रियामिति किम् ? अमुया मत्या ।

## ३७ । अतष्टाभिस्ङेङसिङसामिनात्स्याः अनवलोपे । (२०)

---

(१९) टा इति प्रथमैकवचनान्तं पदं, अदोघेरिति समाहारद्वन्द्वस्याऽपि सूत्रे लिङ्ग-वचनमतन्त्रमिति न्यायात् पुंस्त्वम् । मधुनेत्यत्र विप्रतिषेधे परं कार्य्यं क्वचित् पूर्वमिति, व्याख्यानं, तेन मधुशब्दात् परत्वात् प्राप्तोऽपि नुम् निषिध्यते । यथोभययापीष्टसिद्धेः किम नयः कल्पनयेति चेत् नैवं, रायमतिक्रान्तेन कुलेन अतिराणेत्यसिद्धेः; न च वाच्यम् सन्निपातलक्षणत्वाच्च न भविष्यतीति, तस्यानित्यत्वात् । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति परिभाषा. अस्यार्थस्तु यं दृष्ट्वा यस्य सम्भवः स तस्य सन्निपातः सः (सन्निपातः) लक्ष्यते येन स विधिस्तद्विघातस्य न निमित्तं भवति । यथा रायमति-क्रान्तेन कुलेन ह्रस्वो नपुंसके प्रातिपदिकान्तस्येति ह्रस्वं ह्रस्वत्वे पुनरेचइगेव भवतीति ऐकारस्येकारो ह्रस्वः अतिरि प्रकृतेः टा ना कृते हलि परतः एकदेशविकृत-मनन्यवद्भवतीति न्यायात् स्थानिवद्भावाच्च इकारस्थाने आकारः अतिराणेति सिद्धम्, अत्र सन्निपातलक्षणविधिः टा-नाकृते आत्वविधिः स नुम्विघातस्य न निमित्तं भवि-तुमर्हतीति अतोऽत्र नुमेव, न तु ना इत्याशङ्कया तस्यानित्यत्वादिति, प्राह, "इक नुम-सन्निमटामीषेति संप्रसारणम्, स्वादिहले परे नुमसन्नितयोष्टामीश्च परयोः रैशब्दस्य इकार आह्नवति इकारस्य स्थानित्वादेव क्लीबे विधानं नस्य क्लीबे रैशब्दस्य इकारः सम्भवति । इति गोयीचन्द्रः, बकुरिणेति कातन्त्रसम्मतम् । प्रियरिणेति सिद्धान्त-कौमुदी, अत्र मते नुमेव अतो न पूर्वोक्त कल्पना-प्रयासः ।

(२०) अनवलोपेत्यत्र वेत्युपलक्षणं तेन वलोपेऽपि न स्यात् । यथाव्युत्समासवच्चापि अवभिरिति विष्णुमिश्रः ।

[अतः ५। ।, टा-भिस्-ङे-ङसि ङसाम् ६॥, इन-ऐस्-य-आत् स्याः १॥, अनवलो (न-न,व,लोप ७। ]

अतः परेषां टादीनां स्थाने यथाक्रमं इन, ऐस्, य, आत्, स्या इत्येते स्युः। केन, कैः, देवाय, देवात्, देवस्य ; अत इति किम्? खट्टया ; अनवलोप इति किम्? राजभिः, वृत्तव्, वृत्तभिः।

## ३८। एद्भ्यसोसांसुप्सु।

[एत् ०१ ।, भ्यसोसां (भ्यस्, ओस्, आम्) सुप् ७॥ ]

अर्थवशाद्विभक्तिविपरिणामः। (२१) भ्यसादौ परे अतः स्थाने एद्भवति। केभ्यः, केषाम्, केषु अनवलोप इत्येव—राजभ्यः, वृत्त्व वृत्तभ्यः।

## ३९। अयोसि आपष्टाति च।

[अय् ०१।, ओसि ७।, आपः ६।, टाति (टा-आत्) ७।, च०१। ]

ओसि परे अतोऽय् भवति। आपष्टासम्बन्धिन्याति च। विप्रयोः खट्टयोः, खट्टया।

## ४०। भ्यामि यि दीर्घः। [भ्यामि ७।, यि ७। दीर्घः १। ]

भ्यामि यकारे च परे अतो दीर्घः स्यात्। देवाभ्याम्, देवाय, अनवलोप इत्येव राजभ्याम्, वृत्तव् वृत्तभ्याम्।

---

(२१) पूर्वसूत्रे अत इति पञ्चम्यन्तमासीत् अत्रार्थवशात् षष्ठ्यन्तमिति विभक्ति विपरिणामः।

४१ । इदुतोरौता । [इदुतोः ६॥, औता ३ । ]

सुप औता सह इदुतोर्दीर्घः स्यात् । पती, धेनू, तपरः किम् ? नद्यौ, धीवन्ध्वौ ।

४२ । ङेरौरच्च घेः । [ङेः ६ ।, औः १ ।, अत् ०१ ।, च ०१ ।, घेः ६ । ]

इदुतोः सम्बन्धिनोङेरौः स्यात् । सख्यौ, पत्यौ, अच्च घेः कवौ, धेनौ ।

४३ । जसि गुणः । [जसि ७ ।, गुणः १ । ]

जसि परे इदुतोर्गुणोभवति । पतयः, धेनवः ।

४४ । ङिति घेरतसादौ ।

[ ङिति ७ ।, घेः ६ ।, अतसादौ (न—तस्—आदि) ७ । ]

ङिति परे घिसंज्ञकस्य गुणोभवति । अग्नये, धेनवे, वायोः, घेरितिकिम् ? धेन्वै, सख्ये, पत्ये ; अतसदाविति किम् कुतः, कुत्र ; सुपीत्येव पट्वी ।

४५ । ऋतो ङ्यौटोः । [ऋतः ६ ।, ङ्यौटोः (ङि,—औट्) ७॥ ]

ङि औटोः परयोर्ऋदन्तस्य गुणोभवति । पितरि, पितरौ, पितरः, पितरम्, पितरौ ; एवं मातृ, भ्रातृ दुहितृ, यातृ, नृ, ननान्दृ, देवृ, मानिअसिष्टस्यैकस्य न स्तु अतृ ।

४६ । ऋता ङसिङसोरत उः ।

[ऋता ३ ।, ङसि, ङसोः ६॥, अतः ६ ।, उः १ ।]

ऋदन्तस्य ऋता सह ङसिङसोरुत उर्भवति । पितुः कर्त्तुः ।

**४७ । ख्यात्याच्च ।** [ख्यात्यात् ५ ।, च० १ ।] (२२)

खि, ति, ह्रस्वौ च, खी, ती, दीर्घौ च, अनयोर्ययो र्यणादेशः क्रियते, तयोः कृतयणादेशयोरिदं ग्रहणं ख्यत्यात् परस्य ङसिङसो-रुत उर्भवति । सख्युः, पत्युः, सखायमिच्छति, सखेवाचरतीति क्यच् क्यङन्तात् क्विप् यलोपः, सखीः, सख्युः, एवं पतीः पत्युः नखमि-च्छति नखीयति, नखीः नख्युः । त्य ग्रहणात्तादेशेनोपधस्यापि (२३) लुनीः-लुन्युः, धूनीः धून्युः, इह कस्मान्न भवति जरत्याः आकारव्यव-धानात् क्यप्रत्यये क्विबन्तस्यापि अवयव-स्त्रीविषयत्वान् नदीत्वमिति जरत्याः पुंसः ।

**४८ । आ नद्या ङिति ।** [आ० १ ।, नद्याः ५ ।, ङिति ७ । ]

---

(२२) ख्य, त्य, इति कृतयणादेशयोर्निर्देशः ।

(२३) लूञ् छेदने इति लूधातोः क्तप्रत्ययः, ततः ऋल्वादिः क्तिमस्तीन इति वा नत्वं, ततः लूनमिच्छति क्यच् क्विपयलोपः लूनीः । एवं ग्रामीमिच्छतीति ग्रामीः, प्रक्षीम मिच्छतीति प्रक्षीमीः, एतयोरपि ङसिङसोर्यण् ख्यत्यात् इत्युत्वम् ग्राम्युः, प्रक्षीम्युः शुष्कीयति शुष्कीः, पक्कीयति पक्कीः, ङसि, ङसोः शुष्क्युः, पक्क्युः इति धातोः संयोग-पूर्वकत्वान्न यण, ततश्च त्यात् परत्वाभावान्न उदिति बोध्यम्, अतएव मूले नादेशनोपध-स्यापीति यदुक्तं तन्न युक्तं नादेशमात्रस्यापीति वक्तव्यम् । लूञः क्तिः लूनिः, लूनिरिवा-चरति लूनीः, ङसिङसोः लून्युः, एवं पतिमिच्छति पतिरिवाचरति पतीः ङसिङसोः पत्युः खमिच्छतीति खीः ङसिङसोः खियः इति एकाच्त्वात् यकाराभावः ; ईप्रत्ययान्त-स्त्रीलिङ्गस्य सखीशब्दस्य तु ङसिङसोः सख्याः इति रूपम् आकारव्यवधानात् ।

ङिति परे नदीसंज्ञकादुत्तरे आकारागमः स्यात्। लक्ष्म्यै, धेन्वाम्, धीवध्वाम्।

४९। याप:। [या०१।, आपः ५।,]

आवन्तात् ङिति या स्यात्। बालायै, बालायाः।

५०। औङ्ङी नपुंसकाच्च। ...

[औत्०१।, ङी०१।, नपुंसकात् ५।, च०१।]

आपः क्लीवाच्च औङ्ङीः स्यात्, (ङकारः विशेषार्थः)। बाले, बाले, वारिणी, वपुषी, मलात् त्रिदुषी, कुले सुमखी, तिरश्ची।

५१। ङेरामागमानीभ्याम्।

[ङेः ६।, आम्०१।, आगमानीभ्याम् (आगम-आ, नी)५।]

आगमाकारान्नियश्च ङेराम् स्यात्। नद्याम्, वध्वाम्, बालायाम्, तस्याम्, नी-सेनान्याम्, ग्रामण्याम्।

५२। अचि युक्त भ्रुधातुस्त्रीभ्रुवामपदान्ते य्वोरियुवौ।

[अचि ७।, युक्तभ्रु,—धातु, स्त्री,—भ्रुवां ६।।।, अपदान्ते (न पदान्त) ७।, य्वोः ६॥, इयुवौ (इय्—उव्) १॥]

अगुण वृद्धि-विषयार्थं वचनम्। अचि परे युक्त-भ्रु-प्रभृतीनां य्वोरिकारउकारयोरियुवौ स्याताम्। प्राप्नुवन्ति, धातोरधीयाते, चिच्चियतुः, श्रियः धियः निधुवनं कुटादि, तुष्टुवुषे, अचध्रुवः स्त्रियै, भ्रुवे; युक्त-भ्रु इति किम्? सुन्वन्ति अपदान्त इति किम्? अत्यर्थं

भ्रुवँ परत्वाद्गुणवृद्धीभ्यां बाध्येते, चयनं चायकः, प्राभवाणि; क्वचिन्नानुकरणे अग्नौचिः।

५३। अभ्यासस्याऽसवर्णे। [अभ्यासस्य ६।, असवर्णे (न—सवर्ण) ७। ]

असवर्णे अचि परे अभ्यासस्य य्वोरियुवौ भवतः। इयाय, उवोष, असवर्ण इति किम्? ऊषुः।

५४। स्त्रिया वामश्शसोः। [स्त्रियाः६।, वा०१।, अम्‌शसोः ७॥ ]

अमि, शसि च परे स्त्रिया इय् वा स्यात्। स्त्रियं, स्त्रीं, स्त्रियः, स्त्रीः।

५५। न श्निनोः सार्वधातुके।

[न०१, श्निनोः (श्नु-इन्) ६॥, सार्वधातुके ७। ]

सार्व्वधातुके जुहोतेरिनश्च तौ न स्याताम्। जुह्वति, यन्ति, आयन्; इन इति किम्? इकौ अधीयन्ति, सीतयो राघवयो रधीयन् (इति भट्टिः), केचिदिह विकल्पन्ते। (२४)

५६। एरनेकाचोऽसंयुक्तधातोर्यः सवर्णेऽपि।

[एः ६।, अनेकाचः (न-एक-अच्) ६।, असंयुक्त-(न-संयुक्त)-धातोः ६।, यः १।, सवर्णे ७।, अपि० १। ]

असंयुक्तधातोरिकारस्य सवर्णेऽप्यसवर्णेऽप्यचि परे यः स्यात्।

---

(२४) केचिदिति "इन्द्रानुसारिणः। सार्वधातुक इति किम्? जुहुवतु, ईयतुः।

जग्मुः, निन्युः, निन्यिरे, निन्युष;, द्वित्वात्ऽनेकाच्त्वम् चिच्चियुः एन केवलस्य इयुः, अधीयिरे । (२५)

## ५७। ओःसुपि यणो नित्यसमासे क्विबन्तस्यासुधियः ।

[ओः ६।, च०१।, वः १।, नित्यसमासे ७।, क्विबन्तस्य ६।, असुधियः (न-सुधी) ६। ]

क्विबन्तानां धातूनां इकार उकारयोरचि य, वौ स्याताम् । सेनान्यौ उन्नौ, तिथिप्रश्यः प्रक्षौ, प्रक्षि, वृक्षमिच्छति इति वाक्ये वृक्षभीस्तस्य ङौ वृक्षभ्यि, अत्र समासादनेकाच्त्वं । नित्यैकार्थमात्रे च मालीयति माली: माल्यः ; ओर्वः खलप्व, अङ्गदस्व, इह हि-वातप्रमी हूहादेर्धातुवद्वा वातप्रम्यः वातप्रमौ वा, हूहू हूहू वा, हूहः हूहून् वा । एवं लग्नह, ग्रकह, नित्यसमास इति किम् ? परमनियौ, अवणधिया ; वृकाङ्गीरिति विग्रहे वृकभीः,तस्य ङौ वृकभियि असुधिय इति किम् ? सुधियौ धातोरित्येव-विगता इयस्य स वोः, तस्य ङौ वी । संयुक्त इत्येव यवक्रियौ, कटप्रुवौ । (२६)

---

(२५) सवर्णेऽपीत्यापिना असवर्णे इत्यनहाप्यते सामान्येऽचीत्यर्थः । निन्युष इत्यादौ, यद्यप्यन्यकार्य्यात् परात् द्विर्वचनं लिङादिष्विति वक्ष्यते, तथापि यावत् सम्भवस्तावद्विधिरिति न्यायात् द्विर्वचने कृते यः प्रवर्त्तते इत्यभिप्रेत्याह द्वित्वेति, इदं पुनरेकाच्संज्ञाभ्यां बाध्यते. अतएव वक्ष्यति अत्र समासादनेकाच्त्वमिति । यद्येवं तर्हि इणधातोर्द्विर्वचने कृते सन्धानात् प्रागनेकाच्त्वे सति कथं योनस्यादित्याह एन केवलस्येति आगमाश्रयः अत कृतेऽपि सन्धौ भाविनि भूतवदुपचार इति न्यायादेकाच्त्वमेव एवं लुयः, लुवौ ।

(२६) अत—चकारेण एव य इत्यनहाप्यते, सेनान्यमित्यादयः क्विबन्ताश्च सर्वोपमितौ नित्यसमासः । अत्रापि समासान्तपदस्य धातुत्वात् सर्वस्य तथा व्यपदेशः ;

**५८। भुवोवर्षापुनर्दृण कारकाराभ्यः।**

[भुवः ६।, वर्षा-पुनः—दृण्—कार-काराभ्यः ५।॥]

**एभ्य एव भुव ऊर्ध्वं स्यात् वर्षाभ्वौ, पुनर्भ्वौ। नियमः किम्? प्रतिभुवौ, स्वयम्भुवा। (२७)**

---

इह समासपदमुपलक्षितमिति प्रथ्नोति नित्यैकार्थमात्रेति खलं पुनातीति क्विप् अन्तः स्न इति क्विप्। हि अवधारणे इदेव अन्यथविधौ वातप्रमातीति वाक्ये वातप्रमीरिति निपातनादौणादिक ईः, अस्य चतुष्पाद्वाचित्वान् द्विलिङ्गता; अप्राप्ते विभाषा उक्ताच अमा वात प्रमीं विद्धि, शमा वातप्रमीमिति। तौ वातप्रमीश्चैषं तु ग्रामण्या सदृशं भूतमिति। स्वयम्भूशब्देन स्वधावीजमुच्यते, सुष्ठु ध्यायतीति सुधीरिति व.ब्रीहेरनित्यसमासत्वादयमपि प्रादिसमासः। परमश्चासौ नीश्चेति विग्रहे परमनियौ, परमं नयतीति क्विपि तु परमन्याविति गोयोचन्द्रः। पदानां प्रत्यर्थैर्योगः समासोवा ऐकार्थः।

(२७) पुनर्भूः स्याद्दिरूढायां दृण्भूः पन्नगराजयोरित्यमरदत्तः, दृण्भूः स्त्रीसर्पराजयोरिति मेदिनी, काराभूर्निगडस्थाने क्रियायामपि चेष्यत इति अपि च—पुनर्भवायां वर्षाभूः स्त्रियां किञ्जुके भवे पुनर्भूः स्यात् दिरूढायां दृन्भूः पन्नगराजयोः काराभूर्निगडस्थाने क्रियायामपि चेष्यत इति। दृण् पूर्वात् भवतेः, हृषादेरक्ङिति उक्तत्वाद्दृणभूशब्दोव्युत्पादितः ऊणादिकत्वात् गुणाभावः दृण्भुं दृण्भुः; इत्यत्र अस्यतेकः पूर्वाक, असि दीर्घेति विधानात् पूर्वं वादेशार्थं दृण् भू ग्रहण मितिभाष्यम् क्विबन्तपक्षे तु नियमार्थमेव। वर्षाभ्वश्चेति पाणिनीयं सूत्रम्। ततो दृन्करपुनःपूर्वस्य भुवो वण् वक्तव्यः। इति वार्त्तिकम्, करस्थाने क्वचित् कार इति पठितम्। चान्द्रस्तु वर्षापुनर्दृन्काराभ्य भुव इत्यसूत्रयत्। कारा पूर्वाच्चेष्यत इति वामनः। एतमेव संगृह्य पद्मनाभेन स्वसूत्रं रचितम्। दृन्भू काराभूशब्दौ स्वयम्भूवदिति सिद्धान्तकौमुदी, एतद्धि वामनविरुद्धम्, तत्र करभूशब्दस्य करभ्वौ, करभ्वः इत्युदाहरणे दर्शिते। दृण्भ धातो रौणादिक ऊप्रत्ययेन सिद्धस्य दृण्भूशब्दस्य, तु दृण्भ्वौ दृण्भ्वः, दृण्भूं, दृण्भ्वौ दृण्भू

५९। स्वमोर्लुक् नपुंसके।

[स्वमोः (सु-अम्) ६॥, लुक् ०१।, नपुंसके ७।]

क्लीबे स्वमोर्लुक् स्यात्। दधि, मधु, कर्त्तृ, पयः, अहः। ह्रस्वो नपुंसके प्रातिपदिकान्तस्य। सुधि, अतिरि (२८)

६०। अतोऽम्। [अतः ५।, अम् ०१।]

क्लीबेऽदन्तात् स्वमोरम् स्यात्। खं, वनं, सोमपं। (२९)

६१। डतरादिभ्यः पञ्चभ्यो डत्वनेकतरात्। (३०)

[डतरादिभ्यः (डतर-आदि) ५।।।, पञ्चभ्यः ५।।।, डतु ०१।, अनेकतरात् (न एकतर) ५।]

---

नित्येवं रूपाणि भवन्ति। अथैतदपि रहस्यं बोध्यं पाणिनीये 'स्त्रियाः' इति सूत्रादनन्तर 'नभूसुधियोः' इति निषेधसूत्रेण भूसुधीशब्दयोर्यथासम्भवं इयुवौ विहितौ ततश्च वर्षाभ्वादीनां नियमः, पञ्चनाभिन वर्षाभ्वादीनां नियमनात्तेभ्योऽन्यत्र नित्यसमस्तस्य क्विबन्तस्य भूशब्दस्य उव् भवतीति सूचितम्। आमि स्त्रियां नौत्च इति सङ्क्षिप्तसारसूत्रम् तदर्थस्तु, वर्षाभ्वादिभ्य उत्तरस्य स्त्रियां आमि परे ऊकारस्य वः न भवति, उवादेशश्च न भवति। तथाद्यामः स्थाने नामेव। वर्षाभूणां, पुनर्भूणां, दृग्भूणाम्, काराभूणामिति।

(२८) शोभना धीर्यस्मिन् कुले, रायमतिक्रान्तं कुलं एषु इण् ह्रस्वत्वे इति इ ह्रस्वः।

(२९) अकारकरणन्तु अरसाद्यर्थमिति व्याख्यास्यामः। ननु औ मित्यादौ कथं सम्बुद्धिलोपं विहाय परत्वादम् न प्रवर्त्तते? नैवं सावकाशनिरवकाशयोर्निरवकाशविधिर्बलवानिति निरवकाशत्वात् सम्बुद्धिलोप एव स्यान्नामादेशः सोमपेति सोमं पिबतीति क्विप्।

(३०) इह डतरशब्देन प्रत्यय उच्यते, तस्य केवलस्यासम्भवात् तदन्तो गृह्यते। सर्वनामान्तर्गणोऽयं डतरादिः। डतु करणन्तु टिलोपार्थम्। इहापि सावकाशनिरवकाशयोः सावकाशविधिर्बलवानित्यादिना हल्ङ्यादिलोपमदृष्ट्वा डतुः प्रवर्त्तते। लोप-

डतर्—डतम प्रत्ययान्त, अन्य, अन्यतरेभ्यः क्लीवे स्वमोर्द्धत: स्यात्। कतरत्, कतमत्, अन्यतरत्; अनेकतरादितिकिम्? एकतरम्।

६२। जश्शसोः शिर्झल्चोर्नुम् च।

[जश्शसोः ६॥, शिः १।, झलचोः ६॥, नुम्०१।, च० १।]

क्लीवे जश्शसोः स्थाने शिर्भवति। तत्सन्नियोगे झलान्ताजन्तयोर्नुम् च। कर्म्माणि, चत्वारि, सुदिवि; झलचोर्नुम् च—जगन्ति, महांसि; सान्तस्य दीर्घः (२।३।८०।)—वपूंषि, मानडुांहि। न वहूर्ज्जो नुम्, रेफात् परस्य वेत्येके। वहूर्जि, वहूरञ्जि वहोरन्यत्र नुम्, अत्युर्ञ्जि कुलानि, दधीनि, कर्त्तॄनि (३१)

६३। इकोऽनाम्यचि।

[इकः ५।, अनामि (न—आम्) ७।, अचि ७।]

क्लीवे इगन्तात् स्वाद्यचि परे नुम् स्यात्। दधिनी, वारिणी, मधुनी, कर्त्तृणी। आमस्तु नामेव—वारीणाम्।

देवेन तु हे अन्य इत्युदाहृतम्। (शि. वि, प्रकाशित सु, वो, पत्र, ६५) तद्धि सम्बुद्धिलोपस्य न भवतीति वार्त्तिकविरुद्धम्। अन्यतमशब्दस्य तु अन्यतममित्येवेति सिद्धान्तकौमुदी।

(३१) उर्ज्ज बलप्रमाणयोः क्विप्, वहवो उर्ज्जो येषां तानि वहूर्ञ्जि एतदेव निषेधविधानं ज्ञापयति हलद्वयव्यवायेऽपि नुम् भवतीति। रेफादित्येके रेफजकारयोर्मध्ये इत्यर्थः, तथाच वार्त्तिकम् ग्रो वा वहूर्जः प्राङ् नुम् इति। वहोरन्यत्र, वहुभिन्नपूर्व्वस्योर्ज्जो नुमित्यर्थः।

६४। टाद्यचि भाषितपुंस्कं पुम्वद्वा।

[टाद्यचि (टा—आदि—अच्) ७।, भाषितपुंस्कं०१।, पुम्वत्०१।, वा०१। ]

अर्थाद्विभक्तिविपरिणामः। टाद्यचि परे भाषितपुंस्कमिगन्तं पुम्वद्वा स्यात्। शुचये, शुचिने; शुचेः शुचिनः कुलस्य भाषित पुंस्कमिति किम्? मधुने।

६५। अस्थिदधिसक्थ्यक्ष्णामन्तोऽन्।

[अस्थि, दधि, सक्थि, अ(क्षि)क्ष्णाम् ६।॥, अन्तः १।, अन्०१। ]

टाद्यचि परे अस्थ्यादेरन्तोऽन् स्यात्। अस्थ्ना, दध्ना; उत्तरपदस्य प्रियास्थ्ना, दध्नः, सक्थ्नः, अक्ष्णा उक्तं क्लीवे।

६६। रायोरा हल्यतसि। (३२)

[रायः ६।, रा०१।, हलि ७।, अतसि (न-तस्) ७।]

हलादौ सुपि परे रायो रा भवति। राः, वज्रराः, राभ्याम् क्लीवेऽप्यसौ अतिराभ्याम्, कुलाभ्याम्, हलीति किम्? रायौ, अतसीति किम् रैतः।

---

(३२) तदन्तस्यापीति सिद्धान्तकौमुदी अतिदध्ने। अतिदध्ने विप्रायेत्यत्र समस्तोहि पुंलिङ्गः, दधिशब्दस्तु तदेकदेशः क्लीवमेवेति भवत्येवानादेशः स्त्रीलिङ्गे च अतिदध्ने, अतिदध्नेः एवं घृताद्ध्ना हरयेत्यादि, तेन गौणेप्ययमादेश इति मुग्धबोध टीका। क्लीवे इत्यनुक्त्वा यदृच्छाशब्दात्र स्यात्, दधिर्नाम कश्चित् तेन दधिना। न इत्यस्य केवलस्य विधाने सर्वत्रेष्टसिद्धावपि दधनीति न सिध्येदित्यन विधानम्।

६७ । वाचि जराया जरस् । (३३)

[वा०१ ।, अचि ७ ।, जरायाः ६ ।, जरस्०१ । ]

अजादौ सुपि जराया जरस् वा स्यात् । जरे, जरसौ ; जरां जरसम् ; अत्यादिप्रयोगे च अतिजरं, अतिजरसं विप्रं कुलस्वा क्लीवे अम्भावे लुकोविप्रतिषेधाज्जरसादेशे पुनर्लुक् न भवति । सकृद्गतो विप्रतिषेधो, यद्बाधितं तद्बाधितमेव । इह जरस्विधेरत इति विहितः सुवादेशविधिः (२।३।३७) पर्व्वस्तथाहि अतिजरेण, अतिजरसिन ; अतिजरैः, अतिजरसैः ; अतिजरात्, अतिजरसात् । अचीतिकिम् ? अतिजराय ; आमि—अतिजराणाम्, अतिजरसाम् ।

६८ । आत् सुना सखि ऋदुशनः पुरदंशोऽनेहोऽन्तस्यासम्बुद्धौ ।

[आत्०१ ।, सुना ३ ।, सखि, ऋत्, उशनस्, पुरदंशस्, अनेहस्-अन्तस्य ६।, असम्बुद्धौ (न-सम्बुद्धि) ७ । ]

सुना सह सख्यादेरन्तस्याद्भवति । सखा, कर्त्ता, उशना पुरदंशा, अनेहा ।

६९ । सखि, तृण, तृच्, स्वसृ, नप्तृ, नेष्टृ—त्वष्टृ, क्षत्तृ, होतृ-पोतृ-प्रशास्तॄणां वृद्धिरौटि ।

[सखि—प्रशास्तॄणां ६ ॥, वृद्धिः ।, औटि ७ । ]

---

(३३) अचसीति निर्द्देशसामर्थ्यात् हलीति न सामान्यतो हलि, हलादौ सुपीति गृह्यते तेन रैत्वं रैभ्यां इत्यादौ रायादेशो न भवति ।

एषामौटि प्रत्याहारे वृद्धिः स्यात्। सखायौ, सखायः, सखायं, सखायौ, कर्त्तारौ, क्षत्तारौ, नप्तारौ, नेष्टारौ, त्वष्टारौ, होतारौ, पोतारौ, प्रशास्तारौ औटीतीकिम्? सखीन् ।

७० । **गोद्यवोः सुटि ।** [गोद्यवोः, (गो, द्यो) ६ ॥, सुटि ७ । ] (३३)

सुटि गोद्यवोः शब्दयोर्वृद्धिः स्यात्। गौः, हे गौः, गावौ— द्यौः, द्यावौ ।

---

(३३) अचीति यस्मिन् विधिस्तदादावल् ग्रहणे "इति परिभाषा बलात् अचीत्यनेन अजादाविति बोध्यं तच्च सुपीत्यस्य विशेषणम्, अजादौ सुपीति, ततश्च जराया इदं जारमित्यादौ अचि परेऽपि न जरसादेशः, एवं निर्ज्जरस्यार्थं निर्ज्जरार्थं इत्यत्रापि न। इहापि तदन्तविधिरस्त्येवेत्याह अत्यादिप्रयोगे चेति विद्यामिश्रः अन्ये तु एक-देशविकृतमनन्यवद्भवतीति न्यायमाश्रित्य अतिजरनिर्ज्जरादौ जरसादेशं विदधति। (२।३।९०) अतोऽम् इत्यत्राकारकरणस्य प्रयोजनमाह अति जर-सङ्गम्। अतिजर शब्दस्यादन्तत्वात् अतोऽम् इत्यस्यैव प्राप्तौ स्वमोर्लु-गित्यस्य निषेधः, ततश्च जरसादेशे कृते हलन्तत्वादपि न लुक् कारणमाह सकृद्गतौ विप्रतिषेध इति सकृदेकवारं यद्बाधितं, तत् सर्वस्मिन् काले बाधितमेव, तस्य न पुनः प्रवृत्तिरस्तीति भावः गतः विप्रतिषेधः। अत इति अतस्तामिस् (१।३।३७) इत्यादि सूत्रेण विहितो विधिः टा-स्थाने ना इत्यादिरूपं कार्यं जरसादेशविधेः पूर्वमेव भवतीति भावः, तेन अतिजरेण, अतिजरस्मिन्, अतिजरैः अतिजरसैः, अतिजरात्, अतिजरसात्, इति सिद्धान्तकौमुदी ; वृत्तिकृता तु पूर्व्वप्रतिषेधेन इनातोः कृतयोः सन्निपात-परिभाषाया अनित्यत्वमाश्रित्य जरसि कृते निर्जरस्मिन्, निर्जरसादिति

७१। औदोतोऽम्शसोः। [औत्०१, ओतः ६।, अम्शसोः ७॥]

अमि शसि च परे ओत औत् स्यात्। गां, गाः; द्यां, द्याः;
अमि तक्रकौण्डिल्यन्यायेन विशेषविधिना वाध्यते।

इति अजन्तशब्द विवेकः।

रूपं न तु निर्ज्जरसा, निर्ज्जरस इति, भिसि निर्जरसैरिति रूपान्तरमुक्तञ्च। तदनुसारिभिश्च षष्ठ्येकवचने निर्जरस्येत्येवरूपमेतच्च भाष्यविरुद्धमिति सिद्धान्तकौमुदी, भाष्ये निर्जरैर्भवितव्यमिति स्पष्टमुक्तम्। संक्षिप्तसारे जरसश्चाख्यियामिनतावित्यनेन निर्जरादिशब्दे ष्विनातौ विहितौ। तत्र भिसि अतिजरैः अतिजरसैरित्युदाहृतम्। अत्रैवं निष्कर्षः वहिरङ्गविधिभ्यः स्यादन्तरङ्गविधिर्वलीति न्यायाश्रये तु प्रथमं जरसादेशे कृते न इनाताद्यादेशः, किन्तु सावकाशविधिभ्यः स्याद्बली निरवकाशक इति न्यायाश्रये तु जरसादेशकरणात् पूर्वं इनाद्यादेशः।

* सङ्क्षिप्तसारेऽत्र शंस्तृ, शास्तृशब्दौ गणितौ; केचित्तु शास्तरौ, शास्तर इति मन्यन्ते। सखायमिच्छति, सखीयति ततः क्विप् अल्लोपयलोपौ सखी, एकदेशविकृतस्यानन्यतया सखा, सखायौ, सखाय इत्यादि सम्बोधने तु हे सखीः! इति सिद्धान्तकौमुदी। एवं शोभनः सखा सुसखा, सुसखायौ, समुदायस्य सखिरूपत्वाभावादसखीति निषेधाप्रसक्तेर्घिसंज्ञा, सुसखिना, सुसखये सुसखेः, सुसखौ इत्यादि, एवं अतिशयितः सखा; अतिसखा, अतिसखायौ, परमः सखा यस्येति विग्रहे परमसखा, परमसखायौ; सखीमतिक्रान्तः अतिसखिः लिङ्गविशिष्टपरिभाषाया अनित्यत्वान्न टच्। क्रमदीश्वरस्तु सखायमिच्छति सखेवाचरतीति ततः क्विप् सखीः, सख्यौ, सख्य इत्येवं रूपाण्युदाहरन्त।

## अथ हलन्ताः ।

### ७२ । सादिस्थानेपुंसः पुमान्सच । (३४)

[सादिस्थाने ७ ।, पुंसः (पुमस्) ६ ।, पुमान्स् ०१ । च०१ ।, ]

अत्र पुंसः पुमान्स् स्यात् । सनुसक् आदेशोऽयम् । पुमान् पुमांसौ ; अन्यार्थे सुटि स्त्रियां पुंसोऽकपि ङीमिच्छन्ति । प्रियपुंसी, प्रियपुंस्यौ, शसादौ-प्रियपुंसः, प्रियपुंसा स्त्रिया ; अकपीति किम् ? प्रियपुंस्का ।

### ७३ । पथिमथ्यृभुक्षामेरात्थोऽन्थः सौ तु न स्यात् । (३५)

[पथिमथ्यृभुक्षां (पथिन्, मथिन्, ऋभुक्षिन्) ६॥, एः ६।, आत् ०१ ।, थः १।, अन्थः १ ।, सौ ७ ।, तु ०१ ।, नः ६ ।, च० १ ।, आत् ० १ । ]

(३४) गौणमुख्ययोर्मुख्ये कार्य्यसंप्रत्यय इति न्यायेन मुख्ययोरेव गोद्यो, शब्दयोरयं विधिर्नतु गौणयोस्तेन चित्रागु, विमलद्युशब्दयोर्नस्यादिति विष्णुमिश्रः सिद्धान्तकौमुदीकारस्तु श्चोतोणिदिति वाच्यम् । विहितविशेषणमेवेति वार्त्तिकद्वयबलेन ओकारान्तशब्दमात्रस्य गोशब्दवत् रूपं करोति, तथाहि उः शम्भुः स्मृतो येन सः स्मृतौः, स्मृतावौ, स्मृतावः, स्मृताम्, स्मृतावौ, स्मृताः एवं सह उमा वर्त्तते इति सौः सावौ सावः सां सावौ साः इत्यादि नैतद्भाष्यकृतां सम्मतमित्यत्र नेष्टमिति . गोयीचन्द्रः । वोपदेवेन तु ओ प्रत्ययान्तस्य ग्रहणं कृतम् ।

( ३५ ) पातेः पूङो वा डुमसुन् प्रत्ययेन पुमस् इति शब्दरूपं पाणिन्यादिसम्मतं, क्रमदीश्वरमते पुमस् इति शब्दरूपं तन्मते शसादावचि परे तस्य अकारस्य लुग् भवति, हलादौ तु अस्भागस्य पुंभ्याम्, पुंभिरिति, अस्माकं मते पुंभ्यामित्यादौ संयोगान्तस्येति स-लोपः ।

एषां सादिस्थाने इकारस्याद् भवति, सौ तु नकारस्यात् स्यात्, तत्सन्नियोगे अकारस्यान्थादेशः। पन्थाः, पन्थानौ, पन्थानः हे पन्थाः, मन्थाः; सुमन्थाः, ऋभुक्षाणौ।

७४। चतुरनडुहोराम् हः सौ नुम् च। (३८)

[चतुर-अनडुहोः ६॥, आम्०१।, हः ६।, सौ ७।, नुम्०१।, च०१।]

सादिस्थाने अनयोराम् स्यात् हान्तस्य सौ नुम् च। चत्वारः, अनड्वान्, अनड्वाहौ; अन्यार्थे च प्रियचत्वाः, प्रियचत्वारौ, प्रियानड्वांहि। सादिस्थान इत्येव-प्रियानडुत् कुलम्।

७५। अनडुहः स्त्रियाम्वा। [अनडुहः ६।, स्त्रियां ७।, वा०१।]

स्त्रियामस्याम् वा स्यात (मृ-इत्)। अनड्वाही, अनडुही वा गौरादि।

७६। उगिदचोर्नुमधातोः। (३६)

[उगिदचोः (उक्-इत्, अच्) ६॥. नुम०१।, अधातोः (न-धातु) ६।]

---

(३६) स्त्रियान्नान्तलक्षणे ङीपि भत्वाट्टिलोपः सुपथी नगरी, ऋभुक्षी सेना, आत्वं नपुंसके न भवति सुपथि वनं सम्बुद्धौ नपुंसकान्नलोपो वा वाच्यः हे सुपथिन् हे सुपथि। द्विवचने भत्वाट्टिलोपः, सुपथी, सुपन्थानि सुपथा, सुपथे, सुपथिभ्यामित्यादि सिद्धान्तकौमुदी, संक्षिप्तसारमतमेवमेव। स्त्रियां नान्तत्वादीपि अतिमथिनी, अन्यभुक्षिणी इत्यादौ टिलोपान्नेष्टापत्तिः स्यादिति मुग्धबोधटीका कौमुदी विरुद्धा।

(७३) क्रमदीश्वरेण चत्वार अनड्वाह इति शब्द रूपे स्वीकृत्य उभयत्र प्रसादौ उदिष्टितम्।

अनयो: सादिस्थाने नुम् भवति। उगित्—श्रेयान्, विद्वान् विद्वांसौ, उपेयिवान्, महान्, महान्तौ, बृहन्, बृहन्तौ, पृषन्, पृषन्तौ, भवन्, भवन्तौ ; अञ्चेर्नुप्तनकारस्य (३८) प्राङ्, प्राञ्चौ ; अधातोरिति किम् ? उखास्रत्, पर्णध्वत् ।

७७। युजेरसमासे। [युजेः ६।, असमासे (न-समासे) ७।]

युजे: सादिस्थाने नुम् स्यात्। युङ्, युञ्जौ ; असमास इति किम् ? अश्वयुक्।

७८। नाभ्यस्ताच्छतुः शौ तु वा॥

[न॰१।, अभ्यस्तात् ५।, शतुः ६।, शौ ७।, तु॰१।, वा॰१।]

द्विरुक्तजक्षादिषट्कमभ्यस्तं, तस्माच्छतुर्नुम् नास्ति। ददत्, जुह्वत्, जाग्रत्, चकासत्, शासत्, शासतौ ; शौ तु वा—ददति, ददन्ति कुलानि ; जक्षति जक्षन्ति।

७९। शप्श्यनभ्यां नुम् शीङ्योः॥

[शप्-श्यन्-भ्याम् ५॥, नुम्॰१।, शी,ङ्योः ७॥]

नियमार्थं वचनं। शीङ्यो: परयो: शप्श्यन्भ्यामेव शतुर्नुम् स्यात्। पचन्ती, दिव्यन्ती कुले ; पचन्ती, दिव्यन्ती स्त्री।

८०। शेषाऽवर्णाद्वा। [शेषावर्णात् (शेष अवर्ण) ५।, वा॰१।]

(३८) अञ्चेति ग्रहणं नियमार्थं उगितोऽधातोश्चेद्भवति तर्ह्यञ्चतेरेवेति तात्पर्यः स्त्रियां महती, बृहती, पृषती, जयती, दृपतीत्यादेः तु न नुम्।

अप्,-श्यन्भ्यामन्यस्मादवर्णात् श्री,ञ्योः अतुर्नुम् वा स्यात् तुदती, तुदन्ती कुले, स्त्री वा, करिष्यती, करिष्यन्ती कुले स्त्री वा; याती, यान्ती कुले, स्त्री वा; अवर्णादिति किम्? नाभ्यस्तादित्यनुवृत्तेर्धातोरातोलुकोऽन्तरङ्गत्वाच्च (२। ३। ७८), (२। ३। १३०) ददती, पुनती, रुन्धती, घ्नती।

## ८१। तृज्वत् क्रोष्टुरसम्बुद्धौ॥

[तृज्वत् (तृच्-वत्) ०१।, क्रोष्टुः १।, असम्बुद्धौ (न-सम्बुद्धि) ७।]

सादिस्थाने क्रोष्टुस्तृज्वत् स्यात्। क्रोष्टा, क्रोष्टारौ; असम्बुद्धाविति किम्? हे क्रोष्टो। स्त्रियाञ्च—तृज्वत् स्यात्। क्रोष्ट्री, क्रोष्ट्रीभिः।

## ८२। तृतीयादिष्वनाम्यचि वा।

[तृतीयादिषु (तृतीया-आदि) ७।।।, अनामि (न-आम्) ७।, अचि ७।, वा० १।]

आम्वर्जिते टाद्यचि परे क्रोष्टुस्तृज्वत् स्याद्वा। क्रोष्ट्रा, क्रोष्टुना; क्रोष्टरि, क्रोष्टौ। अनामीति किम्? क्रोष्टूनाम्। (३९)

## ८३। सान्तमहतोर्दीर्घो नुमि।

[सान्त (स-अन्त) महतोः ६।।, दीर्घः १।, नुमि ७।]

(३९) स्त्रियाञ्चेति विशेषकथनात् क्लीबे न, क्लीबे तृज्वद्भावप्राप्तिर्नास्तीति सूच्यते, अतएव न क्लीबे इति संक्षिप्तसारसूत्रम्। बहुक्रोष्टु वनं बहुक्रोष्टुने वनाय, पुम्वद्भावपक्षे, बहुक्रोष्टवे बहुक्रोष्टवे वनायेति। बहुक्रोष्ट्रीत्युदाहरणन्तु ददामवन्निर्विवादभिकारः भ्रान्तः यतस्तृज्वद्भावा-

अनयोर्नुमि परे दीर्घः स्यात् । विद्वान् विद्वांसौ ; पयांसि, रोचींषि, महान्, महान्तौ ; नुमीति किम् ? वेधसौ, असम्बुद्धा-वित्येव हे विद्वन्, हे महन् ।

८४ । नोपधायाः । [नोपधायाः (न-उपधा) ६ । ]

सादिस्थाने नान्तस्य उपधाया दीर्घः स्यात् । राजा, राजानौ सामानि, नुमि कृतेऽजन्तस्य नान्तत्वम् । वक्रपाणि तड़ागानि, मधूनि, कर्त्तॄनि । असम्बुद्धावित्येव हे राजन् । (४०)

८५ । अपः-अन्तो दोभि । (४१)

[अपः ६।, अन्तः १।, दः १।, भि ७ । ]

---

दिति गोयीचन्द्रः । क्रुश आह्वाने रोदने चेत्यस्मात् औणादिके तुनि क्रोष्टु-शब्दः, तृचि तु क्रोष्टृ शब्दः, द्वावपि शृगालवाचकौ, द्वयोरविशेषेण सर्वत्र-प्रयोगप्रसक्तेः असम्बुद्धिस्थाने स्त्रियाञ्च तृजन्त एव, तृतीयाद्यचि तूभयमन्यत्र असम्बुद्धौ तुनन्त एवेति प्रयोगनियमार्थं त्रिसूत्रीप्रवर्त्तत इति सिद्धान्त-कौमुदी टीकायां तारानाथः ।

(४०) प्रकरणनियमात् इति धातोर्नुनित्यस्याग्रहणम् अतएव हिसि हिंसायामित्यस्य क्विबन्तस्य सुहिन्, सुहिंस इत्यस्य दीर्घत्वाभावः ।

(४१) भ इति स्वादिरेव तेन अवभस्य इत्यत्र न । तदन्तादपि भवतीति सूचनाय स्वाप इत्युदाहृतम् शोभना आपः इति तत्पुरुषः, बह्वप्सीति तु बह्वः आप एष्विति बहुव्रीहौ, समासान्तविधेरनित्यत्वात् न समासान्तः, केचित्तु बहुवचने समासान्ताभावोऽनियत एवेति वदन्ति, तत्र प्रमाणं यत —बह्वपानि तडागानि सारसाः समुपासत इत्यादीनां प्रयोगाः

आप: सादिस्थाने दीर्घ: स्यात्। आपस्तिष्ठन्ति, स्वाप: स्वापौ; उपधाया इत्येव वङ्क्षि वङ्क्षीत्येके। समासान्ते—वङ्क्षपाणि. तड़ागानि, भादौ सुपि तस्यान्तो द: स्यात् अद्भि:, अद्भ्य:।

८६। सावत्वसन्तस्याधातो:। (४२)

[सौ ७।, अत्वसन्तस्य (अतु-अस् अन्त) ६।, अधातो: ६।]

सौ परेऽत्वन्तस्यासन्तस्य चोपधाया दीर्घ: स्यात्। कृतवान्, धनवान्, सुयशा:, सुमेधा:; अत्वन्तस्येति किम् धनवती न लुवन्तका-लुप्तेति निषेधात्, (१।१।३३) सुयश: कुलं; कथं यशांसि नुमि सान्तस्य विधे:, अधातोरिति किम्? पिण्डं ग्रसते पिण्डग्र:। असम्बुद्धावित्येव हे गोमन्, हे चन्द्रम:।

---

दृश्यते। केचिद्वदन्ति प्रथमविहितेन नुमा व्यवधानान्नदीर्घ: तेन वङ्क्षम्पीति वृत्तौ च तन्नोक्तं भाष्यानादृतत्वादिति गोयीचन्द्र:। नित्यात् परादपि नुम: प्राक् 'सम्प्रति' इति दीर्घ: प्रतिपदोक्तत्वात् स्वाम्पि, सिद्धान्त-कौमुदी। अस्यार्थन्तु नुमागमस्य सामान्यत एव विधानं कृतं. दीर्घस्तु अप् तृण इत्यादि शब्द विशेषाणामेव विहित: तस्मा नुमागमस्य नित्यत्वेऽपि पूर्वं दीर्घस्ततो नुम् इत्येकं मतं तन्मते स्वाम्पि, वङ्क्षाम्पीत्यादीनि सिध्यन्ति। अन्ये तु यदा नान्यत्र कार्य्यसिद्धि: सम्भवेत् तदैव प्रतिपदोक्तस्य प्राधान्यं अत्र तु न तथा आप: स्वाप: इत्यादौ दीर्घप्रसङ्गात् सावकाशत्वमतस्तं बाधित्वा प्रथमं नुमेव ततश्च नकारव्यवधानादकारस्य नोपधात्वं तन्न दीर्घ इति तन्मते स्वम्पि वङ्क्षम्पि इत्यादीनि भवन्ति।

(४२) सूत्रस्यास्य—अत्वन्तस्य, धातु-भिन्नस्यासन्तस्य असम्बुद्धौ सौ परे उपधाया दीर्घ: स्यात् इत्येवार्थो क्रमदीश्वर—भट्टोजिदीक्षितादि-बह-

८७। इन् हन् पूषार्य्यम्णां शौ च।

[इन्, हन्, पूषार्य्यम्णां (पूषन्, अर्य्यमन्) ६ ।।।, शौ ७ ।, च ०१ ।]

नोपधाया इति प्राप्ते नियमार्थं, एषां सुशोरेव दीर्घः स्यात्। दण्डी वृत्रहा, पूषा, अर्य्यमा, शौ च बहुदण्डीनि, सुवृत्रहाणि, सुपूषाणि, बह्वर्य्यमाणि; नान्यत्र प्रोषितार्य्यमनं तटौ असमुञ्जा—वित्येव हे-दण्डिन्।

.८८। ञमः क्विझलोः किङति क्रमः क्वि वा।

[ञमः ६ ।, क्विझलोः ७ ।।, किङति ७ ।, क्रमः ६ ।, क्वि ७ ।, वा ०१ ।]

क्विझलादिना धातुराचिप्यते, क्वौ झलि किङति च ञमन्तस्य धातोरुपधाया दीर्घः स्यात्। सत्यभान्, प्रशान्, प्रशामौ, प्रशामः अपदत्वादत्र नकारो न भवति। तनु—प्रतान्, प्रतान्भ्याम्; इनहन्निति--निर्द्देशात्तहन: अह्नाहनौ (२।३।८०), नेह परत्वान्-

---

पुष्ध्यायसम्मत एव। "अथवा अत इत्यत्रानुवर्त्तनीयं तदा धातुसम्बन्धिवर्जितस्यातः स्थाने दीर्घो भवतीति स्पष्टः सूत्रार्थो भवतीति गोयीचन्द्रः। पद्मनाभप्रदर्शितार्थस्तु सिद्धान्तकौमुदी विरुद्धः, यतः सिद्धान्तकौमुदीमते धातोरप्यत्वन्तस्य दीर्घो भवति उदाहरणन्तु गोमन्तमिच्छति, गोमदिवाचरतीति क्यच् क्यङ् वा गोमत्यति, गोमत्यते वा ततः क्विप् गोमदिति; सुपि-गोमान्, गोमन्तौ, गोमन्तः इत्यादि; गोशब्दात् मतुप् प्रत्ययेनापि गोमानितिरूपं भवति। गोमान्, गोमन्तौ, गोमन्त इत्यादि भातेः डवतुप् भवान्, भवन्तौ, भवन्तः; शत्रन्तस्यात्वन्तत्वाभावान्न दीर्घो भवतीति भवन्, कुर्वन्। पिण्डं ग्रसते क्विप् पिण्डग्रः, एवं अत्, ध्वत् इत्यादि।

मलोपेन (३।३।५८) संयत्; * क्रमादेर्वेऊलाधिकारे उदधि-क्रादयो निपातिताः, झलादौ दान्तः, शान्तवान्, शान्त्वा, शान्तिः यङ्लुकि—शंशान्तः; क्रमः क्विवा। क्रान्त्वा, क्रन्त्वा वा झलीति किम् क्रमित्वा, प्रक्रम्य, किङ्तीति किम्? मन्ता॥

८९। व ऊठ्। [वः ६।, ऊठ ०१।]

क्वौ झलि किङ्ति च वकारस्य ऊठ् स्यात्। अक्षयूः, अक्षद्युवौ, पटस्यूः रक्तस्रूः, नावयतेः क्विप् नौः, झलि द्यूतम्, स्यूतम्। धाव दिवोर्यङ्लुकि। दाधौतः, देद्यूतः, किङ्तीत्येव दाधाति, देदेति। अनुनासिके च वक्तव्यम्—स्रव् स्रौनाति। नैकस्य सुवन्तात् परस्य वृत्तवः।

९०। ज्वरत्वरस्रिव्यविमवामुपान्त्येन।

[ज्वर-त्वर-स्रिवि-अवि-मवां ६।।।, उपान्त्येन ३।]

एषामुपान्त्येन सह वस्योठ्स्यात्। क्वौ झलि किङ्ति च। जूः, जुरौ, जूर्त्तिः; तूः, तुरौ, तूर्त्तिः; (क) स्रूः स्रुवौ, स्रुतिः; ऊः, उवौ, ऊतिः धनमवतीति धनौः, शाल्यूः, मूः, मूतिः।

---

* इम् इन् '(२।।८०)' इति सूत्रे इन् इति निर्देशेन प्रतिपदोक्तत्वात् क्विझलोरित्यस्य इन् स्थले न प्राप्तिरवेति सूच्यते, अन्यथा तत्र इन् ग्रहणस्य वैयर्थ्यमेव स्यात्। संयदित्यत्र सुपूर्वकात् यमधातोः क्विपि वमतिततात्यनिटामित्यनेन (३।३।३८) मलोपस्य परत्वात् प्रथमप्राप्तिरेव।

(क) तूर्णमिति क्वचित् पाठः।

९१ । राल्लोपः । [रात् ५ ।, छ्वोः ६ ॥, लोपः १ ।]

क्वौ झलि क्ङिति च रेफाच्छ्वोर्लोपः स्यात् । मूर्च्छा, मूः, मूरौ, मूर्त्तिः ; धुर्व्वी—धूः, धूरौ, धूर्त्तिः ।

९२ । लोपो व्योर्वलि । [यः ६ ।, अयि (न-यू) ७ ।, हलि ७ ।]

यवर्ज्जिते हलादौ प्रत्यये यलोपः स्यात् । क्नुयी क्नुतः, पूयी पूतः, कण्डूयतेः क्विप् कण्डूः, कण्डूतिः, लोलूयतेः क्विप् लोलूः ; सखीयते, सखीः सख्यौ ; अतोलुकोऽस्थानिवत्त्वाद्धलि यलोपः । अयीति किम् ? श्रय्या ।

९३ । वस्य वकुलम् । [वः ६ ।, च ०१ ।, वकुलम् ०१ ।]

अनूठविषयार्थं वचनम् । अयि हलि वस्य लोपः स्यात् । दिदिवान्, दाधाति । एतः क्वौ वलोपः । देट्—देः, तेट्—तेः, सेट्—सेः † सवौ ; एत इति किम् ? अचक्रूः, दृचन् ; अयीत्येव दीव्यति । — (पदस्यान्तस्य) अधिकारोऽयम् ) ।

९४ । दिव उत्सौ त्वौत् ।

[दिवः ७ ।, उत् ०१ ।, सौ ७ ।, तु ०१ ।, औत् ०१ ।]

दिव् शब्दस्य पदान्तस्य वस्य उत्स्यात् । सौ पुनरौद्भवति । द्युभ्याम् द्युमयम्, द्युमाथः ; सौत्वौत्—द्यौः । पदस्येति किम् ? दिवौ ; केवलस्य ग्रहणान्नेह अचक्रूः ।

---

† क्रमदीश्वर मते—, देट दयुः, सेट सयुरिति भवति ; )

## ९५। कः क्विनन्तस्य नञोस्तुङः। नशोर्वा।

[कः१,, क्विनन्तस्य ६।, नञोः६।। तु° १।, ङः१।, नशेः६।, वा०१।]

क्विनन्तस्य पदान्तस्य कः स्यात्। दृक्, स्रक्, घृतस्पृक्, दृग्भ्याम् नञोस्तु ङ, प्राङ्, क्रुङ्, क्रुङ्भिः। नशेर्वा। नक्, नट्; पदस्येत्येव दृशौ।

## ९६। झषन्ताचां गड़दवां द्वितीयः स्ध्वोश्च। (४३)

[झषन्ताचां (झष् अन्त अच्) ६।।।, ग, ड़, द, वाम् ६।।।, द्वितीयः १।, स्ध्वोः ७।।, च०१।]

(४३) पाणिनिमते धातु सम्बन्धिनामेव गड़दवां स्थाने तद्द्वितीया घढधभ इत्येवं रूपा भवति, तेन गर्द्दभमाचष्टे गर्द्दभयतीत्यत्र दकारस्य न धकारः। मुग्धबोधानुगामिनां मते शब्दस्य धातोर्वा जड़दगव इत्येतेषां स्थाने क्रमेण झढ़ धघभ इत्येते भवन्ति, शब्दस्य स्सि विरामे च परे धातोस्तु स्ध्वे विरामेच इत्यर्थः। अत्र विशेषः—आदौ जब्, अन्ते झभ्, मध्ये हस वर्णस्य एकस्वरस्य च व्यवधानेऽपि स्यात्, न तु बहुस्वरव्यवधाने, तेन गर्द्दभमाचष्टे इति णिच् क्विप् गर्द्दभ् इत्यादौ न स्यात्। जकारस्य झकारो न स्यादिति जौमराः, तेन जभ् शब्दस्य जप्. जेह् शब्दस्य जेट् इति रूपं भविष्यति। इति मुग्धबोध टीका, निघुट्=नि+गुह+क्विप्, अजोघट=गुह+यङ—लुक्+लङ्दिप् घोक्ष्यति=गूह=लृट्+तिप्; अघु ढ्वं+गूह+लुङ्ध्वं तुण्डिभ माचष्टे+तुण्डिभयति ततः तुण्डिभयतेः; गोधुक्=गां दोग्धीति, गो+दुह+क्विप्, अधोक् दुह+लङ् दिप्, धोक्षि दुह लट सिप्; अधुग्ध्वं+दुह लङ् ध्वं, वक्ष्यति वह+लृटतिप्, मृगावित्=मृग+व्यध—क्विप्, विव्रत् सति=व्रध+सन्+लट् तिप्,।

पदस्य-झषन्तोऽच् येषां, तेषां गड्दवां स्थाने तद्वितीयो भवति। से, ध्वे च गुह-निघुट्, अजोघोट्, घोक्ष्यति, अघुक्ष्, तुण्डिभयते: क्विप् तुण्डिप्। दुह—गोधुक्, गोधुग्भ्याम्; अधोक्, धोक्षि, अधुग्ध्वं, गर्द्दभयते: क्विप् गर्द्दप्; बुध—तत्त्वभुत्, भोत्स्यति; अभुद्ध्वं दन्तौष्ठत्वात्र वह-व्यध-वृधाम्-वक्ष्यति, मृगावित, विवृत्सति, अपाणिनीयाः केचिदिह विकल्पयन्ति।

९७। वसुअन्सुध्वन्स्वनडुहां दः। (४४)

[वसु, अन्सु, ध्वन्सु-अनडुहां ६।।।, दः १।]

एषामृदानामन्तस्य दः स्यात्। विद्वत्, विद्वद्भ्याम् विद्वत्तायम्, उखास्रत्, पर्णध्वत्, अनडुद्भ्याम्; एषामन्तस्येति किम्? विद्वान्; पदस्येत्येव विद्वांसौ।

९८। मोनोधातोः क्वौ च। (४५)

[मः १।, नः २।, धातोः ६।, क्वौ ७।, च ०१।]

---

(४४) वसु प्रत्ययान्त एवात्र ग्राह्यस्तेन सुपूर्व्वकस्य वसधातोः क्विपि सुवः शब्दस्य तु न भवति, एकदेशविकृतमनन्यवदितिन्यायेन अनडुत्माम् इति भवति। सिद्धान्त कौमुदीकारेण वसु इत्यस्य, सान्तेति विशेषणं दत्तम्, तेन वसु प्रत्ययान्तेऽपि विद्वान् इत्यत्र न। पद्मनाभेन तु अन्तस्येति व्याख्यानात् तदेव प्रतिपादितम् यतो विद्वानित्यत्र वसु प्रत्ययस्यान्तस्य लोप एव। (४५) मुग्धबोधसंक्षिप्तसारयोः तिङन्तकृदन्तयोर्मकारस्य वमयोः, परयोर्नोविहितः यथा जंगन्मि, जंगन्वः, जंगन्मः इत्यादि, प्रशान्, प्र+शम+क्विप् क्रमः क्विभयोरिति दीर्घः, प्रशाम् इति शब्द

पदस्योधातोर्मान: स्यात्। क्वौ च। प्रशान्, प्रशान्भ्याम्, जगन्वान्, पदस्येत्येव प्रशामौ, नेटि—जग्मिवान्।

९९। रः प्राग् दीर्घं इणो हलि वश्चातङ्गितये कुरछुरसुपाम्। (४६)

[रः ५।, प्राक्० १।, दीर्घः १।, इणः ६।, हलि ७।, वः ५।, च० १।, अतङ्गिये (न-तङ्गित-य) ७। अकुरछुरसुपां (न-कुर छुर सुप्) ६।।।]

धातोः पदान्तरेफात् प्रागिणोदीर्घः स्यात्। गीः, गीर्भ्यां; सुगीः कुलम्; धूः, धूर्भ्यां पूः, पूर्भ्याम्; हलि वश्च, रस्य प्राक्-हलिग्रहणमपदान्तार्थं-दीव्यति, प्रतिदीव्नाम्, तिस्तीर्णे मूर्च्छति, अतङ्गित य इति किम्? दिव्यो, धुर्य्यः; अकुरछुरसुपामिति किम्? कुर्य्यात्, छुर्य्यात्; सुपधातोः—चतुर इच्छति चतुर्य्यति, दिव्यति; कथं दीव्यतुः-यणादेशः स्थानिवदित्यहलपरत्वात्।

१००। सनः सजुषाशिषोश्च।

[सनः ५।, सजुषाशिषोः ६।।, च० १।]

---

ततः सुत्तस्य लोपः, अनेन मस्याने नः, एवं प्रशाम्+भ्याम, प्रशान्भ्याम् जगन्वान् गम+क्वसु जगन्वस् शब्दः ततः सुः, उगिदचोरिति (२।१।६३) नुम्; सान्त महत् इति दीर्घः, (२।२।८३) हलङ्यापः (२।१।१८) इति सुलोपः।

(४६) संक्षिप्तसारे दन्त्यस्यैव वकारस्य ग्रहणं कृतम् तेन ओष्ठ्यात् प्राक् न दीर्घः यथा उब्ज क्विप् उप्, उवभ्याम्। सुपामित्यनेन सुपधातोर्ग्रहणम् कृतम्। धातोः पदान्तरेफादिति किम्? चतुर्भिः, निः, दुः। चिकीर्ष् शब्दस्य सुपि चिकीर्षु इति पदमिति मुग्धबोधटीका।

पदान्तस्यनः प्राक् सजुषाशिषोश्च इणो दीर्घः स्यात्। पिपठीः पिपठीर्भ्याम्, सजूः, आशीः।

## १०१। नस्य लोपोऽनुमः प्रातिपदिकान्तस्य।

[नस्य ६।, लोपः १।, अनुमः (न-नुम्) ६।, प्रातिपदिकान्तस्य ६।,]

प्रातिपदिकान्तस्य पदान्तस्य नस्य लोपः स्यात्। कर्म्म, आत्मा, सुप्रेमा, राजत्वं, राजपुरुषः, अनुम इति किम्? राजवान्।

## १०२। न सम्बुद्धौ वा क्लीवे।

[न० १।, सम्बुद्धौ ७।, वा० १।, क्लीवे ७।]

सम्बुद्धौ न लोपो नास्ति। हे राजन्। वा क्लीवे। हे कर्म्म हे कर्म्मन् वा।

## १०३। वृषण्वसु वृषणश्वौ। [वृषण्वसु वृषणश्वौ १॥]

एतौ निपात्येते। वृष्णो वसु, वृषण्वसु, वृष्णोऽश्वः वृषणश्वः।

## १०४। राजन्वान् सौराज्ये। [राजन्वान्०१। सौराज्ये ७।]

सौराज्य गम्ये राजन्वान् स्यात्। अन्यत्र राजवान्।

## १०५। संयोगान्तस्य रात्तु सद्विपोः। (द)

[संयोगान्तस्य ६।, रात् ५।, तु०७।, स, द्विपोः ६॥]

---

(द) तु शब्दो भेदार्थः, रेफपरत्वसंयोगान्तानां मध्ये सद्विपोरेव लोपो नान्यस्येति नियमः। प्राङ् प्र+अञ्च+क्विन्, प्राच्+ततः—सु, उगिदचोरिति (२।३।६३) नुम्, हलङ्यापः (२।३।१८) इति सुलोपः प्राञ्च इति स्थिते अनेन संयोगान्तस्य चकारस्य लोपः, ततः कः क्विनन्तस्येति (२।३।८५)

संयोगान्तस्य पदान्तस्य लोपः स्यात्। गोमान्, प्राङ्, अबध्नात्, मांसपिपक्, राज्ञु, मदिपोरिव कटं चिकीर्षति कटचिकीः, अविभः नान्यस्य, उर्क् उर्क् सृजेर्लङि अमार्ट्।

१०६। स्कोर्निजाद्योर्झलि च।

[स्कोः ६ ॥, निजाद्योः ६ ॥, झलि ७ ।, च० १ ।]

झलि पदान्तस्य संयोगान्तस्य च निजरूपेणादिस्थितयोः सकार

---

न स्थाने ङ्। गोमत्+सु, उगिदचोरिति नुम, सावत्वसन्तस्येति (२।३।८६) दीर्घः, हलङ्यापः इति सुलोपः, गोमन्त् इति स्थिते संयोगान्तस्थितस्य तकारस्य लोपः। अबध्नात् बध+लङ् दिप्। अड़ागमः, श्नम्, अबध्नाद् इति स्थिते अनेन अन्तस्थितस्य दकारस्य लोपः, ततः वावसाने (१।२।५५) दस्थाने त् अबध्नात्, मांस पिपक् मांसं पिपक्षतीति, क्विप्, अतः (३।३।८१) इत्यकारलोपः मांसपिपक्ष् शब्दः+सु हलङ्यापः इति सुलोपः, अनेन संयोगान्तस्थितस्य षकारस्य लोपः, कटं चिकीर्षति, कटचिकीर्षधातुः क्विप् अत इति अकारलोप, कटचिकीर्ष शब्दः सुः हलङ्यापः इति सुलोपः अनेन संयोगान्तस्य षकारस्य लोपः, कटचिकीर् इति स्थिते रसोः (२।३।१) इति र स्थाने विसर्गः। अविभः भृ+लङ् दिप्, जुहोत्यादेः (३।४।१३) इति द्वित्वं, उरत् (३।४।२७) इति अभ्यस्त ऋकारस्थाने अकारः, ततः भृञामिदिति (३।४।३६) तस्यैव अकारस्य स्थाने इकार, ऋकारस्य गुणश्च अविभर्द् इति स्थिते अनेन दलोपः, ततः र स्थाने विसर्गश्च। सिपि च अविभः, इति। उर्क् इत्यत्र न वालोपः, अमार्ट् इत्यत्र न टकारलोपः।

ककारयोर्लोपः स्यात् । मस्ज-मग्नः, ग्रीष्ममक् ; रक्ष गोरट्, तक्ष-तष्टव्यं काष्ठतट् । (ध)

१०७। होढ़ोदादेस्तु घः ।

[हः ६।, ढ़ १।, दादेः (द आदि) ६।, तु० १।, घः १।]

झलि पदान्तस्य हस्य ढः स्यात । धातुपाठे दकारादेस्तु घकारः । सोढ़ा, मधुलिट्, अलिट्, दादेस्तु घः दोग्धा, गोधक्, अधोक् ; दह-दग्धा, ग्रामधक् । (न)

---

(ध) मस्ज+क्त, अनेन सलोपः, रक्षादित्वात् (४।२।८२) निष्ठा नत्वं. चोः कुरितिः (२।३।११४) ज स्थाने ग, मग्न, ग्रीष्मं मज्जतीति क्विप्; ग्रीष्ममस्ज्+सु, अनेन सकारलोपः चोःकुरिति ज स्थाने ग, वावसाने इति ग स्थाने क, एवं गा रक्षतीति क्विप् गोरक्ष्+सु, अनेन ककारलोपः हल्ङ्याप, इति सुलोपः, षढः (१।२।५१) इति ष स्थाने ट ; एवं काष्ठ तक्ष्+सु काष्ठतट् ।

(न) सोढ़ा—सह्+ता अकारस्य उत्वे (३।३।१४८) सोह्+ता इति, अनेन ह स्थाने ढः, ष्टुना ष्टुरिति त स्थाने ट, पूर्वस्येति (१।२।५६) ट स्थाने ढश्च झयोझयीति (१।२।७६) ढकारे परे ढकार लोपः सोढ़ा, मधुलिह्+सु, अनेन ह स्थाने ढ, वावसाने इति (१।२।५५) ढ स्थाने ट, अलिट् लिह+अङ् दिप्, अडागमः अनेन ह स्थाने ढ संयोगान्तस्येति दलोपः, वावसाने इति ढ स्थाने ट, दादेस्तु—ह स्थाने घः भवति दुह+ता दोग्धा, गो दुह+क्विप् गोदुह्+सु लोपः अनेन ह स्थाने घ, वावसाने इति घ स्थाने क, एवं ग्राम दह्+सु, ग्रामधक् । दादेरित्यादिना

१०८। द्रुह, मुह, स्नुह, स्निहां घढौ।
[द्रुह—स्निहां ६ ।॥, घ,ढौ १॥]

एषां झलि पदान्तस्य हस्य घढौ स्याताम्। द्रोग्धा, द्रोढा, मित्रध्रुक्, मित्रध्रुट्; झष तथो र्धोऽधो वेत्येके-मित्रध्रुक्तः, मित्रध्रुग्धो वा; मित्रध्रुट्टः, मित्रध्रुढो वा इत्यत्र पदान्तात् टुत्वस्य (१।२।५८) मुग्धो, मूढः; स्नोग्धा, स्नोढा. स्निक्, स्निट्।

१०९। नहोधः। [नहः ६ ।, धः १ ।]

नहो हस्य धः स्यात्। नद्धा, उपानत्।

११०। आहस्तः। [आहः ६ ।, तः १ ।]

आहो झलि हस्य तः स्यात्। आत्थ।

१११। व्रश्च, भ्रस्ज, मृज, यज, राज, भ्राज, परिव्राज, छशां, षः। [व्रश्च—छशां ६ ।॥, षः १ ।]

एषां झलि पदान्तस्य षः स्यात्। व्रष्टा, मूलवृट्, भ्रष्टा, मांसभृट्, स्रष्टा राजसृट्, मार्ष्टा, स्थानमृट्, यष्टा, देवेट्, राष्ट, सम्राट्, भ्राट्, परिभ्राट्, परिव्राट्; छ प्रष्टा, शब्दप्राट्; श-प्रवेष्टा, विट्; श्वेर्निष्ठायां प्रतिषेधः इक्रम्, यचाभ्यामधातोः षः श इति वक्तव्यम्-निश्चा-निश्चरुः अव-अवश्चरु। न विश्वसृजः अस्य षो न स्यात्। विश्वसृक्। (प)

---

धातुपाठे दादिः एवयाश्चक्तेन दामलिहमात्मन इच्छति दामलिह्यतीति ततः क्विप दामलिट् अत्र माभूत्। गोधुक्(इत्यादा (१।१।६६) सूत्रेण द स्थाने घत्व।

(प) अत्र राजग्रहणेनैव भ्राजलाभेऽपि भ्राजग्रहणमर्थग्रहणेनानर्थक-

११२। क्ः शो वा सुवचि। ५/ आगन्तु २७७ २०

[क्: ६।, शः १।, वा० १।, सुवचि (सुप-अच्) ७।]

स्वाद्यचि परे क्स्य शो वा स्यात्। शब्दप्राशौ, शब्दप्राक्षौ वा।

११३। षढोः कः सेऽसुपि।

[षढोः ६॥, कः १।, से ७।, असुपि (न-सुप) ७।]

से षढो कः स्यात्। पेक्ष्यति, लिलिक्षति, असुपीति किम्? विट्सु।

११४। चोः क्वनितः।   [चोः ६।, कु० १।, अनितः ६।]

झलि पदान्ते चवर्गस्य कवर्गो यथाक्रमं भवति। वक्ता, वाक्, लिङ् अवक्ता, वणिक्, भिषक्; नानुबन्धस्य अत्, पदयोरेव-वाचा, क्रुञ्चा।

११५। न्यङ्क्वादीनाञ्च। [न्यङ्क्वादीनां (न्यङ्कु-आदि) ६॥। च-१।]

झलि पदान्तस्येति निवृत्तं। न्यङ्कुप्रभृतेः कुत्वं स्यात्। न्यङ्कु भृगु, मेघः, अणि श्वपाकादयः।

---

स्येति परिभाषाद्योतनाय। तथाच भ्राजघटकराजभागस्यानर्थकत्वान्न-राजग्रहणेन तल्लाभः। सार्थकराजशब्दस्यैव ग्रहणादिति बोध्यम्। व्रष्टा व्रश्च छेदने+ता, तौदादिकः उदित्वादिट, रट् व्रश्चः क्विप् भ्रस्जि-ग्रहीत्यादिना (३।२।८६) यण इक्, भ्रस्ज पाके तुदादावुभयपदी, भृज्जति, भृज्ज्यति उभावेव, देवं यजते क्विप् साचीयया इक देवेट्, राजते सा-दिभ्यस्तः राट्, टुभ्राजदीप्तौ आत्मनेपदी भ्राट् परिमृजतीति वचादेः णिः परिमाट्, शब्द+प्रच्छ+णि शब्द प्राट् विश्वं सृजतीति क्विप् विश्वसृक्।

११६ । सन्लिटोर्जेः चेर्वा ।

[सन्, लिटोः ७ ॥, जेः ६ ।, चेः ६ ।, वा० १ । ]

अनयोर्जेः कुत्वं स्यात् । जिगीषति, जिगाय; चिकीर्षति, चिचीषति, निश्चिकाय, निश्चिचाय ।

११७ । xचजोर्घित्ण्यतोरक्वादिवजव्रजाजामनावश्यके ।

[चजोः ६॥, घित्ण्यतोः (घित् ण्यत्) ७ ॥, अक्वादिवजव्रजाजानां ६ ।।।, अनावश्यके न आवश्यक) ७ । ]

घिति ण्यति च परे चजोः कुत्वं स्यात् । पाको, रागो, पाक्यं, भोग्यं, अक्वादिवजव्रजाजामिति किम् ? सङ्कोचः, कूर्ज्यं, खर्ज्यं, गर्ज्यः, राजः, परिव्राज्यं समाजः अनावश्यक इति किम् ? अवश्य पाच्यम् । न वञ्चेर्गतौ । वञ्च्यं गतौ किम् ? वङ्क्यम् । भुज, न्युब्ज, रोमाञ्चाः कर, भुग्न, रोमहर्षेषु x कराद्यर्थेषु घणन्ता भुजादयो निपात्यन्ते । प्रयाजानुयाजौ यज्ञाङ्गे एतौ यज्ञाङ्गे स्याताम् ।

११८ । ण्यति मुचरुचयुचर्चयाचत्यजियजि वृजीनाम् ।

[ण्यति ७।, मुच-रुच युच-चर्च—याच-त्यजि-यजि-वृजीनाम् ६ ।।। ]

एषां धातूनां ण्यति कुत्वं नास्ति । प्रमोच्यम्, रोच्यम्, अर्च्यम् । वचेरपदसघाते वचेर्ण्यति कुत्वं नास्ति वाच्यम्, पदसंघाते तु वाक्यम् । प्रयोज्यनियोज्यौ शक्ये; भोज्यम् भक्ष्ये-निपात्यन्ते-प्रयुक्तुं शक्यः प्रयोज्यः नियोक्तुं शक्यः नियोज्यः । भोज्यं भक्ष्यं भोज्य ओदनः, अन्यच भोग्या स्त्री ।

११९। हनो हो घो न्णिन्नोर्न्नस्तलोऽश्चोऽनिस्त्लोः।

[हनः ६ ।, हः ६ ।, घः १ ।, न-णिती: ७ ॥, नः ६ ।, च० १ ।, तः १ ।, अघः ५ ।, अनिस्त्लोः (न-इट्‌-त्ल्‌) ७ ॥]

नकारे णिति च परे हनो होघः स्यात्, तत्‌सन्नियोगेऽस्य उत्तरस्य नकारस्य तकारः। नकारे घ्नन्ति, वृत्रघ्नः, णिति घातकः अनिस्त्लोरिति किम्? मा च नसोमाभूत अघानि, घानिषीष्ट, जघान।

१२०। घोऽभ्यासाच्च।　[घः १ ।, अभ्यासात्‌ ५ ।, च० १ ।]

अभ्यासाच्च हनो होघः स्यात्। जिघांसति, जङ्घन्यते।

१२१। हेरचङि। [हेः ६ ।, अचङि (न-चङ्‌) ७ ।]

हेरभ्यासाद्घत्वं स्यात्। प्रजिघाय, प्रजिघीयति, अचङीति किम्? प्राजीहयत्।

। भस्य। अधिकारोऽयम्।*

१२२। पादः पत्। [पादः ६ ।, पत्‌० १ ।]

भस्य समासान्तस्य पादः पत् स्यात्। द्विपदः पश्य, द्विपदा, त्रिपदः, त्रिपदी, वैयाघ्रपद्यः।

१२३। वसोः साचो वउत्।

[वसोः ६ ।, साचः (स—अच्‌) ६ ।, वः ६ ।, उत्‌० १ ।]

उतसृष्टानुबन्धस्य वसोरचा सह वस्योत् स्यात्। जघुषः, वकारस्य

* अजादि सुपः, याण्जादितद्धिते च भसंज्ञा।

निमित्तस्यापायादिटोऽप्यपायः। उपेयुषा, विदुषो; भस्येत्येव-विद्वत्सु।

१२४। श्वयुवमघोनां कौवर्ज्जमतद्धिते।

[श्वयुवमघोनां (श्वन्, युवन्, मघवन्) ६।।।, कौवर्ज्जं०२।, अतद्धिते (न-तद्धित) ७। ]

भस्यैषां वस्योत् स्यात्। शुनः, शुना; यूनः, यूना; मघोने; अतद्धित इति किम्? शुनोविकारः शौवं मांसम्; ङ्यां भवत्येव शुनी-समासान्तविधेरनित्यत्वात् अतिशुनी, प्रियमघोनी।

१२५। वाह ऊठ्। [वाहः ६।, ऊठ्०१। ]

वाहः साचीवस्य ऊठ् स्यात्। प्रष्ठौही, शाल्यूही।

१२६। अनोऽल्लोपोऽयि वमस्त्वसंयोगात्।

[अनः ६।, अल्लोपः (अत्-लोप) १।, अयि (न-य) ७।, वमः ५।, तु०१।, असंयोगात् (न-संयोग) ५। ]

अनन्तस्य भस्यातोलोपः स्यात्। राज्ञः, राज्ञि, तक्ष्णा, अह्ना-निर्वृत्तं आह्निकम्, वमात् पुनरसंयोगात् परस्मातः-पीव्ना, ऋक्णा न संयोगात् पर्व्वणा, आत्मना, चर्म्मणा; अयीति किम्? सामान्यः, शीर्षण्यः।

१२७। षपूर्व्वहन् धृतराज्ञामणि।

[षपूर्व्व—हन्—धृतराज्ञाम् ६।।।, अणि ७। ]

सिद्धे सत्यारम्भोनियमार्थः। अणि एषामेवाल्लोपः स्यात्। षपूर्व्वस्य—औक्ष्णः, हन-भ्रौणघ्नः, धार्त्तराज्ञः, नान्यस्य सामनः।

१२८ । ङिश्योर्वा । [ङिश्योः ७ ॥, वा० १ । ]

अनयोरनन्तस्याल्लोपो वा स्यात् । राज्ञि, राजनि ; दध्नि, दधनि ; श्री-साम्नी, सामनी ।

१२९ । आतोधातोरनापोऽन्यस्य बहुलम् ।

[आतः ६ ।, धातोः ६ ।, अनापः (न-आप्) ६ ।, अन्यस्य ६ ।, बहुलम्० १ । ]

भस्य धातो रातो लोपः स्यात् । सोमपा, संस्थः, संस्था, तायः* क्विप् तातता, तस्मै तातते । धातोरन्यस्यापूवर्ज्जितस्य बहुलं लोपः स्यात् । हाहः, हाहा; हाहान् वा ।

१३० । पथ्यादेरिनः । [पथ्यादेः (पथि—आदि) ६ ।, इनः ६ । ]

पथिमथ्यृभुक्षां भस्येनोलोपः स्यात् । पथः, पथा, मथः, मथा, ऋभुक्षः, ऋभुक्षा ।

१३१ । अचोऽतः प्रागदीर्घश्च । (म)

[अचः ६ ।, अतः ६ ।, प्राक्० १ ।, दीर्घः १ ।, च० १ । ]

लुप्तनकारस्याञ्चेर्भस्यातो लोपः स्यात्, ततः पूर्व्वाऽग्दीर्घश्च । दधीचा, प्रतीची, तिरश्ची, सध्रीची, समीचीनं, प्रतीच्यम्, तैरश्चम्, अच इति किम् ? पूजायामल्लोपो नास्ति (३।१।७३) तिर्य्यञ्चा ।

* तायृ क्विबिति क्वचित् पाठः ।

(म) दधीचा=दधि अञ्चतीति क्विप् वा क्विन्, अनिदितामनुषङ्गस्येति (३।१।७३) न लुक्, ततः दधि+अच्+टा (३-९ व) दधि+अच्+आ इति स्थिते, अनेन सूत्रेण अकारलोपः,पूर्व्वस्येकारस्य दीर्घश्च दधीच्+अ=दधीचा, ननु दधी+अच् इत्यत्र कथं न यणादेशः ? ( १ । ७ ।

१३२ । उद ईत् । [उदः ५ ।, ईत्०१ ।]

उदः परस्याचोऽत ईत् स्यात् । उदीचा उदीची, उदीच्यम्. भस्येति निवृत्तं । (य)

१३३ । विष्वग्देवसर्व्वनाम्नां टेरद्र्यञ्चतौ क्विनन्ते ।

[विष्वक्, देव, सर्वनाम्नां ६ ।।।, टेः ६ ।, अद्रि०१ ।, अञ्चतौ ७ ।, क्विनन्ते ७ ।]

- - - - - - - - - - - - - - - - - - - - - -

१२) इत्याशङ्कयाह सिद्धान्तकौमुदी, अत इति लोपस्य विषयेऽन्तरङ्गोऽपि यण् न प्रवर्त्तते अकृतव्यूहा इति परिभाषया । पद्मनाभमते यणादेशे कृतेऽपि अकारस्य लोपे सति निमित्तस्यापाये नैमित्तिकस्यापाय इति न्यायात् यकारनिमित्तस्याकारस्यापाये यकारस्याप्यपायः इति । एवं प्रति अञ्चतीति प्रति+अच् स्त्री (ङी) प्रतीची, तिरोऽञ्चतीति तिरस्+अच् स्त्री ( ङी ) सकारव्यवधानात् तिरसोन दीर्घः, सह अञ्चतीति, सहसमोः ( २ । ३ । १३५ ) इत्यनेन सहशब्दस्थाने सध्रि आदेशः ततः सध्रि+अच् स्त्री (ङी), सम अञ्चतीति समस्थाने ( २ । ३ । १३५ ) समि, समि+अच्+ईन,प्रति+अच् यत. तिरस्+अच् अण् । नाञ्चेः पूजायाम् ( ३ । ३ । ७३ ) इत्यनेन पूजार्थे अञ्चेर्नलोपाभावः तिरस्+अञ्चतीति तिरसस्तिर्य्यलोपे ( २ । ३ । १३६ ) इत्यनेन तिरसः स्थाने तिरि आदेशः तिरि+अञ्च् तिर्य्यञ्च् तृतीयैकवचने तिर्य्यञ्चा । संप्रसारणे शसाद्यचि परे अकारलोपो विहितः । असर्व्वनामयाजादिना दिपदयोऽञ्चतिस्तस्याकारस्य लोपः स्यादिति तत्त्वबोधिनी । क्वचित् दधीचेत्यत्र दधीच इति पञ्चम्यन्तः पाठः, ततश्च दधीचा इत्यधिकः दिवमञ्चतीति क्विप् दिव उत् ( २ । ३ । ९४ ) वकारस्योकारः द्यु+अच टा ।

( य ) उत् अञ्चतीति क्विप, उत्+अच्+टा, अनेन अकारस्थाने ईकारः उदीच+आ. उदीचा, स्त्री उदीची ।

क्विनन्तेऽञ्चतौ परे विश्वगादेष्टेरद्रिःस्यात्। विश्वद्र्यङ्, विश्वद्र्यञ्चौ, तद्र्यङ्, देवद्र्यङ्, देवद्र्यञ्चौ, त्वद्र्यङ्, अन्यद्रीची; क्विनन्त इति किम्? विश्वगञ्चनम्। (व)

## १३४। अदसोदस्य मुर्वा द्रौऽपि वा।

[अदसः ६।, दस्य ६।, मुः १। वा० १।, द्रः ६।, अपि० १।, वा०१।]

अञ्चतौ परे कृतकार्य्यस्यादसो दकारस्य मुर्वास्यात्, द्र स्थाने च वा। अदद्र्यङ्, अमुद्र्यङ्, अदमुयङ् अमुमुयङ्। (र)

## १३५। सहसमोः सध्रिसमी। [सहसमोः ६॥, सध्रि, समी १॥]

(व) विश्वक् अञ्चतीति क्विन् न लोपः अनेन टि स्थाने अद्रि, विश्वद्रि+अच् विश्वद्र्यच् सु उगिदचोरिति (२।३।८) नुमागमः, हलङ्यापः (२।३।१८) इति सुलोपः, संयोगान्तस्येति (२।३।११५) च लोपः, कः क्विनन्तस्येति (२।३) न स्थाने ङ; औ, विश्वद्र्यञ्चौ, तमञ्चतीति, तत्+अञ्च+क्विन् न लोपः टि स्थाने अद्रि, तद्र्यच् प्रथमैकवचने तद्र्यङ् एवं देवमञ्चतीति देवद्र्यङ्, त्वामञ्चतीति, (गोत्रयोश्चेति) युष्मभागस्थाने त्वादेशः टि स्थाने अद्रि. त्वद्रि+अच्, त्वद्र्यच् ततः प्रथमैकवचने त्वद्र्यङ् अन्यं अञ्चति या, अन्यद्रि+अच् स्त्री, ङी अचोऽतः (२।३।१३१) इति अकारस्थाने ईकारः। विश्वगञ्चतीति कर्त्तरि टनः। पूजायान्तु विश्वद्र्यञ्चः, विश्वद्र्यञ्चा। विश्वगादेवसर्व्वादेर्द्रिः। इति संक्षिप्तसारसूत्रम्, अत्र सर्व्वादीत्यादिपदेन पूर्व्वादयोगृह्यन्ते माल्यादय इति गोयीचन्द्रः। क्वचित् कद्र्यङ्, भवद्र्यङ इत्युदाहरणद्वयमधिकं वर्त्तते। तत्र त्वद्र्यङ् इति नास्ति।

(र) अमुं अञ्चतीति क्विप्, क्विन्वा, अदस+अच् ततः टि स्थाने

अनयोरञ्चतौ परे सध्रि, समी स्याताम् । सहाञ्चति सध्र्यङ्, सध्र्यञ्चौ, सध्रीची, सध्रीचा, सम:-सम्यङ्, समीची ।

१२६ । तिरसस्तिर्य्यलोपे ।

[तिरसः ६ ।, तिरि०१ ।, अलोपे (न-लोप) ७ । ]

अञ्चतौ परे तिरसस्तिरिः स्यात् अतो लोपो न चेत् । तिर्य्यङ्, अलोप इति किम् ? तिरश्च पश्य ।

१२७ । मघोनस्तु वा सौ तुश्च ।

[मघोनः ६ ।, तु०१ ।, वा०१ ।, सौ ७ ।, तुः १ ।, च०१ । ]

---

अद्रि, अदद्रि+अच् अदद्र्यच् प्रथमैकवचने अदद्र्यङ्, अनेन सूत्रेण पक्षे दकारस्य मुत्वे अमुद्र्यङ् । एवं अदद्र्यङ् इत्यत्र द्र इत्यस्य मुत्वे अदमुयङ् अमुद्र्यङ् इत्यत्र द्र इत्यस्य मुत्वे अमुमुयङ् ; शसादौ अकारलोपे अदद्रीचः अमुद्रीचः, अदमुईचः, अमुमुईचः, एवं अदद्रीचा अमुद्रीचा, अदमुईचा, अमुमुईचा । अत्र कारिका—अदसोऽद्रेः पृथङ्मुत्वं केचिदिच्छन्ति लत्ववत् केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यत इति । अस्यार्थः केचित् पण्डिताः अदसः अद्रेश्च पृथङ्मुत्वं इच्छन्ति, यदा दस्थाने मुत्वं, तदा द्रस्थाने न, यदा च द्रस्थाने मुत्वं तदा दस्थाने न इत्येवं प्रकारेण, केचित् अपरे पण्डिताः लत्ववत् यथा चीक्लृप्यते इत्यादौ रौ ऋकारयोर्युगपत् लत्वं तथा अत्रापि युगपदेव दस्थाने द्रस्थाने च मुत्वमिच्छन्ति । केचिदन्ये अन्त्यसदेशस्य परस्य द्र इत्यस्य स्थान एव मुत्वं इच्छन्ति, केचिन्नाभयत्र मुत्वं इच्छन्ति तन्मते अदद्र्यङ् इत्येव भवति ।

मघवन्नकारस्य तृर्वा स्यात्। मघवा, मघवानौ, मघवन्, मघवन्तौ, मघवन्तं, ङ्यां मघवती, माघवतं, सौ तुश्च मघवान् वा। (ल)

१३८। अर्वणस्त्रसावनञः।

[अर्वणः ६।१, तृ० १।१, असौ (न-सु) ७।१, अनञः (न--नञ्) ६।१।]

अर्वणोनकारस्य नित्यं तृः स्यात्। असौ परे अर्वन्तौ, अर्वन्तं, ङ्यां, अर्वती, असाविति किम्? अर्वा, अनञ इति किम्? अनर्वाणौ।

---

(ल) तृत्वाद्यभावपक्षे मघवा, मघवन्+सु नोपधायाः (२।३।८) इति उपधादीर्घः, नस्य लोप (२।३।१०१) इति नलोपः, एवं मघवानौ, मघवानः, मघवान मघवानौ, मघोनः, पक्षे मघवान्, मघवन्तौ मघवन्तः, मघवन्तं, मघवन्तौ, मघवत इत्यादि, एवं टादौ मघवता, मघोना, मघवद्भ्यामित्यादि। मघवानिति—मघवन्+सु, सौ तुश्चेति न स्थाने तु (त्) ततश्च उगिदचामिति (१।३।७६) नुम् सावत्वेति (२।३।८६) दीर्घः, संयोगान्तस्येति(२।३।१०५) तलोपः मघवान्। स्त्री मघोनी मघवती, अणि माघवनं माघवतम्। वामनेन तुरादेशोऽनविधौ इति अतो दीर्घविधानाभावात् मघवन् मघवन्तौ इत्युदाहृतम्। तस्य तु हविर्यज्विति निःशङ्को मखेषु मघवांसिसो। इति भट्टिप्रमाणतः असारत्वम्। अतएव सौ मघवान् मघवा इति कलापसूत्रम्। मघशब्दान्मतुपा मघवान् मघवन्तौ मघवन्त इति सिद्धम् मघवन्निति प्रत्यभ्यसमस्तीति चन्द्रेण प्रत्याख्यातम् तस्मात् अत्वन्तं तस्य सम्मतम्। यदुक्तम् भाष्ये अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत्। मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनात्। वनिबन्तं भाष्योदाहृत मघवन् शब्दविषयकम्।

**१३९ । शसादौ वा दन्तसपन्मास,हृन्निश,यूषन्, दोषणः ।**

[ शसादौ (शस्-आदि) ७ ।, दत्-नस,—दोषन्: १ ।।। ]

शसादौ परे दन्तादेर्दतादयो वा स्युः । दन्तान् दतोवा ; दन्ताभ्याम् दद्भ्याम् वा ; नासिकया नसा वा ; पादान् पदोवा ; मासेन मासा वा मासे मासि वा ; हृदये हृदि वा ; मामहृच्छब्दौ हलन्तौ च विद्येते ; निशायां निशि वा ; यूषेण, यूष्णावा ; दोषा, दोष्णावा । यकृन्नादयो वैदिकत्वान्नोक्ताः । (अ)

इति पद्मनाभदत्तकृतौ सुपद्मे व्याकरणे
द्वितीयाध्यायस्य तृतीयः पादः ।

(अ) पाददन्तयूषनिशापृतना,मासासनसानुनासिकोदकहृदयासृक् यकृत्-शकृत्शीर्षदोषः पद्दत्यूषन्निश्पृन्मासासन्स्नुनसुदन्हृदसन् यकन्शकन् शीर्षन् दोषणः शसादौ वा । इति मुग्धबोध सूत्रम् ।

| | |
|---|---|
| पाद—पत् | सानु—स्नु |
| दन्त—दत्, | नासिका—नस् |
| यूष—यूषन् | उदक—उदन् |
| निशा—निश् | हृदय—हृत् |
| पृतना—पृत् | असृक्—असन् |
| मास—मास् | यकृत्—यकन् |
| | शकृत्—शकन् |
| | शीर्ष—शीर्षन् |
| | दोष्—दोषन् |

# अथ द्वितीयाध्यायस्य।

## चतुर्थः पादः।

### सर्व्वनामप्रकरणम्।

## १। सर्व्वादीनि सर्व्वनामानि स्वार्थेऽसंज्ञायाम्। (१)

[सर्वादीनि (सर्व आदि) १।।।, सर्वनामानि १।।।, स्वार्थे (स्व-अर्थ) ७।, असंज्ञायां (न संज्ञा) ७।]

(१) तदन्तस्यापीयं संज्ञा 'द्वन्द्वे' चेति (२।४।१) ज्ञापकात्, तेन परमसर्व्वत्रेति च स्यात्, परमभवकानित्यत्राकच सिध्यतीति सिद्धान्तकौमुदी। एवं परमतस्मै, परमसर्व्वस्मै इत्यादि गोयीचन्द्रः तत्र सर्वादिगण एवं क्रमेण पठितः, सर्व्वादयश्च पञ्चत्रिंशत् यथा (१) सर्व्व, (२) विश्व, (३) उभ, (४) उभय, (५) डतर, (६) डतम, (७) अन्य, (८) अन्यतर, (९) इतर, (१०) त्वत्, (११) त्व, (१२) नेम, (१३) सम, (१४) सिम, (१५) पूर्व-(१६) पर-(१७) अवर-(१८) दक्षिण-(१९) उत्तर-(२०) अपर-(२१) अधराणि व्यवस्थायामसंज्ञायां, (२२) स्वमज्ञातिधनाख्यायां (२३) अन्तरं बहिर्योगोपसंव्यानयोः, (२४) त्यद्, (२५) तद् (२६) यद्, (२७) एतद्, (२८) इदम्, (२९) अदस्, (३०) एक, (३१) द्वि, (३२) युष्मद् (३३) अस्मद् (३४) भवत्, (३५) किम्। उभशब्दो द्वित्वविशिष्टस्य वाचकः, अतएव नित्यं द्विवचनान्तः। तस्येह पाठस्तु उभकावित्यकजर्थः। द्विवचनपरत्वाभावे नोभयत उभयत्रेत्यादावित्याच्प्रसङ्गात्। तदुक्तमुभयोऽन्यत्रेति द्विवचनपरत्वाभावे*। उभय शब्दस्य द्विवचनमास्तीति

* उभशब्दादयविग्रहार्थे अयच् स्यात्, उभयीत्यादि:, उभयशब्दाद्वृत्तिविषये नित्यमयच् स्यात् स्वार्थे। तेन उभयपर्यायवीतस्तिमत्वादी यथा नित्योऽयच् एवं अप्रत्ययेऽपि

सर्व्व—प्रभृतीनि सर्व्वनामसंज्ञकानि भव[illegible] सर्व्वे, सर्व्वस्मै, सर्व्वस्मात्, सर्व्वे, विश्व, उभ, उभय, डतर-[illegible]म-प्रत्ययान्त, इतर, अन्य, अन्यतर, त्व, त्वत्, एतौ अन्यप[illegible]यौ, नेम, सम (अयं सर्व्वार्थः), सिम, पूर्वपरावरदक्षिणोत्तरापराधर, (पूर्व, पर, अवर, दक्षिण, उत्तर, अपर, अधर), स्व, अन्तर, तद्, त्यद्, यद्, अदस्,

---

कैयट', अस्तीति हरदत्तः। डतरडतमौ प्रत्ययौ, इह तदन्तयोर्ग्रहणं, केवलयोः संज्ञायाः प्रयोजनाभावात्। अन्यतराऽन्यतमशब्दावव्युत्पन्नौ, स्वभावाद् द्विबहुविषये निर्द्धारणे वर्त्तेते, तत्रान्यतमशब्दस्य गणपाठाभावादसंज्ञा डतरान्तत्वेऽपि अन्यतरग्रहणं अन्यतम सर्वनाम संज्ञानिषेधार्थमिति मुग्धबोधटीका। त्वत् त्वेतिद्वावप्यदन्तावन्यपर्यायौ। नेम इत्यपि, समः सर्वार्थः। भवत् शब्दो युष्मदर्थः, एकशब्दो यदा संख्यावाची तदा एकवचनान्त एव यदा मुख्यादिवाची, तदा द्विवचनबहुवचनान्तोऽपि एकशब्दस्यार्थाः यथा एकोऽल्पार्थे प्रधाने च प्रथमे केवले तथा साधारणे समानेऽपि संख्यायामिति †। द्यादिगणः द्वियुष्मदस्मद्भवन्त', तदादिः

---

त्यादिरिति भावः। अकचि कृते तु अयची न प्रसङ्गः यत्र द्विवचनं न श्रूयते तत्रैवाय-जिति व्याख्यानादिति मनोरमा।

† असर्वनामत्वं तु प्रियैकानाम्। यत्रैके भाजनमसहभुजा मनेकेषामुपकारं करोतीत्यनेकेषामित्यसाधु।

एवं सर्व्वके, अल्पे, अल्पके, एकैके, एकैका इत्येके असर्व्वनामत्वं तु अल्पाः, अविद्य-मानमेकमेषां ते अनेकाः, भवन्त्यनेके जलधेरिवोर्म्मय इत्यत्र किराते अनेके इत्यपपाठः असंज्ञा इति पठनीयम्। इति सुचिन्तसारः एकैक इति एकश्च एकश्चेति कर्मधारय समासवत्त्वं भवतीति तिङन्तपादे यत्र व्याख्या[illegible]तः प्रधानार्थत्वात् सर्व्वनामकार्य्यं भवत्येव। एकैका इत्येक इति बहुव्रीहि [illegible]त्वादप्रधानत्वेन सर्व्वनामकार्य्यं न भवतीत्यन्येषां मतं नैतद्रक्षितम् सम्मतम्, अनेका इत्यत्राप्यसर्व्वनामत्वमेव चेतुः,

इदम्, एक, द्वि, युष्मद्, अस्मद्, भवत्, किम्, स्वार्थे इति किम् ? नान्यपदार्थे त्वत्क, पितृक: असर्वनामत्वादक् प्राक् टेर्न भवति। अज्ञातकुत्सिताद्येष्विति क एव, असंज्ञायामिति किम् ? उत्तरा: कुरव: ; अतिविषार्थे विश्वाये ।

---

तदादयद्-द्वियर्यन्त:, अन्ये तु त्यदादिरिति पठन्ति तेषां क्रमो यथा त्यद्, तद्, यद्, एतद्, इदम्, अदस्, एक, द्वि इत्यादि तदादि: सर्वत्र च परमित्यत्र ( ४ । ३ । ८१ ) तदादि: किमपर्यन्तोग्राह्य: तेन भवास्, अश्च काविति गोयीचन्द्र: सर्वादिषु सर्व एव, सव आदिरवयवो यस्य गणस्य स सर्वादि: इति तद्गुण सविज्ञानबहुव्रीहि: । स्वार्थे इत्यन्येनाप्रधानार्थत्व तेषां न सर्वनामसंज्ञा, यथा प्रियतत् प्रिय: स यस्येति विग्रह: एवं प्रियतदौ, तमतिक्रान्तो अतितद:, अमुमतिक्रान्तेन अत्यदसा त्वकं पिता यस्य इत्यत्र वाक्ये त्वकमिति सर्वनामत्वादक् एव, समासे कृते तु अप्रधानार्थतयानाक् किन्तु क एव, अक् हि टे: प्राक् भवति तेन त्वकदिति रूपं भवति न त्वत्कमिति । केचित्तु अप्रधानार्थत्वे सर्वनाम कार्य्यप्रतिषेधो भवति, अकच् न प्रतिषिध्यते इति वदन्ति, तन्मते मकत्पितृक:, त्वकत्-पितृक इति । न बहुव्रीहौ । इति पाणिनीय सूत्रमस्ति, तस्य तु – बहुव्रीहौ चिकीर्षिते सर्वनाम संज्ञा न स्यादिति केचिदर्थं कुर्व्वन्ति तथाच सिद्धान्तकौमुदी—इह समासात् प्रागेवालौकिके प्रक्रियावाक्ये सर्वनाम

---

बहुव्रीहेरन्यपदार्थत्वात् । यदा तु न एक अनेक इति समासस्तदोत्तरपदार्थप्रधानत्वात् तत्पुरुषस्य प्रधानत्वसत्त्वेऽपि किन्तु बहुवचनं न सम्भवति नित्यैकवचनान्तत्वादेकशब्दस्य ।

एकाद्यपीत्येके सर्व्वतोऽजथमिच्छन्ति पु[illegible]द्दिकात् पराजयमिति संक्षिप्तसार: । एके इच्छन्तीति नैतद्बहुसम्मत प्रमाणाकराभावादिति गोयीचन्द्र: ।

२ । वादिग्बहुव्रीहौ । [वा० २ ।, दिग्-बहुव्रीहौ ७ । ]

अन्यार्थं वचनम् । दिग्वाचि-बहुव्रीहि-समासे सर्वनाम संज्ञा वा स्यात् । (२) उत्तरपूर्वस्यै, उत्तरपूर्वायै । न तृतीयाद्यर्थयोगे । (३) अत्र संज्ञा नास्ति । मासेन पूर्वाय, मासपूर्वाय । द्वन्द्वे च । अत्रापि संज्ञा नास्ति । पूर्वापराणां, कतरकतमानाम् । (४)

---

संज्ञा निषिध्यते । अन्यथा लौकिके विग्रह वाक्य इव तत्राप्यकच् प्रवर्त्तेत सच समासेऽपि श्रूयेत, अतिक्रान्तो भवन्तमतिभवकानितिवत् । भाष्यकारस्तु त्वकत्पितृको, मकत्पितृक इतिरूप इष्टापत्तिं कृत्वेतत् सूत्रं प्रत्याचख्यौ । यथोत्तरं मुनीनां प्रामाण्यम् ।

(२) वस्तुतो दिङ्मध्य वाच्य एवैतत् सूत्रस्य प्रवृत्तिः । उत्तरस्याश्च पूर्वस्याश्च दिशोर्मध्ये या दिक् सा उत्तरपूर्वा तस्य , अन्यार्थं सर्वनाम संज्ञानिषेधे विकल्पविधायकं सूत्रमिदम् ।

(३) तृतीयेति कर्तृकरणयोस्तृतीयाभ्यामन्येवान्ययाख्याः तेन त्वयका कृत त्वकत्कृतमित्यत्र सर्वनाम संज्ञैव ।

(४) द्वन्द्वे चायं निषेधः, समुदायस्यैव, नत्ववयवस्य, द्वन्द्वे इति प्रथमार्थे सप्तमी. द्वन्द्वः सर्वनामसंज्ञो न भवतीति सूत्रार्थः । त्यदादीनां च, तेषां त्यदन्यानामित्यत्र त्यदादेरस्तु त्यदादावेकत्वे पदप्रत्यययोरिति त्यदादेरु इति गौणोद्वन्द्वः तत्पूर्वत्वे चेति सन्निपातस्तत्र अत्र तदित्यनतामप्रधानार्थत्वं परामृश्यते यस्य अप्रधानार्थत्व प्राप्तासीत्, तथापि सर्वनामसंज्ञा न स्यात् । वर्णमन्तरं येषां ते वर्णान्तराः एवं वसनान्तराः, ताभ्यां द्वन्द्वे कृते तदन्तत्वात् प्राप्ता सर्वनामसंज्ञा निषिध्यते अतो द्वन्द्वे चेति इत्र भवति वर्णान्तरवसनान्तराः । अन्ये तु अप्रधानार्थत्वे चेत्यनेन यत्र निषेध कृतः स पूर्वावयवो यस्य तथापि सर्वनामसंज्ञा न भवतीति वदन्ति,

३ । वा जसि । [वा॰ १ ।, जसि ७ ] (५)

द्वन्द्वे जसि वा सर्व्वनाम स्यात् । कतरकतमे कतरकतमाः ।

४ । प्रथमचरमतयायाऽल्पनेमकतिपयार्द्धाश्च ।

[प्रथम—कतिपयार्द्धाः १ ।।।, च॰ १ । ]

एते जसि वा सर्व्वनामसंज्ञाः स्युः । प्रथमे प्रथमाः तयायौ प्रत्ययौ—द्वितये, द्वितयाः ; द्वये, द्वयाः ; एवमन्ये च ।

५ । पूर्व्वपराऽवरदक्षिणोत्तराऽपराऽधराणि व्यवस्थायाम् । (६) [पूर्वपराऽवर—धराणि १ ।।।, व्यवस्थायाम् ७ । ]

स्वाभिधेयापेक्षोऽवधिनियमो व्यवस्था । तत्रैतानि जसि वा सर्व्व-

---

दत्तसर्वा इत्यत्र तु पूर्वसूत्रेण निषेधः यतो दत्तसर्वाश्च अन्ये चेति द्वन्द्वेऽपि तत्र भवति दत्तसर्वान्याः. द्वन्द्वे चेति निषेधस्तु सर्वनाम द्वन्द्व एव विधायते । इति गोयीचन्द्रः ।

(५) द्वन्द्वे चेति सर्व्वनामसंज्ञाप्रतिषेधादप्राप्ते विभाषा, पुंसीत्येव, कतरकतमाः स्त्रियः । सर्व्वादीनामेव द्वन्द्वोऽस्य विषय इति जयादित्य धर्म्मदासादिप्रदर्शितोदाहरणेन प्रतिभाति । दुर्गासिंहस्तु दन्तकतमे, दन्तकतमा इत्युदाजहार । प्रोभावं प्रत्येव विभाषेत्युक्तम् अतो नाकच्, किन्तु कप्रत्यय एव । वर्णाश्रमेतरकाः इति सिद्धान्तकौमुदी । पूर्व्वाद्युभया जसि वेति संक्षिप्तसारवचनात्तथ उभयशब्दस्यापि जसि उभये उभया इति रूपद्वय भवति ।

(६) पूर्व्वादिशब्दस्य[illegible]भिधेयेनापेक्ष्यमाणस्यावधेर्नियमो व्यवस्था, ततश्च दिग्देशकालेष्वेव वर्त्तमाना[illegible] पूर्व्वादयो गृह्यन्ते । दिग्देशकाल

नामानि स्युः। पूर्वे पूर्वाः, परे, पराः; व्यवस्थायामिति किम्? दक्षिणाः गायकाः प्रवीणा इत्यर्थः।

६। स्वमज्ञातिधनाख्यायाम्।

[स्वं० १।, अज्ञाति धनाख्यायां (न-ज्ञाति-धन-आख्या) ७।] (७)

जसि स्वं सर्वनाम वा स्यात्। स्वे जनाः, स्वा वा। अज्ञाति धनाख्यायामिति किम्? स्वा ज्ञातयः, स्वा दीयन्ते।

७। अन्तरं वाह्यपरिधानयोः।

[अन्तरं १।, वाह्य,परिधानयोः ७॥]

---

वाचित्वममीषामवधिनियमेनैव नियतं भवति। "दिशः सपत्नीभव दक्षिणस्या" इत्यादावपि व्यवस्थायाः प्रसिद्धत्वात् नावधिवाची शब्दः प्रयुज्यते। आधुनिकसङ्केतस्यैव सञ्ज्ञात्वेन दिक्षु च तादृशसंज्ञाविरहेण असञ्ज्ञायामिति न निषेधप्रसङ्गः। अतएव वेद प्रसिद्धदेवगणविशेषे विश्वशब्दस्याधुनिकसङ्केताभावात् विश्वेषां देवानामित्यादिप्रयोगः। गोयीचन्द्रोऽपि विश्वरूपत्वान्महेश्वरस्य यो विश्वेषां वाचकः सर्व्वशब्दस्तेनैव स्तुतिरिति नमः सर्व्वस्मै ते इत्युपपन्नम्। दक्षिणाः गायका इत्यत्र अमुकस्मात् कुशला इत्यवधिनियमः सम्भवेऽपि तन्नियमोनास्तीति भावः। पूर्व्वा शब्दात् असःस्थाने तसि कृते पूर्व्वतः पूर्व्वात इति पदद्वयसिद्ध्यर्थमेव सर्व्वनामसंज्ञाया विकल्पविधानमिति मुग्धबोधटीका।

(७) ज्ञातिधनान्यवाचिनः स्वशब्दस्य ~~सर्व्वनाम~~ संज्ञा सा जसि वा स्यात्। स्वमितिशब्दरूपं आत्मनि आत्मीये च वर्त्तमानमेव पूर्व्वादिगणे गृह्यते न तु ज्ञातिधनयोरिति गोयीचन्द्रः।

अत्रेदं जसि वा सर्व्वनाम स्यात् । ग्रामादन्तरे अन्तरा चाण्डाल-गृहा वाह्या इत्यर्थः । अन्तरे, अन्तराः शाटकाः परिधाना इत्यर्थः । न पुरि सर्व्वनाम—अन्तरायां पुरि वसति ।

८ । तीयो ङिति । [तीयः १ ।, ङिति (ङ्-इत्) ७ । ] (८)

तीयप्रत्ययान्तो ङिति सर्व्वनाम स्यात् । द्वितीयस्मै, द्वितीयाय ; तृतीयस्मात् तृतीयात् ।

९ । सर्व्वनाम्नः । अधिकारोऽयम् । †

१० । अतो ङेः स्मै । [अतः ५ ।. ङेः ६ ।. स्मै० १ । ]

सर्व्वनाम्नोऽदन्तात् ङेः स्मै स्यात् । सर्वस्मै, तस्मै, अत इति किम् ? भवते ।

११ । ङसिङ्योः स्मात् स्मिनौ ।

[ङसिङ्योः ६ ॥, स्मात् स्मिनौ १ ॥ ]

अतोऽनयोरेतौ भवतः । सर्वस्मात्, सर्वस्मिन् ।

१२ । पूर्व्वादिनवकाद्वा । [पूर्वादिनवकात् ५ ।, वा० १ । ]

---

(८) तीय—इत्यस्यार्थवत्त्वादनर्थकस्यैकदेशस्य न ग्रहणमित्याह पटु-जातीयायेति प्रकारवचने जातीय इति जातीयप्रत्ययैकदेशे न प्रसङ्गः इति भावः । इति सिद्धान्तकौमुदीटीका । तीयान्तस्य अल्पदीनाञ्च गौणत्वे न अतिद्वितीयाय, अनल्पाः इत्येव स्यात्, एवमेव जौमराः ।

(†) अधिकारसूत्रमिदं सर्व्वनाम्न इति षष्ठ्यन्तस्याधिकारः, अतोङेः स्मै इत्यत्र सर्व्वनाम्नः अ[illegible]ात् । एवं परत्रापि ।

एभ्यो ङसिङ्योः स्मात्, स्मिनौ वा भवतः । पूर्वस्मात्, पूर्वात्; पूर्वस्मिन्, पूर्वे; पूर्व, पराऽवर दक्षिणोत्तराऽपराधर ।

१३ । आदामः साम् । [आत् ५ ।, आमः ६ ।, साम्० १ ।]

सर्व्वनाम्नोऽवर्णान्तादामः साम् स्यात् । सर्व्वेषां सर्वासाम्; केषाम्, कासाम् ।

१४ । जसइत् पुंसि । [जसः ६ ।, इत्० १ ।, पुंसि ७ ।]

पुंसि सर्वनाम्नो जस इत् स्यात् । सर्वे, विश्वे, ये, ते इत्येव भवन्ति ।

१५ । सुपि अधिकारोयऽम् ।

[अधिकारसूत्रम् सुपीति सप्तम्यन्तस्याधिकारः ।]

१६ । स्त्रियां ङिति स्याट् प्राक् पुम्वच्च ।

[स्त्रियां ७ ।, ङिति ७ ।, स्याट्० १ ।, प्राक्०१ ।, पुम्वत्०१ ।, च०१ ।]

स्त्रियां सर्वनाम्न उत्तरे ङिति सपि स्याडागमो भवति । प्राक् पुम्वच्च । सर्वस्यै, अमुष्याः इत्येव भवन्ति ।

१७ । तदादेराद्वे ष्टेरत् । ×१०

[तदादेः (तत आदिः) ६ ।, आ० १ ।, द्वेः ५ ।, टेः ६ ।, अत्०१ ।]

स्यादौ द्विपर्य्यन्तस्य तदादेष्टेरत् स्यात् । सः, स्यः, ततः, तत्र; तद्, त्यद्, यद्, अदस्, इदम्, एतद्, एक, द्वि । द्वेर्न तसि । द्वितः सुपीत्येव-लुकोऽन्तरङ्गात्-... लुवलुकालुप्तेति निषेधात्

(१।१।३३) ततकुलम्; ततपुत्रः। त्यादेरिति किम्? त्वत्तः; सर्वनाम्न इत्येव प्रियतद्, प्रियतदौ।

१८। सौतः सः। [सौ ७।, तः ६।, सः १।]

सौ परे तदादेस्तस्य सः स्यात्। सः, परमसः, (१०) स्यः, एषकः, एषा।

---

(१०) पुंवत्त्वादाविति संक्षिप्तसारसूत्रम् त्रादौ परे सर्व्वादेः पुंवद्भावो भवतीति तदर्थः तत्र, तदा; इतः, इह; थादयोऽपि त्रादयः, यथा प्रकृत्या यथा, कया प्रकृत्या कथं, तस्यां वेलायां तदा, तस्यां रात्रौ तर्हि। असर्व्वादेस्तु गार्गीतः, छायातः। समासे चेति सूत्रान्तरम् समासे च प्राक् स्थितं सर्व्वनाम पुंवद्भवति। इति तदर्थः, विषयान्तराभावात् अप्रधानार्थत्वे चेति सर्व्वनामप्रतिषेधेऽप्ययं प्रवर्त्तते। पूर्व्वस्याश्च, दक्षिणस्याश्च दिशोर्मध्ये यादिक् प्रवर्त्तते। सा पूर्व्वदक्षिणा, पूर्व्वा चासौ शाला चेति पूर्व्वशालः पूर्व्वामुखमित्यत्र क्वचिदन्यत्रापीति दीर्घः। दक्षिणापथमुत्तरापथमित्यादौ तु आप् प्रत्ययेन रूपम्। भवत्याः प्रसादः भवत्प्रसाद इत्येव भवति, भवतीप्रसादादित्याग्राम्यम्। सः=तद्+सु (उकारेत् स्) अनेन टिस्थाने अत्, सौतः सः (२।४।१८) इति सूत्रेण त स्थाने स, ततः सस् इति स्थिते रसोः (१।२।१) स स्थाने विसर्गः, एवं त्यद्शब्दस्य प्रथमैकवचने स्यः ततः तद्+५मी स्थाने तस्, अनेन टि स्थाने अत्=ततस् ततः, तत्र=तद्+७मी स्थाने त्र, टि स्थाने अत्=तत्र। प्रकृत्याश्रितत्वमन्तरङ्गत्वं ततः प्रागेव समोत्सुकीति (२।३।५८) प्राप्ते प्रत्ययत्वक्षेऽटत स्यादेव। परमसः परमतद्+सु (सु,) तदादेः (२।४।१७) इत्यनेन टि स्थाने अत्, परम त+स् इति, अनेन त स्थाने सः परसस् इति ततो रसोरिति स स्थाने विसर्गः

१९ । अदसो दस्य सो रौश्च के तु वा ।

[अदस ६ ।, दस्य ६ ।, सौ ७ ।, औः १ ।, के ७ ।, तु० १ ।, वा०१ । ]

सौ परेऽदसोदस्य सः स्यात् । सोश्च औकारः, स्त्रीपुंसयोः सिंहावलोकितन्यायेन—(११) असौ स्त्री, असौ पुमान्; के तु वा असकौ, अमुकौ वा, असुकश्चेत्येके लुकोऽन्तरङ्गत्वान्नेह अदः कुलम् ।

---

परमसः ; एषः=तद्+सु (स्), तदादेरिति टेरत्, एत+स् इति, अनेन त स्थाने स, तस्य च इचुकुरः (१।२।३५) इति षत्वे एषस् इति, ततोरस इति स् स्थाने विसर्गः एषः, एषकः एतद्+सु (स), सर्वनामाटव्ययतिङां (२।४।६२।) इत्यनेन टेः प्राक् अक्, एतकत्+स्, इति स्थिते, तदादेरिति टेरत्, एतक+स् इति स्थिते, अनेन त स्थाने स ; तस्य च इचकुरोरिति षत्वं एषकस् इति ततोरसोरिति स स्थाने विसर्गः षत्वश्च एषकः । अकः प्रकृतिभावत्वात् न अत्रबाधकत्वम् । एषेति एतच्छब्दस्य स्त्रीलिङ्गे प्रथमपुरुषैकवचनरूपम् । किञ्च हेसेत्यत्र सन्निपातलक्षणस्य वर्णाश्रयत्वे निमित्तत्वात् सम्बुद्धेर्लोपः स्यादिति विष्णु-मिश्रः ।

(११) श्रावितस्य सिंहावलोकितन्यायेन स्त्रीपुंसयोरित्युभयत्र दृष्टिः, सिंहो यथा युगपद्द्वयं पश्यति तद्वत् । असौ=अदस्+सु(स्) तदादेरिति टि स्थाने अत् अद+स् इति, अनेन द स्थाने स तथा स स्थाने औ=असौ, असकौ=अदस्+सु (स्), सर्व्वनामाव्ययतिङां (२।४।६२) इत्यनेन टेः प्राक् अक् अदकस्+स् इति स्थिते, तदादेरिति टे रत् अदक+स् इति स्थिते, अनेन दस्थाने स, सस्थाने औ असकौ इति पक्षे अमुकः, अदस्+सु=टेः प्राक् अक् अदकस्+सु, टे रत् अदक+स ततः अटेरिति (२।२।२०) [illegible] द स्थाने म, उत्वञ्च, अमुकस्

## २०। अटेर्यथाप्कालं दादु दो मः। (१२)

[अटेः ६।, यथाप्कालं १।, दात् ५।, उ० १।, दः ६।, मः १।]

अटिर्यस्य तस्यादेरदसोदकारादुत्तरस्याचो यथाप्कालं ह्रस्व-दीर्घानुरूपमुर्भवति। दस्य च मत्वं सुपि परतः। अमुना, अमू,

ततः हलोऽदिति स स्थाने विसर्गः, अमुकः, एके आमदोस्वरादयः के परे सोरौत्वं विकल्पयन्ति नतु दस्य मत्वं तथा च सङ्क्षिप्तसारसूत्रम् 'अकोर्वा' अकि सति अदसोदः सोऽभवत्येव, औकारस्तु वा भवतीति। औत्वप्रतिषेधः अकच्—कस्य वा वक्तव्यः सादुत्वञ्चेति वार्त्तिकम्। प्रतिषेधसन्नियोग-शिष्टमुत्वं तदभावे न प्रवर्त्तते, इति सिद्धान्तकौमुदी, अस्यार्थस्तु प्रतिषेधस्य औत्वाभावप्रतिषेधस्य (अकच्कस्य) यः सन्नियोगनियामकशास्त्रं तेन शिष्टं विहितं उत्वं तदभावे औत्वप्रतिषेधाभावे औत्वपक्षे इत्यर्थः न प्रवर्त्तते तेन औत्वपक्षे असकौ इति। सङ्क्षिप्तसारसिद्धान्तकौमुदीमते असुकः, असकौ इति पदद्वयमेव न तु अमुक इति; स्त्रियान्तु असुकेति सङ्क्षिप्तसारः, औत्वपक्षे तु असकौ। अतएव अमुकी देवी, अमुकोऽजनः, अमुकग्रामीत्यादि प्रयोगोऽसाधुरेव सत्वेन मत्वस्य बाधादिति सिद्धान्त-कौमुदीटीकाया तत्वबोधकृतिः, क्लीबे तु अदकः इति। सम्बोधने हे असौ, हे असकौ. त्यदादीनां सम्बोधनं नास्तीति बोपदेवः, सम्बोधनं नास्तीति उत्सर्गः इति सिद्धान्तकौमुदी नास्तीत्यत्र मूलं प्रचुरप्रयोगाव्य-दर्शनमेव, किञ्च इदमत्यन्तसन्निकृष्टं, समीपवर्त्तिवैतदोरूपं अदसस्तु विप्र-कृष्टं तदिति परोक्षे विजानीयादिति। एवम्बिधस्यार्थस्याभिमुखीकरणा-नर्हत्वात्। भाष्ये तु हे स [illegible]दाहरणं दत्तम्।

(१२) अष्टिर्यस्य अस्यार्थ[illegible]ादसके र वर्णो विधीयते तस्य दात् दकारात् परः उवर्णो भवति। [illegible] हलश्योदयं अटेरदसोयथाप्कालं

अमूनि ; दृष्टसिद्धैव विषयी विध्यन्तरमपेक्षन्ते, अथवा यथाचकाल-मिति वचनात्। अयादौ सति अमुया, अमुष्यै ; अटेर्विधानात् दृगादौ च, अमूदृक्, अमूदृशः।

२१। एतदीद्बहुत्वे। [एतः ६।, ईत् ०१।, बहुत्वे ७।]

---

दात् उरित्येकः, द्वितीयस्वरेऽमः (दकारस्य च मः) इति। यथाचकालम् अचः कालः उच्चारणक्रिया विशेषः अच्कालमनतिक्रम्य यथाचकालं, तथाहि यद्यदसोऽदकारात् परोऽच् ह्रस्वः तदा उकारः, यदा दीर्घस्तदा ऊकारः इत्यत आह ह्रस्वदीर्घानुरूपमिति। अमुया इत्यत्र अदस् (स्त्री) टा, तदादेरिति टे रत् सति अद+आ इति स्थिते यदि प्रथमं अन्तरङ्गस्य प्रकृत्याश्रितकार्यस्य बलीयस्तया प्रथममुत्वमत्वे क्रियेतां तदा ऊकारो दीर्घो भवेत् ततश्चायादेशे अमूया इति रूपं भवेत् न तु अदयेति, परन्तु अमुयेति रूपं पण्डितानामिष्टं तस्य सिद्धये उत्वमत्वकार्यात् प्राक् अयादेशविधेरपेक्षा अयादेशे सति च (अदय्+आ स्थितेः) दकारस्य ह्रस्वपरत्वात् अमुयेति सिद्धम्। अयादीत्यादिपदेन अमुष्यै। इत्यत्र प्रथमं पुम्वत्। ननु टेरदादेशः सिद्ध एव ततः किमटेरिति पुनरुक्तेन प्रयोजनमाह, अटेर्विधानादिति (टेरवर्णमात्रोत्पन्नावेवायं विधिरिति प्रतीयते)।

दृगादौ च दृक्-आदौ च परे अटेः अदसो दकारात् उत्वं दस्य च मत्वं भवतीति। अमूदृक्, असौ इव दृश्यते इति समानान्यतदादेः कर्मण्युपमानादिति (४।१।१०१) टदात् सति अद+दृक् इति स्थिते अनेन उत्वमत्वे अमूदृशः, अमुदृशः इत्यादौ, दृगादीत्यादिपदेन षादौ च, तथाहि षादौ चेति सङ्ग्रहसारस्वं, अमुष्य अमुषि, इत्यादि ; ननु अटेरिति ह्रस्वग्रहणं, टेरादिति दीर्घविधाने कथमस्य भविष्यतीति चेत् विस्पष्टार्थवचने ह्रस्वनिर्देशः सर्वत्र मन्तव्यः यथा आदिर्गुण इति।

अदसो बहुवचनस्य एत ईद् भवति । दस्य च मत्वं सुपि परतः । अमी, अमीभिः इत्यादिस्थेव अमुके । *

२२ । इदमदसोरक्कोर्भिस्यत एत् ।

[इदम् अदसोः ६ ।, अकोः ६ ।, भिसि ७ ।, अतः ६ ।, एत्० १ । ]

अककारयोरिदमदसोर्भिसि अत एत् स्यात् ।

एभिः, † अमीभिः अकोरिति किम् ? इमकैः ; अत इति किम् ? आभिः ।

२३ । इदम इत्तसिद्धोः । [इदमः ६ ।, इत्०१ ।, तसिद्धोः ७ ॥]

* अमी—अदस्+जस्, तदादेरिति टेरत्, जस इदिति (२।४।१२) जस स्थाने इत् कृते अदे इति स्थिते अनेन एकारस्थाने ईकारः, दस्य च मत्वं अमी, अमीभिः, अदस् भिस्, तदादेरिति टेरत्, इदमदसोरिति (२।४।२१) भिसि अत एत् कृते अदेभिरिति स्थिते अनेन एकारस्य ईकारः दस्य च म, अमीभिः अमुके इत्यत्र अदस+जस् सर्वनाम्नाय-तिङामिति टेः प्राक् अक् अदकस् ततः तदादेरिति टेरत् अदक+जस् (अस्) इति स्थिते जस ईत् इति जसः स्थाने इत् (२।४।१४) कृते अदके. इति ततः अटेरिति दकारादुत्वं दस्य च मत्वं एकारस्य ईत् परत्वा-भावात् न इत्वम् ।

† एभिः इदम्+भिस्, त्यदाद्यत् (२।४।२६) इत्यनेन इदमोऽत् अ—भिः इति स्थिते, अनेन अकारस्य एकारे कृते एभिः ।, इमकैः, इदम्+भिस्, सर्वनाम्नाय्यतिङामिति अक् इदकम्, तदादेष्टेरत् इदक+भिरिति स्थिते, अतश्चाभिस् (२।१।२७) इत्यनेनैव भिस् स्थाने ऐस्, ततो वृद्धिरिति वृद्धिः । आभिरिति स्त्रीलिङ्गे ।

तमि हकारे च परे घकस्यास्ये भवति । हतः, हथ ।

२४ । इयमयं स्त्रीपुंसयोः सुना ।

[इयमयं०१।, स्त्रीपुंसयोः ७॥, सुना ३।]

इदमः सुनासह इयमयमौ स्याताम् । इयं स्त्री, अयं पुमान ।

२५ । दोमः । [दः ६ ।, मः १ । ]

इदमः सुपि दस्य मः स्यात् इमौ, (¶) इमे इमं इमाः ।

२६ । टौसोरकोऽनः । [टौसोः (टा-ओस्) ७॥, अकः ६ ।, अनः १।]

टौसोः परयोरिदमोऽनः स्यात् । अनेन (§) अनयोः, अक इति किम् ? इमकेन, इमकयोः ।

२७ । हल्यत् । [हलि ७ ।, अत्० १ ।]

हलि सुपि परे इदमोऽद्भवति । आभ्यां, (१३) एभिः, अस्य, आसाम्, अक इत्येव इमकस्य ।

---

(¶) इमौ—इदम्+औ, त्यदादेरिति टेरत् इद+औ इति स्थिते अनेन द स्थाने मः, इम+औ, इमौ ; इमे इदम्+जस्, त्यदादेरिति टेरत्, इद+जस्, ततोऽनेन द स्थाने म, जसीत्, गुणे च कृते इमे । एवम् । द्वितीयैकवचने इमं, इमा इति स्त्रीलिङ्गस्य प्रथमाबहुवचन रूपम् ।

(§) अनेन इदम्+टा, अनेन इदमः स्थाने अन, ततः, अतष्टाभिस् इत्यनेन टा स्थाने इन अन+इन—अनेन । अनयोः इदम्+ओस्, अनेन सूत्रेण इदमः स्थाने अन ततः [illegible]ओसीति अकार स्थाने अय् अनय्+ओः अनयोः ।

(१३) आभ्यां इदम् (पुं) भ्याम्, [illegible] इदमकारे अत् भ्यामिति दीर्घः

२८। सकस्यान्वादेशे।

[सकः ६।, च०१।, अन्वादेशे (अनु-आदेश) ७।]

अन्वादेशे—पूर्वोक्तानु कथने इदमः सककारस्याङ्भवति इति परतः। इमकाभ्यां रात्रिधीता अथो आभ्यामहरप्यधीतम्।

२९। एनोद्वितीयाटौस्सुतदोऽपि।

[एनः १।, द्वितीयाटौस्सु (द्वितीया, टा, ओस्) ७।॥, एतदः ६।, अपि०१।]

द्वितीया,टाओसस् परतः अन्वादेशे इदम एतदोऽपि एनादेशो भवति; इम', इमकं, एतं वा बोधय अथ एनमध्यापय। अनेन इमकेन एतेन वा भुक्तं अथैनेनाधीतमपि; अनयोरिमकयोरेतयो-र्वा धनं अथैनयोर्जनस्य।

३०। एनद्वा क्लीवे द्वितीयैकत्वे।

[एनत्०१।, वा०१।, क्लीवे ७।, द्वितीयैकत्वे ७।]

क्लीवे अन्वादेशे इदमेतदोर्द्वितीयैक—वचने एनद्वा स्यात्। इदम् एतद्वा कुण्डमानय अथैनत् प्रक्षालय। (१४)

---

(२।३।४०) इति दीर्घ आभ्याम्। स्त्रियामप्येवं रूपं भवति। अस्य= इदम्+ङस् त्यदादेरिति टेरत् इद+ङस्, ततः अत इति ङसः स्थाने स्य, ततो हलि परे इत्यादेशविधानस्यापि इद इत्यस्य स्थाने अत्, अत्र तकारः स्वरूपनिर्देशकः। अस्य, आसामिति स्त्रीलिङ्गे षष्ठीबहुवचने, इदम् आम्, आदामः (२।४।१०) आमस्थाने साम् [illegible] स्थाने अ+आप् (स्त्रीत्वादाप्)+आसाम्।

(१४) आदिश्यते इत्यादेशः, [illegible]दिशिरिह कथने, यथा धर्मं दिदिश-

## ३१। अदेतदस्त्रतसोरन्वादेशेऽपि।

[अत्०१।, एतदः ६।, त्रतसोः ७।, अन्वादेशे (अनु-आदेश) ७।, अपि०१।] (१५)

एतयोरन्वादेशेऽपि अकश्चैतदोऽद्भवति ; अत्र, अतः ;

## ३२। किमः कः। [किमः ६।, क०४।,]

किमः सुपि कः स्यात्। कः, कौ, के, केषु। सुपीत्येव किम्। तसादौ कुः। कुतः, कुत्र, क्व ; कुह वेदे। (१६)

## ३३। युष्मदस्मदोरमौतोराम् द्वा।

[युष्मद्-अस्मदोः ६॥, अमौतोः ६॥, आम्०१।, द्वा२।]

अलिङ्गे युष्मदस्मदी, अनयोर्दकारेण सह अमौतोः स्थाने आम्

मोच्चाय, अनुशब्दः पश्चादर्थे स च पूर्वकथितस्य भवति इति अन्वादेशः। किञ्चित् कार्य्यं विधातुमुपात्तस्य कार्य्यान्तरं विधातुं पुनरुपदेशः इति सिद्धान्तकौमुदी, विधातुं ज्ञापयितुं, पूर्वोक्तस्य भिन्नविभक्तावप्यनुकथन इति पद्मनाभपञ्जिका द्वितीयाटौस्स्वन्तस्य समासे इति सङ्क्षिप्तसारसूत्रम्। तदर्थस्तु कथितानुकथने विषये द्वितीयान्तस्य, ओसन्तस्य च एतद इदमश्च स्थाने समासे सति एनद्भवति। क्लीबे समासे चाप्रधानार्थत्वात् प्रकृत्यव-स्थितयोरेनदित्यादेशः। एनं श्रितः एनच्छ्रितः, एनेन कृतम्, एनत्-कृतम्, एनयोः पुत्रः, एनत्पुत्रः। किञ्चिदुपदिश्य वाक्यान्तरेण पुनरन्य-दुपदिश्यते तत्कथितानुकथनम्। एनां कन्यां सालङ्कारामित्यागमिकाः।

(१५) सकारस्याप्ययमादेशो बोद्धव्यः। तथाहि "अतस् सहित-स्याप्ययमादेशः" इति सिद्धान्तकौमुदी, 'सा[illegible]' इति सङ्क्षिप्तसार सूत्रम्।

(१६) अत्र सप्तम्या इति सङ्क्षिप्तसा[illegible] सूत्रम् वेदेऽपि क, कुह इति प्रयोगौ स्याताम्, तसादावित्यादि पदे [illegible]त्रादीनामपि ग्रहणं कर्त्तव्यम्।

भवति। त्वां, मां, युवां, अत्यादिप्रयोगे च। अतित्वां, अतियुवां अतिमाम्।

३४। शसस्रान्। [शसः ६।, च०१।, आन्०१।]

युष्मदस्मदोरीकारेण सह शसः स्थाने आन् भवति। युष्मान्, अस्मान्।

३५। चतुर्थ्यां भ्यसो भ्यम्। [चतुर्थ्यां ७।, भ्यसः ६।, भ्यम्०१।]

तयोरत्र इकारेण सह भ्यसोभ्यम् स्यात्। युष्मभ्यम्, अस्मभ्यम्।

३६। ङसिभ्यसोस्तिः [ङसिभ्यसोः ६॥, तिः १।]

तयोरीकारेण सह ङसि, भ्यसोस्तिः स्यात्; इदनुबन्धः। त्वत्, मत्, युष्मत्, अस्मत्।

३७। आम आकम्। [आमः ६।, आकम्०१।]

तयोरीकारेण सह आम आकम् स्यात्। युष्माकं, अस्माकम्।

३८। त्वमहं सुना। [त्वमहं०१॥, सुना ३।]

तयोः स्थाने सुना सह त्वमहमौ स्याताम्। त्वं, अहं, परमाहम्। *

३९। जसा यूयंवयम्। [जसा ३।, यूयं,वयं०१॥]

तयोर्जसा सह यूयंवयमौ स्याताम्। यूयम्, वयम्।

---

* अयं इत्यव्ययमाति, [illegible]ः, अहंमन्यः, अहंप्रत्ययः, परमत्वं, परमाहं इति सिद्धान्तकौमुदी।

४०। ङया तुभ्यंमह्यं। [ङया ३।, तुभ्यं,मह्यं० १॥]

ङया चतुर्थ्येकवचनेन सह तयोस्तुभ्यं,मह्यमौ भवतः। तुभ्यं, मह्यम्।

४१। तवममौ ङसा। [तव,ममौ १॥, ङसा ३।]

तयोर्ङसा सह तव, ममौ स्याताम्। तव, मम। *

४२। दोयोऽचि। [दः ६।, यः १।, अचि ७।]

अचि परे तयोः सम्भवतोर्दकारस्य योभवति। त्वया, मया, युवयोः, आवयोः, त्वयि, मयि।

४३। भसोरात्। [भसोः ७॥, आत्०१।]

भादौ, सादौ च दकारस्याद्भवति। युवाभ्यां, आवाभ्यां, युष्माभिः, अस्माभिः, युष्मासु, अस्मासु।

। मपर्य्यन्तयोः। अधिकारोऽयम्

४४। युवावौ द्वित्वे।

[म-पर्य्यन्तयोः ६॥, युवावौ (युव-आव) १॥, द्वित्वे ७।]

तयोर्मपर्य्यन्तयोर्द्वित्वे युवावौ स्याताम्। युवां, आवाम्; मपर्य्यन्तयोरिति किम्? युवकां आवकां न तर्हि (१७) युवावौ। युष्मत्तः, अस्मत्तः।

---

* ममेत्यव्ययश्चास्ति ममत्वं। ममता।

(१७) मपर्य्यन्तयोरितिविधानेन युवकां, आवकामित्येतयोः सिद्धिरिति ज्ञेयम्। तथाहि—[illegible]दति सर्वादेरकीकारे—युवका-

## ४५ । त्वमावेकत्वे प्रत्ययोत्तरपदयोः ।

[त्वमौ १ ॥, एकत्वे ७ ।, प्रत्ययोत्तरपदयोः (प्रत्यय-उत्तरपद) ७ ॥]

तयोरक्षतादेशयोर्मपर्य्यन्तयोरेकत्वाभिधाने त्वमौ भवतः। प्रत्यय-मात्रे उत्तरपदे च। त्वां, मां, त्वत्तो, मत्तः त्वदीयो, मदीयः, क्यच्-त्वद्यति, मद्यति। क्यङ् त्वद्यते, मद्यते ; त्वं ग्रामनीरस्य त्वतकः, मतकं मतं ; उत्तरपदे च त्वत्पुत्रो मत्पुत्रः ; एकत्व इति किम् ? युष्म-दीयोऽस्मत्पुत्रः ।

## ४६ । गौणयोश्च सुजसङेङसा त्वमहमादिस्तत्पुरुषे ।

[गौणयोः ६ ॥, च० १ ।, सु,जस, ङे, ङसा ३ ।, त्वमहमादिः १ ।, तत्पुरुषे ७ ।]

तत्पुरुषे तयोरप्रधानयोः सुजसादिभिः सह यथोक्तं त्वमहमादि-र्भवति। त्वामतिक्रान्तोऽतित्वं, अत्यहं * त्वामतिक्रान्ता अतियूयम्, अतिवयम्, त्वामतिक्रान्ताय, अतितुभ्यम्, अतिमह्यम् ; त्वामति-क्रान्तस्य अतितव, अतिमम। एव मनयोर्द्वित्वबहुत्वयोश्च युवामति-क्रान्तो युष्मान् वा अतित्वं, युवामतिक्रान्ताः युष्मान् वा अतियूयं, युवामतिक्रान्ताय युष्मान् वा अतितुभ्यं, युवामतिक्रान्तस्य युष्मान् वा अतितव एवमस्मदोऽपि। तत्पुरुष इति किम् ? प्रियत्वत्पुरुषः ।

---

मित्यादौ सकारयोरपि युवाद्यादेशापत्तौ तद्रूपासिद्धिरिति भावः। भाष्ये तु मपर्य्यन्तस्येत्यभिधानेन विभक्तिशेषसहितयोरेव तयोर्मपर्य्यन्त-स्थाने आदेश इत्युक्त्वा यत्र निरवशेषत्वञ्च युष्मयते, अस्मयते इत्यादौ नादेश इति पक्षान्तरमभिहितम् मपर्य्यन्तकथनस्य ।

* मामतिक्रान्तः। एवं सर्वत्र अति[illegible]मित्यादौ अकार घटितं वाक्यं कर्त्तव्यम् ।

## ४७। तद्वाक्यवचनवच्छेष विभक्तौ ।

[तद्वाक्यवचनवच्छेष विभक्तौ ७।]

उपयुक्ताच्छेषे सुजसादेरन्यस्यां विभक्तौ वाक्ये परस्परमन्वय्यार्थपद-समुदाये युष्मदस्मदोरत्यादिप्रयोगे यद्वचनं भवति, तस्मिन् प्रकृतेर्यद्रूपं तादृशमेव तयोरन्यार्थेऽपि स्यात्। यदि वाक्ये तयोरेकवचनं तस्मिन् तदान्यस्य द्वित्वे बहुत्वेऽपि एकवचनवद्रूपम्। यदि तयोर्वाक्ये द्विवचनं तदान्यस्य पूर्ववचनेऽपि द्विवचनवद्रूपं। यदि तयोर्वाक्ये बहुवचनं तदान्यस्य एकवचनेऽपि बहुवचनवद्रूपम्। उदाहरणानि— त्वामतिक्रान्तौ, अतित्वां विप्रौ, त्वामतिक्रान्तं अतित्वां, त्वामतिक्रान्तान्, अतित्वान्; एवमतित्वया, अतित्वाभ्यां, अतित्वाभिः; त्वामतिक्रान्तेभ्यः अतित्वभ्यम्, त्वामतिक्रान्तात् अतित्वत्; त्वामतिक्रान्तेभ्यः अतित्वत्, एवमतित्वयोः, अतित्वाकं केचित् आम आकमं नेच्छन्ति। तन्मतेन अतित्वयां अतित्वयि, अतित्वासु। एवमस्मदोऽपि तद्द्वित्वे युवामति क्रान्तौ अतियुवां, युवां अतिक्रान्तं अतियुवां, युवामतिक्रान्तान् अतियुवान्; युवामतिक्रान्तेन अतियुवया, एवमतियुवाभ्याम्, अति-युवाभिः युवामतिक्रान्ताय अतियुवभ्यं, युवामतिक्रान्तेभ्योऽतियुवभ्यं, युवामतिक्रान्तात् अतियुवत्; युवामतिक्रान्तेभ्योऽपि अतियुवत् एवमति-युवयोः, अतियुवाकम्; अन्येषां मतेन अतियुवयां, अतियुवयि, अतियुवासु एवमस्मदोऽपि। तद्बहुत्वे युष्मानतिक्रान्तौ, अतियुष्मां, अतियुष्मां, अतियुष्मान्, अतियुष्मया, अतियुष्माभ्यां, अतियुष्माभिः, युष्मान् अतिक्रान्तेभ्योऽपि अतियुष्भ्यं, अतियुष्मत् (ङसिभ्यसोरितः)।

एवमतियुष्मयोः, अतियुष्माकं, अन्येषां मतेन अतियुष्मयाम्, अति-युष्मयि, अतियुष्मयोः, अतियुष्मासु। एवं त्वामतिक्रान्ता स्त्री अतित्वं, त्वामतिक्रान्ते स्त्रियौ अतित्वां स्त्रियौ इत्यादि (एष न सार्वत्रिकः पाठः)। स्वमोर्लुकि च क्लीबे। अतित्वत्, अतियुवत्, अतियुष्मत्, कुलम् एवमस्मदोऽपि। (१८)

---

(१८) अत्रैषा कारिका—समस्यमाने द्व्येकत्ववाचिनी युष्मदस्मदी।
समासार्थोऽन्यसंख्यश्चेत् स्तो युवावौ त्वमावपि॥
सुजस् ङेङस्सु परतः आदेशाः स्युःसदैव तु।
त्वाहौ यूयवयौ तुभ्यमह्यौ तवममावपि॥
एते परत्वाद्बाधन्ते युवावौ विषये स्वके।
त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः॥
द्व्येकसंख्यः समासार्थो बह्वर्थे युष्मदस्मदी।
तयोरद्व्येकतार्थत्वान्न युवावौ त्वमौ न च॥

णिङ् क्विबन्तयोश्च त्वमाद्यहमादी॥ इति सङ्क्षिप्तसारसूत्रम् अस्यार्थः णिङ् (च) क्विपावन्ते ययोस्तौ णिङ् (च) क्विबन्तौ, एवंभूतयोरपि युष्मद-स्मदोः सुपा सह त्वमादिरहमादिश्च भवति। युष्मानाचष्टाः इति तत्-करोतीति णिच्, क्विप् च ततः सौ परे त्वं, एवं युवां यूयम्, त्वां युवा-मित्यादि। एकत्वद्वित्वयोर्विशेषं वक्ष्यतीति युष्मानित्यत्र बहुवचनान्तो-दाहरणम्। भ्यस् भिस् सुप्सु म-स्यात्। सूत्रान्तरम् तस्यार्थः।

णिङ् क्विबन्तयोर्युष्मदस्मदोः भ्यस्, भिस्, सुप्सु परेषु मकारस्य स्थाने आद्भवति। युवान्। याभ्योस्त्वमयोरलुक्। सूत्रान्तरम्। याभ्योः परयो-स्त्वमयोरकारस्य लुग्भवति, युष्मानाचष्टेऽनेन त्वया, एवं युवाभ्यां, युवाभिः, तुभ्यं, युवाभ्याम्। भ्यस्यन्मस्य [illegible] वा॥ सूत्रान्तरम्। भ्यसि परे णिङ्

## ४८। पदात् त्वां मां त्वामा वा।

[पदात् ५।, त्वां मां०१॥. त्वा, मा०१॥, वा०१।]

पदादुत्तरौ त्वां मां इत्येतौ त्वा,मा इति वा स्याताम्। पातु त्वा, पातु मा पदादितिकिम् त्वां पातु।

## ४९। ङेङसन्तयोस्तेमे। [ङेङसन्तयोः ६॥, तेमे०१॥]

---

क्विवन्तयो युष्मदस्मदोः सम्बन्धी अकार आगमो नित्यं भवति। मकारस्य च लुग्वा भवति। युष्मभ्यम्, युषभ्यम्, युङ्भ्यमिति कातन्त्रम्। त्वत्, युवाभ्यां, युष्मत् युषत्, तव, युवयोः। अकमोऽदीर्घो युष्मास्मोर्मस्य लुग्वा। युष्मास्मोर्मस्य लुग्वा भवति तयोः परस्याकमोऽदीर्घो भवति तत्सन्निधित्वादकम आद्यस्यैवाकारस्य दीर्घो भवति। युष्माकं युषाकं, युष्मामिति कातन्त्रम्। त्वयि, युवयोः, युषासु एवं अहं, आवां, वयम्, मां आवां अस्मान्, म्या, आवाभ्यां, अस्माभिः, मह्यं, आवाभ्यां, अस्मभ्यं, असभ्यम्। असभ्यमिति कातन्त्रम्। मत् आवाभ्यां, अस्मत्, मम, आवयोः, अस्माकं, असाकं अस्मामिति कातन्त्रम्। म्यि आवयोः असासु। अस्मानाचक्षाणः इति णिच्, क्विप्। अन्ये तु त्वमाद्यहमादीन्नेच्छन्ति तन्मते युष्मं, युषां युषं, युषां, युषां युषान् युष्या, युष्मेति कातन्त्रम्, युषाभ्याम्, युषाभिः, युष्मं युषम्, युषाभ्यां, युष्मभ्यं, युषभ्यं, युङ्भ्यमिति कातन्त्रम्। युष्मत्, युषत्, युषाभ्यां युष्मभ्यं, युषभ्यम्, युङ्भ्यमिति कातन्त्रं युष्म, युष, युष्योः, युष्माकं. युषाकं, युष्मि, युष्योः युषासु एवं अस्मं असं असां, अस्या, अस्मोरति कातन्त्रम् असां असान्, असाभ्यां असाभिः अस्मं असं, इत्यादि त्वामाचक्षाणः + त्वं, त्वां त्वम्। त्वां, त्वां, त्वान्। त्वया, त्वेनेति कातन्त्रम्। त्वाभ्यां, त्वाभिः, त्वं, त्वाभ्यां, त्वभ्य, त्वत् त्वाभ्यां, त्वत् त्व, त्वयोः त्वा[illegible], त्वयि, त्वयोः त्वासु। मामा-

ङेङसन्तयोर्युष्मदस्मदोर्यथाक्रमं ते,मयौ स्याताम्। दद्यात्ते, देहि मे; पुत्रस्ते पुत्रो मे पदादित्येव तुभ्यं दद्यात् कथं जितन्ते पुण्डरीकाक्ष त्वया. मयेत्यर्थे ते,मे अव्ययौ तिष्ठतः।

५०। षष्ठीचतुर्थीद्वितीयास्थयोर्द्वित्वे वां नौ बहुत्वे वस् नसौ। [षष्ठी—स्थयोः ६॥, द्वित्वे ७।, वां, नौ०१॥, बहुत्वे ७।, वस्, नसौ १॥]

षष्ठ्याद्यन्तयोर्यथाक्रमं द्विवचने वां,नौ बहुवचने वस्,नसौ स्याताम्। गावोवां गावोनौ, धनं वां दीयते, धनं नौ दीयताम्; देवो वां पातु, देवोनौ रक्षतु। बहुत्वे पुत्रोवः, पुत्रोनः; धनं वोदीयते, धनं नो देहि; पातुवो गिरिजामाता, पातु नः कमलालया। पदादित्येव युवयोर्नामः।

---

षष्ठ्याद्याः+म, मां, मम्। मां मां मान्। मया, मेनेति कातन्त्रम्। माभ्याम् माभिः। युवामाषष्ठ्याद्याः+त्वं युवां. यूयं, युवां, युवां, युवान्। युवया, युवाभ्यां, युवाभिः तुभ्यं युवाभ्यां, युवभ्यम्। युवत् युवाभ्यां युवत्। तव युवयोः युवाकम्। युवयि युवयोः, युवासु। आवामाषष्ठ्याद्याः+अहं आवां वयम्। आवां, आवां, आवान्। आवया, आवाभ्यां आवाभिः। मह्यम्, आवाभ्यां आवभ्यम्। आवत् आवाभ्यां आवत्। मम, आवयोः, आवाकम्। आवयि, आवयोः आवासु। युवामाख्यातुमिच्छति युयुष्यति। युवयोर्भावः युष्मत्ता। क्विपि तु त्वदयति, मदयतीति, एवं त्वदधि, अधित्वत्, अधिमत्, तवसमीपम् उपत्वत्, उपमत्, इत्युदाहृतम्। [illegible]मिच्छति त्वयति।

५१। नामन्त्रितात्त्वामादयोऽतत्सामान्यवचनात्।

[न०१।, आमन्त्रितात् ५।, त्वामादयः १।।।, अतत्सामान्यवचनात् (न-तत्-सामान्य वचन) ५। ]

सम्बोधनपदात्त्वामादयो न स्युः। विप्र त्वां वन्दे, देव मां पाहि, विप्र तव स्वं विप्र मम स्वमित्यादि। तत्सामान्यवचनाद्विशेषणान्निषेधो नास्ति। छात्र वैयाकरण त्वाहं पृच्छामि, छात्र गुणिन् ते स्वमित्यादि तत्सामान्येति किम्? छात्र जटिलक त्वां पृच्छामीत्यत्र निषेधएव जटिलकश्छात्रः सामान्यो न भवति।

५२। वाक्यादिपदाद्योस्च वा ह्वाहैव पूर्वे च।

[वाक्यादिपदाद्योः ७।, च-वा-ह्वा-हा-एव- पूर्वे ७।, च०१। ]

वाक्यादौ-श्लोकस्य सर्व्वपदादौ च त्वामादयो न स्युः। ओदनं पच युवयोर्यथा स्यात्। युष्माकं पालकः अस्माकं पालको हरिः। च, वा हा, हैव, पूर्व्वे च स्वमिदं तव च मम वा स्वं, मम ह पुत्रो ममैव पुत्रः पूर्व्व इति किम्? पुत्रस्च ते स्वमित्यादि तत्परत्वाद्भवति। दृश्यार्थयोगे त्वामादयो न स्युः, अनालोचनञ्चेत् विप्रस्तव देशं संदृश्यागतः, विप्र मम वा समालोक्यागतः। अनालोचन इति किम्? साचान्निर्भालने निषेधो माभूत्, विप्रस्त्वा पश्यति, विप्रोमा समीचते। (१८)

(१८) एते वाः नावादय आदेशा अनन्वादेशे वा वक्तव्याः। इति वार्त्तिकम्। अन्वादेशे तु नित्यं स्युः इति सिद्धान्तकौमुदी। सपूर्वात् प्रथमान्तात् कथितानुकथनेऽपीति संप्रसार सूत्रम्—अस्यार्थस्तु सब-

## ५३ । पञ्चम्यास्तसिर्वा किं सर्वादिबह्वोरद्व्यादेः ।

[पञ्चम्याः ६।, तसिः १।, वा०१।, किं-सर्व-आदि, बह्वोः ६।, अद्व्यादेः (न-द्वि-आदि) ६ । ]

किमादेः पञ्चम्यास्तसिर्वा स्यात् । इदनुबन्ध एव, कस्मात्, काभ्यां, केभ्यो वा कुतोभवानवरोहति, सर्व्वतोनीयते, बहुतो हीनः, द्व्यादेः सामान्येन निषेधोऽयं विशेषेण भविष्यति ।

## ५४ । सप्तम्यास्त्रः । [सप्तम्याः ६।, त्रः १ । ]

किमादेः सप्तम्यास्त्रोवा स्यात् । कुत्र, सर्व्वत्र, बहुत्र, अद्व्यादेरित्येव-द्वयोः, त्वयि, मयि ।

## ५५ । किमोऽत्र । [किमः ५।, अत्०१।, च०१ । ]

किमः सप्तम्या अश्च वा स्यात् । क्व, कुह वैदिके ।

## ५६ । इदमोहिः । [इदमः ५।, च०१ । ]

इदमः सप्तम्या हो वा स्यात् । आद्यपवादोऽयम् । इह ।

## ५७ । अन्यासामपि दृश्यन्ते ।

[अन्यासां ६।।।, अपि०१।, दृश्यन्ते तिङन्तं ]

---

सद्विद्यमानवचनः सद्वः सोवेति सभावः । विद्यमानपूर्वात् प्रथमान्तात् पदात् परयं(र्यो)र्युष्मदस्मदोः स्थाने अमादिभिः सह ये त्वामादयो विहितास्ते वधिताश्चकथमेऽपि भवन्ति । अथो ग्रामे कम्बलस्ते स्वं तव वा, अथो ग्रामे कम्बलोमे स्वं मम वा । असपूर्वात्तु कम्बलस्तेऽयोस्वं, कम्बलोमेऽथोस्वम् ।

अन्यासामपि विभक्तीनां किमादिभ्यो दर्शनं तसादयः स्युः। कः कुतः कुत्र भवान्; अयमित इह भवान्; तं ततः, तत्र दीर्घायुषम् ब्रवीमि। केन, कुतः, कुत्र भवता, अस्मिन्, इह भवति।

५८। आद्यादिभ्यस्तसिः। [आद्यादिभ्यः ५।।।, तसिः १।]

सर्व्वनाम्न इति निवृत्तम्। एभ्यस्तसिर्व्वा स्यात्। आदौ आदितः, प्रथमतोऽन्ततो मध्यतः पार्श्वतोमुखतः, अग्रतः, अर्थतः, कर्म्मतोनुगतः शरीरतश्च कृष्णः, शब्दतोदुष्टः, स्वरतोवर्णतो वा। प्रतियोगे पञ्चम्याः तसिर्व्वा स्यात् यो नारायणतः प्रति।

५९। अपादाने चाहीयरुहोः।

[अपादाने ७।, च०।।, अहीयरुहोः (न-हीय रुह) ६॥]

हीयरुहोरप्रयोगेऽपादाने पञ्चम्यास्तसिर्व्वा स्यात्। ग्रामत आयाति, चौरतो बिभेति, हत्रादेः ह्रितः, त्वत्तो, मत्तः युष्मत्तः, अस्मत्तः। अहीयरुहोरिति किम्? स्वार्थाद्धीयते द्वाभ्याम् हीनः, स्वर्गादवरोहति, अपादान इति किम्? द्वाभ्यामन्यः।

६०। अतिग्रहाऽचलनाक्षेपेष्वकर्त्तरि तृतीयायाः।

[अतिग्रह—आक्षेपेषु ७।।।, अकर्त्तरि (न-कर्तृ) ७।, तृतीयायाः ६।]

एष्वर्थेषु तृतीयायास्तसिर्व्वा स्यात्, वृत्ततोऽतिगृह्यते, चरित्रतो न चलति; व्यवहारतो निन्दितः। अकर्त्तरीति किम्? मैत्रेणातिगृह्यते।

६१। पापहाकोश्च योगे। [पापहाकोः ६॥, च०।।, योगे ७।]

अनयोर्योगे तृतीयायास्तसिर्वा स्यात्। वृत्ततः पापः, वृत्ततोहीनः।

६२। षष्ठ्यास्तत्पश्चे। [षष्ठ्याः ६।, तत्-पश्चे ७।]

षष्ठ्यास्तसिर्वा स्यात्। देवा अर्ज्जुनतोऽभवन्, अर्ज्जुनस्य पश्चा इत्यर्थः। आदित्याः कर्णतोऽभवन्। रोगात् चिकित्सायाम्। तसिर्वा स्यात्-ह्रिक्कातः, प्रवाहिकातः कुरु चिकित्सां तस्या इत्यर्थः। अभितः परितोऽव्ययम्। इमौ निपात्येते।

६३। सर्वनामाव्ययतिङामक् प्राक्टेः कुत्सानुकम्पाल्पाज्ञातनयेषु।

[सर्वनाम-अव्यय-तिङां ६।।।, अक्०१।, प्राक्०१।, टेः ५।, कुत्-नयेषु (कुत्सा अनुकम्पा-अल्प-अज्ञात नय) ७।।।]

कुत्साद्यर्थेषु सर्वनामादेष्टेः प्रागग्वा स्यात्। पापोऽसकौ, हासकस्त्व; अल्पे—नीचकैः, तिङन्तस्य पचतकि, अज्ञाते कोऽसकौ जल्पति, नीतौ—गोपायकेऽङ्गनायुषी, अथोचकैरासनतः पराङ्ग्रात् अव्ययान्तस्य च-धिक्, धकिक्; हिरुक्, हिरकुक्। तूष्णीमीमःकाम्। नष्णीकामामते विज्ञाः।

६४। सुपस्त्वानोसभादेः।

[सुपः ६।, अ०१।, अनोसभादेः (अ-ओ-स-भ-आदि) ६।]

ओकार,सकार, भकारादिवर्जितस्य सुपष्टेः प्रागग्वा स्यात्। त्वयका, मयका, त्वयकि, मयकि; अनोसभादेरिति किम्? आव-

कयोः, ममकासु, मामकाभिः, सुष्मकानित्यपि मयकादौ एकवाक् यथायोगम् । (२०)

इति श्रीपद्मनाभदत्तकृतौ सुपद्मे व्याकरणे

द्वितीयोऽध्यायः ।

---

(२०) भवतोऽक् समासे पुंवद्भावो हेत्वर्थैः सर्वनामादिश्च । इति सङ्क्षिप्तसारसूत्रम् । भवच्छब्दात् समस्तसर्वनामकार्थे प्राप्ते नियमार्थं वचनम् । भवतोऽगभवति, समासे पुंवद्भावो भवति । हेत्वर्थैः शब्दैर्युक्तात् सर्वनामादिश्च भवति नान्यत् कार्यम् । तेन भवत्याः प्रसादः, भवत्प्रसाद इति । भवन्तौ हेतू भुङ्क्ते । भवकान्, भवकन्तौ ।

क्लीबे समोऽप्रधानं समासेऽयादि तद्धिते शब्दानुकृति काम्यादौ प्रकृत्यैव तदादयः । इति सङ्क्षिप्तसार सूत्रम् नपुंसके समोः परयोः समासे सति अप्रधानम् । अप्रधानमित्यपरिच्छिन्नलिङ्गवचनमेव यथाधर्मो वेदाः प्रमाणमिति अथवा अप्रधानस्येति त्यादेर्विशेषणं अप्रधानस्य त्यदादेः समासे सतोत्यर्थः यद्यपि अप्रधानार्थत्वे चेति सर्वनाम निषेधेनैवासार्थमेतत् तथाप्यत्र कृतं स्पष्टम् । प्रकृति अपाठवशाभावगम एकत्रैव आयतामिति । आदिवर्ज्जिते तद्धिते परे शब्दानुकृत् शब्दानुकरणं तत्र काम्यादौ च प्रत्यये परे त्यदादयः प्रकृत्यैव तिष्ठन्ति यत् यत्कार्यमुक्तं तत्तन्न भवतीत्यर्थः । तत् , तत् , इदम्, तत् पुच । तमतिक्रान्तः अतितत् , यदा तु अतिशब्दः पूजार्थः, तदानित्यं कुप्रादेरिति समासे न तदा अप्रधानार्थता भवति ततः अतिस इत्येव भवति । यादा तथा, था, दानीं र्हि, तर,तमाद्यादयः बहुदीरिताः ।

# लिङ्गानुशासनम्

सिद्धं विबुधजनेष्टं विदिताखिलवाङ्मयं प्रणम्याहम् ।
लिङ्गानुशासनमहं रचयाम्यार्याभिः समासेन ॥
नाम नपुंसकलिङ्गं तत्रनलस्तुत्व शब्दपर्यन्तम् ।
मवन्तो हित दित मपि सान्तं हलपूर्वकजातम् ॥ १ ॥

नपुंसकलिङ्गं नाम-नलस्तुत्व शब्दपर्यन्तं नाम नपुंसकलिङ्गं क्लीवलिङ्गमित्यधिकारः। नस्त्री, नपुमान् नपुंसकमिति व्युत्पत्तेः स्त्रीपुंसाभ्यां मन्यत् नपुंसकं वेदितव्यम्। यस्य वस्तुनः स्त्रीचिह्नं पुंचिह्नम्वा नास्ति, याच शिष्टैः स्त्रीत्वेन पुंस्त्वेन न व्यवहृतपूर्वं तत् क्लीवमिति साधारणोऽयं नियमः विशेष नियममाह— मवन्तः-मन्प्रत्ययान्तः मन्भागान्तोवा, शब्दः क्लीवं यथा कर्मन्, मर्मन्, नामन्, रोमन्, शर्मन् सामन, पाणिनीये मन् द्व्यचकोऽकर्त्तरीति वचनात् (द्व्यच्युक्तोऽकर्त्तरि विहितमन्प्रत्ययान्त एव क्लीवं तद्भिन्नस्तु पुंलिङ्गः) ब्रह्मन् (स्रष्टि कर्त्तरि), आत्मन् इत्यादयः पुंसि; ब्रह्मन् परमेश्वरार्थे वेदार्थेच क्लीवम्। हितशब्दः क्लीवलिङ्गः दितशब्दश्च, सान्तं क्लीवं अत्रापि द्विस्वरं यत्सान्तं तदेव क्लीवम् यथा पयस, मनस्, तमस्, सर्पिस्, हविस्, ज्योतिस्, वपुस्, यजुस् इत्यादीनि क्लीवानि, तमोराहौ पुमानयमिति वचनात् राहुवाचकस्तमः शब्दः पुमानेव, वेधस, पुं, आशिरप्सरसौ स्त्रीलिङ्गौ।

भवनस्य रजतहान्तं चार्थरणापत्यहृदय तालु पुराः ।
रान्तश्च तमोर्वारुकतमसा मव्यक्तलिङ्गोक्तौ ॥ २ ॥

भवनं रजतं हान्तं—गृहं वर्हं; गृहाः पुंसि, अर्थवाचकः शब्दाः द्रविणं धनमित्यादयः, (१) रण (युद्ध) वाचकशब्दाः तत्र आहव संग्रामौ पुंसि, आजिः स्त्रियां, अपत्यं, हृदयं, तालु, पुरम्। रान्तं-पात्रं

(१) कोचिचार्थेत्यनेन द्वन्द्वसमासान्तं वदन्ति

घस्तं, तान्ते ग्रन्ते मित्यादीनि क्लीवानि. यात्रा, माला, दंष्ट्रा वरत्रा. स्त्रियामेव, भृत्यः, असितः, छात्रः पुत्रः, मन्त्रः, वृत्रः मैत्रा इत्येते पुंसि, पात्रपत्र पवित्र सूत्र छत्राः पुंक्लीवयोः। तत्र उर्व्वादिक समांसि क्लीवानि।

दलपलल लहिमस्वास्तभय सुखदुःख पुण्यपापविराम।
प्रसवाभरणविलेपव्यञ्जन फल लवण जातीनाम॥ ३॥

दल पर्णं पत्रमित्यादिपत्रार्थकं, पलं मांसं पिशितं तरसमित्यादि मांसार्थकं बिलं छिद्रं शुषिरमित्यादिछिद्रार्थकं; हिमं प्रालेयं तुहिन मित्यादि हिमवाचकं; खमिन्द्रियं व्योमच, आकाशार्थकं वियदित्यादि, आकाशविहायसौ पुंसि द्यौःस्त्रियाम् अमृतं भयं, सुखं, दुःखं, पुण्यं, पापं विट् मलं; प्रसवः फलं पुष्पञ्च आभरणं भूषणं, विलेपनं, कुङ्कुमादि, व्यञ्जनं श्मश्रु, चिह्नं, दधितक्राद्यपि; फलं लवणं। एतानि एतज्जातीयान्यन्यानि च।

दार्व्वौषध जलधनुरुदराजिर शिखर अस्त्र पिच्छानाम्।
द्विगुरपि पात्राद्यन्तः क्रियाव्ययविशेषणं चैक्ये॥ ४॥

दारु काष्ठं औषधं, जल उदकं नीरमित्यादि; धनुः (धनुष्) उदरं, आजिरं, अङ्गणमित्यादि शिखरं, पिच्छं। पात्राद्यन्ताद्द्विगुरपि पात्राद्यैरदन्तैरेकार्थैर्योद्विगुः स क्लीबः। पञ्चपात्रं, त्रिभुवनं चतुर्युगम्। क्रियाविशेषणं अव्ययविशेषणं एक्यम मदैकवच नान्तमित्यर्थः। एतानिक्लीवानि।

छायासभा बहूनां संघैर्व्वराजार्थराक्षसादीनाम।
भवनं च तत्समासे द्वन्द्वे कलाव्ययीभावौ॥

तत्समासे तत्पुरुषसमासे बहूनां संघैश्छाया शब्दः सभा शब्दश्च क्लीवं, इक्षुच्छाय; दासीसभं बहूनामितिकिम्, कुड्यछाया, कुड्यच्छायम्वा, राजशब्दभिन्नानां राजपर्य्यायाणां राक्षसादीनां

(मनुष्यभिन्नाना मित्यर्थः) संघः भवनं गृहार्थे चकारात् संहतार्थे च सभाशब्दः क्लीवं इनसभं प्रभुसभं रक्षः सभं पिशाचसभं, अराजात् किं राजसभा राजशब्दग्रहणान्नेह चन्द्रगुप्तसभा। द्वन्द्व समास मैकत्वं अव्ययीभावश्च क्लीवे।

द्वन्द्वैकत्वनियमा यथा

(१) प्राणितूर्य्य सेनाङ्गानां द्वन्द्वं।

पाणि पादं मार्दङ्गिकपाणविकम्, रथिकाश्वारोहम्।

(२) चरणानां द्वन्द्वं सिद्धस्योपन्यासे। कठकालापं कठकौथुमम्।

(३) अनपुंसकानां यजुर्व्वेदविहित क्रतुवाचिनां द्वन्द्वं। अर्क्काश्वमेधम्।

(४) सन्नीपाध्यायिनां द्वन्द्वं पदकक्रमकम्।

(५) अप्राणिनां जाति वाचिनां द्वन्द्वं धान्यशष्कुलि, द्रव्यजातीनामेव नेह नेह रूपरसौ, गमनाकुञ्चने जातिप्राधान्यएवाय मेकवद्भावः द्रव्यविवक्षयान्तु वदरामलकानि।

(५) भिन्नलिङ्गानां नदीदेशवाचिनां द्वन्द्वं गङ्गाशोणं कुरुकुरुक्षेत्रं भिन्नलिङ्ग इति किम् गङ्गायमुने।

(६) क्षुद्र जन्तूनां द्वन्द्वं यूकालिक्षम्।

(७) येषाञ्च विरोधः शाश्वतिकः अहिनकुलम् गोव्याघ्रम्।

(८) अवहिष्कृतानां शूद्राणां द्वन्द्वं तक्षायस्कारम्।

(९) गवाश्व प्रभृतीनिच। गवाश्वम् दासीदास मित्यादि।

(१०) वृक्ष मृगादीनां विभाषा प्लक्षन्यग्रोधं प्लक्षन्यग्रोधाः, रुरुपृषतम् रुरुपृषताः। कुशकाशम् कुशकाशाः, व्रीहियवम् व्रीहियवाः, दधिघृतं दधिघृते। एवं प्रयोगतोज्ञेयं।

(११) विरुद्धानां अद्रव्यवाचिनाञ्च विभाषया शीतोष्णं शीतोष्णे ।

(१२) न दधिपय आदीनां दधिपयसी ऋक्सामे, वाङ्मनसे ।

अव्ययो भाव समास निष्पन्नानि च पदानि क्लीवानि अधिस्त्रि॰ उपसंगम् ।

क्षतषष्ठ्यन्त समासे तदादित्व कथने ह्युपक्रमोपज्ञे,

कन्थोशीनरदेशे नाम्नाव्यय पूर्व्वकश्च पथः ॥ ७ ॥

तयोरुपज्ञोपक्रमयोरादित्वं प्राथम्यं तस्य कथने प्रकाशने सति क्षतः षष्ठ्यन्तेन समासोययोरेवं भूते उपक्रमोपज्ञे, उपक्रमः, उपज्ञा च क्लीवे स्यात् यथा कोपज्ञं, कः ब्रह्मा तस्य उपज्ञा एवं कोपक्रमं लोकः ।

उशीनराणां नामसुमध्ये षष्ठ्यन्तात् पर कन्था क्लीवे स्यात् उशीनरकंथम्, सौशमीकन्थम् ।

अव्यय पूर्व्वकश्चेति चकारात् संख्या पूर्व्वकश्च पथः क्लीवे द्विपथं, त्रिपथं, चतुष्पथं, त्रिपथं, कापथम् ; अन्यतत्तु धर्म्मपथः, योगपथः इत्यादि ।

भावे चिन्नणकान्तोऽदन्तोपि समूह भावकर्म्मार्थकः ।

धर्म्मार्द्ध सार मित्राङ्कखाङ्कदलन्यायसुहृदर्थे ॥ ८ ॥

चकारः, इत् अनुबंधोयस्य स चित्, नञ्च, णञ्च, कञ्च, चिञ्च नणकचितः तेभ्योऽन्योयो भावे विहितोऽदन्तप्रत्ययस्तदन्तः क्लीवं भवितव्यं, भाव्यम्, सहितं भुक्तम् । तथा समूहार्थे, भावार्थे, कर्म्मार्थेच विहितो योऽदन्तः प्रत्ययस्तदन्तश्च क्लीवं स्यात् भिक्षाणां समूहः भैक्षम्, गोर्भावः गोत्वम्, राज्ञः कर्म्म राज्यं चौर्य्यम् । धर्म्म, अर्द्ध, सार, मित्र शब्दाः यथाक्रमं ऋखाङ्क, दल, न्याय सुहृदर्थे क्लीवानि ।

कुड्मलं चिबुक, लिङ्ग, कवच बीज ललाट शृङ्गाटकम्।
घट, पिट, लोष्ट, करोटं पीठं पृष्ठञ्च कुष्ठञ्च ॥ ८ ॥

एतानि क्लीवानि।

कुण्डाण्ड भाण्ड कारण शरण मुख चुस्त मुण्ड तीर्थोक्थम्।
गुद द्वन्द्व कुसीदानि श्राद्धान्न रत्नचिह्ने च ॥ १० ॥

कुण्डं अण्डं भाण्डं कारणं शरणं मुखं चुस्तं उण्डं तीर्थं उक्थ गुदं द्वन्द्वं कुसीदं श्राद्धं अन्नं रत्नं चिह्नं एतानि क्लीवानि।

रूपं तल्पं शिल्पं समीप कूर्पोडुपान्तरीपाणि।
विम्बकुटुम्बे कुङ्कुममिध्मेध्म युग्मगुल्मञ्च ॥ ११ ॥

रूपं तल्पं शिल्पं समीप कूर्पं उडुपं अन्तरीपं विम्ब कुटुम्बं कुङ्कुमं सिध्मं इध्मं युग्मं गुल्ममेतानि क्लीवानि।

किशलय शिशिर कुकुन्दुर चामर कान्तार नीर दूराणि
वैराम्बरान्तरोष्ण किरव शरावाणि दवञ्च ॥ १२ ॥
एतानि क्लीवानि। वैर अम्बर अन्तर उष्ण तिर्च्छंद.।

कणिशं वड़िशं पुलिशं घोषं वर्षञ्च साहसं मधुसम्।
पुण्याहं सुदिनाहं जगत् पुरीतं जगद्भुवनम् ॥१३॥

स्पष्टम्।

नीड़ं ग्रह शस्य यूथ स्थूणोस्मं गन्धमादनास्थ्यक्षि।
सक्थ्यम्बर कशिपु जानु च कशेरु तोरण विम्बाह्वयान्याहः॥ १४ ॥

नीड़ं ग्रहं शस्यं यूथं स्थूणमुस्मं गन्धमादनं अस्थि अक्षि सक्थि अम्बर कशिपु जानु कशेरु तोरणं विम्बं आह्वयं अहः एतानि क्लीवानि इति क्लीवाधिकार।

पुंलिङ्ग ऋदन्तोरुत्वक्यन्तः स्यदनदाध्वकूपानाम्
सर्व्वज्ञ परिसर धर्म्मनख घन घृणिरदपुष्प वलयानाम् ॥ १४ ॥

पुंलिङ्गम्—पुंलिङ्गाधिकारः ऋदन्त शब्दाः पुंलिङ्गा यथा पितृ विधातृ भ्रातृ इत्यादयः अदन्त शब्दाः पुंलिङ्गाः नरः वृक्षः अदन्तास्तु कोपान्ताः षोपान्ताः णोपान्ताः भोपान्ताः रोपान्ता स्तथा पोपान्ताः थोपान्ताः नोपान्ताः योपान्ताः सोपान्ताः टोपान्ता एव। रुप्रत्ययान्तो यथा कुरुः मेरुः किंशारुः; तुप्रत्ययान्तो यथा हेतुः सेतुः धातुः तन्तुः; कशेरु दारु श्मश्रु जतुवस्तूनि भित्वा रुत्वन्ता इतयर्थः कशेरु प्रभृतीनितु क्लीवानि। अप्रतययान्ताः घञन्ताः। अप प्रतययान्ताः। अच् प्रतययान्ताश्च। घञ् प्रतययान्ताः यथा भावः माघः पाकः तयागः अच्प्रतययान्ता यथा जयः चयः नयः; अप् प्रतायान्ता यथा करः गरः लवः प्लवः कि प्रतययान्ताः यथा प्रधिः निधिः आदिः जलधिः इषुधिस्तु द्वयोरिति वाधितत्वम्। स्यटः नटः अध्वन् कूपा एते सपर्य्यायाः पुंसि। सर्व्वज्ञः परिसरः धर्म्मः नख घन घृणिः रदः पुष्प वलय एते च यथासम्भवं सपर्य्यायाः पुंसि।

ध्वनितरुविषमासासुर वर्णमरुत् प्राणिनो विशेषाणाम
धानान्यां रात्राह्नाह्ना समाहारे दुन्दुभि रनक्ते ॥ १५ ॥

ध्वनिः तरुः विषः मासः असुरः वर्णः मरुत् प्राणिनः जन्तु रितयादिः इतेषां विशेषाणां धान्यानां व्रीहिरितयादीनाञ्च यथासम्भवं भेदाः पर्य्यायशब्दाश्च पुंसि असमाहारे रात्रिशब्दान्तः अह्नः-अह्नशब्दान्तश्च पुंसि यथा अहोरात्रः सर्व्वरात्रः पूर्व्वरात्रः द्व्यह्नः पूर्व्वाह्नः अपराह्नः। पञ्चरात्रं गणरात्रं पुण्यरात्रमितयादीनि क्लीवान्येव। अनक्ते इन्द्रियार्थभिन्ने दुन्दुभिः पुंसि।

ग्रंथि कलि केलि वलि गिरि इति राशि मौलि कुक्षिपाण्यङ्घ्रिः।
अञ्जलि हाहा हूहू मङ्कत व्रात पोत युताः ॥ १६ ॥

एते पुंसि

सून वातायन हायन जनौदनाभिजनफेनवेमाश्म ।
श्लेष्मोष्म पाप्मयक्ष्मोत्सव द्वन्द्व मद्राश्च मन्द्रयुताः ॥ १७ ॥

सूनः वातायनः हायनः जनः ओदनः अभिजनः फेनः वेमा (वेमन्), अश्मा (अश्मन्) श्लेष्मा (श्लेष्मन्) उष्मा (उष्मन्) पाप्मा (पाप्मन्) यक्ष्मा (यक्ष्मन्) उत्सवः द्वन्द्वः मद्रः मन्द्रः।

एते पुंसि।

गर्त्तोऽवटो निकाय्यस्तरच्छादपटस्तथोत्तरासङ्गः।
नूपुर हार कलापार्वं कोश स्वार्थ विभवाश्च ॥ १८ ॥

गर्त्तः अवटः निकाय्यः स्तरः छादः पटः उत्तरासङ्गः नूपुरः हार कलापः कोशः स्वार्थः विभवः। एते पुंसि—

वहवः सक्तु वल्वजदारा लाजासु गृहदेशावासाः।
नाड्यरादिजनापपराणि व्रणयुगपदाङ्गानि ॥ १९ ॥

सक्तु वल्वज दार लाज असु गृह देश आवासाः एते बहुवचनान्ताः पुंसि च। नाड़ी, अरादि, जन, अपपराणि यथाक्रमं व्रण युग, पदः, अङ्गानि पुंसि। नाड़ीव्रणः, अरयुगः जनपदः, अपाङ्गः।

मल खल कपोल कम्बल चषाल कल्लोल काल कोल गलाः।
तरल प्रवाल तन्दुल कललोपल तूल फल गोल नलाः॥ २० ॥
एते पुंसि।

इति पुंलिङ्गाधिकारः

अथ स्त्रीलिङ्गाधिकारः।

स्त्रीलिङ्गं योनिमन्तं प्रागदीर्घान्तउदितोऽप्यनुक्त इह।
क्रुदिनो ङिदन्त दीधिति जात्यादिदरद्‌दृ विटि क्रुद्दि: ॥२१॥

योनिमन्तं शब्दं स्त्रीलिङ्गं जानीयात्। प्राच्‌शब्दः, स्त्रीलिङ्गः, दीर्घास्वरान्तश्च, स्त्रीलिङ्गः. तत्रसेनानीविश्वपादिवर्ज्जमित्यनु सन्धेयम्। तथा इह लिङ्गानुशासनशास्त्रे अन्यलिङ्गत्वेनानुक्त उदितोऽपि स्त्रीलिङ्गः। क्रुदिनो क्रुदिनो शब्दः। स्त्रीलिङ्गः ङान्तश्च स्त्रीलिङ्गः दीधिति जाति प्रभृति शब्दाः दरद्‌दृ विटि क्रुद्दिं शब्दाश्च स्त्रियाम्।

भा द्वाः पुरुडु काकु, प्रियङ्गु, कुत्सनागूरज्जु, चञ्चु,तनुः।
वह्वश्च समासिकता वर्षाप्सुमनो जलौकसोऽप्सरसः ॥२२॥

भा, द्वाः (द्वार्), पुः (पुर्), उडुः, काकुः प्रियङ्गुः कुत्समा, आगूः रज्जुः, चञ्चुः, तनुः, एते शब्दाश्च स्त्रियाम्। समाः सिकताः वर्षाः आपः सुमनसः जलौकसः अप्सरसः एतेहि शब्दा स्त्रिलिङ्गा बहुवचनान्ताश्च।

विशेष नियमाः।

विष कुलिश कलत्राणि त्रिपिष्टपार्थे नपुंसके पर्व्वं।
प्रसवाश्ववढ़व वाकच्छेद गरुदुश्चार वेधसःपुंसि ॥ २३ ॥

विषं कुलिशं कलत्रं त्रिपिष्टपं अभ्रं पर्व्व च नपुंसके। प्रसवः अश्ववड़वः वाकच्छेदः गरुत् उच्चारः वेधम् पुंसि।

त्रिंशत्याद्येकार्थाः स्त्रियां तु नित्यं नपुंसकेऽदन्ताः।
संख्याशतादिरिष्टा द्वित्वाद्यर्थे संख्यायाम् ॥ २४ ॥

त्रिंशति प्रभृत्येकार्थाः शब्दा नित्यं स्त्रियां एकार्थी अनावृत्ता-इत्यर्थः। अदन्ता संख्या द्वित्वाद्यर्थे शतादिश्च नपुंसके। द्वित्वाद्यर्थे आवृत्तौ।

स्त्रीलिङ्ग नपुंसकयो रावंतोत्तरपदोद्विगुश्चार्चिं ।
अष्टारादिपदाच्छायाशालासेनासुरासनिशा; ॥ २५ ॥

आकारान्तं उत्तरपदं यस्य एवंभूतोद्विगु: स्त्रीलिङ्गनपुंसकयोर्यथा पञ्चखट्वी, पञ्चखट्वं ; तथा अर्चिस् शब्दश्च, पष्ठान्तादिपदादुत्तरे वर्त्तमाना: छाया, शाला, सेना, सुरा, निशा च स्त्रीलिङ्गनपुंसकयो:—कुड्यस्य छाया –कुड्यछाया, कुड्यछायं वा, एवं गोशाला

गोशालं ; ब्राह्मणसेना, ब्राह्मणसेनं ; स्वनिशा स्वनिशम् ।

पुल्लिङ्गस्त्रीलिङ्गा मरीचि, मणि, यष्टि, मुष्टि, तूणाणि
त्रुटि, मथि, पाटलि शाल्मलि तरणि श्रोण्यूर्मयो वसति:
अरणीषुधीषुतिमय: समृत्यु, कर्कन्धु, बाहु कटु, तथा ॥ २६ ॥

मरीचि, मणि, यष्टि मुष्टि, तूणि, आणि, त्रुटि मथि, पाटलि शाल्मलि, तरणि श्रोणि, ऊर्म्मि, वसति, अरणि, इषुधि इषु तिमि, मृत्यु, कर्कन्धु, बाहु, कटुशब्दा: पुल्लिङ्गस्त्रीलिङ्गा ।

संख्यावचुलं वाच्यं दशरन्वित्वं ह्यनेकलिङ्गार्थां. ॥ २७ ॥
स्वत आमलक विभीतकवट-भल्लातक-हरीतका:स्त्रिषु ।
द्विअन्ता: स्त्रिया मर्थान्ता: शृङ्गल सविषाण नखर वल्लरा. ॥२८
परवल्लिङ्गं द्वन्द्वे तत्पुरुषे च द्विगौ च वाच्यमिव ।
अर्थान्तरे च प्राप्तलमापन्नप्रासपूर्व्वे च ॥ २९ ॥

आमलक; विभीतक, वट, भल्लातक, हरीतकाशब्दा: स्वतएवस्त्रिषु लिङ्गेषु वर्त्तन्ते। द्विअन्ता: स्त्रियां, अर्थान्ता: शृङ्गल भल्लादयश्च परवत्-विशेषणवत् लिङ्गं भजन्ते तथा द्वन्द्वतत्पुरुषे च परवल्लिङ्गं। द्विगौ वाच्यलिङ्गम् भिवर्तनाच तथा प्राप्तलंप्रासापन्नपूर्व्वाणामपि ।

दृश्यन्तेऽर्द्धर्चाद्या अपि पुंसि शङ्खपद्मभम्भोजे।
मूतोऽश्लोलवणाः सैन्धवमित्यनुदितं जनाज्ज्ञेयम्॥ ३०॥

अर्द्धर्चाद्या अपि पुंसि दृश्यन्ते शङ्खः पुंसि पद्मशब्दश्च भूतः ग्रन्थः लवणश्च पुंसि सैन्धवं क्लीवं एवं इहानुदितं जनात् शिष्टजनव्यवहाराज्ज्ञेयम्।

व्याडिप्रणीतमथ वाररुचं सचान्द्रं
जैनेन्द्र लक्षणगतं विविधं तथाऽन्यत्।
लिङ्गस्य लक्ष्म हि समस्य विशेषयुक्त
मुक्तं मया परिमितं नृदृशा इहार्य्याः॥ ३१॥
अद्यापि संशयगतार्थमनिष्टसङ्ग
लिङ्गानुशासनमिहाप्ततया मया तत्।
प्रोक्तं हि किञ्चिदविचार्य्य तदार्य्यवर्य्यैः
संस्कार्य्यमस्ति यदि कार्य्यमुताऽवधीर्य्यम्॥ ३१॥
लिङ्गानुशासनमिदं कृतसुवर्तन
शुभ्रैर्गुणैः कविहितं भुविवामनेन।
हृत्वाखिलं विमलशब्दगतं प्रमेयम
नातःपरं पटुतरं शुभमस्ति लोकाः॥

इति वामनाचार्य्यकृतं लिङ्गानुशासनम्।

## स्त्रीलिङ्ग विवेकः।

(१) समाहारार्थः—अदन्तद्विगुः (पात्रयुगाद्यन्तवर्ज्जं) यथा पञ्चमूली त्रिलोकी षडध्यायी पञ्चपात्रं चतुर्युगम्। (२) समूहार्थे यप्रत्ययान्तः स्त्रियां पाश्या वात्या। (३) अनि प्रत्ययान्तः अकरणिः अजीवनिः तत्र नु अशनि भरण्यरणयः पुंसि। (४) निप्रत्ययान्तः ग्लानिः हानिः म्लानिः तत्र वह्नि वृष्णि अग्नयः पुंसि; श्रोणिस्तु वा

पुंसि। एवं योनिरपि। (५) मिप्रत्ययान्तः नेमिः; ऊर्म्मिस्तु वा पुंसि। (६) क्ति प्रत्ययान्तः कृतिः गतिः। (७) इण् प्रत्ययान्तः वापिः वासिः। (८) इन्प्रत्ययान्तः इक प्रत्ययान्तश्च आजिः कृषिः। (१०) त्राप्रत्ययान्तः गोत्रा। (११) ङाप्प्रत्ययान्तः पचा भिदा विदा। (१२) इकण् प्रत्ययान्तः आग्निका ग्रायिका। (१३) भावे क्यप् प्रत्ययान्तः कृत्या व्रज्या इज्या। (१४) वैरार्थे मैथुनार्थे च ष्टिकण प्रत्ययान्तः काकोलुकिका अश्वम हिषिका। (१५) समूहार्थे कव्यप्रत्ययान्तः रथकव्या। ता (तल्) प्रत्ययान्तः ग्रामता देवता। इन्प्रत्ययान्तश्च नलिनी पद्मिनी। (१६) णटप्रत्ययान्तः व्याक्रोशी व्यापहासी। (१७) अनप्रत्ययान्तः अन्वेषणा कारणा भावना वासना। (१८) (१९) यप्रत्ययान्त क्रिया मृगया इच्छा परिचर्य्या शय्या अटाट्या (२०) उणादि ईप्रत्ययान्तः तन्त्रीः तरीः, ऊप्रत्ययान्तश्च— चमूः कर्षूः। (२१) आवन्तः (आप् अन्त) लता माला शिवा ड्यन्तः (ङी अन्त) नारी नदी कदली पात्री घटी। ऊङन्तः वधूः कर्कन्धूः। (२२) भावे क्विवन्तः (क्विप अन्त) सम्पत् विपत् प्रतिपत् परिषत् आपत् चित् त्रित् रुक् शुक लुक् संवित् क्षुत् समित्। इत्यादयः (२३) एकाक्षरयुक्ताः (ई ऊअन्त गोः श्रीः धूः भ्रूः धीः ह्रीः नयन्ति नीरित्यादौ क्तः कर्त्तरीति वाधितत्वाद्वाच्यलिङ्गता। (२४) भाम् स्रुव् स्रग् (ज दिक् (श) उष्णिक् (ह) उपानत् (ह) प्रावृट् (ष) शरत् त्विट् (ष) विप्रुट् (ष) त्रुट् (ष) आशीः (ष) द्वाः (र)। (२५) त्वक् (च) वाक् (च) स्रिक् (च)। (२६) दर्वि विदि वेदि खनि शालि अभ्रि वेशि कृषि ओषधि कटि सातिः अङ्गुलि तिथि नाडि रुचि वीचि सूचि धूलि किकि केलि छवि रात्रि शष्कुलि भङ्गि राजि कुटि वर्ति भ्रुकुटि त्रुटि वलि पंक्ति तटि चुल्लि वेणि द्रताल ग्राल्दाः दुन्दुभि

रिन्द्रियार्थस्त्रियामन्यार्थे पुंसि। नाभिरक्षत्रिये स्त्रियां क्षत्रिये पुंसि। सीमन् शब्दः स्त्रियां स्थूणा ऊर्णा नपुंसके च। गृहशश-भ्याम्तु नित्यं नपुंसकम्। गृहस्थूणं शशोर्णम्। पृथिवी विद्युतदि-च्छौणा रात्रि नदी वनितार्थका यावन्तःशब्दाः स्त्रियाम्।

इति स्त्रीलिङ्ग विवेकः।

पुंल्लिङ्ग विचारः।

(१) घञन्तः पाकः त्यागः, भावः (२) अप्प्रत्ययान्तः अच्प्रत्या-न्तश्च करः, लयः प्लवः, पचः, जयः, चयः, नयः, भय, लिङ्ग, भग पदानि नपुंसके। (३) न प्रत्ययान्तः यज्ञः, प्रश्नः, स्वप्नः; याच्ञा स्त्रियाम्। (४) कि प्रत्ययान्तः-प्रधिः, निधिः आदिः, जलधिः; इषुधिः स्त्रियां च। (५) ण प्रत्ययान्तः-ज्वालः, दायः, धायः, व्याधः अवसायः, वितानः, श्वासः। (६) अथुच्-प्रत्ययान्तः-वेपथुः। (७) नन्द्यादिरनप्रत्ययान्तः नन्दनः, मदनः, कम्पनः। भावार्थे इमन् प्रत्ययान्तः गरिमा, लघिमा प्रतिमा, महिमा। भावे क्त प्रत्य-यान्तश्च आकूत्यः, प्रस्थः। (८) अकारान्तः पुंसि नरः वृक्षः द्रुमः तत्र चिवुक शाल्मूक प्रातिपदिकांशुक उल्मूक किरीट मुकुट ललाट वट वीट शृङ्गाट करट लोष्ट करण लवण पर्ण तोरण रणोष्ण (रण, उष्ण) काष्ठ पृष्ठ रिक्थ जघन आजिन तुहिन कानन वन वृजिन विपिन वेतन शासन सोपान मिथुन श्मशान रत्न निम्न चिह्न पाप रूप उडुप तल्प शिल्प पुष्प शष्प समीपान्तरीप तलभ कुक्ष सिध्म युग्म इध्म गुल्म अध्यात्मा कुङ्कुम किसलय हृदय इन्द्रिय उत्तरीय द्वार अग्र स्फार तक्र वक्र वप्र क्षिप्र क्षुद्र छिद्र नार तीर दूर कृच्छ्र रन्ध्र अश्र श्वभ्र भीर गभीर क्रूर विचित्र केयूर केदार उदार उदर शरीर कन्दर मन्दर पञ्जर अजर जठर आजिर वैर चामर पुष्कर गह्वर कुटीर कुलीर चत्वर काश्मीर नीर अम्बर शिशिर

मन्त्र यन्त्र क्षेत्र सत्र मित्र कलत्र छत्र सूत्र वक्त्र नेत्र गात्र अङ्गुलित्र भलत्र अस्त्र शस्त्र शास्त्र वस्त्र पत्र पात्र नक्षत्र शिरीष जीष अम्बरीष पीयूष पुरीष किल्बिष कल्माष पानस विस बुस साहसेत्यं तानि क्लीबाणि। कण्टक अलीक सरक मोदक चषक मस्तक पुस्तक तड़ाक निष्क शुष्क वर्चस्क पिनाक भाण्डक कटक दण्डक पिटक तालक फलक कल्क पुलाक कूट कूटक पट कपाट कर्पट नट निकट कीटक कार्षापण स्वर्ण सुवर्ण व्रण चरण वृषण विषाण चूर्ण तृण तीर्थ पोथ यूथ गाथ मान यान अभिधान नलिन पुलिन उद्यान शयन आसन स्थान मन्दन आलान समान वसन सम्भावन विभावन विमान शूर्प कुतप कुणप द्वीप विटप जृम्भ सङ्ग्राम दाड़िम कुसुम आश्रम क्षेम क्षौम होम उद्दाम गोमय कषाय मलय अन्वय अव्यय चक्र वज्र अन्धकार सार वार पार क्षीर तोमर शृङ्गार भृङ्गार मन्दार उशीर तिमिर शिशिर यूप करीष मिश्र विष वर्ष चमस सरस निर्यास उपवास कर्पास वास मास कांस मांसेत्यं तानि पुंक्लीबयोः। काष्ठादिगर्थो स्त्रियां शुक्रशब्दो देवार्थे पुंसि अन्यत्र तु क्लीबे कंसश्चाप्राणिनि।

(८) उकारान्त शब्दः पुंसि वायु ; धेनुः रज्जु कुहु सरयु तनु रेणु प्रियङ्गवः स्त्रियाम् रज्जुः समासे पुंसि च मद्रु मधु शीधु सानु कमण्डलूनि नपुंसके वा ; श्मश्रु जानु स्वादम्बु (स्वादु-अम्बु) जतु त्रपु तालूनि नपुंसके वसु चार्थवाचि नपुंसके देवभेदे पुंसि।

(१०) नन्तः (न्-अन्तः) ब्रह्मा वर्म्मा मघवा (११) देवार्थकाः शब्दाः पुंसि तत्र दैवतं पुं, देवता स्त्री ; असुरर्थकाः शब्दाः पुंसि ; स्वर्गार्थकाः शब्दाः पुंसि तत्र स्वः अव्ययं, द्यौर्दिवौ स्त्रियां, त्रिविष्टपं पुंसि ; पर्व्वत वाचकाः शब्दाः पुंसि तद्भेदाश्च मेरु प्रभृतयः ; समुद्रवाचकाः शब्दाः पुंसि, तद्भेदाः क्षीरोद लवणोद प्रभृतयः नक्षत्रवाचकाः शब्दाः तत्र नक्षोऽस्त्रीत्यादिना नक्षत्रशब्दस्य नपुंसकत्वमपि

सूचितम्। दन्तवाचकाः शब्दाः केचित् दन्त स्थाने दण्डं पठन्ति। स्तनवाचकशब्दाः, हस्तवाचकशब्दाः तत्र भुजबाहु शब्दौ स्त्रियाञ्च; कण्ठ वाचकशब्दाः तत्र समीपगलभेदेषु कण्ठं त्रिषु विदुर्बुधाः। खड्गवाचकशब्दा स्तद्भेदा नन्दकादयः, वाणवाचकशब्दाः तत्र इषु स्त्रियाञ्च वाण काण्डौ नपुंसके च। पङ्क वाचकाः शब्दाः तत्र पङ्कोऽस्त्रीत्यनेन पङ्कशब्दस्य नपुंसकत्वमपि सूचितम्। आत्मवाचक शब्दाः, यज्ञ वाचकशब्दाः क्रतुः यज्ञः, पुरुष वाचकशब्दाः, कपोल वाचकशब्दाः गण्डः कपोलः, गुल्फार्थकाः, मेघार्थका स्तत्र अभ्रं क्लीवे। केशार्थकाः शब्दाः रश्मिवाचकशब्दाः तत्र दीधितिः स्त्रियाम्; दिवसार्थकाः शब्दाः तत्र दिनाहनी नपुंसके; परिमाणार्थकाः शब्दाः तत्र द्रोणाढ़कौ नपुंसके च खारीमानिके स्त्रियां। (१२) मरुत्, गरुद्दृत्विजः पुंसि। (१३) ऋषि राशि दृति ग्रन्थि क्रिमि ध्वनि वलि कौलि मौलि रसि कपि मुनयः पुंसि। (१४) ध्वज गज मुञ्ज पुञ्ज हस्त कुन्त अन्त वात व्रात दूत धूर्त्त सूत मुहूर्त्त षण्ड, मण्ड, करण्ड तुण्ड पल्लव पल्लव शस्य नितम्ब प्रभृतयोऽदन्ताः पथि मथि ऋभुक्षि सारथि अतिथि कुक्षि वस्ति पाणि अञ्जलि प्रभृतयश्च इदन्ताः पुंसि।

इति पुल्लिङ्गविचारः।

क्लीवलिङ्ग विचारः।

(१) भावे टनप्रत्ययान्तः करणं मरणं भावे क्त प्रत्ययान्तः गतं भुक्तं, आमितं भावेऽदन्तप्रत्ययाः भदितव्यं भाव्यं (२) भावे त्व ष्यञ् तद्धित प्रत्ययान्ताः देवत्वं पुस्त्वं एकत्वं शौक्ल्यं ब्राह्मण्यं कर्मार्थे च ष्यञ्प्रत्ययः चौर्य्यं, राज्यम्। (३) मुखार्थकशब्दाः तत्र वक्त्रं पुंसि च; नयनार्थकशब्दाः नेत्रं पुंसि च। लोह वाचकशब्दाः वनवाचक शब्दाः अरण्यं पुंसिच। अटवीस्त्रियां; मांसार्थक शब्दा रुधिरा-

र्थकशब्दाः, कार्मुकार्थकशब्दाः। गाण्डीवं पुंसि च। विवरार्थकाः, जलार्थकशब्दाः घृतार्थकाः अन्नोकथसोरार्थौदना पुंसि। पुष्पार्थकाः, युद्धार्थकाः, पातालार्थकाः तत्र पद्मकमलोत्पलानि वा पुंसि, आहव संग्रामौ पुंसि आजिः स्त्रियां (४) लोपधाः क्लीवे तत्र तूल उपल ताल कुसुल, तरल कम्बल देवल वृषलाः पुंसि, शील मूल मङ्गल, माल कमल तल मुसल कुण्डल पलल मृणाल वाल निगल पलाल विडाल खिल शूला, पुंसि क्लीवे च। (५) शतादि संख्यावाचकाः क्लीवे-शतायुत प्रयुताः पुंसि च, लक्षा कोटी स्त्रियां सहस्रः पुंसिच। (६) दैवं पुंसि क्लीवेच। वियत् जगत् सकृत् पृषत् शकृत् यकृत् उदश्वित् नवनीत अनृत अमृत निमित्त वित्त पित्त व्रत रजत वृत्त पलित धान्य आज्य वीज सख्य धिष्ण सत्र अपत्य मूल्य कुड्य मद्य कर्मार तूर्य्य मैन्य नितम्ब कवच कवर वृन्दारकेतैरेतानि क्लीवानि।

इति क्लीवलिङ्ग भेद विचारः।

## अर्थभेदेलिङ्गभेद विचारः।

कशब्दः वायुवेधस्सूर्य्यार्थेषु पुंसि शिरोजलार्थयोः क्लीवम्। कारकः पक्षि विशेषे दाड़िमेऽपि पुं मेघोपले पुं स्त्री करकः करकाः कमण्डलौ पुं क्लो करकं करकः। किष्कुः हस्तप्रमाणे वितस्तौच पुं प्रकोष्ठे पुं स्त्री। कोषातकः कचे पुंसि पटोल्यां घोषके स्त्रियाम्। वाह्लीकः अश्वे पुं हिङ्गुल्यां क्ली। जैवातृकः पुमान्-सौम्ये दीर्घायुः कृशयोस्त्रिषु। पुण्डरीकः अग्नौ दिग्गजादौ व्याघ्रे पुं, सिताम्भोजादौ क्ली। अनूकं-कुले शीले, पुंसिस्यादतजन्मनि। वृन्दारकः सुरे पुंसि, मनोज्ञ श्रेष्ठयोस्त्रिषु। कारिका नटयोषिति कृतौ विवरण श्लोके शिल्प यातनयोरपि, नपुंसकं तु कर्मादौ कारकं कर्त्तरि त्रिषु। सारंगः पुंसि हरिणे चातके च मतङ्गजे, शवलेत्रि

र्ष्विति। युग:—रथशकटादीनामवयवे पुंसि, युग्मं कृतादिषु क्लीवे। गौ:—स्वर्गे वृषभे रश्मौ वज्रे शीत करे पूमान् अर्जुनी नेत्र दिग्वाण भू वागादिषु स्त्रियाम्। शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयं त्रके पाषणोत् कर्षयोश्चापि, शृङ्गः स्यात् कूचशीर्षके। शुचिः ग्रीष्माग्नि शृङ्गारेष्वषाढे शुद्ध मन्त्रिणि। ज्येष्ठे च पुंसि, धवले शुद्धे ऽनुपहते त्रिष्विति। कच्छः परिधानाञ्चले पुं, जलप्रान्ते त्रिलिङ्गकः। वलजं गोपुरे चेत्रे, वलजा वल्गुदर्शना। क्षेत्रज्ञः आत्मनि पुंसि, प्रवीणे वाच्यलिङ्गकः। कटः श्रोणौ क्रियाकारे कलिंजेऽतिशये शवे। गलगंडेऽपि पिप्पल्यां कटी। श्रोणौ कटिश्च। कटुः-रसे, अकार्य्ये त्रिषु। क्ष्वेड़ा वंशशलाकायां स्त्री, विषे पुं, वर्णः द्विजादौ शुक्लादौ स्तुतौ, वर्णं तु वाऽक्षरे। अरुणः भास्करे पुं; वर्णभेदे त्रिषु। ग्रामणीः नापिते पुं श्रेष्ठे ग्रामाधिपे त्रिषु। करेणु हस्तिन्यां स्त्री, हस्तिनि पुं। तीक्ष्णं विषाभिमरलोहेषु क्लीं खरेत्रिषु। करणं करणे काये साधनेन्द्रियकर्मसु (क्ली), कायस्थे व्रतवंधेच नाट्य गीत प्रभेदयोः शूद्राविशोः पुत्रे वानरादौ च पुं। प्रवणं क्रमनिम्नोर्व्यां प्रह्वे क्ली, चतुष्पथे पुं। वार्त्तं आमारे क्ली, अरोगेत्रिषु, वृत्तं पद्ये चरित्रे च क्ली अतीते वर्त्तुलाकारेत्रिषु। अनन्तः—केशवे शेषे पुमान्; अनवधौ त्रिषु। अभिजातः कुलीने पुं; न्याय्य पण्डितयोस्त्रिषु। शितिः निशिते भुजे पुं, सितासितयोस्त्रिषु। सिन्धुः—देशभेदे समुद्रे हस्तिभेदे च पुंनदी, सामान्ये स्त्री। मधु मद्ये पुष्परसे क्षौद्रेऽपि (क्ली), दैत्यचैत्रवसन्तेषु द्रुभेदे च पुमान् मधुः। अन्धः तिमिरे (क्ली), चक्षुर्हीने अभिधेयवत्। ब्रह्म वेदे परब्रह्मणि च (क्ली); विप्रवेधसोः पुं। वलिः करोपहारयोः पुंसि, प्राण्यङ्गजे स्त्रियाम्। ध्रुवः नक्षत्रभेदे क्ली; निश्चिते शाश्वते त्रिषु। स्वः आत्मा वात्मनि, स्वं त्रिषु आत्मीये स्वोऽस्त्रियां धने। कीनाशः यमे पुं, क्षुद्र कर्षकयोस्त्रिषु। एवमन्यान्यपि ज्ञेयानि।

## लिङ्गपरिणामप्रकरणम् ।

लिङ्गभेदे शब्दानां प्रत्ययविशेषवशात् यादृक् परिणतीरूप-भेदोवा भवति प्रकरणेऽस्मिन् तस्यैव विचार: क्रियते। तत्र तावत् वाहुल्यात् प्रथमत स्त्रीरूपसाधनयोग्याः प्रत्ययाः कथ्यन्ते। स्त्रीप्रत्ययाश्चत्वारः आप्, ङी, ऊङ्, यापश्चेति। क्रमशस्तेषां सूत्रेषु: १। स्त्रियां वर्त्तमानात् अदन्तात् क्रुञ्चादेश्च आप् भवति (पा ४।१।४), (सुप ५।२।५), पाणिनीये क्रुञ्चादि स्थाने अजा-दिरिति पाठः। अदन्ता कन्या, खट्टा माला रामा, देवदत्ता, वामा, क्रुञ्चादयां क्रुञ्चा अजा, एड़का, कोकिला, पाणिनीये अजादिराकृतिगणो यथा अज, एड़क, कोकिल, चटक, मूषिक, अश्व, वाल, होड़ प्राक्रान्त, वत्स, मन्द, विलात, पूर्व्वापहाण, अपरापहाण, क्रुञ्च्, उष्णिह, देवविश्, ज्येष्ठ, कनिष्ठ, मध्यम इत्यादयः। आप् प्रत्ययस्य फल सुलोपादि। आदन्तात् शब्दात् न आप, यथा संख्या:, शुभयाः। अतेदं तत्त्वमपि वोध्यम् शब्दानां स्त्रीत्वविवक्षायां सुवुत्पत्तेः प्रागेव आवादयः स्त्रीप्रत्यया: भवन्ति। तदादेस्तु, सर्व्वनाम्नः, सुवुतपत्तेः पश्चात् टेरत्वे अदन्तत्वादाप् स्यात्, सा, या, का इत्यादि। अपिच यदातु अजादेरदन्तस्य च स्वरूपतः, स्त्रीत्वविवक्षा तदैव आप् भवति समाहारद्वन्द्वादिनिवन्धनस्त्रीत्वा त्तु न आप्, यथा पञ्चाजी, पञ्चखट्टी इत्यादि।

(२) सम, भस्त्र अजिन शण पिण्डेभ्यः उत्तरस्मात् फल शब्दात् स्त्रियां आप् स्यात्। सस्फला, भस्त्रफला, * समादेरन्यत्र तु फल-शब्दात् ङी भवति (सुप ५।२।४१) दाड़िमफली।

* भस्त्रं व फलानि यस्याः सा भस्त्रफला औषधि। आपीरिति भस्त्राया आकारी हस्व।

(३) सत्, क्षतनकारलोपश्चिवन्ताच्च, काण्ड, प्रान्त, शतैकेभ्य उत्तरस्मात् पुष्यशब्दात् स्त्रियां आप् स्यात्। सत्पुष्या, प्राक्पुष्या एभ्य अन्यत्र तु ङीःस्यात् (सुप-५।२।४०) शङ्कुपुष्पी।

(४) जातिवाचकात्, अमहत्पूर्व्वात् शूद्रशब्दादाप् शूद्रा, महत्पूर्व्वात्तु ङी: महाशूद्री आभिरी, पुंयोगेतु शूद्रस्य भार्य्या शूद्री पुंयोगश्च न केवलं दाम्पत्यरूप एव किन्तु जन्यजनकभावेऽपि वश्याशूद्रोस्तु राजन्यात् माहिकोग्रौ सूतौ स्मृतौ।

(५) वैश्यशब्दात् जातिवाचकात् स्त्रियां वर्त्तमानात् आप्, वैश्या, योपधशब्देभ्यश्च क्षत्रिया, आर्य्या, योपधेषु पुनर्हय, गवय, मुकय, मनुष्य, ऋष्य, मत्स्य शब्देभ्यो ङी: स्यात् हयो, गवयी, मुकरी, मानुषी, मत्सी।

(६) ऋचि (ऋगर्थे) वर्त्तमानायां पादान्तात् आप्, द्विपदा ऋक्, त्रिपदा गायत्री, एकपदा। अकारान्तपदशब्देन विग्रहेऽपि ऋचि वाच्यायां द्विपदीत्यादि निवारणाय सूत्रे ऋचीति गृहीतम्।

(७) मनन्तात्, अन्न्ताबहुव्रीहेश्च विकल्पेनाप् स्यात्, सीमा सीमे, सीमा, सीमानौ, बहुयज्वा बहुयज्वे; बहुयज्वा, बहुयज्वानौ न पुंसि दामेत्यमरः। तत्पुरुषे च अतिपठिमा अतिपठिमानौ।

(८) आपि परे स्वार्थे विहितात् प्रत्ययककारात् पूर्व्वस्य अकारस्य इकारो भवति (पा ७।३।४४) (सु ४।४।८२) सर्व्विका प्रकारार्थे, सतिका, जटिलिका इत्यादि अत: किम्? नौका, प्रत्ययस्यादिति-किम्? शक्नोतीति शका स्वार्थविहितादित्यनेन अन्यार्थे (बहुव्रीहौ) विहितात् कात् न। बहुपरिव्राजका नगरी, पाणिनीयेतु सुबन्तात् विहितेतु आपि न भवति, नाकारात् राका, कात्किम्? नन्दना। आपि किम्? कारक:। १

(९) मामकनरकयोरपि, मामिका, नरिका। त्यक्त्यपोश्च दाक्षिणात्यिका, अमात्यिका, इहत्यिका।

(१०) यत्तदोरकारस्य इत् न स्यात् यका, सका, यकां सकाम्। त्यकनश्च निषेध अधित्यका, उपत्यका, आशिषि निषेधः, जीवका, भवका। देवदत्तिकेति कौमुदी, देवदत्तकेति पद्मनाभ ; दत्तभाग लोपे तु देवका, क्षिपकादेर्निषेधः क्षिपका, ध्रुवका, कन्यका, चटका (१) तारका ज्योतिषि, अन्यत्र तारिका, वर्णका तान्तवे अन्यत्रवर्णिका, वर्त्तका शकुनौ प्राचाम्, उदीचान्तु वर्त्तिका। अष्टका पितृदैवते अष्टिकान्या, सूतिकादीनाञ्च सूतका सूतिका, सत्पुत्रका, वृन्दारिका, वृन्दारका।

(११) यकार, ककार पूर्व्वस्यापः इद्वा स्यात् (सुप, ४।४।८३), (पा ७।३।४६) आर्य्यका, आर्य्यिका, इभ्यका इभ्यिका, चटकयिका ; चटकका, चटकिका। आप इति कथनेन स्त्रीत्वबोधकस्यैवाप इति बोध्यम् तेन सांकाश्यिकेत्यत्र न विकल्पः, तत्राकारस्य प्रत्ययावयवत्वेन न स्त्रीत्वबोधकत्वम्, एवं शुभं यातीति शुभं या, अज्ञाता शुभंया शुभंयिका, शकृच्छकायतेः क्विप् शकृच्छका, ततः कः शकशकिका इत्यादौ नित्यम् धात्वन्तयकोस्तु नित्यमिति कौमुदी सुनयिका, सुपाकिका सुष्ठु पाको यस्याः इति विग्रहः।

(१२) अनञ् पूर्व्वयोः त्यैषयोः (त्या, एषा) कात्पूर्व्वस्यापइद्वा स्यात्। (सु ४।४।८३वार्त्तिकम्) त्यका त्यिका, एषका, (२) एषिका ;

(१) क्षिपका ध्रुवका चरका सेवका चटका अवका लहका अलका कन्यका ध्रुवका एड़का। आकृतिगणः।

(२) एषेति ङतपत्वमिह् आर्ते च विकल्पः एतिकाः, एतिके।

नञ् पूर्व्वयोस्तु नित्यम् अस्विका, अनेषिका ; भस्त्रा, अजा, ज्ञा, द्वा स्वानाम् नञ् पूर्व्वाणामपि आपद्द्वा (पा· १।३।४७), (सू४।४। ८४ वार्त्तिकम्) उपसर्ज्जनी भूतस्यैव भस्त्रा शब्दस्यात्र ग्रहणम् निर्भस्त्रिका ; उपसर्ज्जनी भूतस्य तु सूत्रान्तरेणैव सिद्धम्। सिद्धान्तकौमुदीमते एषा, द्वा, एतयोस्तु उत्तरपदयोर्न त्वम्। अनेषका, परमैषका, अद्वके, परमद्वके ; अज्ञाता एषा एषका न एषका इत्येव विग्रहः, नतु अज्ञाता अनेषेति तथासति अनेतकादित्येव। इति सिद्धान्तकौमुदीटीका। स्व शब्दस्याप्युपसर्ज्जनस्यापि ग्रहणमत्र। अनुपसर्ज्जनं स्वशब्दस्तु आत्मीय वाची अकर्त्तः, अकि क्षतेचाकारस्य अकारस्यानिकत्वाभावान्नैतत्सूत्रप्रवृत्ति रित्यर्थः ततश्चात्मीयायां स्विका परमस्विकेति नित्यमेवेत्त्वम्। उपसर्ज्जनस्थले तु निःस्विका, निःस्वका इति। अजका, अजिका, ज्ञका, ज्ञिका द्विके, द्वके।

(१३) नित्यस्त्रीणामापत्र विकल्पे नेत्। (सु।४।४।८४), (पा-७। ३।४८) मालका, मालिका ; गङ्गिका, गङ्गका ; खट्टका, खट्टिका ; बहुव्रीहेर्भाषितपुंस्कत्वात्ततोविहितस्य नित्यम् अविद्यमाना खट्टा यस्या इति विग्रहे शेषाद्विभाषेति पाक्षिक कपोऽभावे उपसर्ज्जनह्रस्वे अखट्टशब्दादपि अज्ञातादौ अज्ञाता अखट्टा अखट्टिका शेपिके कपि तु विकल्पएव। केचित्तु विकल्पेनापि भवतीत्याहुः गङ्गाका,अन्यत्र नित्यम् शुभ्रिका।

(१४) ऋदन्तेभ्योनान्तेभ्यो अञ्चेः, उगिदन्ताच्च प्रातिपदिकात् स्त्रियां ङीःस्यात्। तत्र मनन्तात् मात्रादेः पञ्चादेश्च न। (सु ५।२।२) (पा-४।१।५।४। १।६।४।१।१०) कर्त्री भवती, बहुगुणवती, भवन्ती पचन्ती, दण्डिनी, अञ्चिग्रहणाद्धातोर्य दुगितकार्य्यं तदञ्चतेरेवेति नियम्यते तेनेह न उखास्रदियं, पर्णध्वत् ; अञ्चतेस्तु प्राची, प्रतीची, अमनन्तात् पामा, सीमा, मात्रादिश्च स्वसा

तिस्रश्चतस्रश्च ननन्दा, दुहिता, तथा याता, मातेति स्वसृ। पञ्चादेः पञ्च, सप्त, नव स्त्रियः। नान्तसंख्यान्तादपि न ङी प्रियपञ्चानो वेश्याः।

(१५) वन्नन्तात् तदन्ताच्च प्रातिपदिकात् स्त्रियां ङी रश्चान्तादेशः। (सु ५। २। ३), (पा-४।१।७) वन्निति क्वनिप् वनिपाम् सामान्य ग्रहणम्। धीवरी, बहुदृश्वरी, सुत्वरी, सुत्वानमतिक्रान्ता अतिसुत्वरी अतिधीवरी। हश्यन्ताद्धातोर्विहितो योवन् तदन्तात् तदन्तान्ताच्च प्रातिपदिकात् ङीः, रश्च स्यात् ओवृ वनिप् अवावा ब्राह्मणी, राजयुध्वा, सहयुध्वा। वनन्ताद्बहुव्रीहौ ङीरौ वाच्यताम् बहुधीवरी, बहुधीवरा।

(१६) ऋगर्थभिन्नात् पादान्तात् ङीर्वा स्यात् द्विपदी द्विपात्। अनृचीतिकिम् द्विपदा ऋक्।

(१७) बहुव्रीहौ ऊधसन्तात् स्त्रियां ङीःस्यात् सोनश्च (सु-५।२। ६), (पा-५।४।१३१,४।१।२५) कुण्डोध्नी, घटोध्नी, चतुरध्नी, द्व्यूध्नी, अन्यूध्नी, स्त्रियां किम् कुण्डोधोधेनुकम्। बहुव्रीहेरित्येव ऊधोऽतिक्रान्ता अतूधाः।

(१८) संख्यादेर्दाम्नः, वयसि हायनाच्च बहुव्रीहौ ङीःस्यात् (सु५।२।७), (पा-४।१।२७)। द्विदाम्नी, संख्यादेरन्यत्र तु उद्दामा वडवा, द्विहायनी बाला वयसोऽन्यत्र द्विहायना, त्रिहायना, चतुर्हायना शाला णत्वमपि न।

(१९) उपधालोपिनोऽनन्तात् ङीर्वा स्यात् अन्यस्मात्तु नैव (सु-५। २।८) बहुतक्ष्णी, बहुतक्षा, सुधाम्नी, सुधामा, उपान्तलोपिनोऽन्यस्मात्तु सुपर्व्वाणः, सुशर्म्माणः स्त्रियः। नित्यं संज्ञायां सुराज्ञीनाम ग्रामः वा बहुव्रीहौ नियमात् अतिपर्वणी क्रिया।

(२०) टितोऽणन्तात् गौरादेश्च स्वार्थे ङीःस्यात् (सुप-५।२।९ (पा ४।१।४१) टित् कुरुचरी, गायनी, वैनतेयी ; अण-कुम्भकारी

औपगवी ; गौरादिः गौरी कुमारी, तरुणी गौरादिः यथा गौर, मत्स्य, मनुष्य, शृङ्ग, पिङ्गल, हय, गवय, मुकय, ऋष्य, पुट, तूण, द्रुण, द्रोण, हरिण, काकण, पटर, उणक, आमलक, कुवल, विम्ब, वदर, कर्कर, तर्कार, शर्कार, पुष्कर, शिखण्ड, सलद, शष्कण्ड, सनन्द सुषम, सुषव, अलिन्द, गडुल, षाण्डश, आढ़क आनन्द, आश्वत्थ, सृपाट, आपच्चिक, शष्कुल, सूर्म्म, शूर्प, सूच, यूष, यूथ, सूप मेथ, वल्लक, धातक, सल्लक, मालक मानत सालुक वेतस, वृष, अतस उभय भृङ्ग मह मठ छेद पेश मेद श्वन् तचन् अनडुह अनड्वाह एषण देह देहल काकादन गवादन येजन रजन लवण औद्गाह-मानि गोतम पारक अयस्थूण भौरिकि भौलिकि भौलिङ्गि यान मेध आलम्बि आलजि आलब्धि आलच्चि केवाल आपक आरट नट टोट नोट मूलाट शातन पोतन पातन पानठ आस्तरण अधि-करण अधिकार आग्रहायणी प्रत्यवरोहिन् सेचन सुमङ्गलात् संज्ञायां अन्तर सुन्दर मन्दर मन्थर मङ्गल पट पिण्ड षण्ड उर्द गुर्द शम सूद आर्द ह्रद पाण्ड भाण्ड लोहाण्ड कदर कन्दर कदल तरुण तलुन कलाष वृहत् महत् सोम सौधर्म्म रोहिणी (नक्षत्रे) रेवती (नक्षत्रे) विकल निष्कल पुष्कल कटा (श्रोणि वचने) ; पिप्पल्यादयश्च गौरादिषु पिप्पली हरितकी कोशातकी शमी वरी, शरी, पृथिवी, क्रोष्टी, मातामही, पितामही। घट किशोर नद मखि वर्षाभू चाण्डाल पिप्पाल प्रभृतयश्चान्येपि प्रयोगतोज्ञेयाः।

(२१) कुण्डी पात्रे कुण्डी अमत्रश्चेदिति सिद्धान्तकौमुदी कुण्डाऽन्या कुण्डिदाहे गुरोश्च हलः इत्यप्रत्ययः; यस्तु अद्यते जारजः कुण्ड इति मनुष्यजातिवचनस्ततो जातिलक्षणो ङीभंवत्येव अम-त्रे हि स्त्रीविषयत्वाभावादप्राप्तो ङीर्विधीयते नतु निरस्यत इति सिद्धान्तकौमुदी। गोणी आवपने आवप्यते धान्यमास्मिन

धान्यस्थापनपात्रम् गोणान्या स्थली अकृत्रिमाभूश्चेत् स्थलाऽन्या। भाजी पक्कायां भाजाऽन्या नागी स्थूला चेत् नागाऽन्या गजवाची नागशब्दः स्थौल्यगुणयोगादन्यत्र प्रयुक्तः प्रत्युदाहरणम् सर्पवाचीतु दैर्घ्यगुणयोगादन्यत्र प्रत्युदाहरणम्। इति सिद्धान्तकौमुदी जातौ नाग्येव इति पद्मनाभः। काली कृष्णायां कालाऽन्या नीली अनाच्छादनश्चेत नीलाऽन्या। नील्या रक्ताशाटीत्यर्थः नील्या अन् वक्तव्य इत्यन् अवाच्छादनेऽपि न सर्व्वत्र किन्तु नीलादोषधौ नीली। प्राणिनिच। नीली गौः। संज्ञायां वानीली नीला। कुशी लौह विकारे कुशान्या कामुकीमैथुनेच्छायां। कामुका अन्यत्र। कवरी केशविशे कवराऽन्या चित्रेत्यर्थः। जानपदी वृत्तिः अन्यातु जानपदा।

(२२) केवल मामक भागधेय पापाऽपर समानार्य्यकृत सुमङ्गल भेषजाः एभ्यो नवभ्यो नित्यं ङीःस्यात् संज्ञायाम् (मु ५।२।१०) केवली नामज्योतिषम् मामकी देवता समानी छन्दः आर्य्यकृती सुमङ्गली भेषजी अन्यत्र केवली मामक ग्रहणन्नियमार्थं असंज्ञायां मामिका। पृथिवी भूमौनाऽन्यत्र। पाण्डुर सुन्दरयो र्मनुष्यजातौ अन्यत्र पाण्डुरा भूमिः सुन्दरा प्रतिमा। स्वार्थ इति किम्? वहुकुरुचरा नगरी वहुकुम्भकारा।

(२३) टकारेत् ढ अण् अञ्द्वयसज्-दघ्नञ मात्रट तयप् ठक् ठञ् कञ क्वरप् एतत् प्रत्ययान्तं यददन्तं प्रातिपदिकन्ततः स्त्रियां ङीःस्यात्। कुरुचरी। उपासर्ज्जनत्वान्नेह वहुकुरुचरा (पा ४।१।१५) (सु।५।२।११) वच+लृट+शानच् स्त्री (ङो) वक्ष्यमाणा इत्यत्र लृटः टित्वा दुमित्त्वाच्च ङीः प्राप्तः इत्याशङ्क्याह सिद्धान्तकौमुदी लाश्रयमनुवन्धकार्य्यं लादेशानामिति ज्ञापनाय भवतीति। अस्यार्थः आशीर्लिङः स्थाने यासुट् भवति तस्य च परस्मैपदेषूदात्तोङिच्चेति ङित्वं विहितम् एतद्धि ङित्वाविधानं ज्ञापयति लाश्रयं लट् लृट्

इत्यादि दशलकारस्थितं यदनुबन्धकार्य्यं टित्व ङित्वादि तत्। (अनुबन्धकार्य्यं) आदेशानां लकारादेशानां तिबादीनां न भवति अन्यथा यासुट: पुनर्ङीत्वविधानं निरर्थकं स्यात् सौपर्णेयी ऐन्द्री औत्सी ऊरुद्वयसी ऊरुदघ्नी ऊरुमात्री पञ्चतयी आक्षिकी लावणिकी यादृशी इत्वरी ताच्छीलिकेणेऽपि चौरी।

(२४) नञ् स्नञ् इकक् ख्युन् प्रत्ययान्ततरुण तलुनशब्दानामपि ङी: (वार्त्तिकम्) स्त्रैणी पौंस्नी शाक्तीकी आढ्यङ्करणी तरुणी तलुनी।

(२५) गर्गादे: ङी टे: आयनश्च (सु ५।२।१३) (पा ३।१।२।४।१४२) गार्गी गार्गायनी, वात्सी वात्स्यायनी वाहुल्याम्नितं लौहितयादे: लौहित्यायनी सांशित्यायनी कात्यायनी शाकल्यायनी माध्यायनी लोहित शंसित वभ्रु, वल्गु मण्ड, गण्डु शङ्कु निगु गुहलु मन्तु मङ्क, अलिगु जिगीषु मनु तन्तु मनायी सुनु कथक कन्यक वृक्ष ऋक्ष तनु तरुक्ष तण्ड वतण्ड कपि कत कुरु कात कौरव्यायनी माण्डूकायनी आसुरेरूप संख्यानं आसुरायनी तस्येदमित्यणन्तात् कौरवीसेना माण्डूकी भार्य्या।

(२६) अदन्तात् द्विगोर्ङीप् स्यात्। (सु-५।२।१५) (पा ४।१।२१) त्रिशती त्रिलोकी त्रिखली अजादित्वात् त्रिफला त्र्यनीका इत्यादौ नङी।

(२७) अपरिमाणान्तात् विस्ताचित कम्बलान्ताच्च द्विगोर्ङीप् न स्यात् तद्धितलुकि परिपामाणान्तात्तु, स्यादेव। (सु-५।२।१६) (पा ४।१।२२) पञ्चभि रश्वै: क्रीता पञ्चाश्वा ठक्लुक् द्वौविस्तौ पचतीति द्विविस्ता द्वाचिता द्विकम्बला परिमाणात्तु, द्वाढ़की द्विप्रस्थी तद्धितलुकीति किम्? पञ्चाश्वी समाहारे संख्यादेरपि ङीनं त्रिशता।

(२८) क्षेत्रे य: काण्डान्तोद्विगुस्ततोनङी: तद्धित लुकि अक्षेत्रेतु

भवतेरव (सु-५।२।१७) (पा-४।१।२३)। द्वेकाण्डे परिमाणमस्याः द्विकाण्डा क्षेत्रभक्तिः अत्र द्वयमच्प्रत्ययस्यलुक् अक्षेत्रे तु द्विकाण्डीरज्जुः।

(२८) प्रमाणे यः पुरुषस्तदन्ताद्विगोर्ङी वा स्यात् तद्धितलुकि (सु-५।२।१८) (पा-४।१।२४)। द्वौ पुरुषौ प्रमाणमस्याः द्विपुरुषी द्विपुरुषा वा परिखा।

(३०) अन्तर्वत्नी गर्भिण्याम् पतिवत्नी भार्य्यायाम् उभयत्र मत्वन्तात् निपातनम्। (सि-५।२।१९-२०) (पा-४।१।३२)। भार्य्याया अन्यत्र पतिमती पृथिवी।

(३१) पत्युर्ङीः स्यात इकारस्य च नकारः ऊढायां भार्य्यायां। ऊढा भार्य्या चेत् पत्नी नान्यत्र।

(३२) पतिशब्दान्तस्य सपूर्व्वस्य प्रातिपदिकस्य ङीर्वा स्यात्। सुपद्मकारेण तु अन्यपदार्थे च स्त्रियामेतद्विहितम् नान्यत्र। (पा-४।१।३४) (सु-५।२।२१) गृहस्य पतिः गृहपतिः गृहपत्नी सुपद्ममते गृहपतिरेव। बहुव्रीहौ तु वृद्धपतिः वृद्धपत्नी; दृढ़पतिः दृढ़पत्नी वृषलपत्नी वृषलपतिः। अथ वृषलस्य पत्नीतिव्यस्ते कथमितिचेत् पत्नीत्युपचारात् अथवा आचारविवक्षात् कर्त्तरि क्विप् अस्मिंस्तु पक्षे पत्नियौ पत्नियः इतीयङ् विषये गवाम्पतिः

(३३) नित्यं सपत्न्यादिषु। (पा-४।१।३५) (सु-५।२।२१) समानस्य सभावोऽपि निपात्यते इति सिद्धान्त कौमुदी। सपत्नी, एकपत्नी, वीरपत्नी समान एक वीर पिण्ड भ्रातृपुत्रादिः।

(३४) शोणादेर्ङीर्वास्यात् स्वार्थे -(सु-५।२।२२) पाणिनिना तु केवलात् शोणशब्दात् ङीर्विहितः (४।१।४३) शोणी शोणा चण्डी चण्डा उपाध्याया शोण चण्ड उपाध्याय प्रवल विशाल विशङ्कट विकाट कृपण पुराण कल्याण साधारण उदार। उपाध्यायस्य

पत्नीतार्थेतु उपाध्यायानो उपाध्यायीति यातु स्वयमेवाध्यापिका तत्र वा ङीर्वाच्यः उपाध्यायी उपाध्याया इति सिद्धान्तकौमुदी।

(२५) ... त एत हरित लोहित शब्देभ्यः स्वार्थे ङीर्वास्यात् तानश्च। (सु-५।२।२३)। पाणिनिना तु अनुदात्तात् तोपधात् वर्णवाचिनः शब्दादेवैतद्विधानं कृतम् (पा ४।१।११) श्वेनी श्वेता एनी एता ; लोहिनी लोहिता ; असित पलितयोर्न। इति वार्त्तिकम् असिता पलिता ; छन्दसि क्नमेके असिक्नी पलिक्नी। पिशङ्गा दुपसंख्यानम् पिशङ्गी पिसङ्गा। योपधनिषेधात्तु ङीप-कल्माषी सारङ्गी अनुदात्तात्तु आप् एव कृष्णा कपिला।

(२६) क्तिनार्थ-भिन्नात् इवर्णान्तात् ङीर्वास्यात्। (सु ५।२।२४) ...कम्) रात्री रात्रिः ; धूली धूलिः भूमी भूमि ; आली ... गुवती, युवतिः पद्धती पद्धतिः ; शस्त्री शक्ती शक्तिः वस्ती ..., ...र्वं स्वार्थे लक्ष्मीर्यमितरापि दुर्घटरचितः। अक्तिनर्था ...किम् ? गतिः भक्तिः हानिः अकरणिः मांकारि मकार्षीः स्त्रियामितिकिम् ? अतिथिः।

(२७) उदन्ताद्गुणवाचिनो वा ङीःस्यात् (सु-५।२।२५) (पा ४। १।४४)। मृद्वी मृदुः; गुर्वी गुरुः तन्वी तनुः; खरु संयोगोपधात्र भवति खरुः पतिम्बरा कन्या कद्रुः पाण्डुः। उत् इतिकिम् ? शुचिः गुणेतिकिम् ? आखुः : बह्वादिभ्यश्चेति पाणिनि सूत्रम् (४।१।४५) सुपद्मे एतत्सूत्रं नास्ति। बह्वी बहु अञ्चलि अङ्गुलि अंहति शकटि शक्ति (शस्त्री) शारि वारि राति राधि शाधि अंहि कपि यष्टि मुनि चण्ड अराल कृपण कमल विकट विशाल विशङ्कट भरुज ध्वज ; चन्द्रभागा (नद्याम्) कल्याण उदार पुराण अहन् क्रोड़ नख खुर शिखा वाल शफ गुद भग गल राग। सखिशब्दस्य स्त्रियां सखी अशिशुशब्दात् अशिश्वीति (पा ४।१।६२) अशिश्वी शिशुना विनेतासमः।

(३८) पुंयोगात् स्त्रियां वर्त्तमानात् पुंनाम्नो नितरं ङीःस्यात्। सूर्य्यादेस्तु न स्यात्। (मु-५।२।२६) (पा-४।१।४८) गणकस्य भार्य्या-गणकी शूद्री वैदी क्षत्रियी प्रष्ठी गोपी पालकान्तान्न गोपालिका अश्वपालिका ; सूर्य्यस्य स्त्री देवता सूर्य्या देवताभिन्नायान्तु सूरी कुन्ती मानुषीयम् सूर्य्यायाः सूर्य्य पालिक ज्येष्ठ कनिष्ठ मध्यमा ; ईश्वरी इति औणादिको वरट्।

(३९) अग्नि वृषा कपि. पृतक्रतु कुसित कुसीदेभ्यः ङी टैरा-यश्च। अग्नायी वृषाकपायी, पृतक्रतायी, कुसितायी, कुसीदायी ; मनोः स्त्रियां ङी वीस्यात् टैरायः आवत्त मनायी मनावी मनुः।

(४) इन्द्र वरुण भव शर्व्व रुद्र मृड हिमारण्य यव यवन मातु-लाचार्य्य ब्रह्म योपधेभ्योङीः टैरनादेशश्च। इन्द्राणी वरुणानी भवानी हिमारण्ययोर्महत्त्वे महद्धिमं हिमानी महारण्यं अरण्यानी दुष्टोयवोयवानी यवनाल्लिप्यां यवनानां लिपि, यवनानी मातुलोपाध्यायाभ्यां पुंयोगे टैरान वा स्यात ङीर्नित्यमेव मातुलानी मातुली उपाध्यायानी उपाध्यायी। अर्य्याणी अर्य्या क्षत्रियानी क्षत्रिया पुंयोगात्तु अर्य्यी क्षत्रियी। क्रीतात् स्त्रियां ङीःस्यात् करणपूर्व्वश्चेत् (मु ५।२।३०) (पा-४।१।५०) धनक्रीती स्वक्रीती क्तान्तात् स्त्रियां ङीःस्यात् अल्पत्वे द्योत्ये (मु ५।२।३१) (पा ४।१।५१) अभ्रलिप्ती अल्पाभ्रा अक्षरलिप्ती जिह्वा अल्पाक्षरा। अल्पा ख्यायां किम् चन्दनलिप्ताङ्गना। स्वाङ्गपूर्व्वात् क्तान्तात् बहुव्रीहौ स्त्रियां ङीःस्यात् (मु ५।२।३२) (पा ४।१।५२)। ऊरुभिन्नी केशविशुभ्री कर्णछिन्नी नेत्र बद्धलता। जातान्तान्न दन्तजाता। पाणि गृहीती भार्य्यायां। पाणिगृहीताऽन्या। जातिशब्दपूर्व्वात् क्तान्तात् बहुव्रीहौ ङीर्वास्यात् (मु ५।२।६) (पा-वार्त्तिकम्) पलाण्डुभक्षिती पलांडुभक्षिता सुरापीती सुरापीता, अनाच्छादनादितिकिम् ? वृक्षाच्छन्ना. अजातादेरित्येव वृक्षजाता।

(४१) असंयोगपूर्व्वादप्रधानात् स्वाङ्गवाचकप्रातिपदिकाद्वा ङी: स्यात् (सु ५।२।३४) (पा ४।१।५) दीर्घकेशी दीर्घकेशा अतिकेशी, अतिकेशा, चन्द्रमुखी चन्द्रमुखा, संयोगोपधात्तु सुगुल्फा। नख-मुखादसंज्ञायां- सुनखी सुनखा, सुमुखी, सुमुखा, असंज्ञायामिति किम् शूर्पणखा, कालमुखा। क्रोडादेर्निषेध:—सुक्रोड़ा, अनुगला- क्रोड़ गल, भग, खुर, वाल, गुद, शफ, शिखा, सहनञ्विद्यमान पूर्व्वाच्च न भवति सकेशा, अकेशा विद्यमानकेशा; बह्वच्युक्तानामपि न पृथुजघना। स्वाङ्गञ्च—अद्रव्यम्मूर्त्तिमत् स्वाङ्गं प्राणिस्थमविकारजं अतत्स्थन्तत्रदृष्टञ्च तेन चेत् तत् तथायुतम्। सुखेदा—द्रव्यत्वात्; सुज्ञाना अमूर्त्तत्वात्, सुमुखा शाला अप्राणिस्थत्वात्, सुशोफा विकारजत्वात् अतत्स्थं तत्रदृष्टञ्च सुकेशी, सुकेशा रथ्या अप्राणिनि दृष्टत्वात् तेन चेत्तत्तथा युतम् सुस्तनी सुस्तना वा प्रातिमा प्राणिवत् प्राणि सदृशे स्थितत्वात्।

(४२) नासिका, उदर, ओष्ठ, जङ्घ, दन्त, कर्ण शृङ्ग शब्देभ्यश्च वा ङी:। (सु ५।२।३५) (पा ४।१।५५) तुङ्गनासिकी तुङ्गनासिका, तनूदरी, तनूदरा, बिम्बौष्ठी बिम्बौष्ठा, समदन्ती, समदन्ता चारुकर्णी, चारुकर्णा। अङ्ग गात्र कण्ठेभ्योऽपि स्वङ्गी स्वङ्गा, सुगात्री सुगात्रा सुकण्ठी सुकण्ठा। पुच्छाच्च सुपुच्छी सुपुच्छा। पक्षपुच्छाभ्यां चोपमानादे: उलूकपक्षी काकपुच्छी। दिक्पूर्व्वपदात् स्वाङ्गात् ङी: (पा ४।१।५८) प्राङ्मुखी।

(४३) जाति वाचि यत्र स्त्रियां नियतं अयोपधञ्च तत्र ङी: स्यात् (सु ५।२।३६) (पा ४।१।६०) कुक्कुटी, विहङ्गी, मृगी, दूती, हंसनी) वृषली, नटी, कटी, तटी जातिश्च आकृति ग्रहणाजाति: लिङ्गानाञ्च न सर्व्वभाक्। सकृदाख्यातनिर्ग्राह्या गोत्रञ्च चरणै: सह। अस्यार्थ: ग्रहणमिति करणे ल्युट् सामान्यत्वात् नपुंसकम् आकृति रवयव-सन्निवेश:, ग्रहणं बोधकरणं यस्या: सा अनुगतैकाकाकारव्यक्त्या

जाति रित्यर्थः ईदृशाकारो गौरित्याकारदर्शनादेव तद्बोध इति भावः। लिङ्गानाञ्च न सर्व्वभाक् लिङ्गानां सर्व्वं न भजते, जाति वाचकानां नियतलिङ्गत्वं (पुंस्त्वं स्त्रीत्वं, क्लीवत्वं वा) भवति, नतु त्रिलिङ्गता तथाच शुक्लादिगुणानामनेकत्वे गानुगताकारप्रतीति विषयत्वेऽपि नियतलिङ्गत्वाभावान्न जातित्वम् अत एवं तटं त्रिष्वि-त्युक्तिः प्रमादिकयेव। अवयव संस्थानस्य वृषलादिष्विव ब्राह्मणेन विशेषात् वृषलत्वादिर्जातिर्न स्यादतोलक्षणान्तरमाह सकृदाख्यात निर्ग्राह्या सकृदेकवारं यस्यां कस्याञ्चिद्व्यक्तौ ब्राह्मणोऽयं वृषलोऽय मित्युपदेशेन निश्चयेन ग्राह्या। मुख्य जातिमभिधाय पारिभाषिक जातिमाह गोत्रञ्चेति गोत्रं वंशपरम्परा चरणोवेदशाखा अपत्य प्रत्ययान्तः शाखाध्येतृवाची च शब्दो जाति कार्य्यं लभत इत्यर्थः। जातिकार्य्यं ङीः, पुम्बद्भावादिकम्। औपगवी कवी वह्वृची अस्त्री-विषयादितिकिम्? मक्षिका पिपीलिका वलाका एता नित्य-स्त्रियः।

(४४) अल्पविवक्षायां ङीःस्यात् (सु-५।२।५२) अल्पं छत्रं छत्री, एवं घटी, दण्डी।

(४५) मनुष्यजातिवाचिन इदन्तात् स्त्रियां ङीः स्यात् (सु-५।२। ५३) (पा ४।१।६५)। दाक्षी कुन्ती, अवन्ती; योपधादपि औदमेयी। मनुष्येतिकिम् तित्तिरिः।

(४६) उदन्तान्मनुष्यजातिवाचिनः स्त्रियां ऊङ् स्यात्। (सु ५।२ ५) (पा ४।१।६६) कुरूः, भीरूः, ब्रह्मबन्धूः योपधात्तु न अध्वर्य्युः ब्राह्मणी मनुष्यजातेरितिकिम? धेनुः जातेः किम्? किमभी-रुररार्य्यसे।

(४७) अप्राणिजातेरुदन्तादूङ् स्यात्। (सु ५।२।५। पा वार्त्ति-कम्) अलावूः कर्कन्धूः अप्राणीति किम्? कृकवाकुः, रज्वादेस्तु रज्जुः हनुः।

(४८) वाह्वन्त (वाहु-अन्त) कद्रु कमण्डलुभ्यां संज्ञाया मूङ् स्यात् (सु ५।२।५५) (पा ४।१।६७) भद्रवाहुः कद्रूः, कमण्डलूः, संज्ञायां किम् वृत्तवाहुः।

(४९) उपमान संहित सहित सह शफ लक्षण वाम पूर्व्वस्य ऊरु शब्दादूङ् स्यात्। (सु-५।२।५१) (पा ४।१।६।७०) करभोरूः संहितोरूः हितेन सह सहितौ ऊरू यस्याः सहितोरूः सहेते इति सहौ ऊरू यस्याः सहोरूः।

वामोरूः रम्भोरूरित्यपि भवति पङ्गु शब्दस्य स्त्रियां पङ्गूः श्वशुर शब्दस्यच श्वश्रुरिति निपातनम्।

(५०) युवन् शब्दात् स्त्रियां तिः स्यात् युवतिः।

(५१) गोत्रार्थविहितादिणन्तादणन्ताच्च स्त्रियां याप् स्यात्। कारीषगन्ध्या। क्रौड्यादिभ्यश्च। स्त्रियां याप् स्यात। क्रौड्या क्रोड़ि नाड़ी आपिशलि सौधातकि भौरिकि कापिष्ठलि भोजात् क्षत्रियजातिः भोज्या कुलनाम्नश्च पौलिक्या मौञ्जय्यां। देवयज्ञा-देव्यां, देवयज्ञ्या देवयज्ञी देवयज्ञि मौढिवृद्धि सातायज्ञि काण्डवृद्धिः। अवट शब्दाच्च आवट्या।

## स्त्रीलिङ्गशब्दस्यान्यालिङ्गताया-माकृतिभेदः।

(१) स्त्रीलिङ्ग शब्दस्य (क) बहुव्रीहिसमासेऽन्यलिङ्गता भवति।

(ख) तत्पुरुषे चानञादिभिः समासे।

(ग) इच्छार्थे क्यच ततः क्विपि।

(घ) आचारार्थे क्यङ् ततः क्विपि।

(ङ) आख्यानार्थादौ णिच् ततः क्विपि।

(२) "बहुव्रीहौ तत्पुरुषे वा अन्यलिङ्गत्वे गोशब्दस्य स्त्री-प्रत्ययान्तस्य च प्रातिपदिकस्य ह्रस्वः स्यात्। यथा चित्रा गौर्यस्य स चित्रगुः, कौशाम्ब्या निर्गतः निष्कौशाम्बिः खट्वामतिक्रान्तः अतिखट्वः एतेषाञ्च यथाक्रममिकारान्तोकारान्ताकारान्त पुंलिङ्गवद्रूपाणि क्लीवेऽपि तादृश क्लीवलिङ्गवत्। अत्र स्त्र्यधिकारोक्त प्रत्ययएव ग्राह्यः तेन अतिलक्ष्मीरित्यादौ नास्य प्रवृत्तिः। इति सिद्धान्तकौमुदी। पद्मनाभस्तु ऋकारादेरियसः परस्य च स्त्री-प्रत्ययस्य ह्रस्वो निषिद्धः तेन सुश्रीः सुलक्ष्मीः बहुप्रेयसी राजा इत्यादौ न ह्रस्वः। तत्पुरुषसमासे ईयसोन प्रतिषेधः तेन प्रेयसीमतिक्रान्तः अतिप्रेयसिर्नृप इति पद्मनाभः। कपि न ह्रस्वः– कल्याणपञ्चमीकः पक्षः। समासातिरिक्तस्थले भिन्न लिङ्गतायामपि न ह्रस्वः तेन कुमारीमिच्छति कुमारीवाचरतीति क्यच्, क्यङ वा ततः क्विपि यलोपे कुमारीति शब्दरूपस्य ह्रस्वोन स्यादेवमन्यत्रापि ज्ञेयम्।

# शब्दरूपाणि।

## अजन्त पुंलिङ्ग शब्दानाम्।

### तत्राकारान्त रामशब्दः।

राम+सु इतोलोपः (२।१।१२) सोरुकारलोपः, रामस् इति स्थिते ससोः (१।१।१) स् स्थाने विसर्गः रामः। राम+औ वृद्धिरे-चीति (१।२।४) वृद्धौ रामौ। राम+जस्=राम+अस् इति अकः सवर्णे (१।२।२) दीर्घः रामास्, ततः ससे इति सस्थाने विसर्गः रामाः। राम+अम्=अम्यतेक इति (२।३।१०) एकाकृत्वं, रामम्, राम+औट्, औवत्=रामौ। राम+शस्, राम+ अस् शसि दीर्घः (२।३।३१) शसः अता सह पूर्व्वस्याकारस्य दीर्घः, सकारस्य न् रामान्। राम+टा=राम+आ अतष्टाभिस् इति (२।१।३७) टास्थाने इन, आदिकः (१।२।३) इति गुणे रामेन इति स्थिते रषृभ्य इति (१।४।१) णत्वं रामेण। राम+भ्याम् भ्यामि यि दीर्घ इति (२।३।४०) दीर्घः रामाभ्याम्। राम+भिस् अतष्टेति (२।१।३७) भिस् स्थाने ऐस् राम+ऐस् इति स्थिते वृद्धिरेचीति वृद्धिः सस्थाने: रामैः। राम+ङे अतष्टेति (ङे स्थाने य भ्यामियि इति दीर्घः रामाय। राम+भ्याम पूर्व्ववत् रामाभ्याम्। राम भ्यस एद भ्यसोसामिति (२।१।१८) अकार स्थाने एकारः सस्थाने. रामेभ्यः। राम+ङसि अतष्टेति ङसि स्थाने आत् राम+आत् अकः सवर्णे (१।२।२) इति दीर्घः रामात्) रामा-भ्याम, रामेभ्यः पूर्व्ववत्। राम+ङस् अतष्टेति ङस् स्थाने स्य रामस्य। राम+ओस् अयोसीति (।।२।१८) ओसि परे अकार स्थाने अय्, राम्+अय् ओस इति स्थिते सस्थाने: रामयोः। राम+आम्, आमोनामिति

(२।३।३५) आमस्थाने नाम् नामीति (२।३।३२) दीर्घः रामाणाम्। राम+ङि राम+इ आदिकोगुण इति (१।२।३) गुणः रामे। रामयोः पूर्व्ववत्। राम+सुप् एद्भ्सोसामिति (२।३।१८) अकार स्थाने एकारः रामे+सु ततः इचुकुरोः (१।३।३५) इति षत्वम्, रामेषु। सम्बोधने हे राम+सु एङ्ह्रस्वादिति (२।३।१८) सुलोपः हे राम हे रामौ, हे रामाः एवं सर्व्वे पुल्लिङ्गाकारान्त शब्दाः घट पट, कुन्त, मठ, देवादयः। इदानीं वैशिष्ट्यं दर्शयति। नास्ति जरा यस्य सः निर्ज्जरः, राम शब्द वदस्य रूपं परे अजादौ सुपि वाधि जराया (२।३।६१) इति विकल्पेन जरसादेशः निर्ज्जरसौ, निर्ज्जरसः। निर्ज्जरसं, निर्ज्जरसौ, निर्ज्जरसः। तृतीयैकवचने सिद्धान्तकौमुदीमते निर्ज्जरसा सुपद्ममते निर्ज्जरसिन, अत्र मूलटीका द्रष्टव्या। निर्ज्जरसैरिति केचित्; निर्ज्जरसे, पञ्चम्येकवचने निर्ज्जरस इति सिद्धान्तकौमुदी, निर्ज्जरसादिति सुपद्मादयः मूलटीका द्रष्टव्या। ङसि निर्ज्जरसः, केचित्तु निर्ज्जरस्येत्येकमेव रूपं वदन्ति। निर्ज्जरसोः निर्ज्जराणां निर्ज्जरसाम्। निर्ज्जरसि निर्ज्जरसोः, निर्ज्जरेषु। हे निर्ज्जर हे निर्ज्जरसौ, इत्यादि। एवं अतिजर विजरइत्यादयः।

पाद, दन्त, मास, यूष शब्दानां स्थाने शसादौ विकल्पेन यथाक्रमं पत्, दत्, मास् यूषण् आदेशा भवन्ति। (२।३।३६)। विकल्पपक्षे रामवत्। पादः, पादौ, पादाः, पादं पादौ, पदः, पादान्, पादेन पदा, पादाभ्यां पद्भ्यां पादैः पद्भिः। इत्यादि एवं दन्तः दन्तौ, दन्ताः। दन्तं दन्तौ दतः दन्तान्, दन्तेन दता, दद्भ्यां दन्ताभ्यां दद्भिः दन्तैः। इत्यादि मासः मासौ मासाः, मासं मासौ मासः मासान मासा, मासेन, माभ्याम् मास्भ्याम् सुपतङ्गिते (२।३।३) इति सस्य पदत्वं, रसोः (१।३।१) इति स स्थाने विसर्गः भो भगो (१।३।२०) विसर्गलोपः माभ्याम्) मासाभ्यां माभिः, मासैः। इत्यादि यूषं, यूषौ यूषाः। यूषं यूषौ यूष्णः। यूष+शस् यूषन्

आदेशः यूषन्+अस् इति स्थिते अन अल्लोप (२।३।१२६) इति अकार लोपः, रषृभ्यः (१।४।१) इति नस्य णत्व) पक्षे यूषान्, यूष्णा, यूषेण, यूषभ्याम् (यूष+भ्याम् यूषन् आदेशः, नस्य लोपः (२।३।१०१) नलोपः यूषभ्याम्) यूषाभ्यां यूषभिः यूषैः। यूष्णे, यूषाय, यूषभ्यां यूषाभ्यां यूषभ्यः यूषेभ्यः, यूष्णः यूषात् यूषभ्यां यूषाभ्यां यूषभ्यः यूषेभ्यः। यूष्णः यूषस्य यूष्णोः यूषयोः यूष्णां यूषाणाम्। यूष्णि (यूष+ङि यूषन् आदेशः, ङीश्योर्वा (२।३।१२८) विकल्पेन अकार लोपः रषृभ्यः (१।४।१) इति णत्वं यूषण्+इ=यूष्णि) यूषणि (यूषण्+इ), यूषे, यूष्णोः यूषयोः यूषसु, यूषेषु। द्वयोरङ्गोर्भवः ट प्रत्ययः एकदेश (५।१।८२) इति अहन् शब्दस्य अह्नादेशः द्व्यह्न इति शब्दरूपं तस्य सर्वासु विभक्तिषु राम-शब्दवत् रूपाणि सप्तम्येकवचने तु विसायेत्यादिना (५।१।८३) विभाषया अहन् आदेशोभवति ततश्च ङीश्योर्वेति विकल्पेन अकार लोपे द्व्यह्नि द्व्यहणि द्व्यह्ने इति रूपत्रयं भवति एवं त्र्यह्न, सायाह्न शब्दादीनाम्।

सर्वादयः—

सर्व, विश्व, उभ, उभय, डतर डतम प्रत्ययान्त, अन्य, अन्यतर, इतर, त्वत्, त्व, नेम, सम, सिम, तद्, त्यद् यद्, एतद्, किम, एक। इत्येषां पुंसि जस्, ङे, ङसि, आम्, ङि वर्ज्जं सर्वासु विभक्तिषु अदन्त पुंलिङ्गवद्रूपाणि भवन्ति। जसादीनान्तु (जसः स्थाने इत्) (२।४।१४) ङेः स्मै (२।४।१०), ङसेः स्मात् (२।४।११) आमः साम् (२।४।१३) ङेः स्मिन् (२।।११) (यथाक्रमं इत् प्रभृतयः आदेशा भवन्ति।

सर्वः, सर्वौ, सर्व+जस्, तस्य स्थाने, इत् सर्व+इ, इति स्थिते आदि-कोगुणः (१।२।३) इति गुणः सर्वे)। सर्वं, सर्वौ, सर्वान् सर्वेण, सर्वाभ्याम्, सर्वैः। सर्वस्मै, सर्वाभ्यां, सर्वेभ्यः। सर्वस्मात् सर्वाभ्याम् सर्वेभ्यः। सर्वस्य, सर्वयोः सर्वेषां (सर्व+आम, तस्य स्थाने साम, एद्बहुसोसा-मिति (२।३।१८) अकार स्थाने एकारः, इचकुरोः (१।३।३५) षत्वम्

सर्वेषाम्)। सर्वस्मिन्, सर्वयोः, सर्वेषु। एवं विश्वादीनाम्। उभशब्दस्तु-नित्यद्विवचनान्तः उभौ, उभौ, उभाभ्याम् ३, उभयोः २, उभय शब्दस्य पुनर्द्विवचनं नास्ति। उभयः, उभये। उभयम् उभयान्। उभयेन उभयैः। उभयस्मै, उभयेभ्यः। उभयस्मात्, उभयेभ्यः। उभयस्य उभयेषाम्। उभयस्मिन्, उभयेषु। हरदत्त मते द्विवचन प्रयोगोऽपि भवति। केचित्तु जसि उभये, उभया इत्युदाहरन्ति। नेम शब्दस्य जसः कार्य्यं वा स्यात् (२।४।४) नेमे, नेमाः। शेषं सर्ववत्। तद् त्यद्, यद्, एतद् इत्येषां टि स्थाने (२।४।१७) 'अत्' भवति ततश्च यथाक्रमं त, त्य, य, एत, इति रूपाणि ततः प्रथमैक वचने त, त्य, एत इत्येषां तस्थाने स भवति (२।४।१८)। तद् शब्दस्यः सः तौ, ते। तं, तौ, तान्। तेन, ताभ्यां, तैः। तस्मै, ताभ्यां तेभ्यः। तस्मात्, ताभ्यां, तेभ्यः। तस्य, तयोः, तेषाम्। तस्मिन्, तयोः, तेषु।

त्यद् शब्दस्य—स्यः त्यौ, त्ये। त्यं, त्यौ, त्यान्। त्येन, त्याभ्यां, त्यैः। त्यस्मै त्याभ्यां त्येभ्यः। त्यस्मात्, त्याभ्यां, त्येभ्यः। त्ययोः त्येषाम्। त्यस्मिन्, त्ययोः त्येषु।

यद् शब्दस्य—यः, यौ, ये। यं यौ, यान्। येन इत्यादि 'तद्' शब्दवत्।

एतद् शब्दस्य—एषः, एतौ, एते। एतं एतौ, एतान्। एतेन, एताभ्यां, एतैः। एतस्मै, एताभ्यां, एतेभ्यः। एतस्मात्, एताभ्यां, एतेभ्यः। एतस्य, एतयोः, एतेषाम्। एतस्मिन्, एतयोः एतेषु। द्वितीया टा उस् इत्येतेषु परतः पूर्वोक्तस्यानुकथने 'एतद्' शब्दस्थाने एन इत्यादेशो भवति। एनम्, एनेन। एनयोः। तस् त्र परस्यास्य स्थाने अट्भवति (२।४।२१) अतः, अत्र।

किम् शब्दस्य सुपि 'क' इत्यादेशो भवति। कः कौ, के। कं कौ, कान्। केन, काभ्यां कैः। कस्मै इत्यादि 'तद्' शब्दवत् तस्, त्र, ह परस्यास्य स्थाने 'कु' इत्यादेशो भवति (२।४।२२) कुतः, कुत्र, कुह।

पूर्व, पर, अवर, दक्षिण, उत्तर, अपर, अधर इत्येषां व्यवस्थायामर्थे सर्वनामकार्य्याणि स्युः अन्यत्र तु सामान्याऽदन्तकार्य्याणि । सर्वनामकार्य्याणि तु जसः शी, ङेः स्मै, ङसेः स्मात् इत्यादीनि । तत्र च जस्, ङसि, ङि, इत्येतेषां कार्य्याणि विकल्पेन (२।४।५, २।४।१२) ।

पूर्वशब्दस्य—पूर्वः पूर्वौ, पूर्वे, पूर्वाः । पूर्वं पूर्वौ, पूर्वान् । पूर्वेण, पूर्वाभ्याम्, पूर्वैः । पूर्वस्मै, पूर्वाभ्याम्, पूर्वेभ्यः । पूर्वस्मात् पूर्वात् पूर्वाभ्यां, पूर्वेभ्यः । पूर्वस्य, पूर्वयोः पूर्वेषाम् । पूर्वस्मिन् पूर्वे, पूर्वयोः पूर्वेषु । एवं अपरादीनाम् ।

स्वशब्दस्य ज्ञातिधनभिन्नार्थे पूर्वादिवत् सर्वनाम कार्य्याणि भवन्ति । जसि स्वे, स्वाः, ङसौ स्वस्मात्, स्वात्, ङौ स्वस्मिन्, स्वे अन्यत्र सर्ववत् (२।४।६, २।४।१२)

अन्तरशब्दस्य बाह्ये, परिधानीयार्थे पूर्वादिवत् सर्वनामकार्य्याणि भवन्ति । जसि, अन्तरे अन्तराः, ङसौ अन्तरस्मात् अन्तरात्, ङौ अन्तरस्मिन्, अन्तरे अन्यत्र सर्ववत् । (२।४।७, २।४।१२)

एकशब्दः संख्यायां नित्यैक वचनान्तः । एकः । एकं । एकेन एकस्मै । एकस्मात् । एकस्य । एकस्मिन् । अन्यार्थे, प्रधाने, प्रथमे, केवले, साधारणे, समाने, अल्पे च सर्व्व वचनान्तः तस्य रूपञ्च सर्वशब्दवत् ।

प्रथम, चरम, तयप्रत्ययान्त, अयप्रत्ययान्त, अल्प, अर्द्ध, कतिपय इत्येतेषां शब्दानां जसि विकल्पेन सर्वनामकार्य्यं भवति (२।४।८) प्रथमे, प्रथमाः, चरमे, चरमाः, द्वितये, द्वितयाः, द्वये, द्वयाः इत्यादि अन्यत्र तु रामशब्दवत् रूपाणि ।

तीयप्रत्ययान्तशब्देभ्यः ङे, ङसि, ङस, ङि इत्येतेषां सर्वनाम कार्य्याणि विकल्पेन भवन्ति । द्वितीयः, द्वितीयौ, द्वितीयाः । द्वितीयं,

द्वितीयो द्वितीयान्। द्वितीयेन, द्वितीयाभ्यां द्वितीयैः। द्वितीयस्मै, द्वितीयाय द्वितीयाभ्यां द्वितीयेभ्यः द्वितीयस्मात् द्वितीयात् द्वितीयाभ्यां द्वितीयेभ्यः। द्वितीयस्य, द्वितीययोः, द्वितीयेषु एवं तृतीयादीनाम्।

आकारान्त पुंलिङ्ग शब्दाः

सोमपा शब्दः—सोमपाः (सोमपा+सु (स्) रुसोः इति स स्थाने विसर्गः), सोमपा (सोमपा+औ वृद्धिरेचिति वृद्धिः सोमपै), सोमपाः (सोमपा+जस् अकः सवर्णे इति दीर्घः। सोमपां (सोमपा+अम् अम्-तक इति (२।३।३०) इति रूपम्। सोमपै (पूर्ववत्) सोमपः (सोमपा +शस् आतोधातोरिति आकारलोपः (१।३।१२) सोमप्+अस् सोमपस् इति स्थिते रुसोः इति सस्थाने विसर्गः), सोमपा (सोमपा+टा, आतोधातोः आकारलोपः सोमप्+आ, सोमपा), सोमपाभ्यां, सोमपाभिः। सोमपे (सोमपा+ङे आकार लोपः सोमप्+ए सोमपे), सोमपाभ्यां सोमपाभ्यः सोमपः (सोमपा+ङसि आकार लोपः स स्थाने विसर्गः), सोमपाभ्यां सोमपाभ्यः। सोमपः (ङसिवत्) सोमपोः (सोमपा ओस् आकारलोपः) सोमपाम् (सोमपा+आम् आकार लोपः)। सोमपि (सोमपा ङि आकार लोपः), सोमपोः (पूर्ववत्), सोमपासु। एवं विश्वपा, गोपा, कीलालपा, शङ्खध्मा तातता प्रभृतयः।

हाहाशब्दः—हाहाः, हाहौ, हाहाः। हाहां, हाहौ, हाहान् (हाहा +शस्, शसि दीर्घं सत्वम् (२।३।३१) हाहान्)। हाहा (हाहा+टा अकः सवर्णे (१।२।२) दीर्घः), हाहाभ्यां, हाहाभिः। हाहै (हाहा ङे (१।२।४) वृद्धिः), हाहाभ्याम्, हाहाभ्यः। हाहाः (हाहा+ङसि (१।२।२) दीर्घः), हाहाभ्यां, हाहाभ्यः। हाहाः (ङस् दीर्घः), हाहौः (हाहा | ओस (१।२।४) वृद्धिः), हाहानां (आम्, दीर्घः)। हाहे (हाहा | ङि (१।२।३) गुणः), हाहौः (पर्ववत्), हाहासु।

अत्रेदं रहस्यं,—धातोः क्विबादिप्रत्ययैरत्यन्तानां आकारान्तशब्दानां सोमपावद्रूपाणि भवन्ति । प्रातिपदिकाकारान्तानान्तु हाहावदिति ।

इकारान्ताः पुंलिङ्गशब्दाः ।

हरिः (सु, इतोलोपः सोरुकार लोपः, हरि+स् रसोः इति स स्थाने विसर्गः) हरी (हरि+औ (२।३।१५) विमंज्ञा, इतोः (२।३।४१) दीर्घः हरी । हरयः (हरि+जस, (२ । ३ । ४१) इति गुणः, हरे+अस् इति स्थिते एचोऽयवा (१।२।१३) एस्थाने अय, हरयस् (१।३१।) स स्थाने विसर्गः)। हरिम् (हरि+अम् (२।३।३०) एकाक्) हरी (पूर्ववत्), हरीन् (हरि+शस् (२।३।३१) दीर्घः सत्वन्)। हरिणा (हरि+टा (२।३।३६) टःस्थाने ना (१।४।१) णत्वञ्च), हरिभ्याम्, (हरि+भ्याम्), हरिभिः (हरि+भिस (१।३।१) सस्थाने ः। हरये (हरि+ङे (२।३।४) गुणः, हरे+ए(१।२।१३) ए स्थाने अय्), हरिभ्याम्, हरिभ्यः (हरि+भ्यस्, स स्थाने ः)। हरेः (हरि+ङसि (।२।३।४४) गुणः, हरे+अस् ङसिङसोश्चेति (२।२।२०) इति अकारलोपः हरेस्, स स्थाने ः) हरि-भ्याम्, हरिभ्यः। हरेः (हरि+ङस् ङसिवत्), हर्य्योः (हरि+ओस् इकोयण् (१।२।१२) इ स्थाने य हर्य्योस स स्थाने ः), हरीणाम् (हरि+आम् (२।३।३४) आम स्थाने नाम् (२।३।३२) दीर्घः, (१।४।१) णत्वञ्च) (हरौ (हरि+ङि (२।३।४२) ङेः स्थाने औ, इकार स्थाने अश्च) हर+औ (१।२।४) वृद्धिः), हर्य्योः (हरि+ओस् पूर्ववत्), हरिषु (हरि+सुप् (२।३।१२) पकार लोपः (१।३।३५) षत्वञ्च । सम्बोधने हे हरे (हरि+सु (२।३।१९) गुणः एङ् ह्रस्वात् (२।३।१८) सुलोपः) हे हरी, हे हरयः (पूर्ववत्), एवं कवि, अग्नि-प्रभृतयः ।

सखिशब्दः—सखा (सखि+सु, आत् सुनेति (२।३।६८) सुना सह इकार स्थाने आत्वं), सखायौ (सखि+औ, सखि वृद्धिरौटि (२।३।६९)

इकारवृद्धिः सखै+औ, (१।२।१३) ऐकार स्थाने आय्), सखायः (सखि+जस् (वृद्धिः, सखै+अस् ऐ स्थाने आय् सखायस् स स्थानेः)। सखायं (सखि+अम् (२।३।६८) वृद्धिः (१।२।१३) ऐ स्थाने आय्), सखायौ (पूर्ववत्), सखीन् (सखि+शस् (२।३।२१) दीर्घः सखन्)। सख्या (सखि+टा (घित्वाभावात् न सखि टा,ना आ इकोयण् (१।२।१२) इस्थाने य), सखिभ्याम्, सखिभिः। सख्ये (सखि+ङे (२।३।७, घित्वाभावात्) न गुणः, सखि+ए इ-य), सखिभ्यां, सखिभ्यः। सख्युः (सखि+ङसि, घित्वाभावान्न गुणः, सखि+अस् इय, सख्युस्। ख्यात्यादिति (२।२।४७) ङसेः अस्थाने उ, सख्युस् सस्थानेः), सखिभ्याम्, सखिभ्यः। सख्युः (ङसिवत्), सख्योः (हरिवत्), सखीनाम् (हरिवत्)। सख्यौ (सखि+ङि (२।३।४२) ङेः स्थाने औ घित्वाभवात् न इ स्थाने अ, सखि+औ इ स्थानेय), सख्योः, सखिषु (हरिवत्)। सम्बो हे सखे (हरिवत्), हे सखायौ, हे सखायः। शोभनः सखा, सुसखिः न पूजनादिति निषेधात् राजाहःसखिभ्यः (५।१।८४) इत्यनेन न टः। सुसखा, सुसखायौ, सुसखायः। सुसखायं सुसखायौ सुसखीन्। टादौ घिसंज्ञा भवतीति सिद्धान्तकौमुदी, ततश्च सुसखिना+हरिवत् रूपाणि। परमसखा यस्य बहुव्रीहौ न टः, परमसखि शब्दः सुसखिवत् रूपाणि। सखीमतिक्रान्तः समासान्तविधेरनित्यत्वान्न टः अतिसखि शब्दः तस्य हरिवत् रूपाणि, अथ गोस्त्रियोरित्यनेन (४।३।१।१५) ह्रस्वः, स च लाक्षणिकः, ततश्च (२।३।६८) (२।३।६९) सम्बोर्नप्रवृत्तिः तत्र हि प्राकृतस्य ग्रहणात्। बहुच् पूर्वस्य सखिशब्दस्य 'बहुसखि' इत्येवं रूपस्य च टादौ बहुसखिना इत्यादीनि हरिवत् रूपाणि। पतिशब्दः—पतिः, पती, पतयः (हरिवत्)। पतिम्, पती, पतीन् (हरिवत्)। पत्या (घिसंज्ञाभावात् सखिवत) पतिभ्याम्, पतिभिः। पत्ये इत्यादि सखिवत्। पत्युः इत्यादि

सखिवत् । पत्युः इत्यादि सखिवत् । पत्यौ इत्यादि सखिवत् । प्रजापति, उमापति इत्यादौ समस्ते घिसंज्ञायाः प्रवृत्तेः हरिवत् रूपाणि, ततश्च टादौ प्रजापतिना, प्रजापतये, प्रजापतेः प्रजापतौ इत्यादि ।

ननु समस्तस्य शुद्धपतिरूपत्वाभावात् समासस्थलेऽपि सखिनेत्यादिवत् । घिसंज्ञा भवत्येव कथं सूत्रे पत्यौ समासग्रहणमिति चेत् न तथात्वे बहुपूर्व्वकस्य पतिशब्दस्यापि घिसंज्ञा स्यात् ततश्च सुसखिनेत्यादिवत् बहुपतिनेति प्रसक्तिः न तु तदिष्टं बहुपत्या इत्यस्यैवेष्टत्वात् । एवञ्चेत् सूत्रे कथं न समस्तयोरेव सखिपत्योर्ग्रहणं कृतमिति चेत् न तथात्वे बहुपतिनेतिवत्, बहुसख्येत्यस्य प्रसक्तिः तच्च नेष्टं बहुसखिना इत्यस्येष्टत्वात् । अथ कथं सीतयाः पतये नमः, नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ इति पराशरश्च । अत्राहुः पति रिति व्याख्यातः पति (तत्करोति, तदाचष्टे इति णिच टिलोपः औणादिकः इप्रत्ययः णिलोपश्च) एवं निष्पन्नोऽयं पतिशब्दः ततश्च लाक्षणिकत्वान्नैतत्सूत्रान्तर्गतोऽयं पतिशब्दः सूत्रेऽस्मिन् प्राकृतस्यैव ग्रहणात् । एवं सखिना वानरेन्द्रेण पतिना राघवेण च इत्यत्रापि ।

द्विशब्दः द्विवचनान्तः (पुं) द्वि+औ (२।१।१७) टेरत् द्व+औ (१।२।४) वृद्धिः द्वौ, द्वि+औ ट (पूर्व्ववत्) द्वौ, द्वि+भ्यां (२।१।१७) टेरत् द्व+भ्यां भ्यामि (२।१।४०) दीर्घः द्वाभ्याम् ; द्वि+ओस् (२।१।१७) टेरत् द्व+ओस् अचोऽसीति (२।१।३८) अय् द्वय्+ओस् द्वयोस्, सत्वाते : द्वयोः २ । एवं परमद्वौ, अकर्म्मीद्वौ तु विनाम वाचित् द्विः, द्वी, द्वयः (अन्यत् हरिवत्) । द्वावतिक्रान्तोऽतिद्विः हरिवत् ।

त्रिशब्दः बहुवचनान्तः (पुं) त्रयः (त्रि+जस् (२।१।४१) गुणः (१।२।१६) त्रिस्थाने त्रय्, त्रयस्, सत्वाते : त्रयः) त्रीन् (त्रि+शस् शसि (२।१।२१) दीर्घः नत् त्रीन्), त्रिभिः (त्रि+भिस्,स+:) त्रिभ्यः,

( त्रि+भ्यस् स+: ) त्रयाणाम् ( त्रि+आम्, आमोनामिति) (२।१।२३) आमः स्थाने नाम् त्रेस्त्रयश्च, नामीति (२।१।३२) दीर्घः। गौणत्वे अस्माकं मते प्रियत्रीणाम्, सिद्धान्तकौमुदी मते प्रियत्रयाणाम्।

कतिशब्दः बहुवाचकः बहुवचनान्तश्च। कति कति (कति जस् वा शस् डतिष्णान्त (२ १।२९) इति जस्, शसोर्लुक्। कतिभिः, कतिभ्यः कतिभ्यः, कतीनाम् (हरिवत्), कतिषु हरिवत्।

औडुलोमिशब्दः ( उडुलोम्नः अपत्यं पुमान् इ, (५।१।१७) इति णपः) औडुलोमिः, औडुलोमी ( हरिवत्); लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः इति, वार्त्तिकम्—ततो जसि उडुलोमाः। एवं औडुलोमिं, औडुलोमी, उडुलोमान्) अकारान्तवत् औडुलोमिना, औडुलोमिभ्यां उडुलोमैः। द्विवचनपर्य्यन्तं हरिवत्, बहुवचनं अकारान्त (पुम्वत्) आमिशब्दस्तु हरिवत् इति इकारान्ताः।

ईकारान्तः सुश्रीशब्दः ( शोभना श्रीर्यस्य—सः सुश्रीः ) सुश्रीः (सुश्री+सु, ( सु ) सुशोस्त स्थाने विसर्गः ), सुश्रियौ सु+श्री+औ अचियुत्वेति (१।३।५२ ( ईस्थाने इय् सुश्रिय् औ सुश्रियौ, सुश्रियः सुश्री जस् अचीति ईस्थाने इय् सुश्रीयस् सस्थाने )। सुश्रियं ( सुश्री+अम् ईस्थाने इय् ) सुश्रियौ ( पूर्ववत् ), सुश्रियः सुश्री+शस, (असवत्)। सुश्रिया (सुश्री +टा ईस्थाने इय्), सुश्रीभ्याम्, सुश्रीभिः भिसः सस्थाने : )। सुश्रिये ( सुश्री+ङे+ईस्थाने इय्, ( २।१।८ ) स्त्रीत्व एवेति नदी-संज्ञा विधानाय ..... विकल्पेन नदीत्वं तथात्वे सुश्रियै इति पदान्तरमपि स्यात ), सुश्रीभ्याम्, सुश्रीभ्यः ( सस्थाने: ) सुश्रियः (ईस्थाने इय् ) सुश्रीभ्याम् सुश्रीभ्यः। सुश्रियः, सुश्रियोः, सुश्रियां ( ईस्थाने इय् )। सुश्रियि, सुश्रियोः, सुश्रीषु ( षत्वं )। एवं यवक्री, सुधी, प्रभृतयः।

सेनानीशब्दः सेनानीः (सेनानी+सु (स्), सस्थाने विसर्गः) सेनान्यौ सेनानी+औ, औ (एरनेकाच इति (६।४।८२) इकारस्थाने य), सेनान्यः (सेनानी+जस्) (६।४।८२) इकार स्थाने यः, एवं सर्वत्र अजादौ सुपि)। सेनान्यं, सेनान्यौ, सेनान्यः। सेनान्या, सेनानीभ्यां सेनानीभिः। सेनान्ये, सेनानीभ्यां सेनानीभ्यः। सेनान्यः, सेनानीभ्यां, सेनानीभ्यः। सेनान्यः, सेनान्योः, सेनान्यां। सेनान्याम् (सेनानी+ङि (७।३।११६) ङेराम्, इकार स्थाने य) सेनान्योः, सेनानीषु। सम्बो-धने सेनानीः (प्रथमावत्) एवं ग्रामणीः, अग्रणीः दिनप्रणी उन्नी, प्रधीशब्द प्रभृतयः, प्रधीशब्दस्य ङौ तु प्रध्यि इति रूपं भवेत् एवं सर्व्वेषां नीभिन्नानां नित्यसमस्तानां क्विबन्तानां इकारान्तानां सप्तम्येकवचने)। परमश्चासौ नीश्चेति इति कर्म्मधारयसमासनिष्पन्नस्य परमनीशब्दस्य केवल नाशब्दस्य च ङि वर्ज्जं सुधीवत् रूपं ङौ तु परमनियां, नियामिति। सुधीप्रध्योः शब्दयोर्भिन्नरूपतैव सुधीशब्दस्याचि परे इकार स्थाने इय्, प्रधी शब्दस्य तु यः स्यात्, शुद्धधी, अवध्यधी प्रभृतीनां अनित्य-समस्तानां शब्दानां सुधीशब्दवत् रूपम्। वृकभीशब्दः यदा वृका-द्बिभेतीति क्विप्प्रत्ययान्निष्पन्नः, तदा तस्य प्रधीवत् रूपं यदा तु वृकाद्भी-रिति समासान्निष्पन्नस्तदा सुधीवत्।

वीशब्दः (विगता ईर्यस्य सः वी) वीः, व्यौ, व्यः, ) इकोयणचीति इकार स्थाने यः एवं परत्रापि (। वी ) वी अम् अमि पूर्व्वः (६।१।१०७) इति अकारात्, व्यौ, वीम् (असिद्धेरिति दीर्घः सस्थाने नस्य)। व्या, वीभ्याम् वीभिः। व्ये, वीभ्यां वीभ्यः। व्यः, वीभ्यां वीभ्यः। व्यः, व्योः व्याम्। वी (वी+ङि अकः सवर्णे दीर्घः), व्योः, वीषु।

वातप्रमीशब्दस्य वातप्रमीः, वातप्रम्यौ, वातप्रम्यः। वातप्रमीं वात-वातप्रम्यं वा, वातप्रम्यौ वातप्रमीन् वातप्रम्यः वा। वातप्रम्या, वात-

प्रमीभ्यां वातप्रमीभिः वातप्रम्ये, वातप्रमीभ्यां, वातप्रमीभ्यः। वातप्रम्यः, वातप्रमीभ्यां वातप्रमीभ्यः। वातप्रम्यः, वातप्रम्योः, वातप्रम्यां। वातप्रमी, वातप्रम्यि वातप्रमिषु। हे वातप्रमीः। सुपद्मकारमते वातप्रमीशब्दस्य विकल्पेन धातुवत्त्वम् ततश्चाम् प्रत्, किन्तु भिन्नरूपता धातुवत्तापक्षे तत्रापि श्रोश्चवेति इकारस्थाने यत्वं। सिद्धान्तकौमुदीकारमते यदा औणादिक इप्रत्ययान्तो वातप्रमीशब्दस्तदा वीशब्दवत् रूपं, यदातु क्विप् प्रत्ययान्तस्तदा प्रधीशब्दवत् रूपमिति भेदः।

याल्यनेन ययीमार्गः पातिलोकमिति पपीः सूर्यः, ययौ ययो, पपी, शब्दौ औणादिक ई प्रत्ययनिष्पन्नौ एतयोरपि वी शब्दवत् रूपाणि।

बहुश्रेयसीशब्दः बह्व्यः श्रेयस्यः यस्य स बहुश्रेयसीः। बहुश्रेयसी, (बहुश्रेयसी+सु ह्लङ्याप इति सुलोपः) बहुश्रेयस्यौ, बहुश्रेयस्यः (इकोयणचीति इकारस्थाने य एवं परत्रापि। बहुश्रेयसीं बहुश्रेयस्यौ बहुश्रेयसीन् (प्रसिद्दीर्घः)। बहुश्रेयस्या, बहुश्रेयसीभ्यां, बहुश्रेयसीभिः। बहुश्रेयस्यै (बहुश्रेयसी+ङे यूस्त्र्याख्यौ नदी इत्यस्मात् पुंस्यपि नदीसंज्ञा, तत आण्नद्याम्) आडागमः इकोयणचीति इकारस्थाने य बहुश्रेयस्या+ए, वृद्धिरेचि वृद्धिः बहुश्रेयस्यै, बहुश्रेयसीभ्यां बहुश्रेयसीभ्यः। बहुश्रेयस्याः (बहुश्रेयसी+ङसि, पूर्ववत् नदीसंज्ञा आडागमः इकारस्थाने यः, बहुश्रेयस्या+अस इति स्थिते अकः सवर्णे दीर्घः सस्थाने विसर्गश्च) बहुश्रेयसीभ्यां, बहुश्रेयसीभ्यः। बहुश्रेयस्याः (ङसि वत्) बहुश्रेयस्योः बहुश्रेयसीनां) बहुश्रेयस्यां (बहुश्रेयसी+ङि, पूर्ववत् नदीसंज्ञा, आमागमः ङि स्थाने आम्च (२।३।५।) बहुश्रेयस्या+आम् अकः सवर्णे दीर्घः बहुश्रेयस्यां, बहुश्रेयस्योः बहुश्रेयसीषु। सम्बोधने हे बहुश्रेयसि (अम्बार्थनद्योर्ह्रस्वः इति ह्रस्वः,) बहुश्रेयस्यौ, बहुश्रेयस्यः।

अतिलक्ष्मीशब्दः लक्ष्मीमतिक्रान्तो यः स अतिलक्ष्मीः। एतच्छब्द

बहुश्रेयसीवत् साध्यते विशेषस्तु प्रथमैकवचने सुलोपो न भवति अति-लक्ष्मीरिति।

कुमारीमिच्छति, कुमारीवाचरति, आद्ययोः क्यच्, क्यङ् वा ततः क्विप् यलोपे कुमारीशब्दः कुमारी ( सु, हलङ्याप इति सुलोपः ) कुमार्य्यौ (ओश्चेति इकारस्थाने यः) कुमार्य्यः। कुमार्य्यं, कुमार्य्यौ, कुमार्य्यः। कुमार्य्या कुमा-री-भ्यां,भिः कुमार्य्यै (बहुश्रेयसीवत्), कुमारी-भ्यां, भ्यः। कुमार्य्याः ( बहुश्रेयसीवत् ), कुमारी-भ्यां-भ्यः। कुमार्य्याः, कुमार्य्योः, कुमारीणां। कुमार्य्यां ( बहुश्रेयसीवत् ), कुमार्य्योः कुमारीषु। हे कुमारि कुमार्य्यौ, कुमार्य्यः। एवं जरतीमिवाचरति जरती युवा। सखायमिच्छति सखे वाचरतीति क्यच्, क्यङ् वा ततः क्विप् यलोपे सखीशब्दः अस्माकं मते प्रधीवत्, साध्यते। सिद्धान्तकौमुदीमते- एकदेशविकृतस्यानन्यतया ओट्पर्य्यन्तं सखिशब्दवत् यथा सखा, सखायौ सखायः सखायं सखायौ ततः सख्यः। सख्या प्रधीवत् किन्तु ङसि, ङसोः सख्युरिति। सह खेन-वर्त्तते सखः तमिच्छतीति सखीः, सुखमिच्छतीति सुखीः, नखमिच्छतीति नखीः एवम्भिधानां सर्व्वेषां ङसि, ङस्वर्ज्जं प्रधीवत् रूपाणि ङसि, ङसोस्तु सख्युः, सुख्युः, नख्युः इति, एवं सुतमिच्छति सुतीशब्दः, लून-मिच्छति लूनीशब्दः, क्षाममिच्छति क्षामीशब्दः, प्रस्तोममिच्छति प्रस्तोमी शब्दः एतेषां ङसर्व्वेषां ङसि, सुवर्ज्जं प्रधीवत् रूपाणि ङसि. ङसोस्तु सुत्युः, लून्युः क्षाम्युः प्रस्तोम्युः, मालीयतीति मालीशब्दस्य प्रधीवत् रूपाणि एवं अन्येषामपि ज्ञेयम्।

उकारान्ताः शम्भुशब्दः। शम्भुः ( सु (स) सस्थाने: ), शम्भू (औ २।३।४१) दीर्घः। शम्भवः (जस् (२। ३। ०९. गुणः, शम्भो+अस्, १।२।१३) ओ स्थाने अव् शम्भवस् सस्थाने:)। शम्भुम् (अम् (२।३।३०)-एकारः), शम्भू ( पूर्व्ववत् ) शम्भून् (शसि दीर्घः, सस्य न ( २ । ३ । ३१)। शम्भुना ( टा

स्थाने ना ), शम्भुभ्यां, शम्भुभिः । सम्भवे ( ङे ( २ । ३ । ४४ ) गुण' शम्भो+ए, ओ स्थाने अव् ), शम्भुभ्यां, शम्भुभ्यः । शम्भो ( ङसिगुणः, अकारलोपः, सस्थाने ः ), शम्भुभ्यां, शम्भुभ्यः । शम्भोः ( ङसिवत् ), शम्भ्वोः (ओस्, उ स्थाने व ), शम्भूनाम् ( आम् स्थाने नाम्, नामि दीर्घः ) । शम्भौ (ङि स्थाने औ, घिस्थाने अ, शम्भ+औ वृद्धिः ) शम्भ्वोः, शम्भुषु (षत्वम्) । हे शम्भो, हे शम्भू, हे शम्भवः । एवं विष्णु, वायु, भानु, साधु, विभु, प्रभु प्रभृतयः ।

क्रोष्टु शब्दः । (२।१।६) सादि स्थाने तृज्वत्, असमुद्धौ (२।३।८१) क्रोष्टा ( क्रोष्टु+सु, तृज्वत्, क्रोष्टृ+स् इति स्थिते आत् सुनेति (२ । ३ । ६८) सुना सह ऋ स्थाने आकार. ), क्रोष्टारौ ( क्रोष्टृ+ औ, तृज्वत्, ) सखि-तृतरौटीति (२ । ३ । ६९) ( वृद्धिः ), क्रोष्टारः ( क्रोष्टु+जस्, तृज्वत्, वृद्धिः, सस्थाने ः ) ; क्रोष्टारम् (क्रोष्टु+अम्, तृज्वत्, वृद्धिः ), क्रोष्टारौ ( पूर्ववत् ). क्रोष्टून् ( शम्भूवत् ) । आम् भिन्ने टाद्यचि परे विभाषया तृज्वत् (२ । ३ । ८२) क्रोष्ट्रा ( क्रोष्टु+ टा ( आ ), तृज्वत् , क्रोष्टृ+आ ( १ । २ । १२ ) (ऋ स्थाने र) पक्षे क्रोष्टुना ( शम्भुवत् ), क्रोष्टुभ्यां, क्रोष्टुभिः (शम्भुवत्) । क्रोष्ट्रे ( ङे (ए), तृज्वत्, ऋ स्थाने र) पक्षे क्रोष्टवे, क्रोष्टुभ्यां क्रोष्टुभ्यः ( शम्भुवत् ) । क्रोष्टुः (ङसि) (अस्) तृज्वत्, ऋता ङसिङसोरिति ( २ । ३ । ४१ ) ऋकारेण सह अकार स्थाने उकारः सस्थाने ः ), पक्षे क्रोष्टोः (शम्भुवत्), क्रोष्टुभ्यां, क्रोष्टुभ्यः । क्रोष्टुः क्रोष्टोः (ङसिवत्), क्रोष्ट्रोः ( ओस्, तृज्वत्, ऋस्थाने र, सस्थाने ः ) क्रोष्ट्वोः ( शम्भुवत् ), क्रोष्टूनाम् ( शम्भुवत् ) । क्रोष्टरि ङि, तृज्वत, गुणश्च ( २ । ३ ४४), क्रोष्टौ ( शम्भुवत् ), क्रोष्ट्रोः, क्रोष्ट्वोः, क्रोष्टुषु (शम्भुवत् ) हे क्रोष्टो (शम्भुवत् ) । इति उकारान्तः ।

ऊकारान्त हूहू शब्दः—हूहूः (सु (स्) स्थाने ः), हूहौ (औ, ऊ स्थाने व), हूहूः (जस्, अस्, ऊस्थाने व सस्थाने ः)। हूहूं (अम् ऊ स्थाने व), पक्षान्तरमते हूहूं हूहूमिति पदद्वयं, हूहौ हूहून् (शस् दीर्घः सस्य न्) पक्षान्तरमते हूहूः, हूहूमितिपदद्वयं। एवं हूहा, हूहूभ्याम्, हूहूभिः। हूहे, हूहूभ्यामित्यादि आमि हूहां ङौ हूहि। एवं अम्रहू, यकहू—प्रभृतयः।

चमूमतिक्रान्तः अतिचमूशब्दः, अतिचमूः, अतिचम्वौ, अतिचम्वः। अतिचमूं, अतिचम्वौ, अतिचमून् एवं (ङि, ङसि, ङस्, आम्, ङि वर्ज्जं हूहूवत्। ङे प्रभृतिषु यथाक्रमं अतिचम्वै, अतिचम्वाः अतिचम्वाः अतिचमूनाम्, अतिचम्वाम् (२।३।४८), (२।३।३५), (२।३।५१) सूत्राण्यनुसन्धेयानि)।

सुभूशब्दः—सुभूः, सुभुवौ (सुभू+औ अचि युक्तेति (२।३।५२) ऊकार स्थाने उव्), सुभुवः (जस्, ऊस्थाने उव्) सुभुवं सुभुवौ, सुभुवः। सुभुवा, सुभूभ्याम् इत्यादि। ङयि सुभुवे, ङसौ सुभुवः, ङसि सुभुवः, ओसि सुभुवोः, आमि सुभुवाम्, ङौ सुभुवि। एवं प्रतिभूः, स्वयंभूः, भ्रू, कटप्रू प्रभृतयः।

खलंपुनातीति खलपूशब्दः खलपूः खलप्वौ (खलपू+औ (२।३।५७) अजादौ सुपि ऊस्थाने वः) खलप्वः। खलप्वं, खलप्वौ, खलप्वः शेषं ऊहूवत्। एवं अङ्कद्रू, सुलू प्रभृतयः; वर्षाभूः, दृन्भू प्रभृतीनान्तु (२।३।५७।।२।३।५८) सूत्रयोरनुवृत्तिः; इति ऊकारान्ताः।

ऋकारान्ताः—धातृशब्दः धाता (धातृ+सु आतसुनेति (२।३।६८) सुना सह ऋस्थाने आत्वं), धातारौ (धातृ+औ वृद्धिः)। धातारः। धातारं, धातारौ धातॄन्। धात्रा, धातृभ्यां, धातृभ्यः। धातुः, धात्रोः, धातॄणाम्। धातरि, धात्रोः धातृषु। हे धातः (२।३।२०) हेधातारौ हेधातारः। एवं विधातृ, दातृ, नप्तृ उद्गातृ त्वष्टृ प्रभृतयः।

पितृशब्दः पिता (सु, (२।३।६८) आत्), पितरौ (पितृ+औ ऋतो ङेरादौः, २।३।४५, इति गुणः) पितरः पितरं पितरौ पितॄन् शेषं धातृवत् सम्बोधने हे पितः हे पितरौ, हे पितरः। एवं भ्रातृ, जामातृ, देवृ, नृ प्रभृतयः नृशब्दस्य आमि तु नृणां नॄणामिति रूपद्वयं भवति (२।३।३६)। इति ऋदन्ताः। ॡकारान्ताः शब्दा न सन्ति। कॄ प्रभृतयः कति अनुकरणशब्दाः सिद्धान्तकौमुद्यामेवम् दर्शिताः कॄः, क्रौ, क्रः। कॄम्, क्रौ, कॄन्। क्रा। क्रे इत्यादि। गम्लृ शक्लृ इत्यनुकरणशब्दौ तयोर्यथा गमा, शका गमलौ, शकलौ, गमलः, शकलः। गमलम्, शकलम् गमलौ, शकलौ, गम्लॄन्, शक्लॄन। गमला, शकला। ङसिङसोस्तु गमुः, शकुः।

एकारान्तः से शब्द सेः सयौ सयः। सयं, सयौ सयः। सया, सेभ्यामित्यादि। ङसि, ङसोः सेः, आमि-सयां। ओकारान्त गोशब्दः गौः (गो+सु) गोपवोरिति (२।२।७०) वृद्धिः, सस्थाने ः), गावौ (औ, वृद्धिः, औ स्थाने आव् (१।२।१३), गावः। गाम् (गो+अम् आदोतोरिति (२।३।१) ओस्थाने आ) गावौ (पूर्ववत्) गाः (गो+शस् आदोतोः (२।३।७१) ओस्थाने आ, सस्थाने ः)। गवा, * गोभ्यां गोभिः। गवे, गोभ्याम् गोभ्यः। ङसि, ङसोः गोः आमि गवां, ङौ गवि। एवं सुद्यौशब्दस्य। ऐकारान्त सुरैशब्दः सुराः (सुरै+(२।३।६६) रादेशः सस्थाने ः) सुरायौ, सुरायः। सुरायं सुरायौ सुरायः। सुराया, सुराभ्याम् इत्यादि। अत्रेदं रहस्यं अजादौ सुपि (१।२।१३) ऐस्थाने आय् भवति, हलादौ तु (२।३।६६) रैशब्दस्य रादेश इति।

---

* टा प्रभृतिषु अजादिषु एचोऽयवा इति (१।२।१३) औस्थाने अव्। सेशब्दस्या-जादौ ए स्थाने अय्।

औकारान्त ग्लौशब्दः ग्लौः, ग्लावौ, ग्लावः । ग्लावं ग्लावौ ग्लावः । इत्यादि अजादौ सुपि औस्थाने आव् (१।२।१३) भवति हलादौ तु औ तिष्ठत्येव ।

इति अजन्तपुंलिङ्गाः ।

## अथाजन्तस्त्रीलिङ्गाः ।

### आकारान्तः रमाशब्दः ।

रमा ( रमा+सु हलङ्याप इति ( २।३।१८ ) सुलोपः ), रमे ( रमा +औ, औङीति ( २।३।५० ) औस्थाने शी ( ई ) रमा+ई इति स्थिते गुणः ( १।२।३ ), रमाः ( जस् ( अस् ), ( १।२।१ ) दीर्घः, सस्थाने ः ) । रमाम् ( रमा+अम् ( २।३।१० ) एकाक् ), रमे ( औवत् ), रमाः ( शस् दीर्घः ( २।३।३१ ) सस्थाने ः ) । रमया ( टा, अयोमोति ( २।३।३६ ) आस्थाने अय् रमय्+आ रमया ), रमाभ्यां, रमाभिः । रमायै ( रमा+ ङे, आनद्यां इति ( २।३।४८ ) आकारागमः, याप ( २।३।४३ ) यागमः रमाया +ए इति स्थिते वृद्धिः ), रमाभ्यां रमाभ्यः । रमायाः ( ङसि, आकारा-गमः, यागमश्च रमाया+अस् दीर्घः, सस्थाने ः ), रमाभ्यां रमाभ्यः । रमायाः ( ङसिवत् ), रमयोः ( ओस् अयोसीति आस्थाने अय्, रमय्+ओस् रमयोस् सस्थाने ः ), रमाणाम् ( आम् तस्य स्थाने नाम् (२।३।३५) रमाणाम् ( ङि, आकारागमः, यागमः, ङेरामिति ( २।३।५१ ) ङिस्थाने आम् ), रमयोः ( पूर्व्ववत् ) रमासु । सम्बोधने रमे (रमा +सु एदापः ( २।३।२३ ) इति आकार स्थाने एकारः, एङ्ह्रस्वादिति ( २।३।१८ ) सुलोपः ) रमे, ( औवत्), रमाः ( जस् ) । एवं लता, बाला, माला, दुर्गा, ताराप्रभृतयः । अम्बा, अक्ता, अल्ला, शब्दानां सम्बोधनैक-वचने यथाक्रमं अम्ब, अक्त अल्ल इति रूपम् ( २।३।२२ ) अम्बाङ्का.

अम्बाला, अम्बिकाप्रभृतीनाम् यथाक्रममम्बाड़े, अम्बाले, अम्बिके इति। सर्व्वाप्रभृतानां पूर्व्वोक्तानां सर्व्वनामशब्दानां ङे, ङसि, ङस्, आम्, ङीवर्ज्जं सर्व्वासु विभक्तिषु रमाशब्दवत् रूपाणि भवन्ति। ङे, ङसि, ङस् ङिषु स्यागमो भवति आकारक्रस्यश्च (२।४।१५) आमस्तु सामेव, तथाहि सर्व्वा+ङे=सर्व्वस्यै, ङसि=सर्व्वस्याः, ङस्=सर्व्वस्याः, आम् सर्व्वासां, ङि=सर्व्वस्याम्। एतं विश्वाप्रभृतयः। पूर्व्वादीनामपि ङे प्रभृतिषु विकल्पेन सर्व्वनामत्वात् पूर्व्वस्यै, पूर्व्वायै, पूर्व्वस्याः पूर्व्वाया आमि पूर्व्वासां पूर्व्वाणां, ङौ पूर्व्वस्यां पूर्व्वायां।

एवं दक्षिणाप्रभृतयः। द्वितीयादीनामपि तथा। 'तद्, त्यद् एतद्। शब्दानां सौ (प्रथमैकवचने) सा, स्या, एषा इति रूपं ङ्यादौ तु तस्यै, तस्याः इत्यादि ; नासिकाशब्दस्य शसादौ विभाषया नस् इत्यादेशो भवति (२।३।१३८)। शसि नसः, टा-नसा, नोभ्यां नोभिः। नसि इत्यादि पक्षे रमावत्। निशाशब्दस्य च शसादौ विकल्पेन, निश्। इत्यादेशो भवति निशः, निशा, निड्भ्यां (निशा+भ्यां निश् आदेशः, व्रश्च भ्रस्जेति (२।३।१११) शस्थाने ष, षष्ठ (१।२।५१) इति षस्थाने ट, भयस्तृतीय इति (१।२।५२) (ट स्थाने ड), निड्भिः, केचित्तु निज्भ्यां निज्भिरिति सिद्धान्तकौमुदी। सुपि निट्त्सु (निशा+सु, निश् आदेशः, शस्थानेष, षस्थानेट्, नटाभ्यामिति (१।२।६२) तुक् (त्)। पक्षे निट्सु निच्छु इति केचित्। गोपाशब्दः विश्वपावत्। एवं शुभंयादयः।

इकारान्ताः—मतिशब्दः मतिः मती, मतयः। मतिम्, मती (हरिवत्) मतीः (शसि दीर्घः, स्त्रीत्वात् न सत्वम्। मत्या (टा इकार स्थाने य) मतिभ्यां मतिभिः। ङे, ङसि, ङस् ङिषु विकल्पेन (२।३।८) नदीत्वम्। नदीत्वपक्षे तासु विभक्तिषु आमागमश्च (२।३।४८)

ततश्च ङे-मत्यै, (मति+ङे, आमागमः मत्या+ए इतिस्थिते वृद्धिः) पक्षे मतये (हरिवत्), ङसि मत्याः (मति+ङसि (अस्) आमागमः मत्या+अस् दीर्घः सस्थाने :) पक्षे मतेः (हरिवत्), ङस् मत्याः (ङसिवत्) पक्षे मतेः। ङि—मत्यां (मति+ङि, आमागमः, ङे रामश्च (२।३।५१) मत्या+आम् दीर्घः, पक्षे मतौ (हरिवत्) अन्यत्र हरिवत्। एवं श्रुति, स्मृति, बुद्ध्यादयः।

द्वि शब्दः (२।●।१०) टेरत्वे सत्याप् ततश्चकारान्तवत् द्वे २, द्वाभ्याम् ३, द्वयोः २।

त्रि शब्दः, स्त्रीलिङ्गस्य त्रिशब्दस्य स्थाने 'तिसृ' इत्यादेशो भवति। आम् भिन्ने अजादौ सुपि तिसृ इति आदेशः (२।३।८६) तिस्रः २, तिसृभिः, तिसृभ्यः ३, तिसृणाम्, तिसृषु। प्रियास्त्रय स्त्रीणिवा यस्याः सा प्रियत्रिः † मतिवत्। इति इकारान्ताः। ईकारान्तनदीशब्दः—नदी, हलङ्याप इति सुलोपः, नद्यौ, नद्यः। नदीम् (अम्यतेकेति एकाक्) नद्यौ, नदीः (स्त्रीत्वान्न सश्च न) नद्या नदीभ्याम् नदीभिः। ङ्यादौ नदीसंज्ञा, आमागमश्च (२।३।४८) नद्यै, नदीभ्याम्, नदीभ्यः। नद्याः नदीभ्यां, नदीभ्यः। नद्याः, नद्योः नदीनाम्। नदीत्वात् आमस्थाने नाम् (२।३।३५)। नद्याम् (ङि-आमागमः ङे राम् दीर्घश्च) नद्योः, नदीषु। हे नदि (ऋत्वाम्बार्थेति नदीत्वात् ह्रस्वः (२।३।२२) ततः एङ् ह्रस्वादिति सुलोपश्च (२।३।१९)। हे नद्यौ, नद्यः। एवं गौरी, कुमारी, प्रभृतयः। लक्ष्मी, तरी, तन्त्रीप्रभृतीनां सुलोपाभावात् लक्ष्मीः, तरीः, तन्त्रीरिति शेषं नदीवत्।

† प्रियास्तिस्रोयस्य इति विग्रहे यः पुंलिङ्गः शब्दोजायते तत्रापि 'तिसृ' आदेशः तथाहि प्रियतिसा, प्रियतिस्रौ, प्रियतिस्रः प्रियतिस्रं प्रियतिस्रौ प्रियतिसृन्। प्रियतिस्रा इत्यादि। एवं क्लीबे प्रियतिसृ, प्रियतिसृणी, प्रियतिसृणि।

स्त्रीशब्दः स्त्री (हलङ्यापं इति सुलोपः), अजादौ सुपि ईकार-स्थाने इय् आदेशो भवति (२।३।५२) स्त्रियौ, स्त्रियः। अमि शसि च परे विकल्पेन इय् आदेश (२।३।५४) स्त्रियं, स्त्रीं स्त्रियौ स्त्रियः स्त्रीः। स्त्रिया, स्त्रीभ्यां स्त्रीभिः। स्त्रियै (आमागम। ईस्थाने इय स्त्रिया + ए वृद्धिः), स्त्रीभ्यां स्त्रीभ्यः। ङसि, ङसौ स्त्रियाः (आमागमः स्त्रिया+अस् दीर्घः। सस्थाने :) ङसि स्त्रियोः आमि स्त्रीणाम्, ङ्यां स्त्रियाम् (आमागमः ङेराम् च, दीर्घः) स्त्रियोः स्त्रीषु। हे स्त्रि, स्त्रियौ स्त्रियः।

(स्त्रियमतिक्रान्तः अति स्त्रिः, सिद्धान्तकौमुद्यामस्य रूपाण्येवं दर्शितानि। अति स्त्रिः, अतिस्त्रियौ अतिस्त्रियः, हे अतिस्त्रे, अतिस्त्रियौ, अतिस्त्रियः। वाम्शसोः (२।३।५४) अतिस्त्रिं, अतिस्त्रियम् अतिस्त्रियौ, अतिस्त्रियः, अतिस्त्रीन्। अतिस्त्रिणा, अतिस्त्रये, अतिस्त्रेः, अतिस्त्रेः, अतिस्त्रियोः अतिस्त्रीणाम्। क्लीबे तु अतिस्त्रि, अति स्त्रिणी अतिस्त्रीणि। अतिस्त्रिणा, अतिस्त्रिणे, अतिस्त्रये, अतिस्त्रेः अतिस्त्रिणः, अतिस्त्रिणोः, अतिस्त्रियोः इत्यादि। स्त्रीमतिक्रान्ता अतिस्त्रिः, शसादौ अतिस्त्रीः, अतिस्त्रिया, अतिस्त्रियै, अतिस्त्रये अतिस्त्रियाः, अतिस्त्रेः, अतिस्त्रीणाम्। अतिस्त्रियाम् अतिस्त्रौ।)

श्रीशब्दः श्रीः, श्रियौ, श्रियः। श्रियं श्रियौ, श्रियः। श्रिया, श्रीभ्यां श्रीभिः। ङे, ङसि, ङस्, आम्, ङिषु, विकल्पेन नदीसंज्ञा (२।३।६) नदीत्वपक्षे आमागमः (२।३।४८), आम् स्थाने नाम् (२।३।३५) ङेराम् च (२।३।५१)। अन्यत्र ई स्थाने इयादेशमात्रम्। श्रियै, (आमागम श्रिया+ए वृद्धिः), पक्षे श्रिये (श्री+ए इयादेशमात्रं), एवं श्रियाः श्रियः श्रियोः श्रीणाम् (नदीत्वादामोनाम् (२।३।३५) पक्षे श्रियाम् (श्री+आम् इयादेशमात्रं)। श्रियाम् (आमागमः ङेराम्

श्रिया+आम् दीर्घः), पक्षे श्रियि। श्रियोः श्रीषु हे श्रीः, हे श्रियौ, हे श्रियः।

प्रधीशब्दस्य वृत्तिकारादीनां मते लक्ष्मीवद्रूपं, कैयटमते पुंवद्रूपम्। प्रकृष्टा धीरिति विग्रहे तु लक्ष्मीवत्, अमि शसि च प्रध्यं, प्रध्य इति विशेषः। सुष्ठुधीर्यस्याः, सुष्ठु ध्यायति वेति विग्रहे वृत्तिकारमते सुधीः श्रीवत्, मतान्तरे पुंवत्, सुष्ठुधीरिति विग्रहेतु श्रीवदेव। ग्रामणीः, पुंवत्। एवं खलपूप्रभृतीनामपि बोध्यम्।

इति ईकारान्तस्त्रीलिङ्गाः।

उकारान्तस्त्रीलिङ्गाः—धेनुशब्दः

धेनुः धेनू, धेनवः। धेनुम्, धेनू (शम्भुवत्) धेनूः (स्त्रीत्वान्न सत्वन्)। धेन्वा (धेनु+आ उस्थाने व), धेनुभ्यां, धेनुभिः। ङे, ङसि, ङस् आम्, ङिषु विकल्पेन नदीत्वम् नदीत्वपक्षे, आमागमः, आमोनाम् ङेराम् च (२।३४८, २।३।३५, २।३।५१) अन्यत्र पक्षे शम्भुवत्। धेन्वै, धेनवे, धेन्वाः धेनोः २ धेन्वोः, धेनूनाम्। धेन्वाम् धेनौ धेन्वोः धेनुषु। एवं रज्जु प्रभृतयः क्रोष्टुशब्दस्य क्रोष्ट्री, क्रोष्ट्रौ इत्यादि नदीवत्।

ऊकारान्ताः वधूशब्दः वधूः, वध्वौ, वध्वः। वधूम् वध्वौ, वधूः।

वध्वा, वधूभ्यां गौरीवत् विशेषस्तु गौरीशब्दस्य ईस्थाने योभवति अस्य तु ऊ स्थानेव इति। तथाहि ङयादौ—वध्वै वध्वाः, वधूनां वध्वामिति।

भ्रूः श्रीवत् विशेषस्तु स्त्रीशब्दस्य यत्र ईस्थाने इयादेशो भवति, अस्य तत्र ऊस्थाने उवादेश इति भ्रूः, भ्रुवौ, भ्रुवः। ङयादौ भ्रुवै भ्रुवे भ्रुवा भ्रुवः भ्रूणां भ्रुवाम्। भ्रुवां भ्रुवि इति सम्बोधने हे भ्रूः,

एवं सुभ्रूशब्दोऽपि सम्बोधने सुभ्रूरिति "हा पितः क्वासि हे सुभ्रु इति भट्टिप्रयोगः प्रमाद एवायमिति वहव इति च सिद्धान्तकौमुदी। पद्म-नाभस्तु भ्रु वश्चाऽन्यपदार्थे इति सूत्रेण भट्टिप्रयोगस्य साधुत्वमाह। ऊकारस्य ह्रस्वत्वे सुलोपात् सुभ्रु इति।

खलपूः पूम्वत्।

पुनर्भूः, पुनर्भ्वौ, पुनर्भ्वः। पुनर्भ्वमित्यादि पुनर्भूनाम्। सम्बोधने पुनर्भु इति सिद्धान्तकौमुदी। वर्षाभूः पुनर्भूवत् सम्बोधने तु वर्षाभू-रिति सिद्धान्तकौमुदी, कैयटमते वर्षाभु। स्वयम्भूः पुंवत्। मातृशब्दः पितृवत् माता, मातरौ, मातरः। मातरं मातरौ शसि तु मातॄरिति।

स्वसृ शब्दस्तु धातृवत् स्वसा, स्वसारौ स्वसारः। शसि तु स्वसॄरिति। यातृ शब्दः मातृवत्। द्यो शब्दः गोवत्। रै शब्दः सुरैवत्। राः, रायौ, राय इति

इत्यजन्तस्त्रीलिङ्गशब्दाः।

## अथाजन्तक्लीवलिङ्गशब्दाः।

अकारान्तः फलशब्दः फलम् (सु+अतोऽम् (२।२।६०) इति सुस्थाने अम्), फले (औ, औङ्श्चीति (२।२।५०) औस्थाने शी (ई) फल+ई गुणः), फलानि (जस्, तस्यस्थाने शि (इ) नुमा-गमश्च (२।३।६२) उपधा दीर्घः (२।३।८४) एवं पुनरपि फलम्, फले फलानि टादौ रामवत्। एवं सर्व्वे अकारान्ताः; विशेषस्तु एकतरभिन्नैः डतर, डतम प्रत्ययान्त, इतर अन्य, अन्यतरशब्दानां क्लीवे स्वमोर्ड्डतु (अत्) स्यात् (२।२।६१) कतरत्, कतमत्, इतरत्, अन्यत्, अन्य-तरत् अन्यतमशब्दस्य तु अन्यतममिति, एकतरमिति अन्यत्र औप्रभृतिषु फलवत्। यत् तत्, एतत् किम् इत्येषां स्वमोर्यत्, तत्, एतत्, किम्

इति रूपाणि, एतच्छब्दस्य तु अन्वादेशे एनदिति अन्यत्र विभक्तिषु फल-
वत्। यत् ये, यानि, तत् ते, तानि, एतत्, एनद्, एते, एतानि. किम्,
के, कानि। अजर शब्दस्य अजरम् (फलवत्), अजरसी (वाचिजराया
इति जरसादेशः, औ ङीति औ स्थाने शी (ई) अजरस् ई अजरसी),
पक्षे अजरे (फलवत्), अजरांसि (जश्शसोः शिरिति जसःस्थाने शिः
(इ) नुमागमश्च; ततः सान्तमहत इति दीर्घः (२।१।८३) पक्षे अज-
राणि (फलवत्)। एवं पुनरपि शेषं पुम्वत्। हृदय शब्दः—हृदयं,
हृदये, हृदयानि। हृदयं, हृदये फलवत् शसादौ तु (२।३।१३९)
विकल्पेन हृदादेशो भवति, हृदादेशपक्षे हृन्ति, हृदा, हृद्भ्यामित्यादि,
पक्षे तु फलवत्।

शेषास्वित्यभते मांसास्योदकानां शसादौ यथाक्रमं मांस, आसन्, उदन्
इत्यादेशा भवन्ति। तत्तदादेशपक्षे शसादौ मांस शब्दस्य, मांसि, मांसा,
मांभ्यामित्यादि, आस्य शब्दस्य तु आसानि, आस्ना, आसभ्यामित्यादि,
उदानि, उद्ना. उदभ्यामित्यादि, आस्ना, उद्ना अनोऽस्याप इति अकार-
लोपः। पक्षे फलवत्। इतरेतरान्योन्यपरस्परमिदं त्रयं क्रियाव्यतिहार
वृत्ति निपात्यते नित्यमेकवचनं क्लीवञ्च ; तेभ्यश्च स्त्रीनपुंसकयोर्वर्त्तमानेभ्यः
सुप आम् वा स्यात्। इतरेतरं इतरेतराम् स्त्रियौ, कुले वा। एवं
द्वितीयायामपि। इतरेतरेण इतरेतराम्वा स्त्रीभ्यां कुलाभ्यां स्त्रीभिः
कुलैर्वा। इतरेतराय, इतरेतराम्वा स्त्रीभ्यामित्यादि। इतरेतरात्
इतरेतराम्वा स्त्रीभ्यामित्यादि। इतरेतरस्य, इतरेतराम् वा स्त्रियोः,
कुलयोः इत्यादि। इतरेतरे, इतरेतराम्वा स्त्रियोरित्यादि। एवमन्योन्यं
मन्योन्यां वा, परस्परं परस्परां वा। अन्योऽन्यस्याऽन्योऽन्याम् परस्परस्य
परस्परामित्यादि। पुंसि तु आमेव न भवति, क्लीवैकत्वञ्च भवति।
इतरेतरं, इतरेतरेणेत्यादि। एवं सर्वत्र

इकारान्ताः दधिशब्दः दधि (सु स्वमोर्लुगिति (२।३।५९) सोर्लुक्), दधिनी (औ, तस्य स्थाने शि (इ) नुमागमः, उपधा दीर्घः) एवं पुनरपि दधि, दधिनी, दधीनि। दध्ना (टा, अस्थिदधीति। (२।३।६५) अन्तोऽटन् अनोऽट्लोप इति अकारलोपः (२।३।१२५)।, दधिभ्यां दधिभिः। एवं ङयादौ दध्ने, दध्नः, १ दध्नोः २ दध्नाम्, दध्नि, दधनि (अन्तोऽटन् ङिश्योर्वेति विकल्पेन अकारलोप,) दध्नोः दधिषु एवं अस्थि सक्थि, अक्षिशब्दाः एतेभ्यः अन्येषां इकारान्तानां टादौ हरिवत्। शुचि प्रभृति विशेषणशब्दानान्तु टादौ विकल्पेन पुम्वत् भवति. यत्र पुम्वद्भावो न तत्राजादौ सुपि, नुमागमः (२।३।६१) शुचिना, शुचिने, शुचिनः २ शुचिनोः, शुचीनाम् शुचिनि, शुचिषु। एवमन्येषामिकारान्त-विशेषणशब्दानाम्

अथेकारान्तविशेष्यशब्दाः वारि वारिणी, वारीणि। वारि वारिणी, वारीणि, दधिवत्। वारिणा (हरिवत्) वारिभ्यां वारिभिः। वारिणे (ङे, नुम (२।३।६३), वारिभ्याम्, वारिभ्यः। वारिणः २ (ङसि, ङस नुम् सस्थाने;) वारिणोः २ (ओस् नुम् सस्थाने;, हरिवत)।. वारिणि (ङि, नुम्) वारिषु (हरिवत्)। सम्बोधने हे वारे, हे वारि वा (२।३।२०), हे वारिणी, हे वारीणि। अनादिप्रभृतिविशेषणशब्दानां शुचिवद्रूपम्। द्विशब्दस्य स्त्रीलिङ्गवत् त्रिशब्दस्य त्रीणि त्रीणि ततः पुम्वत्; सुधिशब्दस्य टादौ, सुधिया, सुधिनेत्यादि, प्रधिशब्दस्य प्रध्या प्रधिनेत्यादि; इतीकारान्ताः। उकारान्तो मधुशब्दः मधु (सुलुक् (२।३।५९), मधुनी (औ, शी, नुम्)। मधूनि (जश, शि, नुम् उपधादीर्घः)। पुनरपि मधु, मधुनी, मधूनि। टादौ मधुना, मधुने, मधुनः २, मधुनोः २, (ओस् नुम्) मधूनाम् (हरिवत्), मधुनि, मधुषु मधो, मधु नी, मधूनि।

सानुशब्दस्य मधुवत् रूपं, शसादौ तु विभाषया स्नुआदेशः । स्नूनि, सानूनि एवं परत्रापि ।

प्रियक्रोष्टुशब्दं प्रियक्रोष्टुनी प्रियक्रोष्टूनि । टादौ पुम्वत्पक्षे प्रियक्रोष्ट्रा प्रियक्रोष्टुना, प्रियक्रोष्ट्रे, प्रियक्रोष्टवे । इत्यादि अन्यत्र नुमेव प्रियक्रोष्टुना, प्रियक्रोष्टुने इत्यादि । (२ । ३ । ५८) आमि तु प्रियक्रोष्टूनाम् (हरिवत्) सुलूशब्दः ऊकारस्य ह्रस्वत्वे सुलु इति रूपं भवति सुलु, सुलुनी, सुलूनि पुनस्तथा मधुवत् टादौ सुल्वा सुलुना इत्यादि ।

धातृ शब्दः धातृ, धातृणी, धातॄणि पुनस्तथा टादौ धात्रा, धातृणा इत्यादि । सम्बोधने धातः धातृ, धातृणी, धातॄणि ।

प्रशस्ता द्यौर्यत्र कुले तत्प्रद्यु, प्रद्युशब्दः, मधुवत् टादौ पुम्वत् न भवतीति सिद्धान्तकौमुदी ।

प्रशस्ता रा यत्र तत् तत् प्ररि वारिवत् प्ररि प्ररिणी, प्ररीणि, प्ररिणा प्रराणेति पद्मनाभः भ्यामादौ तु प्रराभ्याम् प्रराभिः (२।३।६६) इति । आमि तु प्रराणाम्, प्ररीणामिति सिद्धान्तकौमुदी । शोभना नौ यत्र सुनुशब्दः । मधुवत् ।

इति अजन्तक्लीवलिङ्गशब्दाः ।

## सुपाम् ।

### (सामान्य नियमाः)

(१) अव्ययात् सुपोलुक् ।

(२) ऐकार्थ्ये (पदानां प्रत्ययैर्योगे, समासे च) सुपोलुक् । तथाऽदन्तभिन्नादव्ययीभावसमासानिष्पन्नात् पदाच्च सुपोलुक् । अदन्तादव्ययीभावात्तु सुपः अम् भवति, पञ्चम्या न भवति, तृतीया सप्तम्योस्तु विकल्पे-

नाम् भवति। उपकुम्भं ; उपकुम्भेन उपकुम्भं, उपकुम्भात्, उपकुम्भे, उपकुम्भम्।

सु। इतोलोप इति उकारलोपः, ततश्चावशिष्टस्य स् इत्यस्य हल्, ङी, आप् इत्येतेभ्य उत्तरस्य लोपो भवति। तेन सह ऋकारस्यात्वं, तस्मिन् परे अत्वन्तासन्तस्य उपधा दीर्घः। क्लीबे तस्य लुक्, अदन्त क्लीवात्तु अम्। अन्यत्र तस्य स्थाने विसर्गः। इदमादौ विशेषनियमा द्रष्टव्याः। एवमन्यत्रापि विभक्तौ।

औ। एतेन सह इदुतोर्दीर्घः, ऋकारस्य क्वचिद्वृद्धिर्गुणश्च क्वचित्, स्त्रियां आपः, क्लीवात् सामान्याच्च तस्य स्थाने शी (ई)। तस्मिन् परे इदन्तात् क्लीवात् नुम् च) अन्यत्र यथाप्राप्ति वृद्ध्यादयः।

जस्। तस्मिन् परे घिसंज्ञकस्य, गुणः, ऋदन्तस्य वृद्धिर्नुमश्च, क्लीवे-जसः स्थाने शि झलचोर्नुम च) सर्व्वनाम्नः पुंसि जश्च इत्। इति प्रत्ययान्तषान्तनान्त संख्यावाचकेभ्यो लुक्। अन्यत्र यथाप्राप्ति दीर्घादयः लुक, अष्टन् शब्दात् औश्च।

अम्। तस्यातो सह पूर्व्वाक एकाक्। क्लीवे लुक् अदन्ता तु अम्।

औट्। औवत्।

शस। पूर्व्वाकोदीर्घः, पुंसि तु सश्च न ; अन्यत्र च जश्वत्। *

टा। अदन्तात् टा स्थाने इन, घिसंज्ञकाददस्शब्दाच्च टा स्थाने ना, स्त्रियां आपः अत् टा परे। अन्यत्र यथाप्राप्ति दीर्घादयः।

---

* शसादौ स्वचिपरे क्विबन्तधातुनिष्पन्नानामादन्त शब्दानामाकार लोपः स्यात्। लुप्त नकारस्याश्वाघसंरकारस्यापि। वस् प्रत्ययान्तस्यावा सह वस्य उत्। श्व युवमघोनामपि वस्य उत्। वाहः, आकारेण सह वस्यौकारः। अनन्तानां अकारलोपः संयुक्ताभ्यां वकारमकाभ्यां मन्यनामन्तस्याकारलोपोनभवति। ङौ तु विकल्पेन लोपो भवति।

भ्याम् । अस्मिन् परे अकारस्य दीर्घः ;

भिस् । अदन्तात् भिसः स्थाने ऐः ।

ङे । अदन्तादस्य स्थाने यः तस्मिन् यकारे परे अकारस्य दीर्घः सर्व्वनाम्नोऽदन्तात् तस्य स्थाने स्मै भवति । †

भ्याम् । पूर्व्ववत् ।

भ्यः । अस्मिन् परे अकारस्थाने एकारः ।

ङसि । अदन्तादस्य स्थाने आत् भवति । सर्व्वनाम्नोऽदन्तात् स्मादादेशः ख्यत्यात्‌ऽदन्तात्‌च तस्याकारस्थाने उकारः । अन्यत्र यथाप्राप्ति दीर्घगुणादयः ।

भ्याम्, भ्यस । पूर्व्ववत् ।

ङस । अदन्तादस्य स्थाने स्यः स्यात्, ख्यात्यात्‌ऽदन्तात्‌वस्याकार स्थाने उकारः । अन्यत्र यथाप्राप्ति दीर्घगुणादयः ।

ओस् । अस्मिन् परे अकारस्यापस्य 'अय्' भवति । अन्यत्र यथा प्राप्ति वृद्ध्यादयः ।

आम् । रषनान्तसंख्या, ह्रस्वस्वरान्त, नदीसंज्ञक, आबन्तेभ्यः आमः स्थाने नामादेशः । नामि परे ह्रस्वस्यदीर्घश्च, सर्व्वनाम्न आमः स्थाने साम् भवति, तस्मिन् परे अकार स्थाने एकारश्च ।

ङि । घिसंज्ञकात् ङि स्थाने औः, तस्मिन् परे घि स्थाने अश्च । आगमाकार नीभ्यां ङेः आम् स्यात् । अदन्तात् सर्व्वनाम्नः ङि स्थाने स्मिन् । अन्यत्र यथाप्राप्तं दीर्घ गुणादयः ।

ओस् । पूर्व्ववत् ।

---

† ङिति परे घिसंज्ञकस्य गुणः स्यात्, नदीसंज्ञकादाकारागमः, आबन्तात् याडागमः, सर्व्वनाम्न आबन्तात् स्यागमः पुनश्च ।

सुप् । प इत्, तस्य, इतोलोपः । सुपि परे अकार स्थाने एकार । ‡

(१) सम्बोधनैकवचनस्य (सम्बोधने) एङः, ऋस्वान्ताच्चलोपो, भवति ।

(२) सम्बोधनैकवचने परे ऋस्वस्य गुणः स्यात् क्लीवात् वा। अम्वार्थ, नदीसंज्ञक पुंस्त्र तुरन् डुहां ऋस्वः, भ् वस्वान्यपदार्थ ऋस्वः । आप एच्च ।

---

‡ पदान्ते झपन्तानां गड़, दवां स्थाने घढ, ग, भाभवन्ति। वसुप्रत्ययान्त, स्रंसु ध्वंसु, अनडुहामन्तस्य द। धातोर्भस्य न स्यात्। पदान्त रेफात् प्राक् इनोर्दीर्घः। हलि परे वकरात् पूर्व्वस्थितस्यापि इनोर्दीर्घः। पदान्तस्य लोपः। झलिपरे पदान्तस्य हस्य ढः स्यात्, दादेर्हकारस्य तु घः स्यात्।

# अथ हलन्त—शब्दानां रूपाणि ।

## तत्र पुंलिङ्गशब्दरूपाणि ।

### क-कारान्त सर्व्वशक् शब्दः ।

सर्व्वशक्+सु हलङ्याप इति (२।३।१८) सुलोपः, पक्षे वाऽवसाने इति विकल्पेन कस्थाने ग, द्वित्वञ्च (१।२।५५) सर्व्वशग्, सर्व्वशक्, सर्व्वशग्ग्, सर्व्वशक्+औ सर्व्वशकौ, सर्व्वशक्+जस् सर्व्वशकः । सर्व्वशक्+अम् सर्व्वशकम्, सर्व्वशक्+औ सर्व्वशकौ, सर्व्वशक् शस् सर्व्वशकः । सर्व्वशक्+टा (आ) सर्व्वशका, सर्व्वशक्+भ्याम् भय-स्तृतीय इति (१।२।५२) क स्थाने ग-सर्व्वशग्भ्यां सर्व्वशक्+भिः (१।२।५२) क स्थाने ग, सर्व्वशग्भिः । सर्व्वशक्+ङे सर्व्वशके, सर्व्वशग्भ्यां, सर्व्वशग्भ्यः । सर्व्वशक्+ङसि सर्व्वशकः, सर्व्वशग्भ्यां, सर्व्वशग्भ्यः । सर्व्वशक्+ङस् सर्व्वशकः, सर्व्वशक्+ओस् सर्व्वशकोः सर्व्वशक्+आम् सर्व्वशकाम् । सर्व्वशक्+ङि सर्व्वशकि, सर्व्वशकोः सर्व्वशक्+सु इचकुर इति (२।३।३५) षत्वं सर्व्वशक्षु । सम्बोधने सर्व्वशक् प्रथमैक—वचनवत् । एवं अन्येऽपि ककारखकाराद्यन्ताः ।

गोरक्ष् (गां रक्षतीति गो+रक्ष्+क्विप्) शब्दः गोरक्ष्+सु हलङ्याप इति (२।३।१८) सुलोपः स्कोर्निंजाद्योर्भलि चेति (२।३।१०३) अन्तस्थितस्य च इत्यस्यादिभूत ककारलोपः गोरष् इति स्थिते षढ इति (१।२।५१) ष स्थाने ट्, गोरट्, पक्षे वाऽवसाने इति (१।२।५५) टकारस्य डकारे, द्वित्वे च कृते गोरड्, गोरट्ट्, गोरड्ड्, गोरक्ष्+औ गोरक्षौ । गोरक्ष्+जस् गोरक्षः । गोरक्ष्+अम् गोरक्षम्, गोरक्षौ, गोरक्षः ।

गोरक्ष्+टा गोरक्षा, गोरक्ष्+भ्याम् स्कोर्नीति ककारलोपः, षष्ट इति षकार स्थाने टकारः, झयस्तृतीय इति (१।२।१२) टकार स्थाने डकारः गोरड्भ्याम्, एवं गोरड्भिः। गोरक्ष्+ङे गोरक्षे, गोरड्भ्यां, गोरड्भ्यः। गोरक्ष्+ङसि गोरक्षः, गोरड्भ्यां, गोरड्भ्यः। गोरक्ष्+ङस् गोरक्षः, गोरक्ष्+ओस् गोरक्षोः, गोरक्ष्+आम् गोरक्षाम्। गोरक्ष् ङि गोरक्षि, गोरक्षोः गोरक्ष्+सु सुप्तङ्गित इति (२।३।३) पदत्वं ततः स्कोर्नीति ककार लोपः षष्ट इति षकार स्थाने ट् गोरट सु पश्चे नटाभ्यां से इति (१।२।६२) तुकि कृते गोरट्त्सु। सम्बोधने गोरट्, गोरड् इति प्रथमैक वचनवत्।

काष्ठतक्ष् (काष्ठ+तक्ष्+क्विप्) शब्द प्रभृतीनां एवमेव रूपाणि, यथा काष्ठ+तक्ष्+सु काष्ठतट्, ड्, काष्ठतक्षौ, काष्ठतक्षः। सिद्धान्तकौमुदी-मते तक्षि रक्षिभ्यां ण्यन्ताभ्यां क्विपि तु स्कोः इति न प्रवर्त्तते णिलोपस्य स्थानिवद्भावात्। तस्मात् संयोगान्तलोपः। तथाहि गो+रक्ष् णिच, गोरक्षि+क्विप्, णिचो लोपः, गोरक्ष् इति शब्दः ततः सु, हल्ङ्याप इति सुलोपः अत्र स्कोर्नीत्यस्य प्रवृत्त्यभावात् संयोगान्तस्येति (२।३।१०५) षकार—लोपः गोरक्, पक्षे गोरग्, गोरक्षौ, गोरक्षः इति गोरक्षौ गोरक्षः। गोरक्षम्, गोरक्षौ, गोरक्षः। गोरक्षा, गोरग्भ्याम्, गोरग्भिः। गोरक्षे, गोरग्भ्यां, गोरग्भ्यः। गोरक्षः, गोरग्भ्यां, गोरग्भ्यः। गोरक्षः, गोरक्षोः, गोरक्षाम्। गोरक्षि, गोरक्षोः गोरक्षु। सम्बोधने तु गोरक्ष् इति एवं तक्ष्+णिच्+क्विप् तक्, तग्, इत्यादि।

पिपक्ष् (पच्+सन् पिपक्ष+क्विप्) शब्दः—पिपक्ष्+सु हल्ङ्याप् इति सुलोपः अत्र क्ष इत्यस्यादिभूतककारस्य षकारजातत्वाभावात् स्कोर्नीत्यस्य न प्रवृत्तिः, संयोगान्तस्य (२।३।१०४) तु प्रवृत्तिः ततोऽन्तस्थितस्य षकारस्य लोपे पिपक्, पक्षे वाऽवसाने इति

पिपग्, पिपक्, पिपगम्, एवं अन्यत्र खन्तगोरव्‌वत् । एवं मांसपिपच्, विवच्, दिधच् शब्दानां रूपाणि ।

लुड् शब्दः लुड्, लुडौ, लुडः । लुडं लुडौ लुडः । लुडा, लुड्भ्यां, लुड्भिः । लुडे, लुड्भ्यां, लुड्भ्यः । लुडः, लुड्भ्यां, लुड्भ्यः । लुडः लुडोः लुडाम् । लुडि, लुडोः लुड्सु पक्षे डणाभ्यामिति । (१।२।४६) कु लुड्त्सु । सम्बोधने लुड् । एवं लड्, लृड् प्रभृतयो डकारान्ताः ।

चकारान्त सुवाच् शब्दः (शोभना वाग्यस्य सः) सुवाच् + सु हलङ्याप इति सुलोपः, चोः क्वित इति (२।३।११०) च स्थाने क्, सुवाक् पक्षे वाऽवसाने इति सुवाग्, सुवाक्, सुवाग्ग सुवाचौ, सुवाचः । सुवाचं, सुवाचौ, सुवाचः । सुवाचा सुवाच्+भ्याम् चोः क्विति च स्थाने क्, झय स्तृतीयः (१।२।५२) कस्थाने ग् सुवाग्भ्यां, सुवाग्भिः । सुवाचे, सुवाग्भ्याम्, सुवाग्भ्यः । सुवाचः, सुवाग्भ्याम्, सुवाग्भ्यः । सुवाचः, सुवाचोः, सुवाचाम् । सुवाचि, सुवाचोः, सुवाक्षु (सुवाच्+सुप् चोः क्विति चस्थाने क्, इच् कुर इति (२।४।३५) षत्वम्) सम्बोधने सुवाक् ।

प्राच् शब्दः (प्र+अञ्च+क्विन्) * प्राच्+सु । हलङ्याप इति सुलोपः उगिदचोरिति (२।३।७६) नम्, संयोगान्तस्येति (२।३।८५) चकारलोपः, कः क्विन्नित्यस्येति (२।३।८५) नकारस्थाने ङ्=प्राङ्, प्राच्+औ उगिदचोरितिनुम् चुणाचुरिति (१।२।५८) नकारस्थाने ञ् प्राञ्चौ, प्राञ्चः । प्राच्+अम् प्राञ्चम् प्राच्+औ प्राञ्चौ, प्राच्+शस् अचोऽतः प्रागदीर्घश्चेति (२।३।१३१) अकारलोपः, पूर्व्वदीर्घश्च प्राचः । प्राच्+टा अकारलोपः पूर्व्वदीर्घश्च प्राचा, प्राच्+भ्याम्

* प्र+अञ्च+क्विन् अनिदितामनुषङ्गस्येति, (३।३।७३) उपधानकारलोपः प्र+अच् अकः सवर्णे (१।२।२) इति दीर्घः प्राच् ;

चोः कु इति (२।३।१३४) चस्थाने क, भयतृतीय इति (१।२।५२) कस्थाने ग, प्राग्भ्याम्, प्राच्+भिः प्राग्भिः। प्राच्+ङे अकारलोपः, पूर्व्वदीर्घः (२।३।१३१) प्राचे, प्राग्भ्याम्, प्राग्भ्यः। प्राच्+ङसि अकारलोपः पूर्व्वदीर्घः प्राचः, प्राग्भ्यां प्राग्भ्यः। प्राच्+ङस् अकारलोपः पूर्व्वदीर्घः प्राचः, प्राच्+ओस् अकारलोपः पूर्व्वदीर्घः प्राचोः, प्राच्+आम्, अलो, पू, दी, प्राचाम्। प्राच्+ङि अ, लो, पू, दी, प्राचि, प्राच्+ओस् (पूर्व्ववत्) प्राचोः, प्राच्+सु चोः कु इति, च स्थाने क, इच् कुर इति (२।२।१५) षत्वं प्राक्षु। सम्बोधने प्राङ्,

## देवद्राच् (देव+अञ्च्+क्विन्) शब्दः *

देवद्राच्+सु हलङ्याप इति सुलोपः उगिदचोरिति नुम् संयोगान्तस्येति चलोपः कः क्विनन्तस्येति नकारस्थाने ङ देवद्राङ्, देवद्राञ्चौ, देवद्राञ्चः। देवद्राञ्चम्, देवद्राञ्चौ (प्राच्वत्) देवद्राच्+शस् अचोऽतः प्राग्दीर्घश्चेति अकारलोपः ततोनिमित्तस्यापाये नैमित्तिकस्यापाय इति यकारस्य अपायः, पूर्व्ववर्त्तिन इकारस्य दीर्घः देवद्रीचः। देवद्राच् (पूर्व्ववत् अकारलोपः इकारदीर्घः देवद्रीचा, देवद्राग्भ्याम्, देवद्राग्भिः (प्राग्वत्)। देवद्राच्+ङे (अलो इ—दीर्घः) देवद्रीचे, देवद्राग्भ्यां, देवद्राग्भ्यः। देवद्राच्+ङसि (अ, लो, इ, दी,) देवद्रीचः, देवद्राग्भ्यां, देवद्राग्भ्यः। देवद्राच्+ङस् (अ, लो, इ, दी,) देवद्रीचः, देवद्राच्+ओस्, अ, लो, इ, दी, देवद्रीचोः, देवद्राच्+आम् (अ, लो, इ, दी,) देवद्रीचाम्। देवद्राच्+ङि (अ, लो, इ, दी) देवद्रीचि, देवद्रीचोः, (पूर्व्ववत्) देवद्राक्षु (प्राच्वत्)। सम्बोधने देवद्राङ्।

* अनिदितामिति नकार लोपः, विष्वग्देव सर्व्वनाम्नामिति (२।३।१३९) टिस्थाने अद्रि, देवद्रि+अच् इकोयणचीति (१।३।१९) इकार स्थाने य, देवद्राच्।

प्रत्यच् (प्रति+अञ्च्+क्विन्) शब्दः प्रत्यङ्; प्रत्यञ्चौ, प्रत्यञ्चः । प्रत्यञ्चम्, प्रत्यञ्चौ प्राचवत् । शसादौ देवद्र्यचवत् । एवं दध्यच् शब्दोऽपि । विश्वद्र्यच् (विश्वक्+अञ्च+क्विन्, विश्वग्देवेति टि स्थाने अद्रि इकोयणचीति इकार स्थाने य.) शब्दः विश्वद्र्यङ्, विश्वद्र्यञ्चौ विश्वद्र्यञ्चः । इत्यादि देवद्र्यच्वत् एवं तद्र्यच्, यद्र्यच्, कद्र्यच्, भवद्र्यच् अन्यद्र्यच् (तत्+अञ्च+क्विन्, यत्+अञ्च+क्विन्, किम्+अञ्च्+क्विन्, भवत्+अञ्च्+क्विन् अन्य+ अञ्च्+क्विन्) प्रभृतयः । अदस्पूर्व्वस्य क्विनन्तस्याञ्चतेश्चत्वारि रूपाणि भवन्ति । अमुमुयच्, अदमुयच्, अदद्र्यच्, अमुद्र्यच् (२३ १३४) सूत्रं दृश्यताम् । एषां रूपाणि यथा—

अमुमुयङ् अमुमुयञ्चौ, अमुमुयञ्चः । अमुमुयञ्चं अमुमुयञ्चौ, अमुमुईचः । अमुमुईचा, अमुमुयग्भ्यां, अमुमुयग्भिः । अमुमुईचे, अमुमुयग्भ्यां, अमुमुयग्भ्यः । अमुमुईचः, अमुमुयग्भ्यां, अमुमुयग्भ्यः । अमुमुईचः, अमुमुईचोः, अमुमुईचाम् । अमुमुईचि अमुमुईचोः, अमुमुयक्षु । एवं अदमुयच् इत्यस्यापि । अदद्र्यच्, अमुद्र्यच् इत्येतयोस्तु देवद्र्यच्वत् रूपाणि । सध्र्यच् (सह+अञ्च+क्विन्, सह समः सध्रि समी (२।३।१३५) सह स्थाने सध्रि इकोयणचीति इकार स्थाने य) शब्दः देवद्र्यच्वत् । सम्यच् (सम+अञ्च्+क्विन्, (२।४।१३५) सम स्थाने समि आदेशः, इकार स्थाने य) शब्दः प्रत्यच्शब्दवत् ।

तिर्य्यच् (तिरस्+अञ्च्+क्विन् तिरसस्तिर्य्यलोपे (२।३।१३६) इति तिरस स्थाने तिरि आदेशः, इकार स्थाने य) शब्दः । तिर्य्यङ्, तिर्य्यञ्चौ, तिर्य्यञ्चः । तिर्य्यञ्चम् तिर्य्यञ्चौ (प्राच्वत्) शसि अकार लोपे 'तिरि आदेशाभावात् तिरश्चः इति रूपं एवं सर्व्वत्राजादौ सुपि । टादौ तिरश्चा, तिर्य्यग्भ्यां तिर्य्यग्भिः । तिरश्चे, तिर्य्यग्भ्यां तिर्य्यग्भ्यः । तिरश्चः, तिर्य्यग्भ्याम्, तिर्य्यग्भ्यः । तिरश्चः, तिरश्चोः, तिरश्चाम् । तिरश्चि, तिरश्चोः, तिर्य्यक्षु ।

उदच् (उत्+अञ्च्+क्विन्) शब्दः—उदङ्, उदञ्चौ उदञ्चः । उदञ्चम् उदञ्चौ. उदच्+शस् उदईत् (२।१।१६२) इति अकारस्थाने ईकारादौ उदीच्+शस् उदीचः एवं सर्व्वत्राजादौ सुपि अकार स्थाने ईकार भवति । उदीचा उदग्भ्याम्, उदग्भिः । उदीचे, उदग्भ्यां, उदग्भ्यः । उदीचः, उदग्भ्यां उदग्भ्यः । उदीचः, उदीचोः, उदीचाम् । उदीचि उदीचोः. उदक्षु ।

नाञ्चेः पूजायां (३।१।७६) इति पूजार्थे अञ्चेः क्विनन्तस्य न लोपाभावात् अचोऽतः (१।१।३१) इति सूत्रस्य न प्राप्तिस्तत्र रूपाणि यथा । प्राङ्, प्राञ्चौ, प्राञ्चः । प्राञ्चं, प्राञ्चौ (पाचवत्) ; प्राञ्चः । प्राञ्चा, प्राञ्च्+भ्याम् संयोगान्तस्येति (२।१।१०५) चलोपः, ङः क्विनन्तस्येति (२।१।९५), न स्थाने ङ् प्राङ्भ्यां, एवं प्राङ्भिः । प्राञ्चे, प्राङ्भ्यां प्राङ्भ्यः । प्राञ्चः प्राङ्भ्यां, प्राङ्भ्यः । प्राञ्चः, प्राञ्चोः, प्राञ्चाम् । प्राञ्चि प्राञ्चोः, प्राञ्च्+सु संयोगान्तस्येति चलोपः, ङः क्विनन्तस्येति न स्थाने ङ् तत ङ्याभ्यां) कुट्पुर्रीति (१।२।४८) ङकारात् 'कु' आगमः, इचकुर इति (१।१।३५) 'सु' इत्यस्य सकारस्य षत्वं प्राङ्क्षु, पक्षे 'कु' आगमाभावात् प्राङ्षु एवं पूजार्थे प्रत्यङ् आदयः ।

क्रुञ्च् (क्रुञ्च् धातु+क्विन्) शब्दः क्रुञ्च्+सु हलङ्याप इति सुलोपः, संयोगान्तस्येति चकारलोपः, ङः क्विनन्तस्येति न स्थाने ङ् क्रुङ्, क्रुञ्च्+औ क्रुञ्चौ, क्रुञ्च्+जस् क्रुञ्चः । क्रुञ्च्+अम् क्रुञ्चम्, क्रुञ्च्+औ क्रुञ्चौ, क्रुञ्च्+शस् क्रुञ्चः । क्रुञ्च्+टा क्रुञ्चा, क्रुञ्च्+भ्याम्, संयोगान्तस्येति चकार लोपः ङः क्विनन्तस्येति न स्थाने ङ क्रुङ्भ्याम्, एवं क्रुञ्च्+भिः क्रुङ्भिः । क्रुञ्च्+ङे क्रुञ्चे, क्रुञ्च्+भ्याम्, क्रुङ्भ्याम्, क्रुञ्च्+भ्यस् क्रुङ्भ्यः । क्रुञ्च्+ङसि क्रुञ्चः, क्रुङ्भ्याम्, क्रुङ्भ्यः । क्रुञ्च्+ङस् क्रुञ्चः ; क्रुञ्च्+ओस् क्रुञ्चोः, क्रुञ्च्+आम् क्रुञ्चाम् । क्रुञ्च्+ङि, क्रुञ्चि, क्रुञ्चोः,

क्रुञ्च्+सुप् संयोगान्तस्येति चकारलोपः, कः क्विनन्तस्येति न स्थाने ङ क्रुङ्सु, पक्षे चकारलोपः, न स्थाने ङ् तत ङणाभ्यां वा कुट् इति। १। २। ४८। कु आगमः, सुपः सकारस्य षत्वं क्रुङ्क्षु।

## पयोमुच् शब्दः।

पयोमुच्+सु, हलङ्याप इति सु लोपः, चो. कु इति (२।३।१३४) च स्थाने क्, पक्षे वाऽवसाने इति (१।२।६६) विकल्पेन क स्थाने ग, पक्षे क्विलव पयोमुक्, पयोमुग्, पयोमुच्+औ पयोमुचौ, पयोमुच्+जस् पयोमुचः। पयोमुच्+अम् पयोमुचम्, औट्- पयोमुचौ, पयोमुच+शस् पयोमुचः। पयोमुच। टा पयोमुचा, पयोमुच्। भ्याम्, झयस्तृतीय इति (१।२।५२) च स्थाने ग्, पयोमुग्भ्याम्, एवं पयोमुच्+भिः पयोमुग्भिः। पयोमुचे, पयोमुग्भ्यां पयोमुग्भ्यः। पयोमुचः पयोमुग्भ्यां, पयोमुग्भ्यः। पयोमुच पयोमुचोः पयोमुचाम्। पयोमुचि, पयोमुचो पयोमुच्+सुप् चोः कु इति च स्थाने क् इचकुर इति सोः षत्व पयोमुक्षु, सम्बोधने पयोमुक् पयोमुग् इत्यादि।

एवं जलमुच् प्रभृतयः।

## सुवृश्च् (सु+व्रश्च+क्विप् भ्रस्जिग्रहीत्यादिना यण् इक् (१०६।३।२) शब्दः।

सुवृश्च्+सु, हलङ्याप इति सुलोपः व्रश्च् भ्रस्ज (१११।३।२) इति च स्थाने ष सुवृस्ष इति स्थिते, स्कोर्नेति सकारलोपः सुवृष् इति स्थिते षष्ट इति (५१।२।१) षकार स्थाने टकारः सुवृट्, सुवृश्च्+औ सुवृश्चौ, सुवृश्च्+जस् सुवृश्चः। अम्—सुवृश्चम्, औट्- सुवृश्चौ, शस्—सुवृश्चः। टा—सुवृश्चा, भ्याम्—सुवृड्भ्याम् (सुवृश्च्+भ्याम् चकार स्थाने षत्वं, सकार लोपः षस्थाने टत्वं, ततोझय स्तृतीय इति ट स्थाने डकारः) एव भिस सुवृड्भि। ङे सुवृश्चे

भ्याम्—सुवृड्भ्याम्, भ्यस्—सुवृड्भ्यः। ङसि—सुवृश्चः भ्याम्-सुवृड्भ्याम् भ्यस्—सुवृड्भ्यः। ङस्—सुवृश्चः, ओस्—सुवृश्चोः, आम्—सुवृश्चाम्। ङि—सुवृश्चि ओस्-सुवृश्चोः, सुप्—सुवृट्सु (चकारस्य षत्वं, सकार लोपः षस्थाने ट। पक्षे सुवृट्त्सु (६।२।२।२)। सम्बोधने सुवृट् सुवृश्चौ, सुवृश्चः। एवं वृक्षवृश्च्, मूलवृश्च् प्रभृतयः।

अच् (स्वरार्थकः) शब्दस्य तु।

अच्, अचौ, अचः। अचम्, अचौ, अचः। अचा, अजभ्याम् अजभिः। अचे, अजभ्यां, अजभ्यः। अचः, अजभ्यां, अजभ्यः। अचः अचोः, अचाम्। अचि, अचोः, अच्सु। शचाभ्यामधातोरिति। वार्त्तिकात् अच्शु इत्यादि। शिष्टप्रयोगत एवाऽस्य रूपाणि दर्शितानि।

छकारान्तः शब्दप्राछ्शब्दः।

शब्दप्राछ्+सु, हलङ्याप इति सुलोपः व्रश्चभ्रस्जेति छस्य षत्वं षष्ट इति (५।१।२।१) षस्य टत्वं, शब्दप्राट्, शब्दप्राछ्+औ छःशो वा सुवचीति (११२।३।२) विकल्पेन छस्य शत्वे शब्दप्राशौ, शब्द प्राछौ च, शब्दप्राछ्। जस् शब्दप्राछः, शब्दप्राशः। शब्दप्राछ् अम् शब्दप्राछं, शब्दप्राशम् शब्दप्राछ्+औट्, शब्दप्राछौ, शब्द प्राशौ, शब्दप्राछ्+शस्, शब्दप्राछः, शब्द प्राशः। शब्दप्राछ्+टा शब्दप्राछा, शब्दप्राशा, शब्दप्राछ्+भ्याम् छस्य षत्वं षस्य च टत्वं ततः झयस्तृतीय इति (५।२।२।१) ट स्थाने डकारे कृते शब्द प्राड्भ्याम् एवं भिसि शब्दप्राड्भिः। ङे- शब्दप्राछे, शब्दप्राशे, भ्याम् शब्दप्राड्भ्याम्, भ्यस्—शब्दप्राड्भ्यः। ङसि—शब्दप्राछः शब्दप्राशः, शब्दप्राड्भ्याम्, शब्दप्राड्भ्यः। ङस्—शब्दप्राछः, शब्दप्राशः, ओस्—शब्दप्राछोः, शब्दप्राशोः, आम्—शब्दप्राछाम्, शब्दप्राशाम्। ङि—शब्दप्राछि शब्दप्राशि, शब्दप्राछोः, शब्दप्राशोः, शब्दप्राट्सु शब्दप्राट्त्सु (सुवृश्च्वत्)।

*एवमन्येऽपि प्राङ्प्रभृतिङकारान्ताः ।*

जकारान्तः-युज् ( युज+क्विन् ) शब्दः ।

युज्+सु हलङ्याप इति सुलोपः युजेरसमासे इति (७७।३।२) इति नुम्, संयोगान्तस्येति जकार लोपः, युन् इति स्थिते क्विन्-न्तस्येति ( ८५।०।२) न स्थाने ङ युङ, युज्+औ युजेरेति नुम् चुनाचुः इति (५८।२।१) न स्थाने ञ युञ्जौ, एवं जस युञ्जः । अम्— युञ्जं, औट्- युञ्जौ, शस् युजः। टा –युजा, भ्याम् – युग्भ्याम् (युज् - भ्याम् चोः कुरिति (११४।३।२) च स्थाने ग्) एवं भिस—युग्भिः । ङे—युजे, युग्भ्याम, युग्भ्यः । ङसि—युजः, युग्भ्याम्, युग्भ्यः । ङस् युजः युजोः युजाम् । ङि युजि, युजोः, युक्षु (युज्+सुप् चोः कुरिति ज स्थाने ग्, खरि प्रथम इति (५४।२।१) ग् स्थाने क्, इच् कुर इति (३५।३।१) षत्वं ) । सम्बोधने युङ, युञ्जौ, युञ्जः ।

सुयुज शब्दस्य तु समासे नुमागमाभावात् । कः क्विनन्तस्येति जस्य कत्वे - सुयुक्, सुयुग, सुयुजौ, सुयुजः। सुयुजम, सुयुजौ, सुयुजः । सुयुजा, सुयुग्भ्याम्, सुयुग्भिः । सुयुजे, सुयुग्भ्याम् सुयुग्भ्यः । सुयुजः, सुयुग्भ्याम, सुयुग्भ्यः । सुयुजः, सुयुजोः, सुयुजाम् । सुयुजि, सुयुजोः, सुयुक्षु । सम्बोधने सुयुक्, सुयुजौ, सुयुजः । एवं अश्वयुज् प्रभृतयः ।

हुतभुज, हविर्भुज्, प्रभृतिशब्दानामपि अश्वयुजशब्दवत् रूपाणि भवन्ति । राज् शब्दस्य तु व्रश्च भ्रस्जेति सूत्रेण जकारस्य षत्वे —सुद्विष्वत् रूपाणि यथा -

राट्, राड्, राट्, राड्ड, राजौ, राजः । राजं, राजौ, राजः । राजा, राड्भ्याम्, राडभिः । राजे, राड्भ्याम्, राड्भ्यः । राजः राड्भ्याम्, राड्भ्यः । राजः, राजोः राजाम् । राजि, राजोः, राटसु राटत्सु । सम्बोधने—राट्, राड, राट्, राड्ड, राजौ, राजः । एवं सम्राजप्रभृतयः। विश्वराज् शब्दस्य विश्वस्य वसुराटोः (४४।२।४) ।

इति सूत्रेण राट् परं दीर्घत्वे विश्वाराट् विश्वाराड्, इत्यादि, विश्वराजौ, विश्वराजः । विश्वराजं, विश्वराजौ, विश्वराजः । विश्वराजा, विश्वाराड्भ्याम्, विश्वाराड्भिः । विश्वराजे, विश्वाराड्भ्याम्, विश्वाराड्भ्यः । विश्वराजे, विश्वाराड्भ्याम्, विश्वाराड्भ्यः । विश्वराजः, विश्वराजोः विश्वराजाम् । विश्वराजि, विश्वराजोः, विश्वाराट्सु, विश्वाराट्त्सु ।

परिव्राज् ( परित्यज्य सर्व्वं व्रजति परि+व्रज+क्विप्, दीर्घश्च, सन्न्यासी तदर्थः ) शब्दस्य व्रश्चभ्रस्जेति सूत्रेण पदान्ते जकारस्य षत्वे = परिव्राट्, परिव्राजौ, परिव्राजः इति विश्वराजवत् रूपाणि। विभ्राज् शब्दस्य—विभ्राट्, विभ्राजौ विभ्राजः । विभ्राड्भ्याम्, विभ्राड्भ्यः, विभ्राट्सु विभ्राट्त्सु । इत्यादि रूपाणि । राजि साहचर्य्यात् टुभ्राजृ दीप्तौ इति फणादिरेव गृह्यते, यस्तु एजृ, भ्रेजृ, भ्राजृ दीप्तौ इति तस्य कुत्वमेवेति सिद्धान्तकौमुदी वचनात् फणादेरन्यत्र विभ्राक् विभ्राजौ, विभ्राजः । विभ्राजं, विभ्राजौ, विभ्राजः । विभ्राजा, विभ्राग्भ्यां, विभ्राग्भिः । विभ्राजे विभ्राग्भ्यां, विभ्राग्भ्यः । विभ्राजः, विभ्राग्भ्याम्, विभ्राग्भ्यः । विभ्राजः, विभ्राजोः, विभ्राजाम् । विभ्राजि, विभ्राजोः, विभ्राक्षु इति रूपाणि ।

राजसृज् शब्दस्य व्रश्चभ्रस्जेति सूत्रेण पदान्ते जकारस्य षत्वे राजसृट्, राजसृजौ, राजसृजः । राजसृजं, राजसृजौ, राजसृजः । राजसृजा, राजसृड्भ्यां राजसृड्भिः । इत्यादि राज् शब्दवत् रूपाणि एवमन्येऽपि तनुसृजप्रभृतयः सृजन्ताः शब्दाः विश्वसृज शब्दस्य तु पद्मनाभमते 'न विश्वसृजः' इति वार्त्तिकबलात् व्रश्चभ्रस्जेति सूत्रस्याप्राप्तौ 'चोः कुमितः' इत्यनेन कुत्वे—विश्वसृक्, विश्वसृजौ, विश्वसृजः । विश्वसृग्भ्यां, विश्वसृक्षु, इत्येवं प्रकारेणैव रूपाणि भवन्ति। मतमेतच्च विधाता विश्वसृगविधिरित्यनेनाऽमर-

मित्यस्याप्यनुमोदितमिति प्रतीयते। सिद्धान्तकौमुदीकारमते विश्वसृज शब्दस्य पदान्ते जकारस्य षत्वमेव भवति। ततश्च विश्वसृट, विश्वसृजौ, विश्वसृजः। विश्वसृड्भ्याम्, विश्वसृड्भिः विश्वसृट्सु, विश्वसृट्त्सु इत्येवं प्रकाराण्येव रूपाणि भवन्ति। तथाहि दृह यजि सृजोः कुत्वं न, विश्वसृड़ादौ तु—न सृज दृशोः इति सूत्रे रज्जुसृड्भ्यामिति भाष्यप्रयोगात्। यद्वा व्रश्चादिसूत्रे सृजि यृज्योः पदान्ते षत्वं कुत्वापवादः। स्त्रीवस्थासृज्शब्दस्य तु कुत्वं सृजेः क्विनः विधानादिति सिद्धान्तकौमुदी। विधाता विश्वसृग् विधिरिति अमरपाठस्तु सपद्ममतं समर्थयति। रज्जुसृड्भ्यामिति भाष्यप्रयोगस्तु विश्वसृजि षत्वं न समर्थयति, यतो वार्त्तिकेन विश्वसृजि एव षत्वं निषिद्धं, रज्जुसृजि तु षत्वे न कोऽपि विवाद इति सुधीभिर्विभाव्यम्।

देवेज् ( देवं यजते इति क्विप् साचोयण इक् ) शब्दस्य व्रश्चभ्रस्जेत्यादिना पदान्ते जकारस्य षत्वे—देवेट्, देवेजौ, देवेजः। देवेड्भ्यां, देवेट्सु, देवेट्त्सु। इत्यादि राजवत् रूपाणि। एवमन्येऽपि रामेज् प्रभृतयः।

ऋत्विज् ( ऋतौ यजतीति ऋतु+यज् क्विप्, साचो यण इक् ) शब्दस्य तु-ऋत्विक् दधृक् इति निपातसूत्रेण व्रश्चेति सूत्रोक्तस्य षत्वस्यापवादेन कुत्वविधानात्।

ऋत्विक्, ऋत्विग्, ऋत्विजौ, ऋत्विजः। ऋत्विजं ऋत्विजौ, ऋत्विजः। ऋत्विजा, ऋत्विग्भ्यां, ऋत्विग्भिः। ऋत्विजे, ऋत्विग्भ्यां ऋत्विग्भ्यः। ऋत्विजः, ऋत्विजोः, ऋत्विजाम्। ऋत्विजि, ऋत्विजोः ऋत्विक्षु। सम्बोधने ऋत्विक्, ऋत्विग, ऋत्विजौ, ऋत्विजः इति। एवं दधृज् शब्दस्य रूपाणि।

खञ्ज् शब्दः ( त्रिलिङ्गः )

खञ्ज्+सु, हल्ङ्याप इति सुलोपः, संयोगान्तस्येति जकार-

लोपः खन्, खनृज। श्चो चुनाचुः इति (५८।२।१) न स्थाने ञ खञ्जौ, एवं खनृज्+जस् खञ्जः। अम्—खञ्जम्, औ…खञ्जौ, शस्—खञ्जः। टा—खञ्जा, भ्याम्-( संयोगान्तलोपः ) खनृभ्याम, एवं खनृभिः। खञ्जे, खनृभ्यां, खनृभ्यः। खञ्जः खनृभ्यां, खनृभ्यः। खञ्जः, खञ्जोः खनृजाम्। खञ्जि, खञ्जोः खनृसु, खनृत्सु।

भृस्ज् ( भृज्जतीति भ्रस्ज+क्विप, भृस्जि, ग्रहीत्यादिना साचोयण इक्, पाचकोऽर्थः ) शब्दः।

भृस्ज+सु, हलड्याप इति सुलोपः स्कोर्नीति मकारलोपः, अथ भृसजेत्यनेन जस्य षत्वं, भृष् इति स्थिते षट इत्यनेन (५,१।२।१) षकारस्य टकारः भृट्, भृस्ज+औ भृस्जौ, भृस्ज+जस् भृस्जः। भृस्ज+अम भृसजम्, भृस्ज+औट भृस्जौ, शस्—भृस्जः। टा—भृसजा भ्याम्—भृड्भ्याम्, भिस्-भृड्भिः। ङे—भृस्जे, भ्याम्—भृड्भ्याम् भिस्—भ्यस् भृड्भ्यः। ङसि—भृस्जः, भृड्भ्याम्, भृड्भ्यः। ङस—भृस्जः, ओस् भृस्जोः आम—भृस्जाम। ङि—भृस्जि, ओस्—भृस्जोः सुप् भृट्_सु, भृट्त्सु। सम्बोधने भृट् भृस्जौ, भृस्जः। एवं मांस भृस्ज प्रभृतयः।

## मस्ज् ( मस्ज्+क्विप ) शब्दस्य—

मसज+सु हलड्याप इति सुलोपः स्कोर्नीति सलोपः चोःक्विति कुत्वं मक् मग् मङ्क, मग्, मस्जौ मसजः। मसजं मस्जौ मस्जः। मसजा, मग्भ्यां, मग्भिः। सुप मक्षु इत्येवं प्रकाराणि रूपाणि भवन्ति। एवं जलमस्ज शोभमस्ज प्रभृतीनाम्।

ऊर्ज्+सु, हलड्याप इति सुलोपः चोः क्विति ज स्थाने ग, वावसाने इति ग स्थाने क ऊर्क्, ऊर्ग, ऊर्ज्+औ ऊर्जौ, ऊर्ज्+जस् ऊर्जः। ऊर्जम्, ऊर्जौ, ऊर्जः। ऊर्जा ऊर्ग्भ्यां, ऊर्ग्भिः। ऊर्जे, ऊर्ग्भ्यां, ऊर्ग्भ्यः। ऊर्जः, ऊर्ग्भ्यां, ऊर्ग्भ्यः। ऊर्जः

ऊर्ज्जौः, ऊर्ज्जाम्। ऊर्ज्जि, ऊर्ज्जौः ऊर्त्सु। सम्बोधने ऊर्क्, ऊर्ग्, ऊर्ज्जौ· ऊर्ज्जः।

टान्तः षट् शब्दः (संख्यावाचकः बहुवचनान्तः) षट्+जस् डतिष्णान्त संख्याभगोलुक् (२८।३।२) इति जसोलुक षट्। एवं शसि षट। भिसि षड्भिः झयस्तृतीय इति (५।२।२।१) टस्थाने ड। तथा षड्भ्यः। षड्भ्यः। आम्–षण्णाम्, आमोनामिति आमोस्थाने नाम् (३५।३।२) ततश्च षण्णवति· षण्णगरि षण्णामिति ट् स्थाने ण। सुप् षट्त्सु, षट्सु।

णान्तः- सुगण् शब्दः (सुगणयतीति क्विप्)

सुगण्+सु हलङ्यापो इति सुलोपः सुगण्, औ ·सुगणौ जस्- सुगणः। अम् सुगणम्-औट्- सुगणौ· शस्–सुगणः। टा-सुगणा, भ्याम्–सुगण्भ्याम् भिस सुगण्भि। ङे-सुगणे, भ्यां—सुगण्- भ्याम्, भ्यस् ·सुगण्भ्यः। ङस् सुगणः, ओस्- सुगणोः, आम् सुग- णाम्। ङि-सुगणि, ओस सुगणोः सुप्-सुगण्सु पक्षे ङ्णाभ्या मिति टुकागमः सुगण्ट्सु सिद्धान्तकौमुदी मते सुगण्ठ्सु इत्यपि भवति।

तकारान्तः भूभृत् ( भू+भृ+क्विप्, तुकागमः ) शब्दः।

भूभृत्+सु हलङ्याप इति सुलोपः, भूभृत्, भूभृत्+औ भूभृतौ, भूभृत्+जस् भूभृतः। भूभृत्+अम भूभृतम्, भूभृत्+औट्+भूभृतौ, भूभृत्+शस् भूभृतः। टा—भूभृता, भ्याम्–भूभृद्भ्याम् (झयस्तृतीय इति त स्थाने द), एवं भूभृद्भिः। ङे भूभृते, भूभृद्भ्याम्, भूभृद्भ्यः। ङसि—भूभृतः, भूभृद्भ्याम्, भूभृद्भ्यः। ङस्—भूभृतः भूभृतोः, भूभृताम्। ङि—भूभृति, भूभृतोः, भूभृत्सु। सम्बोधने भूभृत्, भूभृतौ, भूभृतः।

भवत् ( भू+डवतु ) शब्दः।

भवत्+सु हलङ्याप इति सुलोपः उगिदचामिति (७६।२।२)

नुमागमः संयोगान्तस्येति तलोपः भवन्, भवत्+औ उगिदचो रिति नुम् भवन्तौ, भवत्+जस् उगिदचोरिति नुम् भवन्तः। एवं भवत्+अम् भवन्तम् भवत्+औट् भवन्तौ शसादौ भूभृत्वत् भवत् +शस भवतः। टा—भवता, भ्याम्—भवद्भ्याम्, भिस्—भवद्भिः। भवते, भवद्भ्यां, भवद्भ्यः। भवतः, भवद्भ्यां, भवद्भ्यः। भवतः, भवतोः, भवताम्। भवति, भवतोः भवत्सु। सम्बोधने न सम्बुद्धावित्येवेति दीर्घाभावात् भवन्, भवन्तौ, भवन्तः। एवं धावत् (धाव+शतृ), गच्छत (गम+शतृ), कुर्व्वत्, (कृ+शतृ), वहत, (वह+शतृ), पुषत्, (पुष+शतृ), पिवत् (पा+शतृ), प्रभतयः सर्व्वे शतृ प्रतययान्तशब्दाः। ततश्च करिष्यत् (कृ+लृट, स्यतृ) शब्दस्य करिष्यन्, करिष्यन्तौ, करिष्यन्तः। करिष्यन्तं, करिष्यन्तौ, करिष्यतः। करिष्यता इतयादीनि रूपाणि भवन्ति। एवं भविष्यत् गमिष्यत, हनिष्यत् प्रभतीनां रूपाणि।

ददत् (दा+शतृ), दधत् (धा+शतृ), यच्छत् (यच्छ+शतृ), जाग्रत (जागृ+शतृ), दरिद्रत् (दारिद्रा+शतृ), चकासत् (चकासृ+शतृ) प्रभृतीनां तु शतृप्रत्ययान्ताभ्यस्तानां नाभ्यस्ता-च्छतुरिति (७८।१।२) नुमागमाभावात् भूभृत् शब्दवत् रूपाणि ददत् ददतौ, ददतः। ददतं, ददतौ, ददतः। ददता, ददद्भ्यां ददद्भिः। ददते, ददद्भ्याम् ददद्भ्यः। ददतः ददद्भ्याम ददद्भ्यः। ददतः, ददतोः, ददताम्। ददति, ददतोः, ददत्सु सम्बोधने ददत् ददतौ ददतः।

भवत (भा+डवतु) शब्दस्य-तु—

भवत्+सु हलड्याप इति सुलोपः उगिदचोरितिनुम सावत्व सन्तस्येति (८१।२।२) उपधादीर्घः संयोगान्तस्येतितलोपः भवान्, औ प्रभृतिषु तु शतृप्रत्ययान्तभवतशब्दवत् भवन्तौ भवन्तः। भवन्तं भवन्तौ भवतः। इत्यादि सम्बोधने तु असम्बुद्धौ मौपरे दीर्घस्य विधानात् न दीर्घः हे भवन् भवद्भगवदघवतामोश्चेति

( २२।२ ) विकल्पेन वन स्थाने उसिकृते-हे भोः, भवन्तौ, भवन्तः। अत्रभवत्, तत्रभवत्शब्दयोरप्येवं। तथा भगवत्, अघवत्शब्दयोरपि। भगवान्, भगवन्तौ, भगवन्तः। भगवन्तं, भगवन्तौ, भगवतः। इत्यादि सम्बोधने—भगवन्, भगोः, भगवन्तौ, भगवन्तः। अघवान् अघवन्तौ, अघवन्तः। इत्यादि सम्बोधने—अघवन् अघोः अघवन्तौ, अघवन्तः।

धीमत् (धीर्बुद्धिः विद्यतेऽस्य धी+मतुप्) शब्दः।

धीमत्। सु हल्ङ्याप: इति सुलोपः, सान्तमहत्संयोगस्येति उपधादीर्घः, उगिदचोरिति नुम्, संयोगान्तस्येति तलोपः धीमान्, धीमन्तौ, धीमन्तः। धीमन्तम्, धीमन्तौ, धीमतः। धीमता, धीमद्भ्यां, धीमद्भिः। इत्यादि सम्बोधने-धीमन्, धीमन्तौ, धीमन्तः। तथा बुद्धिमत्, रूपवत्, आयुष्मत्, गोमत्, प्रभृतीनां मतुप्प्रत्ययान्तशब्दानामेवमेवरूपाणि। गोमन्तमिच्छति, गोमानिवाचरतीति क्यच्, ततः क्विप गोमत् इति शब्दस्यापि गोमान्, गोमन्तौ, गोमन्त इत्येवं धीमत्, शब्दवत्रूपाणि भवन्ति, सिद्धान्तकौमुदीमते अधातो रित्यनेन अधातुपूर्व्वस्यापि ग्रहणं तथाहि अधातोरिति अधातु पूर्व्वस्यापि नुमर्थमिति सिद्धान्तकौमुदी।

गतवत्, कृतवत्, प्रभृतीनां क्तवतुप्रत्ययान्तानामपि धीमत् शब्दवत्रूपाणि गतवान्, गतवन्तौ, गतवन्तः। डतु प्रत्ययान्ताना मप्येवम्।

महत् शब्दः *।

महत्+सु हल्ङ्याप इति सुलोपः उगिदचोरिति नुम्, सान्त महतो-

---

* वर्त्तमाने पृषन्महद्बृहज्जगच्छतृवच्चेति। वार्त्तिकम्—वर्त्तमाने एते (पृषत्, महत्, बृहत्, जगत्) निपात्यन्ते, शतृवच एषां कार्य्यं स्यात्। शतृवत् कार्य्यञ्च नुमागमादिकम्। इति सिद्धान्तकौमुदी।

दीर्घः (८।२।२)संयोगान्तस्येति तलोपः महान्, महत्+औ उगिदचोरिति नुम्, सान्तमहतोरिति दीर्घः, महान्तौ, महत् जस—महान्तः नुम् दीर्घः। एवं अम् औटोः—महान्तं, महान्तौ, शसादौ—तु धीमत् शब्दवत् महतः। महता, महद्भ्याम्, महद्भिः। इत्यादि

सम्बोधनैकवचने दीर्घाभावात् सम्बोधने, महन्,† महान्तौ, महान्तः।

पृषत् शब्दः।

पृषन्, पृषन्तौ, पृषन्तः। पृषन्तं, पृषन्तौ, पृषतः। पृषता इत्यादि शसादौ—धीमत्वत्।

बृहत् शब्दः।

बृहन्, बृहन्तौ, बृहन्तः। बृहन्तम्, बृहन्तौ, बृहतः इत्यादि।

थकारान्तः-अग्निमथ् शब्द *।

अग्निमथ्+सु हलङ्याप इति सुलोपः, खरि प्रथम इति थ् स्थाने त् अग्निमत्,वाऽवसाने इति त् स्थाने विकल्पेन दकारोऽपि भवति अग्निमद्, औ—अग्निमथौ, जस्-अग्निमथः। अम्—अग्निमथम्, औट्—अग्निमथौ, शस्-अग्निमथः। टा-अग्निमथा, भ्याम्-अग्निमद्भ्याम् (झयस्तृतीय इति थ स्थाने द्) एवं भिस्-अग्निमद्भिः। ङ्यादौ—अग्निमथे, अग्निमद्भ्याम्, अग्निमद्भ्यः। अग्निमथः, अग्निमद्भ्याम्, अग्निमद्भ्यः। अग्निमथः, अग्निमथोः, अग्निमथाम्। अग्निमथि, अग्निमथोः, अग्निमत्सु (अग्निमथ्+सुप् खरि प्रथम इति थ स्थाने त्) सम्बोधने-अग्निमत्, अग्निमद्, अग्निमथौ, अग्निमथः।

---

† महन्नुशाविश्येव।

* अग्निं मथ्नाति अग्नि+मथ+क्विप्।

एवं अग्निमथ्, दधिमथ्, समुद्रमथ् प्रभृतयस्थकारान्तशब्दाः।

दकारान्तः सुपाद्शब्दः †।

सुपाद्+सु, हल्ङ्याप इति सुलोपः, खरि प्रथम इति द स्थाने त् सुपात्, पक्षे सुपाद्, औ—सुपादौ, जस्-सुपादः। अम्-सुपादं, औट्—सुपादौ, शस—सुपदः (सुपाद्+शस, पादः पत् (१२२।१।२) पाद् इत्यस्य स्थाने पत्)। टा-सुपदा (सुपाद्+टा पत् आदेशः), भ्याम्-सुपाद्भ्याम्, भिस-सुपाद्भिः। ङे-सुपदे ('पत्' आदेशः), सुपाद्भ्याम्, सुपाद्भ्यः। ङसि-सुपदः ('पत्' आदेशः), सुपाद्भ्याम्, सुपाद्भ्यः। ङस्—सुपदः, सुपदोः, सुपदाम्। ङि—सुपदि, सुपदोः, सुपात्सु (सुपाद्+सुप् खरि प्रथम इति द् स्थाने त्)। सम्बोधने— सुपात् सुपाद्, सुपादौ, सुपादः।

एवं द्विपाद्, त्रिपाद्, चतुष्पाद् सहस्रपाद् प्रभृतयः।

तद्, त्यद्, यद्, एतद् इत्येतेषां दकारान्तानां पुंरूपाणि अकारान्तशब्दप्रसङ्गे दर्शितानि।

युष्मद्, अस्मद् शब्दयोः द्वितीयाध्यायस्य चतुर्थपादीय ११-४५ सूत्रैः रूपाणि सिद्धानि भवन्ति। वयमत्र केवलं तयोरूपाणि प्रदर्शयामः, साधनप्रवृत्तिस्तु मूले तत्तत्सूत्रे भ्योऽवगन्तव्या।

युष्मद् शब्दः।

त्वं, युवां, यूयम्। त्वाम्, युवां, वाम्, युष्मान्, वः। त्वया, युवाभ्यां युष्माभिः। तुभ्यं, ते, युवाभ्यां, वाम्, युष्मभ्यं वः। त्वत्, युवाभ्याम्, युष्मत्। तव, ते, युवयोः, वाम्, युष्माकं, वः। त्वयि युवयोः युष्मासु।

---

† सु (शोभनः) पादोऽस्य इति समासे सङ्ख्यासुपूर्वस्येति पादादेशः।

### अस्मद्शब्दः।

अहं, आवां, वयम्। मां, मा, आवां, नौ, अस्मान्, नः। मया, आवाभ्याम्, अस्माभिः। मह्यं, मे, आवाभ्यां, नौ, अस्मभ्यं, नः। मत्, आवाभ्याम्, अस्मत्। मम, मे, आवयोः, नौ, अस्माकं, नः। मयि, आवयोः, अस्मासु।

### अतियुष्मद् (त्वामतिक्रान्तः) शब्दः।

| | एक | द्वि | बहु |
|---|---|---|---|
| प्रथमा | अतित्वम् | अतित्वाम् | अतियूयम् |
| द्वितीया | अतित्वाम् | अतित्वाम् | अतित्वान् |
| तृतीया | अतित्वया | अतित्वाभ्याम् | अतित्वाभिः |
| चतुर्थी | अतितुभ्यम् | अतित्वाभ्याम् | अतित्वभ्यम् |
| पञ्चमी | अतित्वत् | अतित्वाभ्याम् | अतित्वत् |
| षष्ठी | अतितव | अतित्वयोः | अतित्वाकम् |
| सप्तमी | अतित्वयि | अतित्वयोः | अतित्वासु (क) |

### अत्यस्मद् (मामतिक्रान्तः) शब्दः।

| | | | |
|---|---|---|---|
| प्रथमा | अत्यहम् | अतिमां | अतिवयम् |
| द्वितीया | अतिमाम् | अतिमाम् | अतिमान् |
| तृतीया | अतिमया | अतिमाभ्याम् | अतिमाभिः |
| चतुर्थी | अतिमह्यम् | अतिमाभ्याम् | अतिमभ्यम् |
| पञ्चमी | अतिमत् | अतिमाभ्याम् | अतिमत् |
| षष्ठी | अतिमम | अतिमयोः | अतिमाकम् |
| सप्तमी | अतिमयि | अतिमयोः | अतिमासु (ख) |

(क) त्वामतिक्रान्तौ अतित्वाम्, त्वामतिक्रान्ताः अतियूयम्। त्वामतिक्रान्तं अतित्वाम्, त्वामतिक्रान्तान् अतित्वान्। त्वामतिक्रान्तेन अतित्वया। एवं सर्वत्र विभक्तिभेदे वाक्यभेदः करणीयः।

(ख) अत्रापि विभक्तिभेदे वाक्यभेदः कार्य्यः, मामतिक्रान्तान् अतिमान्, मामतिक्रान्तेन अतिमया, मामतिक्रान्ताभ्याम् अतिमाभ्यामित्यादि।

युवां आवां वा अतिक्रान्तः इति वाक्यनिष्पन्नयोः अति-युष्मद्, अत्यस्मद् शब्दयोस्तु सु, जस्, ङे, ङस् सु हि प्रागवत्, सु—अतित्वं, अत्यहम्; जस्-अतियूयम्, अतिवयम्, ङे-अतितुभ्यम्, अति-मह्यम्, ङस्-अतितव, अतिमम (४६।४।२) सूत्रं द्रष्टव्यम्। औ, अम्, औट् सु अतियुवां अत्यावाम् एकरूपपदमेव भवति। शसि—अति युवान्, अत्यावान्। तृतीयैकवचने अतियुवया, अत्यावया। भ्यामि—अतियुवाभ्याम्, अत्यावाभ्याम्। भिसि, अतियुवाभिः, अत्यावाभिः। चतुर्थीबहुवचने अतियुवभ्यं, अत्यावभ्यम्। ङसि-भ्यसोः—अतियुवत्, अत्यावत्। ओस् अतियुवयोः, अत्यावयोः। आमि—अतियुवाकम् अत्यावाकम्। ङौ—अतियुवयि, अत्यावयि। सुपि—अतियुवासु, अत्यावासु। युष्मान्, अस्मान् वा अतिक्रान्त इति वाक्यनिष्पन्नयोः अतियुष्मद्, अत्यस्मद् शब्दयोः पुनः सु, जस्, ङे, ङस् सु हि प्राग्वत्, अतित्वं, अत्यहम्; अतियूयं, अतिवयम्; अतितुभ्यम्, अतिमह्यम्, अतितव, अतिमम। औ, अम् औट्सु—अतियुष्मां अत्यस्मां। शसि—अतियुष्मान्, अत्यस्मान्। तृतीयैक वचने—अतियुष्मया अत्यस्मया। भ्यामि—अतियुष्माभ्याम्, अत्यस्मा-भ्याम्। भिसि—अतियुष्माभिः अत्यस्माभिः। चतुर्थीबहुवचने अतियुष्मभ्यं, अत्यस्मभ्यम्। ङसिभ्यसोः—अतियुष्मत्, अत्य-स्मत्। ओस्—अतियुष्मयोः, अत्यस्मयोः। आस् अतियुष्माकं अत्यस्माकम्। ङौ—अतियुष्मयि, अत्यस्मयि। सुपि—अति युष्मासु, अत्यस्मासु। (४७।४।२)

धकारान्तः—बुध् (बुध्यतीति बुध+क्विप्। शब्दः *

बुध्+सु, हलङ्याप इति सुलोपः झषन्ताचामिति (८६।१।२) ब स्थाने भ, खरि प्रथम इति ध् स्थाने त्, भुत्, भुद्; औ-बुधौ, जस्—बुधः। अम् बुधम्, औ—बुधौ, शस्—बुधः। टा—बुधा, भ्याम्—भुद्भ्याम्

( बुध्+भ्याम्, झषन्ताचामिति ब स्थाने भ, झयस्तृतीय इति ध स्थाने द् ), एवं भिस् भुद्भिः। ङयादौ—

बुधे, भुद्भ्याम्, भुद्भ्यः। बुधः, भुद्भ्याम्, भुद्भ्यः। बुधः, बुधोः बुधाम्। बुधि, बुधोः, भुत्सु। सम्बोधने—भुत्, भुद्, बुधौ, बुधः। एवं तत्त्वबुध् प्रभृतयः।

मृगाविध् ( मृग+व्यध्+क्विप् ) शब्दः।

मृगावित्, मृगाविद्, मृगाविधौ, मृगाविधः। मृगाविधम्, मृगाविधौ, मृगाविधः। मृगाविधा, मृगाविद्भ्याम्, इत्यादि बुध् शब्दवत् न वह, व्यध, बुधामिति निषेधात् वकारस्य भकारो न भवति। एवमन्ये धकारान्ताः युध् प्रभृतयः।

नकारान्तः—आत्मन् ( अत+मन् ) शब्दः।

आत्मन्+सु, हलड्याप इति सुलोपः, नोपधाया इति (८४।३।२) उपधादीर्घः, नस्य लोपः इति (१०१।३।२) नकारलोपः आत्मा, औ—आत्मानौ (उपधादीर्घः), जस्—आत्मानः (उ, दी, )। अम् आत्मानम् ( उ, दी, ), औट्—आत्मानौ ( उ, दी, ), शस् आत्मनः। टा—आत्मना, भ्याम्—आत्मभ्याम् ( नस्य लोप इति नलोपः), एवं भिस्—आत्मभिः। ङयादौ—आत्मने, आत्मभ्याम्, आत्मभ्यः। आत्मनः आत्मभ्याम्, आत्मभ्यः। आत्मनः, आत्मनोः, आत्मनाम्। आत्मनि, आत्मनोः, आत्मसु (नलोपः)। सम्बोधने आत्मन् ( नसम्बुद्धौ इति ( १०२।३।२ ) नलोपनिषेधः, सम्बुद्धावितीवेति दीर्घनिषेधश्च ) आत्मानौ, आत्मानः।

एवं ब्रह्मन्, यज्वन्, सुकर्मन्, अग्निशर्मन्, देवशर्मन्, मनुष्यधर्मन् प्रभृतयः।

राजन् शब्दः।

राजन्+सु हलड्याप इति सुलोपः नोपधाया इति उपधा-

दीर्घः, नस्य लोप इति न लोपः, राजा, एवं राजानौ राजानः। राजानं, राजानौ, (आत्मवत्) राजन्+अम्, अनोऽल्लोप इति अकार लोपः, राज्नः इति स्थिते चुनाचुः इति (५८।२।१) न स्थाने ञ राज्ञः। राजन्+टा, अनोऽल्लोप इति अकारलोपः राज्ना इति स्थिते चुनाचु इति न स्थाने ञ राज्ञा, राजभ्याम् (नलोपः), राजभिः (नलोपः, अनवलोपे (३७।२।३।२) इति निषेधात् अकारात्परस्यापि भिसः स्थाने न ऐस्)। राजन्+ङे (अलोपः, न स्थाने ञ) राज्ञे, राजभ्याम्, राजभ्यः (अनवलोप इतेरव इति न भ्यसि अकार स्थाने एत (३८।३।२)। राजन्+ङसि (अलोपः, न स्थाने ञ) राज्ञः, राजभ्याम्, राजभ्यः। राजन्+ङस् राज्ञः (ङसिवत्), ओस्, राज्ञोः (अलोपः न स्थाने ञ), आम् राज्ञाम् (अलोपः न स्थाने ञ)। राजन्+ङि (अलोपः, न स्थाने ञ) राज्ञि, ङिश्योर्व्वेति (११८।३।२) अकार लोपस्य वैकल्पिकत्वात् पक्षे राजनि, राज्ञोः, सुप् राजसु (नलोपः अनवलोपइतेरवेति न अकार स्थाने एकार (३८।३।२)। सम्बोधने राजन्, राजानौ, राजानः (आत्मवत्)।

एवं लघिमन् प्रभृतयोऽनन्ताः। यथा

लघिमा, लघिमानौ, लघिमानः। लघिमानं, लघिमानौ, लघिम्नः। लघिम्ना, लघिमभ्याम्, लघिमभिः। लघिम्ने, लघिम्नः लघिम्नोः, लघिम्नाम्। लघिम्नि, लघिमनि, लघिमसु। सम्बोधने लघिमन्, लघिमानौ, लघिमानः।

अर्य्यमन् शब्दः।

अर्य्यमन्—सुलोपः इन् हन्निति (८३।३।२) उपधादीर्घः नस्य लोप इति नलोपः, अर्य्यमा, औ—(इन् हन्निति नियमात्, नोपधाया इति न दीर्घः) अर्य्यमणौ, जस्—अर्य्यमणः। अम्—

अर्य्यमणम्, औट्—अर्य्यमणौ (सर्व्वत्ररषृभ्य इति नस्य णत्वम्), शसादौ—राजन् शब्दवत् अर्य्यम्णः। अर्य्यम्णा, अर्य्यमभ्याम्, अर्य्यमभिः। अर्य्यम्णे, अर्य्यमभ्याम्, अर्य्यमभ्यः। अर्य्यम्णः, अर्य्यम्णोः, अर्य्यम्णाम्। अर्य्यम्णि, अर्य्यमणि, अर्य्यमसु। एवं प्रोषितार्य्यमन् शब्दोऽपि।

## वृत्रहन् शब्दः।

वृत्रहन्+सु सुलोप, इन् हन्निति उपधादीर्घः, नस्येति न लोपः वृत्रहा, वृत्रहणौ, वृत्रहणः। वृत्रहणम्, वृत्रहणौ (अर्य्यमा शब्दवत्) शस्—वृत्रघ्नः (अनोऽल्लोप इति अलोपः, हनो ह्नोघो (११८।३।२) इति ह स्थाने घः)। टा—वृत्रघ्ना (अलोप ह स्थाने घ) वृत्रहभ्याम्, वृत्रहभिः (राजन् शब्दवत्)। वृत्रघ्ने (अलोपः ह स्थाने घ)। वृत्रघ्नः (अ लो, ह स्थाने घ), एवं षष्ठ्येक वचने। वृत्रघ्नोः (ओस् अलोपः ह स्थाने घ), एवं सप्तमीद्विवचने, वृत्रघ्नाम् (आम् अलोपः ह्न स्थाने घ)। वृत्रघ्नि, ङिश्योर्व्वेति अलोपस्य वैकल्पिकत्वात् पक्षे अलोपाभावे वृत्रहणि, वृत्रहसु (राजवत्)। सम्बोधने वृत्रहन् इत्यादि राजन् शब्दवत्। एवं भ्रूणहन् प्रभृतयः।

पूषन शब्दस्य—तु अर्य्यमन् शब्दवत् रूपाणि, पूषा, पूषाणौ, पूषाणः। पूषाणम्, पूषाणौ, पूष्णः, पूष्णा, पूषभ्याम्, पूषभिः। पूष्णे, पूषभ्याम्, पूषभ्यः। पूष्णः, पूष्णोः, पूष्णाम्। पूष्णि, पूषणि, पूषसु सम्बोधने पूषन्।

एवं सुपूषन शब्दस्यापि।

प्रतिदिवन् शब्दस्य राजन् शब्दवत् रूपाणि भवन्ति, शस् प्रभृताजादिसुपि तु अकारलोपे रः प्राग्दीर्घं इत्यनेन (८८।३।२) वकारात् पूर्व्वस्य इकारस्य दीर्घत्वञ्च भवति। यथा प्रतिदिवा, प्रतिदिवानौ, प्रतिदिवानः। प्रतिदिवानं, प्रतिदिवानौ, प्रतिदीव्नः। प्रतिदीव्ना, प्रतिदिवभ्याम्, प्रतिदिवभिः। प्रतिदीव्ने प्रतिदीव्नः।

राजानमागमयति। चित्रीकरणे—उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्य्यमुद्गमयति, सूर्य्योद्गमनं सम्भावयति इत्यर्थः। नक्षत्रयोगज्ञाने च। पुष्ययोगं जानाति—पुष्येण योजयति चन्द्रम्। अन्यत्रापि-कर्त्तारमाचष्टे कारयति, पाकं करोति पाचयति। वादितवन्तं प्रयोजितवान् णेणिचकवतोर्लुक्। अविवदन्तीणां परिवादकेन। आशीवयति इत्यत्र प्रकृतेरेकाच्त्वाट्टिलोपाभावः। अग्निचिदा-देस्तु टिलोपमिच्छन्ति अग्निचयति, गोनावौ गोनयति। प्रियादेः प्रस्थस्फाद्यापः। प्रियमाचष्टे प्रापयति, स्थिरं स्थापयति, स्फिरं स्फापयति, बहुलं बंहयति, बहु भूययति, भावयतीत्येके। पृथु प्रथयति। स्थूलादेर्वा स्थवादिमिच्छन्ति। स्थूलयति, स्थवयति, दूरयति, दवयति। श्येन्यादिभवान्यादीनां पुम्वच्च। श्येनीमाचष्टे श्येतयति, एनीं एतयति, हरिणीं हरितयति, भवानीं भवयति, रुद्राणीं रुद्रयति इत्यादि। श्वेताश्वादेरश्वादेर्लुक्। श्वेताश्वमाचष्टे श्वेतयति, अश्वतरं अश्वयति। (५)

---

(५) विधये विशेषणं मन्यमनुसार इति न्यायात् सुप इत्यनेन सुबन्तं लभ्यते। तत्करोतीत्यादावित्यन्वादिशब्दः शिष्टप्रयोगानुसारार्थः, तत् शब्देन च यस्मात्नाम्नो णिच् विहितस्तत् परामृश्यते। इष्ठवदिति—इष्ठ प्रत्यये सति यत् कार्य्यं भवति, तत् स्यात्, तच्च टिलोपादिः। पयोमात्र भोजनं व्रतं करोति। पयोदुग्धं जलं वा, तदन्यत् न किमपि भुङ्क्ते इत्यर्थः। एवं श्रीमतीं श्रीमन्तं वा श्रययति, पयस्विनीं पयसयति; तत्प्रो-पाख्याने इति—तच्छब्दः तत्प्रत्ययपरः, स एवान्ते यस्य, स तदन्तः,

४२४ । पुच्छादेर्णिङ् । [पुच्छादेः (पुच्छ—आदि) ५', णिङ् ०१। ]

एभ्यो णिङ् स्यात्, इष्टवच्च। पुच्छमुत्क्षिपति उत्पुच्छायते व्याघ्रः। भाण्डं समाचीनोति संभाण्डयते कुलालः, चीवरमर्ज्जति

---

तस्य उपाख्याने कृदन्तात् णिचि सति कृत्प्रत्ययस्य लुक्, प्रकृतेर्यस्मात् धातोः कृत्प्रत्ययो जातस्तस्यान्यरूपतामापन्नस्य पुनः स्वरूपापत्तिः, कारकं कर्त्तृ-कर्म्मादि प्रकृतिवच्च, कृतः प्रकृतेर्यादृशं कारकमासीत् णन्तेऽपि तादृशमेव कारकं स्यात्। यत्र प्रत्ययलुगिष्यते, तत्रैव निमित्तापायात् प्रकृति-प्रत्यापत्तिः, तस्याञ्च सत्यां धातुत्वेन नामत्वनिवृत्तौ समासोऽपि निवर्त्तते, अतः कारकञ्च प्रकृतिवद्भवतति। यथा राजानमागमयतीत्यत्र गमधातोः प्रत्यावृत्तौ ततसमुद्दिष्टस्य राज्ञः कर्म्मत्वसिद्धिरिति गोयीचन्द्रः एव-मन्यत्र। कंसवधमिति—हननं वधः, हन्धातोरपप्रत्यये वधादेशः, कंसस्य वधः कर्त्तृकर्म्मणोरिति कर्म्म-स्थाने षष्ठी, [षष्ठीसमासश्च, कंसवध इत्यतो णिच्, कृत्प्रत्ययस्य लुक्, प्रकृतेः ( हन धातोः ) प्रत्यावर्त्तनं, ततो हनधातोर्णिचि, णिति वृद्धिः, हनोऽघ इति हस्य घकारो णकारस्य तकारश्च, घाति-लटति, घातयति। एवमन्यत्राप्यूह्यं। चित्रीकरणं आश्चर्य्यं, तच्चेत् प्राप्तार्थविषयं प्राप्तिकृतं भवति, तदा कृदन्तात्णिच् स्यात्, कृल्लुगादिकञ्च पूर्व्ववत्, उज्जयिन्या हि माहिष्मती दूरदेशः अल्पीयसा कालेन प्राप्तत्वादाश्चर्य्यं। नक्षत्रेण सहितोयोगः, नक्षत्रयोगस्तस्य ज्ञानं, इत्यर्थ कृदन्तात्णिच्, कृत् लुक् कारकं प्रकृतिवच्च। अन्यत्रापि कृदन्तो-पाख्यानादन्यत्रापि कृल्लुक् प्रकृतेः प्रत्यापत्तिश्च। आश्मयतीत्यत्र प्रकृतेः प्रासेरेकाच्त्वान्न टिलोपः, अभिचिदादेस्तु प्रकृतेरेकाच्त्वेऽपि टिलोपः। संक्षिप्तसारमते तत्करोतीत्यर्थे नाम्नएव णिच् भवति नाम, च तिङन्तादि तरं, सुप्-शून्यम्। प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चेति वार्त्तिकमुक्त्वा

पिदधाति वा सञ्चीवरयते भिक्षुः। अङ्गान्निरसने। हस्तान्निरस्यति हस्तयते, पादयते अन्यत्र हस्तयति, पादयति। (६)

## २५। गुपु-धूप-विच्छ-पणि-पनेरायः।

[गुपु—पणे: ५।, आयः १।]

एभ्यः आयः स्यात्। गोपायति, धूपायति, विच्छायति, पणा-

सिद्धान्तकौमुदीकारेणापि प्रातिपदिकाण्णिच् भवतीत्युक्तम्। तन्मते करोत्याचष्ट इति धात्वर्थमात्रं णिजर्थः। अन्तिकं नेदयति, युवानं यवयति, कनयति च; बाढं साधयति, वृद्धं ज्यापयति, वर्षयति वा; उरुं वरयति, वारयति, गुरुं गरयति, दीर्घं द्राघयति, वृन्दारकं वृन्दयति; प्रशस्यं प्रशस्ययति इति सिद्धान्तकौमुदी, तन्मते स्थूलादेः स्थवादेशस्य नित्यत्वं, ततश्च दूरयत्यवनते विवस्वतीत्यत्र दूरयतीत्यस्य सिद्धौ कष्ट-कल्पना कृता, दूरमयति, अवते वा दूरात्, दूरान्तं कुर्व्वतीति। त्वां मां त्वापयति, मापयति, मपर्य्यन्तस्य त्वमौ परत्वात् पूर्व्वं नित्यत्वाट्टिलोपः वृद्धिः पुक्, त्वादयति मादयतीति तु न्याय्यम्, इति सिद्धान्तकौमुदी। एवञ्च तन्मते युवामावां युष्मयति अस्मयति, श्वानमाचष्टे, शावयति, विद्वांसमाचष्टे विद्वयति विदाश्यति विदयति वेति; संक्षिप्तसारमते बहुशब्दस्य णिचि भावयतीति रूपं भवति, भूययतीत्येके इति अस्मन्मतम् तदिति सूचितम्, श्वेताश्वादेरश्वादिलुग्वा लुक्यात्मने पदं च। इति संक्षिप्तसारसूत्रम्, श्वेताश्वादीनां णिचि कृते अश्वादीनां लोपो वा भवति लुकि सति आत्मनेपदञ्च श्वेतयते।

(६) समाचयनं राशीकरणं, अङ्ग शब्दोऽवयववचनः, तस्मात् प्रत्ययोऽत्र भवन्नर्थवशादेव तन्निरसने भवति, अतएवाह हस्तौ निरस्यतीति, निरसनं निक्षेपणम्।

यति, पणेस्तुत्यर्थ एवाय: पणायति, न व्यवहारे पणते, व्यवहारे चेत्येके न चोपलेभे वणिजाम्पणाया: इति भट्टि:। कमेर्णिङ्। कामयते।

२६। ऋतेर्घृणायामीयङ्। [ऋत: ५।, घृणायां ७।, ईयङ् ०१।]

ऋति: सौत्रोधातुस्तस्मादीयङ् स्यात्। ऋतीयते।

२७। आयादय आर्द्धधातुके वा।

[आयादय: १।।, आर्द्धधातुके ७।, वा०१।]

आर्द्धधातुके विषये आयादयो वा स्यु:। गोप्ता, गोपायिता, कमिता, कामयिता ; अर्त्तिता, ऋतीयिता।

२८। णौ पुरादर्त्ति ह्रिव्लीरीक्नुयीक्ष्माय्योर्गुणश्च।

[णौ ७।, पु: १।, आत्-अर्त्ति-(ऋ)-ह्रि-व्ली-री-क्नुयी-क्ष्माय: ५।, गुण: १।, च०१।]

अदन्तादेरुत्तरे णौ पुरागम: स्यात्। इको गुणश्च। दापयति, अर्पयति, ह्रेपयति, व्लेपयति, रेपयति, क्नुयीक्ष्माय्योर्यलोपश्च क्नोपयति, क्ष्मापयति। आदे: पाकादौ ह्रस्वश्च। घटादित्वात् श्रा पाके श्रपयति। मारण, तेजन, तोषण, निशामनेषु ज्ञ: * ज्ञपयति। ग्लास्नोरनुपसर्गे वा ग्लपयति। ग्लापयति ; स्नपयति, स्नापयति, सोपसर्गे प्रग्लापयति, प्रस्नापयति।

२९। शाच्छासाह्वाव्यावे पाय्योय:।

[शा-छा-सा-ह्वा (ह्वे)-व्या (व्ये)-वे-पाय्य: ५।।।; यु: १।]

---

* ज्ञोमारणतेजनतोषणनिशामनेष्विति क्वचित् पाठ:।

एभ्यो णौ युः स्यात्। निध्माययति, छाययति, क्षाययति, व्यवसाययति, संव्याययति, वाययति, पै पिबत्योः पाययति।

३०। आत इणित् क्तोः।

[आतः ५।, इण्-णित्क्तोः (ण इत्-क्त) ७॥]

इणि, णिति क्ति च परे आदन्तात् युः स्यात्। अवायि, वायकः, अदायि, दायकः।

३१। णौ पातेर्लुः। [णौ ७।, पातेः ५।, लुः १।]

णौ पातेर्लुः स्यात्। पालयति।

३२। अर्थादेरापुः। [अर्थादेः (अर्थ-आदि) ५।, आपुः १।]

एभ्यः आपुः स्यात्। अर्थापयति, सत्यापयति, वेदापयति। प्रस्थस्फात्, प्रापयति, स्थापयति, स्फापयति।

३३। क्रीङ्जीना—मैराप्।

[क्री-इङ्-जीनाम् ६॥।, ऐः १।, आप् १।]

णावेषामैकारस्य आप् स्यात्। क्रापयति, इङ् अध्यापयति, जिज्ञापयति, ॥ चेव्वौ ॥ अज्ञापयति, सज्ञाययति।

३४। वियस्त्व प्रजने। [वियः ५।, च-१।, प्रजने ७।]

णौ वीधातोरैराप् वा स्यात्, गर्भधारणहेतु। पुरोवातो गाः प्रवापयति, प्रवाययति वा।

३५। धूञ्प्रीञोनुक्। [धूञ-प्रीञः ५।, नुक् १।]

आभ्यां णौ नुक् स्यात्। धूनयति, प्रीणयति, प्रीणनम्। ञानुबन्धादन्यतो न भवति धावयति, प्राययति।

३६। लीलाभ्यां वा नुक्लुकौ स्नेहद्रावणे।

[लीलाभ्यां ५॥, वा०१।, नुक्लुकौ १॥. स्नेहद्रावणे ७। ]

लीलीङोरन्तातन्तात्वयोरिदं ग्रहणं आभ्यां नुक्लुकौ वा स्यातम् स्नेहद्रवीकरणे। घृतं विलीनयति, विलालयति वा; तैलं विलीनयति, विलालयति वा। (१)

३७। स्फायोर्वोऽन्तः। [स्फायः ६।, वः १।, अन्तः १। ]

णौ स्फायोऽन्तो वो भवति। स्फावयति।

३८। शदेरगतौ तः। [शदेः ६।, अगतौ (न-गति) ७।, तः १। ]

णौ शदेरन्तस्तोभवति। फलानि शातयति। अगताविति किम्? गाः शादयति।

३९। रुहः पोवा। [रुहेः ६।, पः १। वा०१। ]

णौ रुहेरन्तः पो वा स्यात्। रोपयति, रोहयति॥

४०। सिध्यते रेदादपारलौकिके।

[सिध्यतेः ६।, एत्०१।, आत्०१।, अपारलौकिके (न-पारलौकिक) ७। ]

णौ सिध्यतेरेकार आद्भवति। ग्रामं साधयति, अपारलौकिक इति किम्? स्वर्गं सेधयति।

४१। वे वाज् धनने। [वि०१।, वाज्०१। धूनने ७। ]

---

(१) अन्यत्र विलापयतीति पदं। ली इति ईकारप्रश्लेषादात्वपक्षे नुक् नेति सिद्धान्तकौमुदी। वादेशश्च णौ ह्रस्वादौ परे वा भवति।

णौ वै वाज् भवति। वाजयति पचौ, धूनन इति किम्? प्रवा-पयति केशान्।

४२। स्फोरो वा स्फारः। [स्फोरः ६॥, वा० १; स्फारः १।]

स्फोरो णौ स्फारोवा स्यात्। विस्फारयति, विस्फारयति, स्फोर इति किम्? यङ्लुकि पोस्फुरयति।

४३। दोषो दूषः। [दोषः १।, दूषः १।]

दोषो णौ दूषः स्यात्। दूषयति, दूषका अणौ क्वचित् दूषणम्॥

॥ वा चित्तदूषणे॥ चित्तं दूषयति दोषयति वा। (२)

४४। क्यचीदस्य। [क्यचि ७।, ईत् ०१।, अस्य ६। ]

क्यचि परे अवर्णस्य ईद्भवति। राजीयति, मालीयति; अस्येति किम्? विद्वस्यति।

४५। अशनाय-उदन्य-धनाया बुभुक्षापिपसागर्द्धेषु।

[अशनाय—उदन्य-धनायाः १।।।, बुभुक्षा-पिपासा-गर्द्धेषु ७।।। ]

क्यचि बुभुक्षाद्यर्थे-अशनादयो निपात्यन्ते। अशनायति बुभुक्षुः, उदकं उदन्यति पिपासुः, धनायति गृध्नुः। अन्यत्र अशनीयति, धनीयति, उदकीयति।

---

(२) लिख, वरिट, लज्जां लिखाप, वराटाप, लज्जापा वेति संक्षिप्त-सारसूत्रम्, लिख अक्षरविन्यासे तुदादिः, वंटि विभजने, लज्जि प्रकाशने चुरादिः एषां स्थाने णौ परे लिखाप, वराटाप, लज्जापा वा भवन्ति। लिखापयति, लेखयति, शिष्टप्रयोगदर्शनाभावादेतत् सूत्रं नत्वार्थमिति धातुपरायणे व्यवस्थितमिति गोयीचन्द्रः।

४६। सुरसुर्व्वा लवणादेर्लालसायाम्।

[सुः १।, असुः १।, वा० १।, लवणादेः (लवण—आदि) ५।, लालसायाम् ७।]

क्यचि स्पृहायां लवणादेः सुरसुर्व्वा स्यात्। लवणस्यति, क्षीरस्यति, दधिस्यति, दुग्धस्यति, मधुस्यति मध्वस्यति।

४७। वृषाश्वान्मैथुने। [वृषाश्वात् ५।, मैथुने ७।]

आभ्यां मैथुने सुरसुर्व्वा स्यात्। वृषस्यति गौः, लक्ष्मणं सा वृषस्यन्ती महोक्षं गौरिवाऽगमत्॥ इति भट्टिः अश्वस्यति वड़वा।

४८। भूवादिसनाद्यन्ता धातवः। (परिभाषा सूत्रम्)

[भूवादि-सनाद्यन्ताः (भू-आदि,-सन् आदि-अन्त, १।।।, धातवः १।।। ]

भवादयोदशगणपरिपठिताः सनाद्यन्ताश्च धातुसंज्ञका भवन्ति। धातुप्रदेशा धातोरित्येवमादयः। (३)

४९। आत्मनेपदम्। (अधिकार सूत्रमिदम्)

[आत्मनेपदम् ०१। ]

आत्मनेपदमित्यधिक्रियते।

५०। नोपसर्गाद्द्वितीयार्थात्।

[न ०१, उपसर्गात् ५।, द्वितीयार्थात् (द्वितीया अर्थ ५। ]

---

(३) भुश्च वाश्च भुवा, भुवा आदयो येषां ते भूवादयः, वा शब्दे नाथ वा-सदृशाः क्रिया वाचका उच्यन्ते, क्रियावाचका भू-प्रभृतयः धातव इति सिद्धान्तकौमुदी सम्मतोऽर्थः, सनादयश्च सन्, क्यच्, क्यङ्, णिच्, यङ्, यङ्-लुक्, णिच् प्रभृतयः। ते अन्ते येषां ते च धातवस्तेषां धातु संज्ञा भवति।

नियमसूत्रम् । उपसर्गात्तु नियमः, उपसर्गाद्यदात्मनेपदं विहितं, तद्द्वितीयार्थान्न भवति । यथा परिक्रीड़ते, न तथा वृक्षं परि क्रीड़ति । (१)

५१ । अनुदात्तङितः । [ अनुदात्त-ङित. ५ । ]

गणपाठेऽनुदात्तेतो ये धातवस्तेभ्य ङितश्चात्मनेपदं स्यात् । आस्ते, वर्त्तते, वोभूयते, हंसायते, आसीनः, शयानः । (२)

---

(१) ननु प्रसक्तोऽपि प्रतिषिध्यते, इतः पूर्वं उपसर्गादात्मनेपदं नोक्तमेव तत्कथं प्रतिषेध इत्यत आह उपसर्गादिति इह निषेधबलादेव विधिरवगम्यते, तेन उपसर्गाद्विधेयं यदात्मनेपदं तद्द्वितीयार्थात्तस्मा-द्रसमान्न भवेदिति नियमः 'लक्षणवीप्से त्थम्भूताख्यानभागे प्रतिपरिभ्यामनुना सह हेतुहाने चेति ( २ । २ । १५ ) प्रतिपर्य्यादिभिर्या द्वितीया विहिता. तस्माद्द्वितीयार्थप्रयुक्तात् प्रतिपर्य्यादेरुपसर्गाद्विहितं आत्मनेपदं न भवति । यथा क्रीडोऽन्वाङ्परेरित्यात्मनेपदं विहितं द्वितीयार्थपरेन भवतीति पद्मनाभपञ्जिका । अत्र सूत्रे भाक्तोपसर्गग्रहणम् ।

(२) अनुदात्तश्च ङश्च, अनुदात्तङौ, तावितौ यस्य स अनुदात्तङित् तस्मात्—ननु अनुदात्तत्वाद्यसङ्केतितः कथं तदनुबन्धिता धातवो ज्ञास्यन्त इत्यत आह गणपाठे—इति गणपाठे अनुदात्तत्वेन ये प्रसिद्धा इत्यर्थः । वस्तुतः—अनुदात्तादयः स्वरधर्म्मा लोके तेषां प्रचारो नास्ति, वेदे त्वस्त्येव, तथाहि उच्चैरुदात्तः, नीचैरनुदात्तः, समाहारः स्वरितः, इति पाणिनिसूत्राणि । गणे तु केचन उदात्तेतो, धातवः, केचनानुदात्तेतः, केचन स्वरितेत इति धातूनां हि त्रयो भेदाः सन्ति । आदेशानां तिङां परार्द्धमात्मनेपदसंज्ञितमस्ति । इदञ्चात्मनेपदं भावकर्म्मणोरिति प्रथम-

५२। भावकर्म्मणोः। [भाव-कर्म्मणोः ७॥]

धातोर्भावे कर्म्मणि चात्मनेपदं स्यात्। भूयते, भूयमानं, क्रियते, क्रियमाणः कटः। (२)

---

विधानात् कर्त्तर्य्येव व्यवस्थितमिति पद्मनाभपञ्जिका। कर्त्तर्य्यनुदात्तङिद्-यन्तयामिति संक्षिप्तसारसूत्रम् अनुदात्तश्च, ङश्च इति द्वन्द्वसमासं कृत्वा तावितौ येषां ते अनुदात्तङितः द्वन्द्वात् परः पूर्व्वो वा यः श्रूयते स लभते प्रत्येकमभिसम्बन्धमिति अनुदात्तेतां ङिताञ्च धातूनामित्यर्थः, यगायौ (यङ् क्यङौ) प्रत्ययौ तौ च धातू न सम्भवत इति तदन्तानां ग्रहणं इति गोयीचन्द्रः। अस्माकं ङित्त्वेन यङादिप्रत्ययानां ग्रहणमिति बोद्धव्यम्। उपदेशे योऽङित् तथा भूताच्च धातोरात्मनेपदं स्यादिति सिद्धान्तकौमुदी। उपदेशं आद्योच्चारणं, तेन गाङ् कुटादिभ्य, इत्यतिदेशिकङित्त्वेऽपि सति चुकुटिषतीत्यादौ नैतत्प्रसङ्ग इति तट्टीका।

(२) सर्व्वस्मादेव धातोर्भावकर्म्मणोर्वाच्ययोस्तङ् विधीयते। धात्वर्थः केवलोभावस्तस्यैकत्वात् प्रथमपुरुषविषयत्वाच्च प्रथमैकवचनम्। भूयमानमित्यत्रादेकवचनमेव, नतु पाकादिशब्दवत्सर्व्ववचनानि। कृञ करणे इति कर्म्मणि यटते सार्व्वधातुके यकि (३।५।१४२) रिक्रोऽङ्यके-रिति (३।३।१२) ऋस्थाने 'रि' आदेशः क्रियते, एवं कृ+ कर्म्मणि शानच् क्रियमाणः। अकर्म्मका अपि धातव उपसर्गसम्बन्धेन सकर्म्मका भवन्तीति गोयीचन्द्रः यथा अनुभूयते घट इति। अकर्म्मकाः अपि क्रियान्तरान्तर्भावे सकर्म्मकः स्यात् इति संक्षिप्तसारम्। अकर्म्मकाः न केवलमुपसर्गसम्बन्धिनः सकर्म्मका भवन्ति, किन्तु क्रियान्तरान्तर्भावेऽपि यथा आस्यन्ते आसनिकाः, शय्यन्ते शयनिका आसितुं, शयितुं वाच्यन्ते इत्यर्थः।

## ५३ । कर्त्तरि क्रियाविनिमये ॥

[ कर्त्तरि ७ ।, क्रियाविनिमये ७ । ]

क्रियापरिवर्त्ते धातोः कर्त्तरि तङ् स्यात् । तङित्यात्मनेपद-संज्ञा । व्यतिभवते पद्मानां श्रीः, व्यतिभवमाना, व्यतिपुनते, व्यतिवोभूते, व्यतिवोभूवाते । अतः कर्त्तरि विधिः । (४)

## × ५४ । न गति-हिंसा-शब्दार्थहसोऽन्योऽन्यार्थोपपदाच्च ।

[ न ०१ ।, गति हिंसा-शब्द-अर्थ, हसः ५ ।, अन्योऽन्यार्थ-उपपदात् ५ । च०१ । ]

गत्याद्यर्थेभ्यो हसश्च अन्योन्यार्थोपपदाच्च क्रियाविनिमये तङ् न भवति । व्यतिगच्छन्ति, व्यतिघ्नन्ति, व्यतिहसन्ति, व्यतिजल्पन्ति, व्यतिलुनन्ति, इतरेतरस्य व्यतिघ्नन्ति, परस्परस्य व्यतिघ्नन्ति, कथं

---

(४) ननु व्यतिभवतीनां क्रियाणां कीदृशो व्यतिहार इत्याशङ्-क्याह विद्यासिन्धुः यदेकेन चिकीर्षितां क्रियामन्यो विधत्ते, तेन चिकी-र्षितां पूर्व्वं तदा क्रियाव्यतिहारो भवति । तेन परस्परापेक्षित क्रियोत्-पत्तिः क्रियाव्यतिहार इति व्यतिभवते पद्मानामित्यत्र एकस्य पद्मस्य भवन-क्रियासदृशीं भवनक्रियामपरपद्मश्रीः करोतीत्यर्थः । निर्दिष्टान्यसम्ब-न्धायाः क्रियाया विपर्य्ययः ( अन्यत्र दर्शनं ) कर्म्मव्यतिहार इति संक्षिप्त-सारं, क्रियाव्यतिहार इति किम् ? विप्रस्य धान्यं व्यतिलुनन्ति लावकाः इत्यत्र विप्रसम्बन्धिनो धान्यस्य लावकैः सह सम्बन्धात् कर्म्मव्यतिहार इति च संक्षिप्तसारं । धर्म्मोऽस्ति सत्यं तव राक्षसायमन्यो व्यतिस्ते तु ममापि धर्म्मः । इत्यत्र तव धर्म्मावस्थानक्रिया निश्चिता मम धर्म्मः कुरुते इति मोघीपक्षः । वस्तुतस्त्वेतद्धर्म्मस्य भवनक्रियामपरोऽस्य ममाप्यस्ति धर्म्मः । भवनक्रियां करोतीति तैर्धर्म्मयोः क्रियाविनिमय एव ।

व्यतिनयते, व्यतिवहते भारम्? एतौ प्रापणवचनौ न गत्यर्थौ; एवं संप्रहरन्ते योद्धारः, हरतेर्न हिंसार्थः। (५)

**५५। नेर्विशः।** [नेः ५।, विशः ५।]

निपूर्व्वाद्विशस्तङ् स्यात्। निविशते, निविशमानः प्रादेर्नियमान्नेह मधूनि विशन्ति भ्रमराः। (६)

**५६। क्रियो विपर्य्यवात्।** [क्रियः ५।, वि, परि, अवात् ५।

(५) अर्थशब्दस्य द्वन्द्वपरत्वात् प्रत्येकसम्बन्धः पुनर्द्वन्द्वस्य। अन्योऽन्येतरेतरपरस्परशब्दा अन्योऽन्यार्थाः, ते उपपदं यस्य स अन्योऽन्यार्थोपपदस्तस्मात्। २ गत्यर्थेऽसंविवहः। हिंसार्थेऽसंप्रहृञः। इति सङ्क्षिप्तसारसूत्रम्। वहेः प्रापणोपसर्ज्जनीभूतगत्यर्थत्वात् हसादित्वे प्राप्ते असंविवह इति भाष्यदर्शनादुक्तं, अयमेव निषेधो ज्ञापयति प्रापणार्थस्यापि गत्यर्थत्वेन निषेध इति व्यतिवहन्ति, व्यतिहरन्ति भारं कृषकाः इति धर्म्मदासस्तु भाष्यार्थविरुद्धमेव व्यतिवहन्ते भारं, व्यतिहरन्ते भारमित्युदाजहार। दुदोह गां स यज्ञाय शस्याय मघवा दिवम्। सम्यग्विनिमयेनैवाभौ दधतुर्भुवनद्वयमिति रघुः। अत्र शिष्टप्रयोगादेव परस्मैपदित्वमेवमन्यत्र।

(६) नोपसर्गादिति (३।१।५०) निषेधवचनादुपसर्गस्य नेरिदं ग्रहणमिति पद्मनाभपञ्जिका। धातुभिः सह नियमेनोपसर्गाणां सम्बन्धादुपसर्गाणामेव प्रादीनां ग्रहणं अत उपसर्गादेव भवति नान्यस्मादिति गोयीचन्द्रः। प्रथमं धातोरुपसर्गेण सम्बन्धः पश्चात् साधनेनेति च गोयीचन्द्रः। 'मधूनि' इति द्वितीया बहुवचनान्तं पदं अतोऽत्र नेरुपसर्गत्वाभावादात्मनेपदं।

एभ्यः क्रियस्तङ् स्यात् । विक्रीणीते, परिक्रीणीते, अवक्रीणानः । (७)

५७ । जेर्विपराभ्याम् । [ जेः ५ ।, वि, पराभ्याम् ५ ॥ ]

आभ्यां जेस्तङ् स्यात् । विजयते, पराजयमानः । प्रादेर्नियमान्नेह वङ्कवि जयति वनम् । (८)

५८ । आदाञोऽस्वाङ्गप्रसारणे ।

[ आ—दाञः ५ ।, अ ( न ) स्वाङ्गप्रसारणे ७ । ]

आङो दाञस्तङ् स्यात् । अस्वाङ्गप्रसारणश्चेत् । धनमादत्ते अस्वाङ्गप्रसारण इति किम् ? व्याददाति मुखम्, नदीकूलं व्याददाति । (९)

---

(७) डुक्रीञ् द्रव्यविनिमये क्र्यादिः ।

(८) जि जये, जिञ् अभि भवे इत्यस्याप्यत्र ग्रहणमित्याह उपाध्यायसर्व्वस्वादयः । वङ्कवोवयः पक्षिणो यत्र इति वङ्कवि । इति वनस्य विशेषणं ततश्चात्र वेरुपसर्गत्वाभावादात्मनेपदम् ।

(९) आङोदोऽनास्य विहरणे (१।३।२०) इति पाणिनि सूत्रं । आस्य ग्रहणमविवक्षितम् । विपादिकां व्याददाति पादस्फोटो विपादिकेति सिद्धान्तकौमुदी । पराङ्ग कर्म्मकान्न निषेध इति वार्त्तिकं यथा व्याददते पिपीलिकाः पतङ्गस्य मुखम् । एतत् सर्व्वं संगृह्य पद्मनाभेनास्वाङ्गप्रसारण इत्युक्तम्, नदी कूलं व्याददातीत्यत्र तु सर्व्वं भावाचेतना इत्युपचारात् स्वाङ्गत्वम् । अकर्त्रभिप्राये आत्मनेपदार्थं सूत्रं ततश्चादत्ते विहगपतिर्मुखं स्वकीयमिति प्रयोगस्य कर्त्रभिप्रायविवक्षयादिति सिद्धान्तकौमुदी टीका ।

## ५९। क्रीड़ोऽन्वाङ् परेः समश्चाकूजने।

[ क्रीड़ ५।, अनु, आङ्, परेः ५।, समः ५।, अ ० १।, अ (न) कूजने ७।

एभ्यः क्रीड़ते तङ् स्यात्। अनुक्रीड़ते, आक्रीड़ते, परिक्रीड़ते, परिक्रीड़मानः संक्रीड़ते, अकूजन इति किम्? संक्रीड़न्ति शकटाः। (१०)

## ६०। आगमेः क्षमायां। [ आ गमेः ५। क्षमायां ७। ]

तङ् स्यात्। आगमयस्व तावत्। (११)

## ६१। शपः शपथे। [ शपः ५।, शपथे ७। ]

तङ् स्यात्। प्रियायै शपते पतिः। शपथ इति किम् चौरं शपति। (१२)

---

(१०) कूजनार्थे सम्पूर्व्वकादेव क्रीड़ आत्मनेपदं न स्यादिति पद्मनाभपञ्जिका। अनोः कर्म्मप्रवचनीयत्वात्, उपसर्गेण समः साहचर्य्यादिति सिद्धान्तकौमुदी। अन्वाङ्पर्य्यनुपरिभ्यामिति सङ्क्षिप्तसारसूत्रं तेन माणवकमनु क्रीड़ति, स्त्री स्त्री परि क्रीड़तीत्यादावात्मनेपदमप्राप्तम्, नोपसर्गाद्वितीयार्थादित्यनेनैव गतार्थत्वम्।

(११) ण्यन्तस्येदं ग्रहणं क्षमा च कालप्रतीक्षणं। आगमयस्व तावत् मा त्वरिष्ठा इत्यर्थः।

(१२) वाचा शरीरस्पर्शनं शपथ इति गोयीचन्द्रः, प्रकाशनार्थं शपथ इति पद्मनाभपञ्जिका। प्रियायै इत्यत्र श्लाघ ह्नुङ् स्थाशपामिति। (२।१।१४) सम्प्रदानं चौरं शपति आक्रोशतीत्यर्थः।

६२ । नाथे राशिषि कर्म्म च षष्ठीवा ।

[ नाथेः ५ । , आशिषि ७ । , कर्म्म ० १ । च ० १ । षष्ठी ०१ । , वा ० १ । ]

आशिषि नाथे आङ् स्यात् । तत्कर्म्म च षष्ठी वा । सर्पिषोनाथते सर्पिर्व्वा । आशिषीति किम् ? राजानमुपनाथति । (१३)

६३ । हरतेर्गति ताच्छील्ये । [ हरतेः ५ । , गतिताच्छील्ये ० । ]

अत्रार्थे हञः अङ् स्यात् । पैतृकमश्वा हरन्ते, जातिग्रहणं किम् ? पितरमनुहरति पुत्रः ।

६४ । किरोऽपाच्चतुष्पाच्छकुनिष्वालेखने सुट् च ।

[ किरः ५ । , अपात् ५ । , चतुष्पात्शकुनिषु ७ । । । , आलेखने । ७ । , सुट् ०१ । , च ० १ । ]

सुट् कात्पूर्व्व इति विवर्त्तते, अपात् किरतेश्चतुष्पदपक्षिविषये हर्षजीविकाकुलायकरणेष्वालेखने गम्ये तङ् स्यात् । कात् पूर्व्वं सुट् च, अपस्किरते भूमिं वृषभो हृष्टः, श्वा, कुक्कुटो वा । नान्यत्र अपकिरति अलम् । (१४)

(१३) नाथृ, नाधृ याच्ञोपतापैश्वर्य्याशीःष्विव्येतस्मादाशिष्यर्थे वर्त्तमानात् कर्त्तर्य्यात्मनेपदं भवति । इत्यात्मनेपदं—आशी. । राजानमुपनाथति याचत इत्यर्थः, याचनेऽप्यात्मनेपदं क्वचिद्दृश्यते तथा च भारविः मामर्थैरथ तव प्रयोजनं नाथसे किमु पतिं न भूभृतः । इत्यत्र चिन्त्य मिति गोयीचन्द्रः ।

(१४) । अपात् किरश्चतुष्पात् पक्षि श्वादिषु सुट् च ज्ञापि । इति संक्षिप्तसारसूत्रं अपाच्चतुष्पाच्छकुनिष्वालेखने इत्यत्र अपाच्चतुष्पात्-पक्षिकाद्ये हर्ष आदि-

६५ । आङि नुप्रच्छः । [आङि ७ ।, नु—प्रच्छः ५।, ]

आङुपपदे नु,प्रच्छिभ्यां तङ् स्यात् । आनुते शिवा, आपृच्छस्व गुरुम् । (१५)

६६ । स्थो विप्रावसमः । [स्थः ५ ।, वि, प्र, अव, सम: । ]

एभ्यस्तिष्ठते स्तङ् स्यात् । वितिष्ठते, प्रतिष्ठते, अवतिष्ठते, संतिष्ठते ।

६७ । प्रकाशनस्थेयाख्ययोश्च ।

[ प्रकाशन, स्थेयाख्ययोः ७ ।। च० ।।, ]

प्रकाशने, स्थेयाख्यायाञ्च तिष्ठतेस्तङ् स्यात् । कृष्णाय तिष्ठते कन्या स्वाभिप्रायं प्रकाशयतीत्यर्थः ; स्थेयो विवाद पदनिर्णेता संशय्य कर्णादिषु तिष्ठते यः ; संशयं कृत्वा तेषु निर्णयं करोतीत्यर्थः । (१६)

---

परेण जीविकायां, आश्रय करणे च कर्त्तर्यात्मनेपदं भवति, अपाद्गुरुतः किरतेरात्मनेपदविषये हर्षविषये च चतुष्पात्पक्षि हर्षादौ विषये सुट् भवतीत्यर्थ इति तट्टीका चतुष्पात्-पक्षीति किम् ? अपकिरति मनुष्यः, हर्षादाविति किम् ? अपकिरति श्वा ओदनमदन् हर्षादि मात्र विवक्षया यद्यपि तत्प्राप्तिस्तथापि तदभावे नेष्यते, इत्याहुः गजोऽपकिरतीति सिद्धान्तकौमुदी गजोऽपकिरतीत्यत्र हर्षे सत्यपि आक्षेपनाभावान्न सुट् जातस्तद्धिति तट्टीका ।

(१५) आङ्पूर्व्वो-नुधातुस्तत्कण्ठापूर्व्वके शब्दे स्वभाव.देव वर्त्तते, आनुते शिवा उत्कण्ठिता शब्दं करोतीत्यर्थः ।

(१६) प्रकाशनं स्वाभिप्रायाभिव्यञ्जनं तत्सिद्धार्थं, स्थेयो विवादपद

६८। आङः प्रतिज्ञायाम्। [ आङः ५ ।, प्रतिज्ञायाम् ७ । ] १

आङः स्थस्तङ् स्यात्। शब्दं नित्यमातिष्ठते प्रतिजानीते इत्यर्थः।

६९। उदोऽनूर्द्ध्वचेष्टायाम्।

[उदः ५ ।, अनूर्द्ध्वचेष्टायाम् ( न-ऊर्द्ध्वचेष्टा ) ७ । ]

अत्र उदस्स्तङ् स्यात्। मुक्तावुत्तिष्ठते जनः। अनूर्द्ध्व इति किम्? पीठादुत्तिष्ठति। (२)

७०। उपान्मन्त्रकरणपूजासङ्गति मैत्रीकरणपथिषु।

[ उपात् ५ ।, मन्त्रकरण, पूजा, सङ्गति, मैत्रीकरण, पथिषु ७ ।।। ]

---

निपाता, तस्याख्यायाश्च संश्रय्य कर्णादिषु तिष्ठते कर्णादीन्निर्णेतृत्वेनाश्रय तीत्यर्थः।

(१) शब्दं नित्यत्वेन प्रतिजानीते इति सिद्धान्तकौमुदी, अभ्युपगच्छ-तीति गोयीचन्द्रः। प्रतिज्ञा अभ्युपगमोऽङ्गीकरणमित्यर्थः। ज्ञोऽकर्म्मकात् इति सङ्क्षिप्तसारसूत्रं अकर्म्मकाज्जानातेः कर्त्तर्य्यात्मनेपदं भवति ञोऽप्रादे-रित्यनेन कर्त्रर्थक्रियाफले आत्मनेपदं प्राप्तमेव अकर्त्रर्थक्रियाफले अनेन विधीयते मधुनोजानीते ज्ञात्वा प्रवर्त्तत इत्यर्थः। नाप्रवर्त्तनादिति सूत्रान्तरम् अकर्म्मकात् ज्ञोविहितमात्मनेपदं प्रवर्त्तनार्थान्न भवति एकस्या मभिजानामि मातरीति भत्ति।

(२) उदोऽनूर्द्ध्वकर्म्मणीति पाणिनिसूत्रम् ऊर्द्ध्वदेशसंयोगानुकूलं यत् कर्म्म तदूर्द्ध्वकर्म्म, तदन्यस्मिन् इत्यर्थः। यद्यपि अनूर्द्ध्व इत्युक्तेऽप्यनूर्द्ध्व क्रियायां वर्त्तमानादुत्पूर्व्वात्तिष्ठतेरात्मनेपदं स्यादित्यर्थो लभ्यते, तथापि

मन्त्रकरणे—देवपूजादौ गम्ये, पथि कर्त्तरि च उपात् स्थस्तङ् स्यात् । गायत्र्या तमुपतिष्ठते, देवपूजादौ-विप्रोऽर्कमुपतिष्ठते, गङ्गा-समुद्रमुपतिष्ठते, राजा राजानमुपतिष्ठते, अयं पन्थाः श्रौघ्नमुप-तिष्ठते । वा लिप्सायां । अर्थी दातारमुपतिष्ठते, उपतिष्ठति वा । (३)

७१ । अकर्म्मकात् । [अकर्म्मकात् ५ ।]

अकर्म्मकात् उपात् स्थस्तङ् स्यात् । उपतिष्ठते भोजने (४)

७२ । समो दृश्यर्त्ति-वेत्ति स्वरति श्रु गम्यृच्छि प्रच्छः ।

[ समः ५ ।, दृशि, अर्त्ति ( ऋ ), स्वरति ( स्वृ ), श्रु, गमि, ऋच्छि, प्रच्छः ५ ।]

---

परिस्पन्दनात्मककर्म्मबोधनाय कर्म्मपदमित्याह ईहायामेवेति इच्छा पूर्व्विका चेष्टा ईहा, सा च ग्रामाच्छतमुत्तिष्ठतीत्यादौ नास्तीति न तङ् । उदोऽनूर्द्धघटने इति सङ्क्षिप्तसारसूत्रम् अनूर्द्धघटन इति पर्य्युदासा श्रयणादूर्द्धघटनासदृशो इतरतोऽमनात्मिका चेष्टैवाऽस्य विषयः अत-एवाह ग्रामाच्छतमुत्तिष्ठतीति उत्पद्यत इत्यर्थः । एवं यदुत्तिष्ठति वर्षेभ्यो ऽपाम्यां च्यवि तद्वनमित्यभिज्ञानप्रकुन्तलेऽपि ।

(३) मन्त्रः करणं क्रियासिसाधनं यस्य, तन्मन्त्रकरणं तस्मिन्नर्थे मन्त्र-पदेन वेदाम्नाता ऋचोभिधीयन्ते, यथा गायत्र्या तमुपतिष्ठते मन्त्रकरणे इति किम् ? भर्त्तारमुपतिष्ठति यौवनेन । करण इति किम् ? सावित्री-मुपतिष्ठति । सङ्गतिः संश्लेषः, मैत्रीदूरस्थस्यापि भवतीति सङ्गतिमैत्र्याभेद इति गोयीचन्द्रः । पन्थाः श्रुघ्नमुपतिष्ठते प्राप्नोतीत्यर्थ इति सिद्धान्त-कौमुदी । दातारमुपतिष्ठते लिप्सया उपगच्छतीत्यर्थः ।

(४) उपतिष्ठते सन्निहितोभवतीत्यर्थः ।

संपूर्व्वाद्दृश्यादेरकर्म्मकात्तङ् स्यात्। संपश्यते, ऋधातोरङादेश समारन्त ममाभीष्टाः, संविद्रूते, संस्वरते संशृणुते, संगच्छते, समृच्छते अकर्म्मकादित्येव वासं संगच्छति। (५)

+७३। व्युत्तपाङ् यम हनः स्वाङ्गकर्म्मकाच्च। (६)

[ व्युत्तप (वि-उत्-तप), आङ्-यम, हनः ५।, स्वाङ्गकर्म्मकात् (स्व आङ्गक-मर्क) ५।, च०१। ]

व्युदन्तपेराङोयमहनश्चाकर्म्मकात् स्वाङ्गकर्म्मकाच्च तङ् स्यात्। वितपते, उत्तपते, आगच्छते, आहते, आघ्नते। स्वाङ्ग कर्म्मकाच्च वित-

(५) अकर्म्मकादित्येव रत्त्वांसीति पुरापि संशृणुमहे इति मुरारि-प्रयोगः प्रामादिक इत्याहुरिति सिद्धान्तकौमुदी। अथास्मिन्नकर्म्मकाधिकारे हनि,गम्यादीनां कथमकर्म्मकतेति चेत् शृणु—"धातोरर्थान्तरे वृत्ते धात्वर्थेनोपसंग्रहात् प्रसिद्धेरविवक्षातः कर्म्मणोऽकर्म्मिका क्रिया"। नदी वहति स्यन्दत इत्यर्थे अत्र वहेः स्यन्दनमात्रार्थकत्वादकर्म्मकत्वं प्रापणार्थे तु सकर्म्मकत्वं यथा वहति भारम्। एवं धात्वर्थेन कर्म्मण उपसंग्रहादपि क्रिया अकर्म्मिका भवति यथा जीवति, नृत्यति. प्राणधारणं जीवनं, गात्रविक्षेपविशेषो नृत्यं तयोर्द्वयोरपि धात्वर्थप्रविष्टकर्म्मकत्वा दकर्म्मकत्वम्. प्रसिद्धिश्च सत्ता जागरणादीनां अकर्म्मकत्वेन प्रसिद्धानां यथा मिथोवर्षति। कर्म्मणोऽविवक्षासो यथा हिताद्म यः संशृणुत इति अकर्म्मकप्रयोगः।

(६) स्वाङ्गकर्म्मकाच्चेति चकारेणाकर्म्मकस्य संग्रहस्तेन उत्तपते, वितपते इति। स्वमङ्गं स्वाङ्गं न तु अद्रवमिति पारिभाषिकम्। ततश्च स्वाङ्गपदेनात्मीयं हस्तपादादि गृह्यते। पराङ्गे, अङ्गव्यतिरिक्ते च

पते, पृष्ठं उत्तपते पाणिं, आयच्छते, आहते स्वं वक्षः, ने छ-उत्तपति सुवर्णम्।

७४। क्रो निविसमुपात्। [क्रः ५ ।, नि-वि सम्-उपात् ५ । ]

एभ्यो क्रे अस्तङ् स्यात्। निक्रयते, विक्रयते, संक्रयते उपक्रयते सक्तीम्।

७५। स्पर्द्धायामाङः। [स्पर्द्धायां ७ ।, आङः ५ । ]

पराभिभवेच्छायामाङोक्रे अस्तङ् स्यात्। मल्लोमल्लमाक्रयते, अन्यत्र गामाक्रयति।

७६। अस्यत्यूहो वा प्रादेः।

[ अस्यत्यूहः (अस्यति-ऊह्) ५ ।, वा ० १ ।, प्रादेः (प्र-आदि) ५ ।]

प्रादेराभ्यां तङ् वा स्यात्। निरस्यति, निरस्यते, समूहन् समूहमानः। (७)

७७। क्रो भर्त्सन, गन्धन, सेवन, साहस, प्रकथनोपयोगेषु।

[ क्रः ५ ।, भर्त्सन—उपयोगेषु ७ ।।। ]

---

कर्म्मणि न भवति इति गोयीचन्द्रः। अतएव 'गाण्डिवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः' इति भारविः, आहध्वं मा रघूत्तम मिति भट्टिप्रयोगश्च प्रामादिक एवेति भागवृत्तिः। प्राप्यइत्यत्राहारोवा भेदुमित्यादि तुमुनन्ताध्याहारोवाटस्तु समीपमेत्येति वेति सिद्धान्तकौमुदी।

(७) ऊहवितर्के अस्य स्वेपक्षे इत्यनयोरात्मने पदं वा भवति कर्त्तरि वाच्ये अप्राप्तीति निर्देशोऽसम्भवि इत्यस्य निरासार्थः, अकर्म्मकादिति नित्य

एश्वर्येषु क्रञस्तङ् स्यात्। भर्त्सने उत्कुरुते श्वा, गन्धनं हिंसात्मकसूचनं उदाकुरुते, सवने राजानमुपकुरुते, साहसे परदारानुपकुरुते, प्रकथने देवान् प्रकुरुते, धर्म्मादौ विनियोगे शतं प्रकुरुते।

७८। प्रतियत्ने कर्म्म च षष्ठी वा।

[ प्रतियत्ने ७।, कर्म्म ० १।, च ० १।, षष्ठी ० १।, वा ० १।]

सतोगुणान्तराधाने क्रञस्तङ् स्यात्। तत्कर्म्मप्रयोगे तत्कर्म्म च षष्ठी वा स्यात्। एधोदकस्योपस्कुरुते, एधोदकम्वा, उपात् प्रतियत्ने सुट् च (३।१।१२५)।

७९। अधेः प्रसहने। [अधेः ५।, प्रसहने ७।]

प्रसहनमभिभवः, पराजयो वा, तत्राधेः क्रञस्तङ् स्यात्। तमधिचक्रे। (८)

---

मिति सिद्धान्तकौमुदी तथाहि वन्धनं निरस्यति, निरस्यते इत्युदाहरणम्। सङ्क्षिप्तसारेऽपि अनयोरकर्म्मकात् एवात्मनेपदमित्युक्तं तदयुक्तं तथाच सन्ततं तिमिरमिन्दुरुदासे इति भारविरिति अनयोरित्यादीनां यत्नमत दूषणमिति गोयीचन्द्रः।

(८) प्रसहनं क्षमाभिभवश्च, सह मर्षणेऽभिभवे चेति पाठादिति सिद्धान्तकौमुदी। अधेरभिभवे, उपेक्षायाञ्च इति सङ्क्षिप्तसार सूत्रम्। तत्र चोपेक्षायामित्यस्य "भवादृशश्चेदधिकुर्व्वते रतिं निराश्रया हन्त हता मनस्विता" इत्युदाहरणं दत्तम्।

८० । वेः शब्दकर्म्मणोऽकर्म्मकाच्च ।

[ वेः ५ ।, शब्द कर्म्मणः ५ ।, अकर्म्मकात् ५ ।, च ० १ । ] (९)

वेः कृञः शब्दकर्म्मकाच्च तङ् स्यात् । क्रोष्टा विकुरुते स्वरान् । अकर्म्मकाच्च । विकुर्व्वते अश्वाः साधु दान्ताः ।

८१ । नियो ज्ञानोपनयनोत्सञ्जनसम्माननविगणनभृतिव्ययेषु । (१०)

[ नियः ५।, ज्ञान, उपनयन, उत्सञ्जन, सम्मानन, विगणन, भृति, व्ययेषु ७।।।]

एष्वर्थेषु नीञस्तङ् स्यात् । ज्ञाने अर्थान्नयते धीरः, उपनयते माणवकमुपनयते, उत्सञ्जने उत्सङ्गीकरणे बालकमुदानयते, सम्मानने गुरुं विनयते, विगणनं ऋणादिशोधनं मद्राः करं विनयन्ते, भृतौ कर्म्मकारानुपनयते वेतनेनात्मसमीपीकरोति, व्यये शतं विनयते ।

८२ । कर्त्तृस्थाऽनङ्ग कर्म्मकाद्वा ।

[ कर्त्तृ-स्थ अनङ्ग-कर्म्मकात् ५।, वा०१।, ]

(९) शब्दकर्म्मणः किम् ? चित्तं विकरोति कामः । विकुर्व्वते विकारं लभन्ते इति सिद्धान्तकौमुदी । चेष्टन्ते इति गोयीचन्द्रः । विविध गतिं कुर्व्वन्तीति पद्मनाभपञ्जिका ।

(१०) ज्ञानं प्रमेयनिश्चयः, अर्थान्नयते निश्चिनोतीत्यर्थः । उपनयनं विधिनात्मसमीपप्रापणं, . उपनयीविदार्थज्ञानप्रयोजकसंस्कारस्तस्य परगामित्वात् परस्मै पदे प्राप्तेऽनेन तङ् विधीयते, न तूपनयनमात्रेणाचार्य्यत्वं किन्तु ततपूर्व्वकाध्यापनेन अतश्च माणवकमुपनयते इत्यत्र विधिना

कर्त्तृस्थमनङ्गं कर्म्म यस्य तस्मान्नियस्तङ् स्याद्वा। क्रोधं विनयते, विनयति वा, अपनयस्व मानिनि मानम्। कर्त्तृस्थेति किम्? गुरोः कोपं विनयति, अनङ्ग इति किम्? गडुं विनयति। (११)

८३। क्रमः स्फीतत्ववृत्त्युत्साहेषु।

[क्रमः ५।, स्फीतत्व-वृत्ति-उत्साहेषु ७।।।]

एष्वर्थेषु क्रमेस्तङ् स्यात्। प्राज्ञे शास्त्रं क्रमते, वृत्तिरप्रतिघातः ऋच्यस्य क्रमते बुद्धिः, युद्धाय क्रमते भटः। (१२)

---

तमात्मसमीपं प्रापयतीत्यर्थः। उत्सञ्जनं उत्क्षेपणं, उत्सङ्गीकरणमिति पञ्जनाभसम्मतोऽर्थः; सम्माननं पूजनं शास्त्रे नयते, शास्त्रस्य सिद्धान्तं शिष्येभ्यः प्रापयतीत्यर्थः, तेन च शिष्य सम्माननं फलितमिति सिद्धान्त-कौमुदी। नयते बुद्धिमांस्तर्के पदार्थान् सम्यग्गमयन् सम्मानितोभवतीति सङ्क्षिप्तसारम्। मद्राः मद्रदेशीयाः करं राजस्वं विनयन्ते शोधयन्ति।

(११) कर्त्तृस्थे चाशरीरे कर्म्मणीति पाणिनिसूत्रम् (१।३।३७) नियः कर्त्तृस्थे कर्म्मणि यदात्मनेपदं प्राप्नन्तच्छरीरावयवभिन्ने एव-स्यात्। सूत्रे शरीरशब्देन तदवयवो लक्ष्यते क्रोधं विनयते अपगमयति तत् फलस्य चित्तप्रसादस्य कर्त्तृगत्वाद् स्वरितञितः इत्येव सिद्धे नियमार्थमिदं। कथं तर्हि श्वविगणय्य नयन्ति पौरुषमिति कर्त्तृगामित्वाविवक्षाया-मविष्यतीति सिद्धान्तकौमुदी, संक्षिप्तसारे अनभिधानादनपनयनस्य न स्यादिति सूत्रान्तरमस्ति, तदर्थस्तु अपनयनार्थस्य अनभिधानात् तङ् न स्यात् अपनयनार्थस्यैव स्यादिति। अपनयनं खण्डनं तमविगणय्य नयन्तीत्यत्र णीञः प्रापणार्थत्वं न त्वपनयनार्थता।

(१२) प्राज्ञे बुद्धिमज्जने शास्त्रं क्रमते स्फीतं भवति, अस्य बुद्धिः ऋचि क्रमते न प्रतिहन्यते इत्यर्थः, भटः युद्धाय क्रमते उत्साहं करोति।

८४। उपपराभ्याम् [उपपराभ्याम् ५।,]

आभ्यां स्फीतत्वादौ गम्ये क्रमे सङ् स्यात्। शास्त्रमस्मिन्नुपक्रमते, पराक्रमते।

८५। आङो ज्योतिरुद्गतौ।

[आङः ५।, ज्योतिरुद्गतौ (ज्योति-उद्गति) ७।]

ज्योतिरुद्गमने आ-क्रमे सङ् स्यात्। आक्रमते भानुः ज्योतिरिति किम्? आक्रमति धूम, उद्गताविति किम्? आक्रमति गिरिं रविः। (१३)

× ८६। वेः पादविक्षेपे। [वेः ५।, पादविक्षेपे ७।] ×

---

(१३) उद्गतिरूर्द्ध्वगमनमुच्यते, उर्द्ध्वगमनपूर्व्विका व्याप्तिश्च प्रथमेऽर्थे वर्त्तमानोऽकर्म्मकः क्रमिः, द्वितीयस्तु सकर्म्मकः उभयोरुदाहरणं यथा संक्षिप्तसारे आक्रमते रविः, उद्गच्छतीत्यर्थः, अभिराक्रमते दिवमुत्थाय व्याप्नोतीत्यर्थः तथाच दिवमाक्रममाणेव केतुतारा भयप्रदेति भट्टिः। नभः समाक्रमति व्याप्तवर्त्मना स्थिरैकचक्रया रथेन भास्कर इत्यसाधुरिति भागवृत्तिः। अक्रम्मते त्वत्र कवलाद्रूपूर्व्वकत्वाभावात्मनेपदप्राप्तिरेव। ज्योतिःशब्देनाग्निरपि गृहीत इति अग्निराक्रमते इत्युदाहरणेन प्रतीयते। उपमानेनापि यत्रोपमेयस्य ज्योतिष्मत्ता प्रतीयते तत्राप्यात्मनेपदमिति सूचयितुं दिवमाक्रममाणेवेति भट्टिप्रयोगोदर्शितः अतएव माघेऽपि दन्तालिकावरणमिश्चलधारियुग्ममर्द्धादितोदर्वरिवोदयशैलमूर्द्ध्नः। लोकेन नाक्रमत वल्लभपालमम्भः श्रीवृक्षकी पदमिवोन्नमितायकाय इति गोयीचन्द्रः।

प्रतिदीव्नोः, प्रतिदीव्नाम् प्रतिदीव्नि, प्रतिदिवनि, प्रतिदिवसु। सम्बोधने - प्रतिदिवन्, इत्यादि।

युवन् ( यु+कनिप् ) शब्दः।

युवा, युवानौ, युवानः युवानं, युवानौ, (लघिमन् शब्दवत्) शसादौ-युवन्+शस् श्वयुवमघोनामिति (११४।३।२) व स्थाने उकारः ततश्चाकः सवर्णे इति उकारस्य दीर्घत्वे यूनः। टा-यूना (वस्य उत्वं, दीर्घश्च). भ्याम् युवभ्याम् (नलोपः), एवं युवभिः। ङे-यूने (वे उ, दी,) युवभ्याम्, युवभ्यः। ङसि-यूनः (शसवत्) युवभ्याम्, युवभ्यः। ङस्-यूनः (शस्वत्), ओस्-यूनोः (व उ, दी,) आम्-यूनाम् (व उ, दी)। ङि-यूनि (व, उ, दी), ओस्-यूनोः, सुप्-युवसु (नलोपः) सम्बोधने-युवन्, युवानौ, युवानः।

श्वन् शब्दः।

श्वा, श्वानौ, श्वानः। श्वानं श्वानौ (लघिमन् शब्दवत्), शसादौ तु-युवन्वत् यथा--शुनः। शुना श्वभ्याम्, श्वभिः। शुने, श्वभ्याम्, श्वभ्यः। शुन , श्वभ्याम्, श्वभ्यः। शुनः, शुनोः, शुनाम्। शुनि, शुनोः श्वसु। सम्बोधने-श्वन्, श्वानौ, श्वानः।

मघवन् शब्दः।

मघवन्+सु+सुलोपः, मघोनस्तृ वेति (१३७।३।२) सौ विकल्पेन न् स्थाने तृ (त्), उगिदचोरिति नुम्, सावत्वसन्तेति दीर्घः, संयोगान्तस्येति तलोपः मघवान्, पक्षे नोपधाया इति उपधादीर्घः नस्य लोप इति न लोपः मघवा, औ-मघवन्तौ (न् स्थाने तृ (त्)(१३-७।३।२) उगिदचोरिति नुम्) पक्षे मघवानौ (नोपधाया इति दीर्घः), जस्-मघवन्तः (तृ, नुम्), पक्षे मघवानः (उपधादीर्घः)। अम्-मघवन्तम् (तृ,नुम्), पक्षे मघवानम् (उपधादीर्घ), औट्-मघवन्तौ, पक्षे

मघवानौ, शस् मघवतः (ठ), पक्षे मघोनः (वस्य उ (१२४।३।२) एवं टादौ—मघवता, मघोना, मघवद्भ्याम्, मघवभ्याम्(नलोपः) मघवद्भिः, मघवभिः,(नलोपः)। मघवते, मघोने, मघवद्भ्यां, मघवभ्याम्, मघवद्भ्यः मघवभ्यः। मघवतः, मघोनः, मघवद्भ्यां, मघवभ्याम्, मघवद्भ्यः, मघवभ्यः मघवतः, मघोनः, मघवतोः मघोनोः, मघवताम्, मघोनाम्। मघवति, मघोनि, मघवतोः, मघोनोः, मघवत्सु, मघवसु।

मघशब्दान्मतुपा निष्पन्नस्य मघवत् शब्दस्य मघवान्, मघवन्तौ, मघवन्तः। इत्येवं प्रकाराणि रूपाणि भवन्ति।

अर्व्वन्+सु,सुलोपः नोपधादीर्घः नस्य लोपः अर्व्वा, औ अर्व्वन्तौ (अर्व्वनस्त्वासाविति न स्थाने ठ (त्) (१३८।३।२) उगिदचोरिति नुम् जस्-अर्व्वन्तः (न स्थाने ठ (त्) नुम्)। अम्-अर्व्वन्तम् (ठ नुम्), औट्-अर्व्वन्तौ, शस-अर्व्वतः (ठ)। टादौ--अर्व्वता, अर्व्वद्भ्यां, अर्व्वद्भिः अर्व्वते, अर्व्वद्भ्याम्, अर्व्वद्भ्यः। अर्व्वतः, अर्व्वद्भ्याम्, अर्व्वद्भ्यः। अर्व्वतः अर्व्वतोः, अर्व्वताम्। अर्व्वति, अर्व्वतोः, अर्व्वत्सु। सम्बोधने-अर्व्वन्, अर्व्वन्तौ, अर्व्वन्तः।

अनर्व्वन् शब्दस्य-तु अनर्व्वा, अनर्व्वाणौ अनर्व्वाणः। अनर्व्वाणं अनर्व्वाणौ इत्यादि आत्मन् शब्दवत् रूपाणि भवन्ति।

पञ्चन् शब्दः (बहुवचनान्तः)

पञ्चन्+जस् डतिष्णान्त संख्याभ्य इति (२८।३।२) जसोलुक नस्य लोप इति न लोपः पञ्च। पञ्चन्+शस-पञ्च (जस्वत्)। भिस् पञ्चभिः (नलोपः)। भ्यस्-पञ्चभ्यः (नलोपः)। आम् पञ्चन्+आम् आमोनामिति (३५।३।२) आम् स्थाने नाम् नस्येति नलोपः, नामीति (३१।३।२) अकारदीर्घः पञ्चानाम्। सुप् पञ्चसु (नलोपः)। एवं परम-पञ्चन्, सप्तन्, नवन्, दशन् प्रभृतयः।

प्रियपञ्चन् (प्रियाः पञ्च यस्य) शब्दस्य तु स्वार्थाभावात् न जस

शसोर्लुक् नापि आमः स्थाने नाम्। ततश्च राजन् शब्दवत् रूपाणि भवन्ति। यथा

प्रियपञ्चा (सुलोपः उपधादीर्घः न लोपः) प्रियपञ्चानौ (उपधादीर्घः), प्रियपञ्चानः। (उपधादीर्घः)। प्रियपञ्चानं, प्रियपञ्चानौ, प्रियपञ्चञः (अलोपः न् स्थाने ञ्)। प्रियपञ्चञा (अलोपः न स्थाने ञ), प्रियपञ्चभ्याम (नलोपः), प्रियपञ्चभिः (नलोपः)। प्रियपञ्च्ञे (अ, लो न स्थाने ञ), प्रियपञ्चभ्याम्, प्रियपञ्चभ्यः। प्रियपञ्चञः अ, लो, न् स्थाने ञ्। प्रियपञ्चभ्याम्, प्रियपञ्चभ्यः। प्रियपञ्चञः (ङसिवत्) प्रियपञ्चञोः, (अ, लो न् स्थाने ञ), प्रियपञ्चञाम्। प्रियपञ्चञि (अ लो, न स्थाने ञ) पक्षे प्रियपञ्चनि, प्रियपञ्चञोः, प्रियपञ्चसु (न लोपः)। सम्बोधने—प्रियपञ्चन्, प्रियपञ्चानौ, प्रियपञ्चानः।

### अष्टन् शब्दः (बहुवचनान्तः)।

अष्टन्+जस्, अष्टन आ विभक्ताविति (२६।३।२) न स्थाने आकारः, जस्शसोरष्टाभ्यः (२७।३।२) जसः स्थाने औ, ततः वृद्धिरेचीति वृद्धिः अष्टौ, पक्षे डतिष्णान्तेति जश्शसोर्लुक् नस्येति न लोपः अष्ट। अष्टन्+शस् अष्टौ, अष्ट (जस्वत्)। अष्टाभिः (न स्थाने आ), पक्षे अष्टभिः। एवं अष्टाभ्यः, अष्टभ्यः। अष्टानाम् (पञ्चवत्) अष्टासु (न् स्थाने आ), अष्टसु (पञ्चवत्) एवं परमाष्टन् शब्दोऽपि।

प्रियाष्टन् (प्रियाः अष्टौ यस्य) शब्दस्यतु गौणत्वे राजन् शब्दवत् रूपाणि।

प्रियाष्टा, प्रियाष्टानौ, प्रियाष्टानः। प्रियाष्टानं, प्रियाष्टानौ, प्रियाष्ट्नः। प्रियाष्ट्ना, प्रियाष्टभ्याम्, प्रियाष्टभिः। प्रियाष्ट्ने, प्रियाष्टभ्याम्, प्रियाष्टभ्यः। प्रियाष्ट्नः, प्रियाष्ट्नोः, प्रियाष्ट्नाम्। प्रियाष्ट्नि, प्रियाष्टनि, प्रियाष्ट्नोः, प्रियाष्टसु। सम्बोधने-प्रियाष्टन्, प्रियाष्टानौ, प्रियाष्टानः।

अन्यार्थेऽपि भवतीति पद्मनाभवचनात् पक्षे नकारस्यात्वमपि भवति ।

आत्वपक्षे—

प्रियाष्टन् + सु नकारस्याकारः प्रियाष्टाः, औ प्रियाष्टौ (नकारस्याकारः वृद्धिः) जस् प्रियाष्टाः (न आ दीर्घः)। अम् प्रियाष्टां, औट्—प्रियाष्टौ, शस्—प्रियाष्टान् । टा—प्रियाष्टा (न आ, दीर्घः) प्रियाष्टाभ्यां, प्रियाष्टाभिः । ङे प्रियाष्टे (न आ वृद्धिः)। ङसिङसोः प्रियाष्टाः (न आ दीर्घः), ओस् प्रियाष्टौः (न आ वृद्धिः) आम् प्रियाष्टाम् (न आ दीर्घः) (ङि प्रियाष्टे) न आ गुणः सप् प्रियाष्टासु ।

सिद्धान्तकौमुदीमते गौणस्थले हलादौ सुपि एव नकारस्यात्वं विकल्पेन भवति न त्वजादौ ।

इनन्तः = गुणिन् शब्दः ।

गुणिन् + सु सुलोपः इन्हन्निति उपधादीर्घः नस्य लोपः इति न-लोपः गुणी, औ-गुणिनौ, जस—गुणिनः । अम् गुणिनं, औट् गुणिनौ, शस्—गुणिनः । टाटा-गुणिना, गुणिभ्याम् (न लोपः), गुणिभिः (न लोपः)। गुणिने, गुणिभ्याम्, गुणिभ्यः । गुणिनः, गुणिभ्याम्, गुणिभ्यः । गुणिनः, गुणिनोः, गुणिनाम् । गुणिनि, गुणिनोः, गुणिषु (न लोपः)। सम्बोधने गुणिन्, गुणिनौ, गुणिनः । एवं मानिन्, धनिन्, देहिन्, कर्मिन्, दण्डिन् प्रभृतय इनन्त शब्दाः ।

पथिन्शब्दः ।

पथिन् + सु पथिमथ्यृभुक्षामिति (७।१।८५) इकारस्य नकारस्याकारः, थकारस्यान्थ्यादेशः पन्थास इति स्थिते स स्थाने : पन्थाः, औ-पन्थानौ (इकारस्याकारः, थ स्थाने न्थ), जस्-पन्थानः (इ स्थाने आ, थ स्थाने न्थ)। एवं अम्-पन्थानम्, औट्-पन्थानौ, शस्-पथः

(पथ्यादेरिन इति (१३०।३।२) इन्भागस्य लोपः, पथ्+अस् पथः) टा-पथा (इन लोपः), भ्याम्-पथिभ्याम् (नलोपः) एवं भिस्-पथिभिः। ङे-पथे (इन् लोपः), भ्याम्-पथिभ्याम्, (पूर्ब्बवत्), भ्यस् पथिभ्यः ( न लोपः। ङसि पथः, भ्याम् पथिभ्याम्, भ्यस् पथिभ्यः। ङस् पथः, ओस् पथोः (इन् लोपः), आम् पथाम् (इन् लोपः)। ङि पथि (इन् लोपः), ओस् पथोः, सुप् पथिषु (नलोपः)। सम्बोधने--पन्थाः, पन्थानौ, पन्थानः प्रथमावत्। एवं मथिन्, ऋभुक्षिन् शब्दयोरपि। यथा मन्थाः, मन्थानौ मन्थानः। मन्थानः, मन्थानौ, मथः। मथा, मथिभ्याम् मथिभिः। इत्यादि। ऋभुक्षा, ऋभुक्षाणौ ऋभुक्षाणः। ऋभुक्षाणं, ऋभुक्षाणौ, ऋभुक्षः। ऋभुक्षा, ऋभुक्षिभ्याम् ऋभुक्षिभिः। इत्यादि।

पकारान्तः--गुप् (गुप+क्किप्) शब्दः।

गुप्+सु, सुलोपः गुप् पक्षे वाऽवसाने इति पस्य बत्वं गुब, औ गुपौ, जस्—गुपः। अम्-गुपं, औट्—गुपौ, शस्—गुपः। टा—गुपा, भ्याम्—गुब्भ्याम् (झयस्तृतीय इति पस्य बत्वं), एवं भिसि गुब्भिः। ङे—गुपे, गुब्भ्याम्, गुब्भिः। ङसि गुपः ओस् गुपोः, आम् गुपाम्। ङि—गुपि, ओस् गुपोः सुप्--गुप्सु। सम्बोधने—गुप् गुपौ, गुपः।

मकारान्तः-- इदम्शब्दः।

इदम्+सु, इयमयमिति (२४।४।२) सुना सह इदमः स्थाने अयम् आदेशः अयम्, इदम्+औ तदादेरिति (१७।४।२) टेरत्, इद= औ इति स्थिते दोमः (२५।४।२) दकारस्य मकारः इमौ, इदम्+ जस्, टेरत्वं दस्य मत्वं जस इत् पुंसीति (१४।४।२) जस इत्त्वं गुणश्च इमे। इदम्=अम्, टेरत्वं, दस्य मत्वं इमौ, इदम्+शस्, टेरत्वं, दस्य मत्वं, ततः शसि दीर्घस्य(२०।३।२) प्रवृत्तौ सुस्थाने न आदेशः

इमान्—इदम्+टा टौसोरकोरन इति अन आदेशः ततः अतष्टाभिस् (३७।३।२)इत्यस्य प्रवृत्तौ अनेन, इदम+भ्याम् हल्यत् (२७।४।२)इति इदमः स्थाने अ, ततोभ्याम्यि दीर्घः (४०।३।२) अकारस्य दीर्घः, आभ्याम्, इदम्+भिस्, हल्यत् इति इदमः अकारः, इदमदसोरिति (२२।४।२) भिसि अस्य एत्वम् एभिः। इदम—ङे, तदादेरिति टेरत्, अतो ङेस्मै (१०।४।२) इति ङे स्थाने स्मै, हल्यत् इति अत्वं अस्मै, इदम्=भ्याम् (पूर्व्ववत्) आभ्याम्, इदम्=भ्यस् हल्यत् इति अत्वं ततएङ्भ्यसोसामिति (३८।४।२) अकार स्थाने एकारः एभ्यः। इदम्+ङसि टेरत्त्वं ङसिङ्योरिति (११।४।२), ङसिस्थाने स्मात्, हल्यत् इति अत्त्वं अस्मात्, आभ्यां, एभ्यः। पूर्व्ववत्। इदम्+ङस, टेरत्त्वं अतष्टाभिस् इति ङस स्थाने स्य, हल्यत् इति अत्वं अस्य, इदम्+ओम् टौसोरिति इदमः स्थाने अन, ततः अयोसीति (३८।३।२), अकार स्थाने अय् अनयोः, इदम्+आम् टेरत्वं आदाम इति (१३।४।२) आमः स्थाने साम्, हल्यत् इति अत्वं, एङ्भ्यसोसामिति एत्त्वं इच्कुर इति षत्वं एषाम्। इदम्+ङि टेरत्त्वं ङसिङ्योरिति ङि स्थाने स्मिन्, हल्यत् इति अत्वं अस्मिन्, इदम्+ओस् अनयोः (पूर्व्ववत्), इदम्+सुप हल्यत् इति अत्वं एङ्भ्यसोसामिति अकारस्य एत्त्वं इच्कुर इति षत्वम् एषु। सककारस्य तु इदम् शब्दस्य—अयकं, इमकौ, इमके। इमकं, इमकौ, इमकान्। इमकेन, इमकाभ्याम, इमकैः। इमकस्मै, इमकाभ्यां, इमकेभ्यः। इमकस्य, इमकयोः, इमकेषां। इमकस्मिन्, इमकयोः, इमकेषु। पूर्व्वोक्तानुकथने (अन्वादेशे) सककारस्याककारस्यापीदमशब्दस्य द्वितीयाटा-ओसस्—एनौ, एनान्, एनेन, एनयोः। किम् शब्दस्य रूपाणि अकारान्तपुंलिङ्ग प्रसङ्गे दर्शितानि।

प्रशाम्शब्दः।

प्रशाम्+सु, सुलोपः मोनोधातोरिति (८८।३।२) म—स्थाने न प्रशान्, औ—प्रशामौ, जस—प्रशामः। अमादौ प्रशामं, प्रशामौ, प्रशामः। प्रशामा, प्रशान्भ्याम् (म स्थाने न्), प्रशान्भिः (मस्थाने न्), प्रशामे, प्रशान्भ्याम्, प्रशान्भ्यः। प्रशामः, प्रशान्भ्याम्, प्रशान्भ्यः। प्रशामः, प्रशामोः, प्रशामां। प्रशामि, प्रशामोः, प्रशामंसु (मस्थाने न पक्षे तुक् प्रशान्त्सु। सम्बोधने—प्रशान्, प्रशामौ, प्रशामः। एवं प्रतामशब्दोऽपि। प्रतान्, प्रतामौ, प्रतामः। प्रतान्भ्याम्, प्रतान्भिरित्यादि।

रकारान्तः—चतुर्शब्दः—संख्यावाचकः, बहुवचनान्तः। चतुर् +जस, चतुरनडुहोरिति (७४।३।२) आमागमः, इकोयणचीति उकार स्थाने व, चत्वारः। चतुर्+शस-चतुरः। भिस्—चतुर्भिः। भ्यस—चतुर्भ्यः। आम्-चतुर्णाम् (आमोनामिति आमस्थाने नाम्)। सुप्—चतुर्षु (असुपीति निषेधात् न र् स्थाने विसर्गः)।

एवं 'परमचतुर्' शब्दस्यापि रूपाणि भवन्ति। यथा-परमचत्वारः, परमचतुरः। परमचतुर्भिः। परमचतुर्भ्यः। परमचतुर्णाम्। परमचतुर्षु। प्रियाः (बान्धवाः) चत्वारो यस्य इति बहुव्रीहिसमासनिष्पन्नस्य प्रियचतुर्शब्दस्य तु—प्रियचतुर्+सु, सुलोपः, चतुरनडुहोरित्यात्वाम्यार्थे चेति वचनात् आमागमः उस्थाने व, रस इति र स्थाने विसर्गः प्रियचत्वाः, औ—प्रियचत्वारौ (आमागमः), जस् प्रियचत्वारः (आमागमः)। अम्—प्रियचत्वारं (आमागमः), औट्—प्रियचत्वारौ, शस्—प्रियचतुरः। टादौ—प्रियचतुरा, चतुर्भ्याम्, प्रियचतुर्भिः। प्रियचतुरे, प्रियचतुर्भ्याम्, प्रियचतुर्भ्यः। प्रियचतुरः, प्रियचतुर्भ्याम् प्रियचतुर्भ्यः। प्रियचतुरः, प्रियचतुरोः प्रियचतुराम्,। प्रियचतुरि, प्रियचतुरोः, प्रियचतुर्षु। सम्बोधने—प्रियचत्वः (आमागमः)

ह्रस्वोऽस्वार्थे (२१।३।४) इति ह्रस्वः, प्रियचत्वारौ, प्रियचत्वारः ।

प्रियाः (स्त्रियः) चतस्रो यस्य इति वाक्यनिष्पन्नस्य प्रियचतुर् शब्दस्य तु—त्रिचतुरोरिति (३४।३।२) सूत्रे स्त्रिया अन्य लिङ्गत्वे चेति वचनात् सूत्रस्य प्रवृत्तौ—प्रिय चतुर+सु, चतसृ आदेशः आत् सुनेति (६८।३।२) सुना सह ऋ स्थाने आत् प्रियचतसा, औ-प्रियचतस्रौ, जस्—प्रियचतस्रः। अम्—प्रियचतस्रं, औट्—प्रियचतस्रौ, शस्—प्रियचतस्रः । टादौ—प्रियचतस्रा, प्रियचतसृभ्याम्, प्रियचतसृभिः । प्रियचतस्रे, प्रियचतसृभ्याम्, प्रियचतसृभ्यः। प्रियचतस्रः, प्रियचतसृभ्यां, प्रियचतसृभ्यः । प्रियचतस्रः, प्रियतस्रोः, प्रियचतस्राम्। प्रियचतस्रि, प्रियचतस्रोः, प्रियचतसृषु। सम्बोधने - प्रियचतसः, प्रियचतस्रौ, प्रियचतस्रः ।

लकारान्तः—कमल् शब्दः । *

कमल्, कमलौ, कमलः । कमलं, कमलौ, कमलः । कमला, कमल्भ्याम्, कमल्भिः । कमले, कमलभ्याम्, कमल्भ्यः । कमलः कमल्भ्याम्, कमल्भ्यः । कमलः, कमलोः, कमलाम् । कमलि, कमलोः, कमल्षु । सम्बोधने—कमल्, कमलौ, कमलः ।

वकारान्तः—सुदिव् (शोभना दिव् यस्य) शब्दः ।

सुदिव्+सु, दिव उत् सौ औत् (८४।३।२) इति व स्थाने औत्, इकार स्थाने य, अत्र व स्थाने औत् आदेशस्य अन्तरङ्गत्वे प्रथमं तस्मिन् कृते हलन्तत्वाभावान्न सलोपः, ततश्च स स्थाने विसर्गः,

* कमलं, कमलां वा आचष्टाम: इति णिच् टि लोपः कमलि धातुः ततः क्विप् णिचोर्लोपः कमल् इति शब्दः । अस्य साधने न किमपि विशेष सूत्र मस्ति तत् रूपाण्येव दर्शितान्यत्र ।

सुद्यौः,* औट—सुदिवौ, जस्-सुदिवः। अम्-सुदिवम्, औ-सुदिवौ, शस्-सुदिवः। टा-सुदिवा, भ्याम्-सुद्युभ्याम् (व स्थाने उत्), भिस्-सुद्युभिः (व स्थाने उत्)। ङयादौ—सुदिवे, सुद्युभ्याम्, सुद्युभ्यः। सुदिवः, सुद्युभ्याम्, सुद्युभ्यः। सुदिवः, सुदिवोः, सुदिवाम्। सुदिवि, सुदिवोः, सुद्युषु। सम्बोधने—सुद्यौः, सुदिवौ, सुदिवः।

अचैर्दीव्यतीति, अच+दिव्+क्विप्, च ऊठ् (८८।३।२) वकारस्य ऊकारे 'अचद्यू' इत्येवं प्रकृतिर्भवति, ततः अचद्यू+सु, स स्थाने विसर्गः अचद्यूः, औ—अचद्य्वौ, अचि युक्तेति (५।२।३।२) ऊकार स्थाने उव्), एवं जस्-अचद्य्वः। अम्—अचद्य्वं, औट्—अचद्य्वौ, शस्—अचद्य्वः। टा—अचद्य्वा, भ्याम्-अचद्यूभ्याम्, भिस्-अचद्यूभिः। ङयादौ—अचद्य्वे, अचद्यूभ्याम्, अचद्यूभ्यः। अचद्य्वः, अचद्य्वोः, अचद्य्वाम्। अचद्य्वि, अचद्य्वोः, अचद्यूषु सम्बोधने—अचद्यूः, अचद्य्वौ, अचद्य्वः। एवं हिरण्यं ष्ठीवतीति (हिरण्य+ष्ठीव्+क्विप्) हिरण्यष्ठ्यू इति प्रकृतिः ततश्च स्वादौ—हिरण्यष्ठ्यूः, हिरण्यष्ठ्य्वौ, हिरण्यष्ठ्य्वः। हिरण्यष्ठ्य्वं, हिरण्यष्ठ्य्वौ, हिरण्यष्ठ्य्वः। हिरण्यष्ठ्य्वा, हिरण्यष्ठ्यूभ्याम्, हिरण्यष्ठ्यूभिरित्यादि अचद्यूवत्।

अवतीति (अव्+क्विप् ज्वरत्वरेति (६०।३।२) अवा सह वस्य, उकारः 'ऊ' इति प्रकृतिः ततश्च स्वादौ ऊः ऊवौ, ऊवः। ऊवं, ऊवौ, ऊवः। ऊवा, ऊभ्याम्, ऊभिः। इत्यादि, एवं मू (मव+क्विप्) मूः

* ननु केवलस्याग्रहणान्नेह अचद्यूरिति मूलवचनेन सुदिव् इत्यत्रापि दिव उत् इति सूत्रस्याप्राप्तिरेवाऽवगम्यते यतश्च सुद्यूरिति भवितुमर्हतीति चेन्न केवलपदेन प्रकृत्यादिविशिष्टतावन्मात्रं प्रातिपदिकं यत् तदेव गृह्यते ततः समस्तेऽपि तस्मिन् दिव उदिति सूत्रस्य गतिर्भवत्येव। अचद्यूरित्यत्र तु अचद्यू एतावन्मात्रं प्रातिपदिकं न तु प्रकृत्यादिविशिष्टं प्रातिपदिकं ततो न सूत्रस्य गतिरिति सर्वमवदातम्।

(श्रिवि + क्विप्) प्रभृतयः, धनमवतीति (धन + अव् + क्विप्, ज्वरत्व-रेति (८०।३।२) अचा सह वकारस्य ऊकारः, वृद्धिरेजूठः (४।२।१) ऊकारस्य वृद्धौ धनौ, ततः धनौ + सु, स स्थाने विसर्गः धनौः, औ—धनावौ (एचोऽयवेति (१३।२।१) औकार स्थाने आव), एवं जस्—धनावः। अम्—धनावं, औट्—धनावौ, शस्—धनावः। टा धनावा, भ्याम् -धनौभ्याम्, भिस्—धनौभिः। इत्यादि ग्लौशब्दवत्।

देवृ (देव्) + क्विप् (पद्मनाभमते एतः क्वौ वलोप इति वार्त्तिक-बलात् (८३।३।२) वलोपे 'दे' इति प्रकृतिः ततः—दे + सु सस्थाने विसर्गः, देः, औ-दयौ (एचोऽयवेति एकारस्थाने अय), एवं जस—दयः। अम्-दयम्, औट्—दयौ, शस्-दयः। टा-दया, भ्याम्—देभ्याम्, भिस्—देभिः। इत्यादि एवं से (सेव् + क्विप्), ते (तेव + क्विप्) शब्दयोः। क्रमदीश्वरमते वकारस्य ऊत्वं भवति ततः (द + ऊ 'दयू') से + ऊ सयू, ते + ऊ तयू इति प्रकृतयः ततश्च दयूः, दयुवौ, दयुवः। एवं प्रकाराणि रूपाणि भवन्ति।

शकारान्तः तादृश् (त + दृश् + क्विन्) शब्दः।

तादृश् + सु, सुलोपः, कः क्विनन्तस्येति श स्थाने क, तादृक, वाऽवसाने इति कस्य गत्वे तादृग्, औ-तादृशौ, जस्-तादृशः। अम् तादृशं, औट्-तादृशौ, शस्-तादृशः। टादौ-तादृशा, तादृग्भ्याम् (कः क्विनन्तस्येति श स्थाने क्, झयस्तृतीय इति क स्थाने ग्), एवं तादृग्भिः। तादृशे, तादृग्भ्याम्, तादृग्भ्यः। तादृशः, तादृग्भ्याम्, तादृग्भ्यः। तादृशः, तादृशोः, तादृशाम्। तादृशि, तादृशोः, तादृक्षु (श स्थाने क, ततः षत्वम्)। सम्बोधने तादृक्, तादृशौ, तादृशः एवं यादृश्, कीदृश्, एतादृश्, अन्यादृश्, भवादृश् प्रभृतयः।

सुदृश्, आयतदृश् प्रभृतीनामप्येवमेव रूपाणि। स्पृशोऽनुदके इति सूत्रेण क्विन् प्रत्ययनिष्पन्नानां घृतस्पृश् प्रभृतीनामपि तादृश्

शब्दवत् रूपाणि, घृतस्पृक्, घृतस्पृग्, घृतस्पृशौ, घृतस्पृशः। इत्यादि—एवं स्पृश्, मर्म्मस्पृश्, बहुस्पृश् प्रभृतयः।

### विश् शब्दः।

विश्+सु, सुलोप व्रश्च भ्रस्जेति श् स्थाने ष, षष्ट इति ष् स्थाने ट् विट्, पक्षे वाऽवसाने इति ट स्थाने ड विड्, औ-विशौ, जस—विशः। अम्-विशम्, औट्-विशौ, शस्-विशः। टा-विशा, भ्याम् विड्भ्याम् (श् स्थाने ष, ष स्थाने ट्, झयस्तृतीय इति ट स्थाने ड्), एवं भिस्-विड्भिः। ङयादौ-विशे, विड्भ्याम्, विड्भ्यः। विशः, विड्भ्याम्, विड्भ्यः। विशः, विशोः, विशाम्। विशि, विशोः, विट्सु, विट्त्सु। सम्बोधने विट्, विड्, विशौ, विशः। नश्, वर्ज्जं सर्व्वेषां शकारान्तानामिवमेव रूपाणि।

### नश् शब्दः।

नश्+सु, सुलोपः नशेर्वा (८५।४।२) विकल्पेन श् स्थाने क्, नक् पक्षे, वाऽवसाने कस्य गत्वं नग्, विकल्पपक्षे व्रश्च, भ्रस्जेति श् स्थाने ष, षष्ट इति ष स्थाने ट, नट् पक्षेवाऽवसाने इति नड्, औ नशौ, जस-नशः। अम्-नशं, औट्—नशौ, शस्-नशः। टा-नशा, भ्याम्-नग्भ्याम् (शकारस्य कत्वं झयस्तृतीय इति ककारस्य गत्वं) पक्षे नड्भ्याम् (व्रश्चेति शस्य षत्वं, षष्ट इति षस्य टत्वं झयस्तृतीय इति टकारस्य डकारः), एवं भिस्-नग्भिः, नड्भिः। ङयादौ—नशे, नग्भ्याम्, नड्भ्याम्, नग्भ्यः, नड्भ्यः। नशः, नग्भ्याम्, नड्भ्याम्, नग्भ्यः, नड्भ्यः। नशः, नशोः, नशाम्। नशि, नशोः, नक्षु (श् स्थाने क, इच्कुर इति षत्वम्) पक्षे नट्सु शस्य षत्वं षस्य टत्वम्। पक्षे नटाभ्यां सि इति तुक् नट्त्सु। सम्बोधने—नक्, नग्, नट्, नड्, नशौ, नशः।

षकारान्तः - दधृष् धृष्+क्विन् निपातनं) शब्दः।

दधृष्+सु, सुलोपः, कः क्विनन्तस्येति ष् स्थाने क् दधृक्, पक्षे वाऽवसाने इति कस्य गत्वे दधृग्, औ–दधृषौ, जस् दधृषः। अम्-दधृषं, औट्–दधृषौ, शस्–दधृषः। टा–दधृषा, भ्याम्–दधृग्भ्याम् (ष् स्थाने क, झयस्तृतीय इति क स्थाने ग्), एवं भिस्–दधृग्भिः। ङ्यादौ–दधृषे, दधृग्भ्याम्, दधृग्भ्यः। दधृषः, दधृग्भ्याम्, दधृग्भ्यः। दधृषः, दधृषोः, दधृषाम्। दधृषि, दधृषोः दधृक्षु (ष स्थाने क् ततः षत्वम्)। सम्बोधने–दधृक, दधृग्, दधृषौ, दधृषः।

द्विष् शब्दः।

द्विष्+सु, सुलोप षष्ट इति ष् स्थाने ट् द्विट् पक्षे वाऽवसाने इति टस्य डत्वे द्विड्, औ–द्विषौ, जस–द्विषः। अम, द्विषं, औट्–द्विषौ, शस्–द्विषः। टा–द्विषा, भ्याम्–द्विड्भ्याम्। ष स्थाने ट, झय स्तृतीय इति ट स्थाने ड), एवं भिस्–द्विड्भिः। ङ्यादौ–द्विषे, द्विड्भ्याम् द्विड्भ्यः। द्विषः, द्विड्भ्याम्, द्विड्भ्यः। द्विषि, द्विषोः, द्विट्सु (ष स्थाने ट्) पक्षे द्विटत्सु (ष स्थाने ट्, तुक्)। सम्बोधने–द्विट् द्विड्, द्विषौ, द्विषः। एवं सुरद्विष् मुरद्विष् प्रभृतयः। रत्नानि मुष्यति रत्न+मुष्+क्विप्, रत्नमुष् शब्दस्याप्येवमेव रूपाणि साध्यानि। यथा-रत्नमुट्, रत्नमुड् रत्न-मुषौ, रत्नमुषः। रत्नमुषं, रत्नमुषौ, रत्नमुषः। रत्नमुषा, रत्नमुड्भ्याम्, रत्नमुड्भिः इत्यादि। एवं द्युतिमुष्, धनमुष-प्रभृतयः। संख्यावाचकस्य बहुवचनान्तस्य षष्शब्दस्य षट् (षष्+जस् ष्णतिष्वान्त इति (२८।३।२) जसोर्लुक षष्ट इति ष स्थाने ट्)। षट् (शस् वत्)। षड्भिः (ष् स्थाने ट्, झयस्तृतीय इति ट् स्थाने ड)। एवं षड्भ्यः। षण्णाम् (आम् स्थाने नाम्, षण्णवति, षण्णगरी, षण्णामिति निपातनम्)।

षट्सु (ष् स्थाने ट), पक्षे षट्त्सु (ष् स्थाने ट्, तुक् च)। एवं परम-षष् शब्दस्यापि। प्रियाः षट् यस्य इति बहुव्रीहिनिष्पन्नस्य प्रिय षष् शब्दस्य रूपाणि द्विष् शब्दवत् अन्यार्थत्वात् ज्जश्शसोर्लुक् नापि आमः स्थाने नाम्। यथा—प्रियषट, प्रियषड्, प्रियषषौ, प्रिय-षषः। प्रियषषं, प्रियषषौ, प्रियषषः। प्रियषषा, प्रियषड्भ्यां, प्रिय-षड्भिः। प्रियषषे, प्रियषड्भ्याम्, प्रियषड्भ्यः। प्रियषषः, प्रियष-ड्भ्याम् प्रियषड्भ्यः। प्रियषषः प्रियषषोः, प्रियषषाम्। प्रियषषि प्रियषषोः, प्रियषट्सु, प्रियषट्त्सु। सम्बोधने-प्रियषट, प्रियषड्, प्रियषषौ प्रियषषः।

पिपठिष् (पठ+सन्+क्विप) शब्दः।

पिपठिष्+सु, सुलोपः, सनः सजुषाशिषोश्चेति उपधादीर्घः (१००।३।२) रूसइत्यने न ष स्थाने विसर्गः पिपठीः, औ—पिपठिषौ, जस् पिपठिषः। अम्—पिपठिषम्, औट्—पिपठिषौ, शस्—पिप-ठिषः। टा—पिपठिषा, भ्याम्—पिपठीर्भ्याम् (सनः सजुषेति इकार दीर्घः, सस्थाने विसर्गः (१।३।१), विसर्गस्थाने र), एवं भिस्—पिपठीर्भिः। ङ्यादौ—पिपठिषे, पिपठीर्भ्याम्, पिपठीर्भ्यः। पिपठिषः, पिपठीर्भ्याम्, पिपठीर्भ्यः। पिपठिषः, पिपठिषोः, पिप-ठिषाम्। पिपठिषि, पिपठिषोः, पिपठीष्षु पिपठिःषु। सम्बोधने पिपठीः, पिपठिषौ, पिपठिषः।

चिकीर्ष् (कृ+सन्+क्विप्) शब्दः

चिकीर्ष्+सु, सुलोपः, संयोगान्तस्येति ष्कारलोपः, रः खरव-सानयोरिति (३।३।१) र स्थाने विसर्गः चिकीः, औ-चिकीर्षौ, जस-चिकीर्षः। अम्-चिकीर्षम्, औट्-चिकीर्षौ, शस्—चिकीर्षः। टा-चिकीर्षा, भ्याम्-चिकीर्भ्याम् (ष-लोपः)) भिस्-चिकीर्भिः (षलोपः)। ङ्यादौ—चिकीर्षे, चिकीर्भ्याम्, चिकीर्भ्यः (षलोपः)। चिकीर्षः,

चिकीर्षोः, चिकीर्षाम् । चिकीर्षि, चिकीर्षोः, चिकीर्षु असुपीति (३।३।१) निषेधात् न र स्थाने विसर्गः । सम्बोधने चिकीः, चिकीर्षौ, चिकीर्षः । एवं प्रियचिकीर्ष्, हितचिकीर्ष् कटचिकीर्ष् प्रभृतयः ।

सजुष् शब्दः (सह+जुषः क्विप्, अर्थस्तापसः)

सजुष्+सु, सुलोपः, सनः स जुषेति (१००।३।२) दीर्घः, अहन् सजुष् इति (२।३।१) ष् स्थाने विसर्गः सजूः, औ-सजुषौ, जस्-सजुषः । अम् सजुषं, औट्—सजुषौ, शस्—सजुषः । टा-सजुषा, भ्याम् सजूर्भ्याम् (उकार दीर्घः, स् स्थाने विसर्गः (२।३।१), विसर्ग स्थाने र् (१७।३।१), एवं भिस्—सजूर्भिः। ङयादौ—सजुषे, सजूर्भ्याम्, सजूर्भ्यः । सजुषः, सजूर्भ्याम् सजूर्भ्यः । सजुषः, सजुषोः, सजुषाम्। सजुषि, सजुषोः, सजूष्षु (उकारदीर्घः, ष् स्थाने विसर्गः, इचकुर इति षत्वं, शरिशर इति (२५।३।१ विसर्ग स्थाने ष्) पक्षे सजूःषु । सम्बोधने सजूः सजूषौ, सजूषः ।

दोष (दम्+डोस्) शब्दः

दोष्+सु, सुलोपः रुस इति स्थानीभूतस्य षस्य विसर्गः दोः, औ-दोतौ, जस्-दोषः । अम्-दोषम्, औट्-दोषौ, शस्-दोषः पक्षे शसादौ वेति (१३८।३।३) दोषन् आदेशः, अनोऽल्लोप इति १२६। ३।२) अकारलोपः, दोष्णः । टा-दोषा, पक्षे दोष्णा (दोषन् आदेशः, अकारलोपः), भ्याम्-दोर्भ्याम् (स स्थाने विसर्गः, विसर्ग स्थाने रः), पक्षे दोषभ्यां, (दोषन् आदेशः, नलोपः), एवं भिस्-दोर्भिः दोषभिः । ङयादौ-दोषे, दोष्णे, दोर्भ्याम्, दोषभ्यां, दोर्भ्यः, दोषभ्यः। दोषः, पक्षे दोष्णः, दोर्भ्याम्, दोषभ्याम्, दोर्भ्यः, दोषभ्यः । दोषः पक्षे दोष्णः, दोषोः, पक्षे दोष्णोः, दोषाम् पक्षे दोष्णाम् । दोषि,

पक्षे दोष्णि पक्षे ङिश्योर्व्वेति अल्लोपाभावे दोषणि, दोषी: दोष्णो:, दोःसु (ष स्थाने विसर्ग:, विसर्गस्थाने ष) दो:सु पक्षे दोषसु। (दोषन् आदेश:, न लोप:) सम्बोधने दो:, दोषौ, दोष:।

सकारान्त:—वेधस शब्द:

वेधस्+सु, सुलोप: सावत्वसन्तस्येति (८६।३।२) उपधादीर्घ:, रुस इति स स्थाने विसर्ग: वेधा: औ-वेधसौ, जस-वेधस:। अम्-वेधसं औट्-वेधसौ, शस्-वेधस:। टा-वेधसा, भ्याम्-वेधोभ्याम् (स स्थाने विसर्ग:,अतोऽहसतोरिति (१६।३।१) विसर्ग स्थाने उ वेध उ+भ्याम् इतिस्थिते आदिकोगुण इति (३।२।१) गुणे कृते वेधोभ्याम् एवं भिस्-वेधोभि:। ङ्यादौ—वेधसे, वेधोभ्याम्, वेधोभ्य:। वेधस:, वेधोभ्याम्, वेधोभ्य:। वेधस:, वेधसो:, वेधसाम्। वेधसि, वेधसो:, वेध:सु (स स्थाने विसर्ग: शरिशर इति विसर्ग स्थाने स) सम्बोधने असम्बुद्धावित्येवेति दीर्घाभावात् वेध:, वेधसौ, वेधस:। एवं सुयशस्, उग्रतेजस्, प्रचेतस्, अङ्गिरस् सुमेधस् पीतवासस्, चन्द्रमस् प्रभृतय: असन्ता: शब्दा:। प्रचेतस् शब्दस्य-तु सम्बुद्धौ राजनि परे सकार स्थाने विकल्पेन रकारो भवति यथा हे प्रचेताराजन् (स स्थाने र् प्रचेतर्राजन् इति स्थिते द्रोर्लोप इति (७२।२१) रलोप: पूर्व्वाणो दीर्घश्च) पक्षे प्रचेतोराजन् (विसर्ग स्थाने उ)।

पिण्डं ग्रसते (पिण्ड+ग्रस्+क्विप्)

पिण्डग्रस शब्दस्य प्रथमैकवचने सावत्वसन्तस्येति सूत्रे अधातोरिति निषेधात् उपधादीर्घाभावे पिण्डग्र: इति रूपं भवति, अन्यत्र तु वेधस् वत् यथा—पिण्डग्रसौ, पिण्डग्रस:। पिण्डग्रसं,

पिण्डग्रसौ, पिण्डग्रसः। पिण्डग्रसा, पिण्डग्रोभ्याम्, पिण्डग्रोभिः। इत्यादि एवं पिण्डग्लस् शब्दस्यापि।

### अनेहस् शब्दः

अनेहस्+सु, आत्सुनेति (६८।३।२) सुना सह अन्तस्थाने आकारे कृते अनेहा औ-अनेहसौ, जस्-अनेहसः। अम्-अनेहसं औट्-अनेहसौ, शस-अनेहसः। टा-अनेहसा, भ्याम्-अनेहोभ्याम् भिस्-अनेहोभिः। इत्यादि वेधस्वत्। सम्बोधने असम्बुद्धाविति आत्वनिषेधात् अनेहः, अनेहसौ, अनेहसः। एवं पुरुदं-सस् शब्दोऽपि यथा=पुरुदंसा, पुरुदंससौ, पुरुदंससः। इत्यादि सम्बोधने पुरुदंसः। केचित्—पुरुदंशस् इति पठन्ति।

### उशनस् शब्दः

उशनस्+सु, आत्सुनेति सुना सह अन्तस्थाने आकारः, उशना, औ उशनसौ, जसादौ-उशनसः। उशनसं, उशनसौ, उशनसः। उशनसा, उशनोभ्याम्, उशनोभिः। उशनसे, उशनो-भ्याम्, उशनोभ्यः। उशनसः, उशनोभ्याम्, उशनोभ्यः। उशनसः, उशनसोः, उशनसस्, उशनःसु (वेधस्वत्)। सम्बोधने उशनसोवेति (२४।३।२) विकल्पेन सकारस्य नकारे उशनन्, पक्षे सकारस्य लुकि उशन, अन्यत्र सकार स्थाने विसर्गः उशनः, उशनसौ, उशनसः।

### अदस् शब्दः

अदस्+सु, तदादेरिति टेरत्वं, अद+स् इतिस्थिते अदसोदस्य-सोरौश्चेति (१९।४।२) द स्थाने स, स स्थाने औ असौ, अदस+औ तदादेरिति टेरत्वं अटेर्यथाच्कालमिति (२०।४।२) अकार स्थाने उकार, दकार स्थाने मकारश्च अमु+औ इति स्थिते इदुतोरौता (४१।३।२) औकारेण सह उकारस्य दीर्घः अमू, अदस्+जस,

टेरत्वं, जस इत् पुंसोति (१४।४।२) जस स्थाने इकारः अदे इति स्थिते एत ईद्बहुत्वे (२१।४।२) इति एकार स्थाने ईकारः, दकारस्य च मकारः, अमी। अदस्+अम्, टेरत्वं, अकार स्थाने उकारः (२०। ४।२) दकारस्थाने मकारः, अम्यतैक इति (२८।३।२). एकाकः, अमुं, अदस्+औट् अमू (औवत्), अदस्+शस् टेरत्वं, अकार स्थाने उकारः दकारस्थाने मकार. अमु—अस इति स्थिते शसि दीर्घ इति (३०।३।२) दीर्घः, सकारस्य नत्वं अमून्। अदस्—टा टेरत्वं, अकार स्थाने उकारः, दकारस्य मत्वं अमु—टा इति स्थिते टानास्त्रियामदोवेरिति टा स्थाने ना अमुना, अदस्—भ्याम्. टेरत्वं अकारस्य उकारः, दकारस्य मकारः, अमुभ्याम्, अदस्+भिस, टेरत्वं इदमदसोरिति (२२।४।२) अकार स्थाने एकारः, अदे+भिः इति स्थिते एतईत् (२१।४।२) एकार स्थाने ईकारः, दकारस्य मत्वं अमीभिः। अदस्—ङे. टेरत् ङे स्थाने स्मै (१०।४।३) अकार स्थाने उकारः, दकारस्य मकारः तत इचकुर इति षत्वं अमुष्मै, अदस्—भ्याम् -अमुभ्याम् (पूर्व्ववत्), अदस्—भ्यस्, टेरत्वं एङ्भ्यसोसामिति (३८।३।२) अकार स्थाने एकारः, अदे+भ्य. इति स्थिते एत ईदिति एकार स्थाने ईकारः दस्य च मत्वं अमीभ्यः। अदस्—ङसि टेरत्वं ङसिङ्योरिति (११।४।२) ङसि स्थाने स्मात्, अकार स्थाने उकारः, दकारस्य मकारः षत्वञ्च अमुष्मात्,अदस्+भ्याम् अमुभ्यां (पूर्व्ववत्), अदस्—भ्यस् अमीभ्यः (पूर्व्ववत्)। अदस्+ङस् टेरत्वं, अतष्टाभिस् इति (३७।३।२) ङस स्थाने स्य, अकारस्य उकारः दकारस्य मकारः षत्वञ्च अमुष्य, अदस्—ओस् टेरत्वं अयोसीति (३८।३।२) अकार स्थाने अय्, ततः अकार स्थाने उकार, द स्थाने मकारः अमुयोः, अदस्+आम् टेरत्वं, आदाम इति (१३।४।२) आम स्थाने साम्, एङ्भ्यसोसामिति (३८।३।२) अकार स्थाने एकारः अदे—साम् इति स्थिते एत ईद्बहुत्वे इति एकार स्थाने ईकारः, दकारस्य च मत्वं

षत्वञ्च अमीषां । अदस्+ङि टेरत्वं ङसिङ्योरिति (११।४।२) ङि स्थाने स्मिन् अद+स्मिन् इति स्थिते अकार स्थाने उकारः दकारस्य मकारः षत्वञ्च अमुष्मिन्, अदस्+ओस् अमुयोः (पूर्व्ववत्), अदस्+सुप् टेरत्वं एङ्भ्यसोसामिति अकार स्थाने एकारः, अदे+सु इति स्थिते एत ईद्वयहुत्वे इति एकार स्थाने ईकारः दकारस्य च मकारः, षत्वञ्च अमीषु । सककारस्य तु अदस्शब्दस्य—अदकस्+सु, के तु वा (१८।४।२) इति विकल्पेन दकारस्य सत्वस्य सोरौत्वस्य च विधानात् असकौ, पक्षे अमुकः, असुकश्चेत्यके, औ=अमुकौ, जस्—अमुके । अम्—अमुकं, औट्—अमुकौ, जस्—अमुके । अम्–अमुकं, औट्-अमुकौ शस्—असुकान् । टादौ –अमुकेन, अमुकाभ्याम्, अमुकैः । असुकाय, अमुकाभ्यां, अमुकेभ्यः । अमुकस्मात्, अमुकाभ्याम्, अमुकेभ्य । ङस—अमुकस्य, ओस्—अमुकयोः, आम्—अमुकेषां । ङि अमुकस्मिन्, ओस्=अमुकयोः, सुप् अमुकेषु । अमुकपक्षे त्वेवं

पर्णध्वस् शब्दः (पर्ण+ध्वंस्+क्विप) ।

पर्णध्वस्+सु, सुलोपः, वसु, स्रंसु (१९।७।३।२) अन्तस्थाने द् वाऽवसाने इति दकारस्य त् पर्णध्वत्, पक्षे पर्णध्वद्, औ—पर्णध्वसौ, जस—पर्णध्वसः । अम्—पर्णध्वसं, औट्—पर्णध्वसौ, शस्—पर्णध्वसः । टा—पर्णध्वसा, भ्याम्—पर्णध्वद्भ्याम (स स्थाने द), भिस्—पर्णध्वद्भिः (स स्थाने द्) । ङयादौ—पर्णध्वसे, पर्णध्वद्भ्याम्, पर्णध्वद्भ्यः । पर्णध्वसः, पर्णध्वद्भ्यां, पर्णध्वद्भ्यः । पर्णध्वसः, पर्णध्वसोः, पर्णध्वसाम् । पर्णध्वसि, पर्णध्वसोः, पर्णध्वत्सु (स स्थाने द्, खरि प्रथम इति द स्थाने त्) । एवं ध्वस्, स्रस्, उखास्रस् प्रभृतयः । यथा—स्रत्, स्रसौ स्रसः । स्रसं, स्रसौ, स्रसः । स्रसा, स्रद्भ्यां, स्रद्भिरित्यादि ।

## विद्वस्शब्दः ।

विद्वस्+सु, सुलोपः उगिदचोरिति (७६।३।२) नुम् सान्त महतोरिति (८३।३।२) दीर्घः, विद्वान्स इतिस्थिते संयोगान्तस्येति स लोपः, विद्वान्, औ-विद्वांसौ (नुम् दीर्घः, नस्यानुस्वारः), एवं जस्--विद्वांसः । अम्-विद्वांसं, औट्—विद्वांसौ, शस्-विदुषः (वसोः सम्प्रसारणे वा इति सूत्रस्य (१२३।३) इति अचा सह वकारस्य उकारः षत्वं च)। टा-विदुषा (वस्य उत्वं, षत्वञ्च), भ्याम्—विद्वद्भ्याम् (वसु स्रंसु ध्वंस्वनडुहां द इति (८७।३।२) स स्थाने द), एवं भिस् विद्वद्भिः । ङयादौ-विदुषे, विद्वद्भ्यां विद्वद्भ्यः । विदुषः, विद्वद्भ्यां विद्वद्भ्यः । विदुषः, विदुषोः, विदुषाम् । विदुषि, विदुषोः विद्वत्सु (स स्थाने द खरि प्रथम इति द स्थाने त्) । सम्बोधने सम्बुद्धौ दीर्घनिषेधात् विद्वन्, विद्वांसौ, विद्वांसः ।

## लघीयस् (लघु+ईयसु) शब्दः

लघीयस्+सु, सुलोपः उगिदचोरिति नुम् सान्तमहतोरिति दीर्घः, संयोगान्त इति सलोपः लघीयान्, औ लघीयांसौ, जस् लघीयांसः । अम् लघीयांसं औट् लघीयांसौ शस् लघीयसः । टादौ (वेधस्वत्)—लघीयसा, लघीयोभ्याम्, लघीयोभिः । लघीयसे, लघीयोभ्याम्, लघीयोभ्यः । लघीयसः, लघीयोभ्याम् लघीयोभ्यः । लघीयसः, लघीयसोः, लघीयसाम् । लघीयसि, लघीयसोः लघीयस्सु, लघीयःसु । सम्बोधने लघीयन् लघीयांसौ, लघीयांसः । एवं प्रेयस् श्रेयस् ज्यायस् वर्षीयस् प्रभृतयः सर्व्वे ईयसु प्रत्ययान्ताः शब्दाः ।

## सेदिवस् (सद+क्वसु) शब्दः

सेदिवस्+सु, सुलोपः उगिदचोरिति नुम्, सान्तमहतोरिति

दीर्घः, संयोगान्त इति सलोपः सेदिवान्, औ-सेदिवांसौ, जस्-सेदिवांसः। अम्=सेदिवांसं, औट्-सेदिवांसौ, शस्-सेदुषः (व स्थाने उकार. ततो निमित्तस्यापाये नैमित्तिकस्याप्यपाय इति न्यायात् इकारस्याप्यपायः षत्वं च)। एवं टा—सेदुषा, भ्याम्—सेदिवद्भ्याम् (स स्थाने द्) भिस्=सेदिवद्भिः (स स्थाने द्)। ङयादौ—सेदुषे, सेदिवद्भ्याम्, सेदिवद्भ्यः। सेदुषः, सेदिवद्भ्याम्, सेदिवद्भ्यः। सेदुषः, सेदुषोः, सेदुषाम्, सेदुषि, सेदुषोः, सेदिवत्सु। सम्बोधने-सेदिवन्, सेदिवांसौ, सेदिवांसः। एवं तस्थिवस्, पेचिवस्, जग्मिवस् प्रभृतय. सर्व्वे वस् प्रत्ययान्त शब्दा. चकार्वस् शब्दस्य शसि चकारुषः, एवं टादौ—चकारुषा, चकार्वद्भ्यां, चकार्वद्भिः एवं जगन्वस् शब्दस्य।

तुष्टुवस् शब्दस्य तु—

तुष्टुवान्, तुष्टुवांसौ, तुष्टुवांसः। तुष्टुवांसं, तुष्टुवांसौ, (सेदिवस् शब्दवत्) शसादौ-तुष्टुवुषः (वसः साध इति वकारस्य उकारः, अचि युक्त इति (५।२।३।२) तस्य उकारस्य स्थाने उव्, इचकुर इति षत्वञ्च। एवं तुष्टुवुषा, तुष्टुवद्भ्याम्, तुष्टुवद्भिः। तुष्टुवुषे तुष्टुवद्भ्याम्, तुष्टुवद्भ्यः। तुष्टुवुषः, तुष्टुवद्भ्याम्, तुष्टुवद्भ्यः। तुष्टुवुषः, तुष्टुवुषोः, तुष्टुवुषाम्। तुष्टुवुषि, तुष्टुवुषोः, तुष्टुवत्सु। सम्बोधने—तुष्टुवन्, तुष्टुवांसौ, तुष्टुवांसः। एवं शुश्रुवस् प्रभृतीनाम्।

पुमस् शब्दः

पुमस्+सु, सुलोपः, सादि स्थाने पुंस इति (७२।२।२) पुमान्स आदेश. संयोगान्तस्येति सकारलोपः पुमान्, औ—पुमांसौ (पुमान्स आदेशः, न श्चापदान्ते झलीति (४१।२।१) न स्थाने अनुस्वारः), जस्—पुमांसः (पुमान्स आदेश. न स्थाने अनुस्वारः)। अम्-पुमांसं (पुमान्स आदेशः न स्थाने अनुस्वारः), औट्-पुमांसौ, शस्—पुंसः

(म स्थाने अनुस्वार: ४०।२।१)। टादौ—पुंसा, पुंभ्याम् (संयोगान्त इति सकार लोप: म स्थाने अनुस्वार:) एवं पुंभि:। पुंसे, पुंभ्याम्, पुंभ्य:। पुंस:, पुंभ्याम्, पुंभ्य:। पुंस:, पुंसो:, पुंसाम्। पुंसि, पुंसो:, पुंसु (संयोगान्तस्येति स लोप: म स्थाने अनुस्वार:)। सम्बोधने—पुमन् (पुमानस् आदेश: ह्रस्वोऽम्बार्थ इति ह्रस्व:) पुमांसौ, पुमांस:। स्त्री च पुमांश्च इति द्वन्द्व समासे तु स्त्रीपुंस इति रूपं भवति स च अकारान्त शब्दवत् साध्य:।

## सुहिन्स् शब्द:

सुहिन्स्+सु, सुलोप: संयोगान्तस्येति सलोप: सुहिन्, औ-सुहिंसौ (न स्थाने अनुस्वार:),जस्—सुहिंस (न स्थाने अनुस्वार:)। एवं अम् सुहिंसं, औट्—सुहिंसौ, शस्—सुहिंस:। टा—सुहिंसा, भ्याम्—सुहिन्भ्याम् (संयोगान्त लोप:), भिस्—सुहिन्भि: (संयोगान्त लोप:)। ङयादौ-सुहिंसे, सुहिन्भ्याम्, सुहिन्भ्य:। सुहिंस:, सुहिन्भ्याम्, सुहिन्भ्य:। सुहिंस:, सुहिंसो:, सुहिंसाम्। सुहिंसि, सुहिंसो:, सुहिन्सु (संयोगान्तलोप:)। सम्बोधने—सुहिन्, सुहिंसौ, सुहिंस:।

सुष्ठु पेसतीति (सु+पिस+क्विप्) सुपिस् शब्द:। तस्य रूपाणि कौमुद्यां दर्शितानि, यथा—

सुपी:, सुपिसौ, सुपिस:। सुपिसं, सुपिसौ, सुपिस:। सुपिसा, सुपीर्भ्याम्, सुपीर्भि:। सुपिसे, सुपीर्भ्याम्, सुपीर्भ्य:। सुपिस:, सुपिसो:, सुपिसाम्। सुपिसि, सुपिसो:, सुपीषु। सम्बोधने—सुपी:, सुपिसौ, सुपिस:।

## हकारान्त:—लिह् शब्द:

लिह्+सु, सुलोप: होढ़ोदादेरिति (१०७।३।२) ह स्थाने ढ्, वाऽवसाने इति ढ स्थाने ट् लिट्, पक्षे लिड्, औ—लिहौ, जस्

लिहः । अम्—लिहं, औट्—लिहौ, शस्—लिहः । टा—लिहा, भ्याम्-लिड्भ्याम् (ह स्थाने ढ, झयस्तृतीय इति ढ स्थाने ड्), एवं भिस्-लिड्भिः । ङयादौ—लिहे, लिड्भ्याम्, लिड्भ्यः । लिहः, लिड्भ्याम्, लिड्भ्यः । लिहः, लिहोः, लिहाम् । लिहि, लिहोः, लिटसु (ह स्थाने ढ, खरि प्रथम इति ढ स्थाने ट्) पक्षे लिट्त्सु (ह स्थाने ढ, ढ स्थाने ट् नटाभ्यां सं इति तुक् । एवं मधुलिह्, अलिह् प्रभृतयः ।

स्निह (स्निह्यतीति + स्निह् + क्विप्) शब्दः ।

स्निह + सु, सुलोपः, द्रुह्, मुह, स्नुह्, स्निहामिति (१०८।३।२) हस्य घत्वे, घस्य च वाऽवसाने इति कत्वे स्निक् पक्षे तेनैव सूत्रेण हस्य ढत्वे पुनः वाऽवसाने इति ढस्य टत्वे स्निट्, औ-स्निहौ, जस्-स्निहः । अम्-स्निहम्, औट-स्निहौ, शस्-स्निहः । टा-स्निहा, भ्याम्-स्निग्भ्याम् (हस्य घत्वं, घस्य च गत्वं) पक्षे स्निड्भ्याम् (हस्य ढत्वं, ढस्य डत्वं), एवं भिस्-स्निग्भिः, पक्षे स्निड्भिः । ङयादौ—स्निहे, स्निग्भ्याम्, स्निड्भ्याम्, स्निग्भ्यः, स्निड्भ्यः । स्निहः, स्निग्भ्याम्, स्निड्भ्याम, स्निग्भ्यः, स्निड्भ्यः । स्निहः, स्निहोः, स्निहाम् । स्निहि, स्निहोः, स्निक्षु (ह स्थाने घ, घ स्थाने क, षत्वञ्च) पक्षे स्निट्सु (ह स्थाने ढ, ढ स्थाने ट) अन्यत्र स्निट्त्सु (ह स्थाने ढ ढ स्थाने ट् तुक् च) । सम्बोधने स्निट्, स्निड्, स्निहौ, स्निहः ।

स्त्रीलिङ्ग उष्णिह् शब्दस्य—तु निपातनात् घत्वमेव ततश्च उष्णिक्, उष्णिग्, उष्णिहौ, उष्णिहः । उष्णिहं, उष्णिहौ, उष्णिहः । उष्णिहा, उष्णिग्भ्याम्, उष्णिग्भिः । उष्णिहे, उष्णिग्भ्याम्, उष्णिग्भ्यः । उष्णिहः, उष्णिग्भ्याम्, उष्णिग्भ्यः । उष्णिहः, उष्णिहोः, उष्णिहाम् उष्णिहि, उष्णिहोः, उष्णिक्षु । सम्बोधने उष्णिक्, उष्णिग्, उष्णिहौ उष्णिहः ।

अनडुहशब्दः

अनडुह्+सु, सुलोपः, चतुरनडुहोरामिति (७४।३।२) आमागमः, उकार स्थाने व, नुम च संयोगान्तस्येति हलोपः अनड्वान्, औ-अनड्वाहौ (आमागमः उकार स्थाने वः) एवं जस्-अनड्वाहः। अम्-अनड्वाहं, औट्-अनड्वाहौ, शस्-अनडुहः। टा-अनडुहा, भ्याम्-अनडुद्भ्याम् (वसु स्रंसु इति ८७।३।२ ह स्थाने द) एवं भिस्-अनडुद्भिः। ङयादौ-अनडुहे, अनडुद्भ्याम्, अनडुद्भ्यः। अनडुहः, अनडुद्भ्याम्, अनडुद्भ्यः। अनडुहः, अनडुहोः, अनडुहाम्। अनडुहि, अनडुहोः, अनडुत्सु (ह स्थाने द् खरि प्रथम इति द स्थाने त्)। सम्बोधने—अनड्वन् (आमागमः उकार स्थाने व, ह्रस्वोऽम्वार्थ इति (२१।३।२) इति ह्रस्व), अनड्वाहौ, अनड्वाहः। एवं प्रियानडुहशब्दस्यापि, यथा प्रियानड्वान् प्रियानड्वाहौ प्रियानड्वाहः। इत्यादि।

दुह् शब्दः

दुह्+सु, सुलोपः होढ़ इति (१०७।३।२) ह स्थाने घ, वाऽवसाने इति घ स्थाने क, झषन्ताचामिति द स्थाने ध, धुक् पक्षे धुग, औ-दुहौ, जस्-दुहः। अम्-दुहम्, औट्-दुहौ, शस्-दुहः। टा दुहा, भ्याम्-धुग्भ्याम् (ह स्थाने घ झयस्तृतीय इति घ स्थाने ग) झषन्ताचामिति द स्थाने ध। एवं भिस्-धुग्भिः। ङयादौ-दुहे, धुग्भ्याम्, धुग्भ्यः। दुहः, धुग्भ्याम्, धुग्भ्यः। दुहः, दुहोः, दुहाम्। दुहि, दुहोः, धुक्षु (ह स्थाने घ, खरि प्रथम इति घ स्थाने क, षत्वं, द स्थाने ध)। सम्बोधने-धुक्, धुग्, दुहौ, दुहः। एवं गोदुह, ग्रामदुह् प्रभृतयः। ग्रामदुह् शब्दस्यापि अनया रीत्या रूपाणि साध्यन्ते। ग्रामधक्, ग्रामदुहौ, ग्रामदुहः। ग्रामदुहं, ग्रामदुहौ ग्रामदुहः। ग्रामदुहा, ग्रामधुग्भ्यां, ग्रामधुग्भिः। इत्यादि। एवं दिह् शब्दस्यापि।

दुह् (द्रुह्यतीति द्रुह्+क्विप्) शब्दः ।

द्रुह्+सु सुलोपः, द्रुह्, मुहेति (१०८।३।२) ह स्थाने घ भाष-न्ताचामिति द स्थाने ध, वाऽवसाने इति घ स्थाने क् ध्रुक् एवं ध्रुग्, पक्षे अनेनैव सूत्रेण ह स्थाने ढ, भषन्ताचामिति द स्थाने धः ततः वाऽवसाने इति ढस्य टत्वे ध्रुट्, एवं डत्वे ध्रुड्, औ - द्रुहौ, जस्—द्रुहः । अम्-द्रुहं, औट्-द्रुहौ, शस्—द्रुहः । टा—द्रुहा, भ्याम् ध्रुग्भ्यां ह स्थाने घ, झयस्तृतीय इति घ स्थाने ग) पक्षे ध्रुड्भ्याम् (ह स्थाने ढः, झयस्तृतीय इति तस्य डकारः), एवं भिस्-ध्रुग्भिः, ध्रुड्भिः । ङ्यादौ—द्रुहे, ध्रुग्भ्याम्, ध्रुड्भ्याम्, ध्रुग्भ्यः, ध्रुड्भ्यः । द्रुहः, ध्रुग्भ्याम्, ध्रुड्भ्याम्, ध्रुग्भ्यः, ध्रुड्भ्यः । द्रुहः, द्रुहोः, द्रुहाम् । द्रुहि, द्रुहोः, ध्रुक्षु (ह स्थाने घ मरि प्रथम इति घ स्थाने क षत्वञ्च) पक्षे ध्रुट्सु (ह स्थाने ढ खरि प्रथम इति ढ स्थाने ट्) एवं ध्रुट्त्सु (पूर्ववत् ढत्वादिकं ततः नटाभ्यामिति तुक्) । सम्बो-धने ध्रुक्, ध्रुग्, ध्रुट् ध्रुड् द्रुहौ, द्रुहः । एवं मित्रध्रुह्, सुध्रुह्, तद्ध्रुह् प्रभृतीनां रूपाणि । मुह् स्नुहोरप्यनयैवरीत्या रूपाणि साधान्ते । यथा मुक्, मुग्, मुट्, मुड् मुहौ मुहः । मुहं, मुहौ, मुहः । मुहा, मुग्भ्याम्, मुड्भ्याम्, मुग्भिः मुड्भिः । इत्यादि एवं स्नुक्, स्नुग्, स्नुट् स्नुड् स्नुहौ, स्नुहः । स्नुहं, स्नुहौ, स्नुहः । स्नुहा, स्नुग्भ्यां, स्नुड्भ्याम् स्नुग्भिः स्नुड्भिः । इत्यादि ।

सोपानह् (उपानहा सहवर्त्तमानः) शब्दः ।

सोपानह्+सु सुलोपः नहोधः (१०८।३।२) इति हस्य धः, वाऽ-वसाने इति ध स्थाने त् । सोपानत्, औ—सोपानहौ, जस्—सोपा-नहः । अम्—सोपानहं, औट्—सोपानहौ, शस्—सोपानहः । भ्याम्—सोपानद्भ्याम् (ह स्थाने ध, झयस्तृतीय इति ध स्थाने द्), एवं भिस्-सोपानद्भिः । ङ्यादौ—सोपानहे, सोपानद्भ्याम्, सोपा-

नह्भ्यः। सोपानहः, सोपानह्भ्यां, सोपानह्भ्यः। सोपानहः, सोपानहोः, सोपानहाम्। सोपानहि, सोपानहोः, सोपानत्सु। सम्बोधने—सोपानत्, सोपानहौ, सोपानहः। कप्—समासान्ते तु-सोपानत्क इति रूपं, तच्च अदन्तपुंलिङ्गवत् साध्यम्।

विश्ववाह् शब्दः।

विश्ववाह+स, सुलोपः होढ़ इति ह स्थाने ढ वाऽवसाने इति ढ स्थाने ट, पक्षे डत्वञ्च,विश्ववाट्, विश्ववाड्, औ—विश्ववाहौ, जस्-विश्ववाहः। अम्-विश्ववाहं, औट्-विश्ववाहौ, शस-विश्वौहः वाह ऊठ (१२५।३। २) इति वा स्थाने ऊकारः वृद्धिरेचि इति वृद्धिः)। टा—विश्वौहा (वा स्थाने ऊ, वृद्धिः), भ्याम्-विश्ववाड्भ्यां (ह स्थाने ढ, ढ स्थाने ड्) एवं भिस्—विश्ववाड्भिः। ङयादौ—विश्वौहे, विश्ववाड्भ्याम्, विश्ववाड्भ्यः। विश्वौहः,—विश्ववाड्भ्याम्, विश्ववाड्भ्यः। विश्वौहः, विश्वौहोः, विश्वौहाम्। विश्वौहि, विश्वौहोः, विश्ववाट्सु (हस्थाने ढ, ढ स्थाने ट्) पक्षे विश्ववाट्त्सु ढलादिकानन्तरं तुक्। सम्बोधने—विश्ववाट्, विश्ववाड्, विश्ववाहौ, विश्ववाहः। प्रष्ठवाह् प्रभृतयः शब्दा अपि एवं। शालिवाह्, भूवाह्—प्रभृतिशब्दा ज्यपि एवं नियमेन साध्याः। यथा—शालिवाट्, शालिवाड्, शालिवाहौ, शालिवाहः। शालिवाहं, शालिवाहौ, शाल्यूहः। (वा स्थाने ऊकारः इकार स्थाने यः)। एवं—शाल्यूहा, शालिवाड्भ्याम्, शालिवाड्भिरित्यादि। भूवाट्, भूवाड्, भूवाहौ, भूवाहः। भूवाहं, भूवाहौ, भूहः (वा स्थाने ऊ, दीर्घः)। भूहा, भूवाड्भ्यां, भूवाड्भिः इत्यादि। श्वेतवाह्शब्दस्य तु—उक्थ-शंसादेर्डस्। उक्थ—शंस इत्यादेर्हलि परे अस्तोडस् भवतीति संक्षिप्तसारनियमात् वक्ष्यमाणप्रकाराणि रूपाणि भवन्ति।

श्वेतवाः (अस्तस्थाने डस् सावत्वेति दीर्घः, स स्थाने विसर्गः

श्वेतवाहौ, श्वेतवाहः। श्वेतवाहं, श्वेतवाहौ, श्वेतवाहः। पक्षे श्वेतौहः, (वा स्थाने ऊ वृद्धिः)। श्वेतवाहा, श्वेतौहा, श्वेतवोभ्याम्, श्वेतवोभिः। श्वेतवाहे, श्वेतौहे, श्वेतवोभ्याम्, श्वेतवोभ्यः। श्वेतवाहः, श्वेतौहः, श्वेतवोभ्याम्, श्वेतवोभ्यः। श्वेतवाहः, श्वेतौहः, श्वेतवाहो, श्वेतौहोः, श्वेतवाहां, श्वेतौहाम्। श्वेतवाहि, श्वेतौहि, श्वेतवाहोः, श्वेतौहोः, श्वेतवःसु, श्वेतवस्सु (वेधसवत्। सम्बोधने- श्वेतवः, श्वेतवाहौ, श्वेतवाहः।

## तुरासाह्शब्दः।

तुरासाह्+सु सुलोपः होढ इति ह स्थाने ढ, तुरादेः साढ़ः (४८।३।१) इति षत्वं, वाऽवसाने इति ढ स्थाने ट् पक्षे ड् च, तुरा, षाट्, तुराषाड्, औ—तुरासाहौ, जस्-तुरासाहः। अम्-तुरासाहं, औट्-तुरासाहौ, शस्—तुरासाहः। टा—तुरासाहा, भ्याम्-तुराषाड्भ्याम् (ह स्थाने ढ, षत्वं, ढ स्थाने ड), एवं भिस्-तुराषाड्भिः। ङ्यादौ—तुरासाहे, तुराषाड्भ्याम्, तुराषाड्भ्यः। तुरासाहः, तुराषाड्भ्याम्, तुराषाड्भ्यः। तुरासाहः, तुरासाहोः, तुरासाह्नाम्। तुरासाहि, तुरासाहोः, तुराषाट्सु पक्षे तुराषाट्त्सु (विश्ववाहवत्)। सम्बोधने तुराषाट्, तुराषाड्, तुरासाहौ, तुरासाहः।

इति हलन्तपुंलिङ्गशब्दाः।

## अथ हलन्तस्त्रीलिङ्गप्रकरणम्।

हलन्तस्त्रीलिङ्गशब्देषु येभ्य आप् भवति तेषां आवन्तस्त्रीलिङ्गवद्रूपाणि भवन्ति, येभ्योङीर्भवति तेषामीकारान्तशब्दवद्रूपाणि भवन्ति, अवशिष्टानां हलन्तानां तु प्रायः हलन्तपुंलिङ्गवद्रूपाणि भवन्ति। अत्र केषाञ्चित् रूपाणि दर्श्यन्ते।

चकारान्तस्य वाच्—शब्दस्य वाक्, वाग्, वाचौ, वाचः। वाचं, वाचौ, वाचः। वाचा, वाग्भ्याम्, वाग्भिः। वाचे, वाग्भ्याम्, वाग्भ्यः। वाचः, वाग्भ्याम्, वाग्भ्यः। वाचः, वाचोः, वाचाम् वाचि, वाचोः, वाक्षु। सम्बोधने वाक्, वाग्, वाचौ, वाचः। सर्व्वत्र पदान्ते चोःकुरिति इति च स्थाने क्। एवमन्येऽपि।

जकारान्तस्य स्रज्—शब्दस्य स्रक्, स्रग्, स्रजौ, स्रजः। स्रजं, स्रजौ, स्रजः। स्रजा, स्रग्भ्याम्, स्रग्भिः। स्रजे, स्रग्भ्याम्, स्रग्भ्यः। स्रजः, स्रग्भ्याम् स्रग्भ्यः। स्रजः, स्रजोः, स्रजाम्। स्रजि, स्रजोः, स्रक्षु। एवं पुष्पस्रज्, मुक्तस्रज् प्रभृतयः। अत्रापि चोःकुरिति इति ज् स्थाने गत्वं।

तकारान्तस्य सरित्शब्दस्य—सरित्, सरिद्, सरितौ, सरितः। सरितं, सरितौ, सरितः। सरिता, सरिद्भ्यां, सरिद्भिः इत्यादि - भूभृत् वत्।

दकारान्तस्य तद् शब्दस्य तद्+सु तदादेरिति (१७।४।२) टेरत्वं आप्, सौ तः सः (१८।४।२) त स्थाने स, हलङ्याप इति सुलोपः-सा, औ—ते (टेरत्, आप्, ता+औ इति स्थिते औच्चीनपुंसकाच्चेति (५०।३।२) औ स्थाने शी (ई) ता+ई इति स्थिते आदिकोगुणः (३।२।१) इति गुणः), जस्—ताः (टेरत्वं आप् ता+अस् इति स्थिते अकः सवर्णे (२।२।१) इति दीर्घः रुस इति स स्थाने विसर्गः)। अम्—ताम् (टेरत्वं आप्, ता+अम् इति स्थिते अम्यतैक इति (२८।३।२) एकारक), औट्—ते (औवत्), शस्—ताः (जस्वत्)। टा-तया (टेरत्वं आप् ता+टा (आ), अयोसीति (२८।३।२) आकार स्थाने अय), भ्याम् ताभ्याम्-(टेरत्वं आप्, दीर्घश्च), एवं भिस्-ताभिः। ङे-तस्यै टेरत्वं, आप् स्त्रियां ङीतीति (१६।४।२) स्याड़ागमः, प्राक्पुंवच्चेति वचनात् ह्रस्वत्वं तस्या+ए इति स्थिते हृद्धिरेचि (४।२।१) इति वृद्धिः, भ्याम्—ताभ्याम् (पूर्व्ववत्) तथैव भ्यस् ताभ्यः। ङसि-तस्याः टेरत्वं

आप् स्त्रियां ङीति स्याडागमः, प्राक् पुम्वत् तस्या + अस् इति स्थिते अकःसवर्णे इति दीर्घः), भ्याम्—ताभ्याम्, भ्यस्-ताभ्यः । ङस्-तस्याः (ङसिवत्), ओस्-तयोः (टेरत्वं आप् अयोसीति आकार स्थाने अय्, स स्थाने विसर्गः), आम्-तासाम् (टेरत् आप् आदाम इति (१३।४।२) आमः स्थाने साम्)। ङि—तस्यां (टेरत् आप् स्याड़ागमः प्राक् पुंवत् तस्या + ङि इति स्थिते ङेरामागमा नोभ्यामिति (५।१।३।२) ङि स्थाने आम् दीर्घश्च), ओस्-तयोः (पूर्व्ववत्), सुप्-तासु (टेरत्वं आप्, दीर्घश्च)। एवं यत् शब्दस्यापि यथा=या, ये, याः। यां, ये, याः। यया, याभ्याम्, याभिः। यस्यै, याभ्याम्, याभ्यः। यस्याः, याभ्याम्, याभ्यः। यस्याः, ययोः, यासाम्। यस्यां, ययोः, यासु।

### एतद् शब्दस्य ।

एतद् + सु टेरत् आप्, एता + सु (स) इति स्थिते सौतः स इति त स्थाने स इच्कुर इति षत्वञ्च एषा + सु इति हलब्याप इति सुलोपः एषा, औ—एते (टेरत् आप, दीर्घः औ स्थाने शी(ई) ततो गुण),जस्-एताः (टेरत्, आप्, दीर्घः स स्थाने विसर्गश्च) अम्-एताम् (टेरत् आप् अम्यतैक इति एकाक्), औट्—एते (औवत), शस्—एताः (जसवत्)। टा-एतया (टेरत् आप्, अयोसीति आकार स्थाने अय्) भ्याम्-एताभ्याम् टेरत्-आप् दीर्घः) एवं-भिस् एताभिः। ङे-एतस्यै (टेरत् आप् स्याड़ागमः प्राक् पुम्वत् एतस्या + ए इति स्थिते वृद्धिः) भ्याम्—एताभ्याम् भ्यस्-एताभ्यः। ङसि-एतस्याः (टेरत् आप् स्याड़ागमः प्राक् पुम्वत् एतस्या + अस् इति स्थिते दीर्घः स स्थाने विसर्गः), भ्याम्—एताभ्याम्, भ्यस्—एताभ्यः। ङस्-एतस्याः (ङसिवत्), ओस् एतयोः (टेरत आप् अयोसीति आकार स्थाने अय स स्थाने विसर्गः) आम्-एतासाम् (टेरत् आप् आमः स्थाने साम्)। ङि-एतस्याम्

(टेरत्-आप स्याडागमः, प्राक्पुम्वत् एतस्या+ङि इति स्थिते ङि स्थाने आम्) ओस्-एतयोः (पूर्ब्ववत्), सुप एतासु (टेरत् आप् दीर्घः)।

धकारान्तस्य क्षुध्—शब्दस्य।

क्षुत्, क्षुद्, क्षुधौ, क्षुधः। क्षुधम् क्षुधौ, क्षुधः। क्षुधा, क्षुद्भ्याम्, क्षुद्भिः। क्षुधे, क्षुद्भ्याम्, क्षुद्भ्यः। क्षुधः, क्षुद्भ्याम्, क्षुद्भ्यः। क्षुधः, क्षुधोः क्षुधाम्। क्षुधि, क्षुधोः, क्षुत्सु। एवं सर्व्वे वीरुध् प्रभृतयो धकारान्ताः। नकारान्तानां सप्तन्, अष्टन्, प्रभृतीनां पुम्वद्रूपाणि।

पकारान्तस्य-अप्शब्दस्य (बहुवचनान्तस्य अस्य साधनन्तु विशेषनियमानुगतमेव अप्+जस् अपोऽन्तोदोभि (८५।३।२) इति दीर्घः आपः। अप् +शस अपः। अप्+भिस् (अपोऽन्तोदोभि इति प स्थाने द्) अद्भिः। एवं अद्भ्यः। अद्भ्यः। आम्-अपाम्। सुप् अप्सु। सम्बोधने आपः।

भकारान्तस्य ककुभ् शब्दस्य।

ककुभ्+सु वाऽवसाने इति भकारस्य पत्वं बत्वञ्च ककुप्, ककुब् औ ककुभौ, जस-ककुभः। अम् ककुभम् औट्—ककुभौ, शस् ककुभः। टा—ककुभा भ्याम् ककुब्भ्याम् (झयस्तृतीय इति भ स्थाने ब), एवं ककुब्भिः। ङ्यादौ—ककुभे, ककुब्भ्याम, ककुब्भ्यः। ककुभः, ककुब्भ्याम्, ककुब्भ्यः। ककुभः, ककुभोः, ककुभाम्। ककुभि, ककुभोः, ककुप्सु (खरि प्रथम इति भ स्थाने प्। सम्बोधने ककुप्, ककुब्, ककुभौ, ककुभः।

मकारान्तस्य—इदम् शब्दस्य—

इदम्+सु, इयमयं स्त्रीपुंसयोः सुनेति (२४।४।२) सुना सह इदम 'इयं' आदेशः इयं, औ—इमे तदादेरिति टेरत् इद+औ इति

स्थिते आप्, इदा+औ इतिस्थिते दोम: (२५।४।८ दकारस्य मत्वं इमा+औ, ततः औ ङ्को नपुंसकाच्चेति (५०।३।२) औ स्थाने शी, (ई), इमा+ई इतिस्थिते आदिकोगुण इति (३२।१)गुणः, जस-इमाः (टेरत्वं आप्, दस्य मत्वं इमा+अस् इति दीर्घः सस्थाने विसर्गः)। अम्-इमां (टेरत्वं आप, दस्य मत्वं इमा+अम्-इति अम्यतेक इति (२८।३।२) एकाक्), औट्-इमे (औवत्), शस्-इमाः (जस्वत्)। टा-अनया (टौसोरिति (२६।४।२) अन आदेशः, आप्, अना+टा आ) इति स्थिते अयोमीति (३८।३।२) आकार-स्थाने अय्), भ्याम्-आभ्याम् (हल्यत् (२७।४।२) इति इदमः स्थाने अ, आप, दीर्घः) एवं भिस-आभिः। ङे-अस्यै (टेरत् आप् स्त्रियां ङीतीति (१६।४।२) स्याड़ागमः प्राक्पुम्वत् हल्यत् इति अ, अस्या+ए इति स्थिते वृद्धिरेजूठः (४।२।१) इति वृद्धिः),—भ्याम् आभ्याम् (पूर्व्ववत्), तथैव भ्यस-आभ्यः। ङसि अस्याः (टेरत् आप स्त्रीयां ङीतीति स्याड़ागमः, हल्यत् इति अ प्राक् पुम्वत् अस्या+अस् इति स्थिते अकः सवर्ण (२।२।१) इति दीर्घः स स्थाने विसर्गः) भ्याम्-आभ्याम्, भ्यस-आभ्यः। ङस्-अस्याः (ङसिवत्, ओस-अनयोः (टौसोरिति अन आदेशः, आप, अयोमीति आकार स्थाने अय् स स्थाने विसर्गः), आम्-आसाम् (टेरत् आप् आदामः(१०।४।२) इति आमः स्थाने साम हल्यत् इति इदमः स्थाने अ, दीर्घश्च)। ङि अस्याम् (टेरत्, आप् स्त्रियांङीतीति स्याड़ागमः, हल्यत् इति अकारः प्राक् पुम्वत् अस्या+ङि इति स्थिते, ङेरामागमानी भ्यामिति (५१।३।२) ङि स्थाने आम् दीर्घश्च), ओस्-अनयोः (पूर्व्व-वत्), सुप्-आसु (हल्यत् इति इदमः स्थाने अत् आप् दीर्घश्च)। एनो द्वितीयेति (२८।४।२) मूत्रेण द्वितीया, टा, ओसस्सु एनादेशे कृते द्वितीयायां-एनां, एने, एनाः। तृतीयैकवचने एनया, ओसि एनयोः इति रूपान्तराणि भवन्ति च।

### किम् शब्दस्य

किम + सु किमः क इति (३२।४।२) किम् शब्दस्य क आदेशः आप् का + सु इति स्थिते हलड्याप इति सुलोपः, औ-के (किम् स्थाने क आप् औ स्थाने शी गुणः) जस—काः (किमः स्थाने क आप दीर्घः स स्थाने विसर्गः)। अम् काम् (किम् स्थाने क आप् अम्यतेकेति एकाक्) औट, के (औवत), शस् काः जसवत)। टा कया (क आदेशः आप् आकार स्थाने अय) काभ्याम (क आदेशः आप् दीर्घः) एवं भिस्—काभिः। ङे कस्यै (क आदेशः स्याड़ागमः प्राक् पुम्वत् कस्या + ए इति स्थिते वृद्धिः) भ्याम्—काभ्याम् भ्यस् काभ्यः ङसि कस्याः (क आदेशः आप् स्याड़ागमः प्राक् पुम्वत कस्या अस् इति स्थिते दीर्घः) भ्याम्—काभ्याम्, भ्यस् काभ्यः। ङस—कस्याः, (ङसिवत्) ओस-कयोः, (क आदेशः आप आकार स्थाने अय् स स्थाने विसर्गः ( आम्—कासाम् (क आदेशः आप् आमः स्थाने साम्)। ङि कस्याम् (क आदेशः आप् स्याड़ागमः प्राक् पुम्वत कस्या + ङि इति स्थिते ङि स्थाने आम् दीर्घश्च) ओस् कयोः। (पूर्ववत) सुप् कासु ( क आदेशः आप् )।

### रकारान्तस्य गिर शब्दस्य

गिर + सु सुलोपः रः प्राक् दीर्घ इति (८८।३।२) इकार दीर्घः र स्थाने विसर्गः (३।३।१) गीः औ—गिरौ जस्—गिरः। अम्—गिरं औट्—गिरौ, शस्—गिरः। टा—गिरा भ्याम्—गीर्भ्याम्, (रः प्रागिति दीर्घः) एवं भिस् गीर्भिः) ङयादौ—गिरे, गीर्भ्याम्, गीर्भ्यः। गिरः, गीर्भ्याम्, गीर्भ्यः, गिरः, गिरोः, गिराम्। गिरि, गिरोः, गीर्षु। र प्रागिति दीर्घः (सम्बोधने गीः, गिरौ, गिर)।

पुर् धुर् प्रभृतीनामपि रूपाणि अनया रीत्या साध्याणि। यथा (पूः, पुरौ, पुरः। पुरम्, पुरौ, पुरः। पुरा, पूर्भ्याम्, पूर्भिः। पुरे, पूर्भ्याम्, पूर्भ्यः। पुरः, पूर्भ्याम्, पूर्भ्यः। पुरः, पुरोः, पुराम्। पुरि, पुरोः, पूर्षु। सम्बोधने—पूः, पुरौ, पुरः। एवं धूर् शब्दस्यापि। अन्येषामपि रान्तस्त्रीलिङ्गशब्दानां रूपाण्येवमेव साध्यानि।

### चतुर् शब्दस्य—संख्यावाचकस्य बहुवचनान्तस्य—

चतुर्+जस्, त्रिचतुरोरिति (२४।३।२) चतसादेशः, स स्थाने विसर्गः—चतस्रः। शस्—चतस्रः (जस्वत्)। भिस्—चतसृभिः त्रिचतुरेति (२४।६।२) इति सूत्रेण चतस्रादेशः। एवं भ्यस्—चतसृभ्यः। आम्—चतसृणाम् अनामीति निषेधात् न चतस्रादेशः ततः चतसृ आदेश एवं आमोनामिति आमः स्थाने नाम्, न तिसृचतस्रोरिति दीर्घनिषेधः। सुप्—चतसृषु, चतसृ आदेशः षत्वञ्च। प्रियाः चतस्रो यस्या इति विग्रहनिष्पन्नस्य प्रियचतुर्शब्दस्य नान्यलिङ्गस्य स्त्रीत्वे इति निषेधात् न चतसृ आदेशो भवति। ततश्च प्रियचत्व, प्रियचत्वारौ, प्रियचत्वार इत्येवं प्रकाराणि रूपाणि भवन्ति दर्शितानि च तानि।

### दिश् शब्दस्य—शकारान्तस्य—

दिश्+सु, सुलोपः, कः क्विमन्तस्येति श स्थाने क्, पक्षे दिग्, औ—दिशौ, जस्—दिशः। अम्—दिशं, औ—दिशौ, शस्—दिशः। टा—दिशा, भ्याम्—दिग्भ्याम् (श स्थाने क्, झयस्तृतीय इति क स्थाने ग्) एवं भिस्—दिग्भिः। ङ्यादौ—दिशे, दिग्भ्याम्, दिग्भ्यः। दिशः, दिग्भ्याम्, दिग्भ्यः। दिशः, दिशोः, दिशाम्। दिशि, दिशोः, दिक्षु। सम्बोधने—दिक्, दिग्, दिशौ, दिशः। दृश, तादृश्, यादृश् प्रभृतीनामेवमेव रूपाणि।

वकारान्तस्य दिव् शब्दस्य तु सुदिव् शब्दवत् रूपाणि यथा— द्यौ, दिवौ, दिवः। दिवं, दिवौ, दिवः। दिवा, द्युभ्याम्, द्युभिः। दिवे, द्युभ्याम्, द्युभ्यः। दिवः, द्युभ्यां, द्युभ्यः। दिवः, दिवोः, दिवाम्। दिवि, दिवोः, द्युषु।

शकारान्तस्य दिश्-शब्दस्य पुंलिङ्ग तादृश् शब्दवत् रूपाणि। यथा दिक्, दिग्, दिशौ दिशः। एवमन्येऽपि शकारान्ताः।

लिष शब्दस्य षकारान्तस्य।

लिष + सु सुलोपः, षष्ट इति ष स्थाने ट, पक्षे ड, औ- लिषौ, जस् लिषः। अम्—लिषं, औट्—लिषौ शस्-लिषः। टा- लिषा, भ्याम्-लिड्भ्याम् (ष स्थाने ट, ट स्थाने ड), एवं भिस्—लिड्भिः। ङयादौ लिषे, लिड्भ्याम्, लिड्भ्यः। लिषः, लिड्भ्याम्, लिड्भ्यः। लिषः लिषोः, लिषाम्। लिषि, लिषोः, लिट्सु। पक्षे लिट्त्सु।

सजुष् शब्दस्य-पुंलिङ्गवत् रूपाणि यथा

सजूः, सजुषौ, सजुषः। सजुषं, सजुषौ, सजुषः। सजुषा, सजूर्भ्याम्, सजूर्भिः। सजुषे, सजूर्भ्याम्, सजूर्भ्यः। सजुषः, सजूर्भ्याम्, सजूर्भ्यः। सजुषः, सजुषोः, सजुषां। सजुषि, सजुषोः, सजुष्षु, सजूःषु।

आशिष् शब्दस्य

आशिष् + सु, सुलोपः, ससजुषाशिषश्चेति (१००।३।२) दीर्घः, षत्वस्य स्थानिवत्त्वात रुस इति ष (स) स्थाने विसर्गः आशीः, आशिषौ, आशिषः। आशिषं आशिषौ, आशिषः। आशिषा, आशीर्भ्याम्, आशीर्भिः। आशिषे, आशीर्भ्याम्, आशीर्भ्यः। आशिषः, आशीर्भ्याम्, आशीर्भ्यः। आशिषः, आशिषोः, आशिषाम्। आशिषि, आशिषोः, आशीष्षु, आशीःषु। सम्बोधने आशीः, आशिषौ आशिषः।

## अदस्--शब्दस्य (सकारान्तस्य)

अदस्+सु, टेरत्-आप् अदसोदस्येति (१८।४।२) द स्थाने सः, सु स्थाने औ असा+औ, वृद्धिः असौ, औ—अमू, टेरत्, आप्, अदा-औ इति स्थिते औच्छी नपुंसकाच्चेति औ स्थाने शी (ई) तत आदिकोगुण इति गुण अदे इति, अटेरिति (३०।४।२) दकारस्य मः आकारस्य च ऊकारः), जस्—अमूः (टेरत्, आप्, अदा+अस् इति ततोदीर्घः अदाः इति स्थिते दस्य मत्वं आकारस्य ऊत्वञ्च)। अम्--अमूं (टेरत्वादिकं पूर्व्ववत् अदा+अम्. अम्यतेकेति एकाक् अदां ततो दकारस्य मकार, आकारस्य ऊकारश्च), औट्--अमू (औवत्), शस्—अमूः (जश्वत्) टा--अमुया (टेरत्वादिकं पूर्व्ववत् अदा+टा (आ), ततो अयोऽसीति आकार स्थाने अय्। अदया इति स्थिते दकारस्य मः, अकारस्य उकारश्च, अमुया, भ्याम्-अमूभ्याम् (टेरत्वादिकं पूर्व्ववत् अदा+भ्याम् इति स्थिते मत्वं ऊत्वञ्च एवं भिसि अमूभिः। ङे-अमुष्मै टेरत् आप् स्याड़ागमः अदा+स्या, ए इति स्थिते प्राक् पुम्वत् अद+स्या+ए इति वृद्धिः दस्य मत्वं षत्वञ्च, अमुष्यै भ्याम्-अमूभ्याम् (पूर्व्ववत्), भ्यस्-अमूभ्यः। ङसि-अमुष्याः। अदस् ङसि टेरत्वं स्यांड़ागमः प्राक् पुम्वत् अदस्य+अस् इति स्थिते दस्य मत्वं—अकारस्य उत्वं षत्व, दीर्घश्च, भ्याम् भ्यासोः पूर्व्ववत्। ओस्-अमुयोः अदस्+ओस् टेरत्वादिकं अदा ओस् इति स्थिते अयोसीति अकार स्थाने अय, दस्य मत्वं अकारस्य उत्वञ्च अमुयोः, आम्-अमूषां (टेरत्वादिकं आदाम इति आमः स्थाने साम्, अदा+साम् इति स्थिते दस्य मत्वं आकारस्य ऊत्वञ्च, षत्वञ्च)। ङिअमुष्यां (टेरत्वादिकं पूर्व्ववत्, स्याड़ागमः प्राक् पुम्वत अद+स्या+ङि इति स्थिते दस्य मत्वं, अमुष्या+ङि इति स्थिते ङेरामा गमिति ङि स्थाने आम् दीर्घश्च), ओस्-अमुयोः (पूर्व्ववत्) सुप्-अमूषु (टेरत्वादिकं पूर्व्ववत् अदा+सु इति स्थिते, दस्य मत्वं ऊत्वं षत्वञ्च)।

हकारान्तस्य उपानह् शब्दस्य—नहोध: (१०८।३।२) इत्यस्य प्रवृत्तौ वक्ष्यमानप्रकाराणि रूपाणि भवन्ति-उपानत्, उपानहौ, उपानहः। उपानहं, उपानहौ, उपानहः। उपानहा, उपनद्भ्याम्, उपानद्भिः। उपानहे, उपानद्भ्याम्, उपानद्भ्यः। उपानहः उपानद्भ्याम्, उपानद्भ्यः। उपानहः, उपानहोः, उपानहाम्। उपानहि, उपानहोः, उपानत्सु। सम्बोधने—उपानत्, उपानहौ, उपानहः।

वक्ष्यमाणहलन्तशब्देभ्यः स्त्रियां ङी भवति, ततश्च तेषामीकारान्तशब्दवत्‌रूपाणि।

| पुं | स्त्री | पुं | स्त्री |
|---|---|---|---|
| प्राच् | प्राची | गुणिन् | गुणिनी |
| प्रत्यच् | प्रतीची | मानिन् | मानिनी |
| अवाच् | अवाची | एवं सर्व्वेभ्य इनन्तेभ्यो ङीः स्यात्। | |
| उदच् | उदीची | राजन् | राज्ञी |
| सत् | सती | श्वन् | शुनी |
| असत् | असती | युवन् | युवती |
| ददत् | ददती | मघवन् | मघोनी |
| दधत | दधती | | मघवती |
| जक्षत् | जक्षती | वृत्रहन् | वृत्रघ्नी |
| जाग्रत् | जाग्रती | भ्रूणहन् | भ्रूणघ्नी |
| चकासत् | चकासती | अर्व्वण् | अर्व्वती |
| भवत् (भू+शतृ) | भवन्ती | उपेयिवस् | उपेयुषी |
| भवत् (भा+डवतु) | भवती | तस्थिवस् | तस्थुषी |
| शासत् | शासती | एवं सर्व्वेभ्यः क्वसु प्रत्ययान्तेभ्यो ङी भवति। | |
| पचत् | पचन्ती | विद्वस् | विदुषी |
| दीव्यत् | दीव्यन्ती | | |
| गच्छत् | गच्छन्ती | | |
| तृप्यत् | तृप्यन्ती | | |

| पुं | स्त्री | पुं | स्त्री |
|---|---|---|---|
| कुर्व्वंत् | कुर्व्वंती | लघीयस | लघीयसी |
| करिष्यत् | करिष्यती | प्रेयस् | प्रेयसी |
| | करिष्यन्ती | श्रेयस् | श्रेयसी |
| | | गरीयस | गरीयसी |

एवं सर्व्वेभ्य एव शतृप्रत्ययान्तेभ्यो ङी भवति। तत्र विशेषस्तु यत्र शप् श्यन् वा भवति तत्र ङ्यां सत्यां नित्यं नुम्। शप् श्यन् भ्यामन्यस्मादवर्णात् विकल्पेन नुम् यत्र अवर्णोनास्ति तत्र न नुम्।

एवं सर्व्वेभ्य ईयसु प्रत्ययान्तेभ्यो ङी भवति। इति संक्षेपः। एषां सर्व्वेषां शब्दानां नदीशब्दवत् रूपाणि भवन्ति।

इति हलन्त स्त्रीलिङ्ग प्रकरणम्।

## हलन्त क्लीवलिङ्गप्रकरणम्।

हलन्तक्लीवलिङ्गशब्दानां टादौ पुंवद्रूपाणि. प्रथमद्वितीययोश्चैक रूपाणि ततश्च केवलं प्रथमारूपाणि दर्शयामः।

ककारान्तस्य-सर्व्वशक् शब्दस्य सर्व्वशक् । सु. स्यमोर्लुक् इति सु-लुक् पक्षे सर्व्वशग् सु लुक् वाऽवसाने इति क स्थाने ग. औ-सर्व्वशकी औ च्छोन पुंसकाच्चेति औ स्थाने शी (ई). जस् -सर्व्व शङ्कि जस्शसोः शिर्झलचोर्नुम चेति जस् स्थाने शी (ई) नुम् च। एवं द्वितीयायामपि—सर्व्वशक्, सर्व्वशकी, सर्व्वशङ्कि। टादौ-तु पुम्वत्। ये खलु शब्दा अनेनैव नियमेन साध्यास्तेषां रूपाण्येवा-ऽत्र दर्शयामः। खकारान्तस्य चित्रलिख् शब्दस्य-चित्रलिक. चित्र-लिग. चित्रलिखी, चित्रलिङ्खि। गकारान्तस्य सुवल्ग शब्दस्य सुवल् (सुलुक् संयोगान्तस्येति कलोपः) औ -सुवल्गी, जस्- सुवन्ल्गि। चकारान्तस्य वाच् शब्दस्य वाक्, वाग्, वाची· वाञ्चि। प्राच् शब्दस्य प्राक्, प्राग्, प्राची, प्राञ्चि। प्रत्यच शब्दस्य प्रत्यक्,

प्रत्यच् प्रतीची, प्रत्यञ्चि। तिर्य्यच शब्दस्य तिर्य्यक्, तिर्य्यग्, तिरश्ची * तिर्य्यञ्चि। उदच शब्दस्य—उदक् उदग् उदीची, उदञ्चि। गवाच शब्दस्य—सु गवाक् गवाग् गोअक् गोअग, गोक्, गोग, गवाङ्, गोअङ्, गोङ्, औ—गोची, गवाञ्ची, गोअञ्ची, गोञ्ची, जस्—गवाञ्चि, गोअञ्चि, गोऽञ्चि। टादौ—गोचा, गवाञ्चा, गोअञ्चा, गोञ्चा गवाग्भ्याम्, गोअग्भ्याम्, गोग्भ्याम् गवाङ्भ्याम्, गोअङ्भ्याम्, गोङ्भ्याम् इत्यादि सुपि तु रूपाणि—गवाङ्क्षु, गोअङ्क्षु, गोङ्क्षु, गवाङ्षु, गोअङ्षु, गोङ्षु, गवाक्षु, गोअक्षु, गोक्षु।

जकारान्तस्य असृज शब्दस्य असृक्, असृजौ, असृञ्जि। ऊर्ज्ज-शब्दस्य ऊर्क्, ऊर्ग्, ऊर्ज्जौ ऊर्न्ज्जि, ऊर्ज्जि। तकारान्तस्य-हरित् शब्दस्य—हरित् हरिद्, हरितौ, हरिन्ति। यकृत्—शब्दस्य यकृत्, यकृद्, यकृती, यकृन्ति, यकानि। टादौ यकन् आदेशे यकृता, यक्ना, यकृद्भ्याम्, यकभ्याम्, यकृद्भिः, यकभिः। ङे—यकृते, यक्ने, यकृद्भ्याम्, यकभ्याम्, यकृद्भ्यः, यकभ्यः। यकृतः, यक्नः यकृद्भ्याम्, यकभ्याम्, यकृद्भ्यः, यकभ्यः। यकृतः, यक्नः यकृतोः, यक्नोः, यकृताम्, यक्नाम्। यकृति यक्नि, यकनि, यकृतोः, यक्नोः, यकृत्सु, यकसु। एवं शकृत् शब्दस्यापि।

| | | |
|---|---|---|
| गतवत् | गतवती | गतवन्ती |
| भवत् | भवती | भवन्ति |
| ददत् | ददती | ददति ददन्ति |
| भविष्यत् | भविष्यती | भविष्यन्ति |
| महत् | महती | महान्ति |
| अग्निमथ अग्निमद् | अग्निमथी | अग्निमन्थि |
| हृद | हृदी | हृन्दि |

| | | |
|---|---|---|
| नाम | नाम्नी | नामानि |
| कर्म्म | कर्म्मणी | कर्म्माणि |
| पर्व्व | पर्व्वणी | पर्व्वाणि |
| वहुवृत्रह् | वहुवृत्रघ्नी | वहुवृत्रहाणि |
| स्थायि | स्थायिनी | स्थायीनि |
| स्वप | स्वपी | स्वम्पि स्वापि |
| वाः | वारी | वारि |
| सुद्यु | सुदिवी | सुदिवि |
| विट् (वा) विड् | विशी | विंसि |
| दोः | दोषी | दोंषी |
| पिपठीः | पिपठिषी | पिपठिषि |
| पयः | पयसी | पयांसि |
| विद्वत | विदुषी | विद्वांसि |
| सेदिवत् | सेदुषी | सेदिवांसि |
| गरीयः | गरीयसी | गरीयांसि |
| हविः | हविषी | हवींषी |
| धनुः | धनुषी | धनूंषि |
| सुपुस् | सुपुसी | सुपुपांसि |
| लिट्, लिड् | लिही | लिंहि |
| स्वनडुत स्वनडुद् | स्वनडुही | स्वनड्वांहि |

## अथ तृतीयाध्यायस्य

### प्रथमः पादः ।

(सनन्तादि-प्रकरणम्)

१। गुप्तिज्किद्भ्यः सन् वक्तव्यम् । (१)

[गुप्-तिज्-कित्-भ्यः ५।।।, सन् ०१।, वक्तव्यम् ० २।]

गुपादिभ्यो धातुभ्यः सन्—प्रत्ययो वक्तव्यं भवति । गुपेर्निन्दायां जुगुप्सतेऽधर्मं, तङ्-पूर्ववत् सनः (१।३।६२), तिज् क्षमायां तिति-

---

(१) इह तिज् किद्भ्यां निरनुबन्धाभ्यां साहचर्यात् गुपगोपन-कुत्सनयोरिति भौवादिकस्यैव ग्रहणं। इति विश्वुमित्रः। गुपेर्निन्दाया-मिति सञ्ज्ञिप्रसारसूत्रं गुपगोपनकुत्सनयोरित्यस्मान्निन्दार्थादेव सन् भवति। गुप् व्याकुलत्वे गुपु रक्षणे इत्येतयोर्निन्दार्थाभावादग्रहणमिति गोयीचन्द्रः। लौकिकार्थप्रतिपत्तये वक्तव्यग्रहणमिति पद्मनाभपञ्जिका, लौकिकार्थस्तु गुपगोपनकुत्सनयोरित्यादिः। जुगुप्सते गुप्+सन् किद् संवद्धिनेन (३।४।११) द्वित्वे प्राप्ते द्विरद्येकाचः (३।४।२) इति गस्य द्वित्व, घभगहेजः (३।४।२०) इति गस्याने जः, सनि ग्रहगुहोश्चेति (३।४।१११) इडभावात्, इक झलन्ताच्चेति (१।२।७) कित्संज्ञा, ततश्च गुणाभावः (१।४।८४) भूवादिसनाद्यन्ताधातवः (१।१।३७) इति जुगुप्स धातुत्वात् लट् ते, पूर्ववत् सन (१।१।१०७) इत्यात्मनेपदं। निन्दायामन्यत्रापूर्वं केवलादस्मादात्मनेपदं न भवतीति गोयीचन्द्रः। तत्प्रारम्भस्तु विशालाक्षीमुखो सकमुख्यं यथा अनुबन्धस्य

क्षतेऽपराधम्; कित्—रोगनिर्णय,सन्देहयोः, चिकित्सत्यातुरं भिषक्, विचिकित्सति सन्देग्धीत्यर्थः, अन्यत्र यथाप्राप्तं गोपयति, तेजयति, संकेतयति।

## २। मानबधदानशानएरौ च। (२)

[मान-बध-दान शानः ५।, एः (इ) ६।, ई०१।, च०१।]

केवलेऽचरितार्थत्वात् सनन्तात् तङ् इति। तिज् क्षमायां निशामने-चेति गोयीचन्द्रः तितिक्षते तिज+सन् द्वित्वादिकं पूर्ववत्, चोःकुनिशः (३।१।११४) जस्थाने ग, खरि प्रथम इति (१।२।५४) ग-स्थाने क, इचकुर इति षत्वं तितिक्ष+लट्ते। प्रतीकारे संशये चार्थे कित सन् भवति। चिकित्सतीति, कित निवासे रोगापनयने च परस्मै-पदी, सूत्रे चकारोऽनन्तसमुच्चयार्थस्तेनार्थान्तरस्यापि भवति,—यथा क्षेत्रे जातानि तृणानि चिकित्स्यानि विनाशयनीयानि इत्यर्थः। पर-दाराः परक्षेत्रं तच्चियः पारदारिकः तत्र जातः चिकित्स्यः, निग्रहीतव्यः इत्यर्थः। अथवा एतदप्यर्थद्वयं प्रतीकारार्थं एवानुप्रविशति तत एव सूत्रकृता व्याधिप्रतीकारार्थं इति नोक्तम्। इति गोयीचन्द्रः। अन्यत्र अर्थे यथाप्राप्तं गणानुसारत इति शेषः। गोपयति, तेजयति, संकेतयति, गोपयतीत्यत्र प्रयोजके णिच्, तेजयति सङ्केतयतीत्यादौ चुरादि णिच् वा भुवादौ चानयोः पाठादिति विष्णुमिश्रः। गोपयतीत्यत्र प्रयोजके णिजिति यदुक्तं तच्चिन्त्यमेव स्वार्थप्रयोजकयोर्भिन्नार्थकत्वात् स्वार्थ-प्रसङ्गे प्रयोजकोदाहरणाऽनुपपत्तेः।

(२) मानबधावनुदात्तेतौ इतरौ स्वरितेतौ। इह यावत् सम्भव तावद्विधिरितिन्यायेनाभ्यासस्यैव इकारस्य ईकार, इति विष्णुमिश्रः। मानपूजायामिह विचारार्थे, बध बन्धने अत्र विकृतार्थे, दान अवखण्डने

एभ्यः सन् बहुलं स्यात् । इकारस्य ईत्वञ्चाभ्यासे । मीमांसते शास्त्रार्थं विचारयतीत्यर्थः, बीभत्सते गजं विकृतं करोतीत्यर्थः, दान-शान: स्वार्थे दीदांसति दीदांसते देत्युं, शीशांसति शीशांसते शस्त्रम् ; बहुलमित्येव—मानयति, बाधयति, निशानयति ।

## ३ । स्वानितुमोधातोरिच्छायाम् । (३)

[स्वानितुमः ५।, धातोः ५।, इच्छायाम ७। ]

शान तेजने अनयोः स्वार्थ एवेति पद्मनाभपञ्जिका, विचारश्चात्रान्वय व्यतिरेकाभ्यामशेषदोषनिरासपूर्वकतत्त्वावधानाय परामर्शः, न तु द्रव्यादिस्वरूपानुसन्धानमात्ररूपः इति । स्वार्थस्य द्योतकेन विना योऽर्थः प्रतीयत इति च गोयीचन्द्रः । मीमांसते—मान+सन् मा इत्यस्य द्विरुक्ति. (३। ।३) इत्सनीति (३।४।४०) अभ्यसाकारस्थाने इकारः, तस्य-स्थानेन ईकारः, न श्चापदान्ते (१।२।४१) नकारस्यानुस्वारः, मीमांस-धातु स्ततो लट्ते, बीभत्सते—बध+सन् बकारस्य द्वित्वं (३।४।३) इत्सनीति अभ्यासस्य अकारस्य इत्वं, तस्य चानेन ईत्वं, भवन्ताचामिति (२।३।८६) बस्थाने भ, खरि प्रथमः (१।२।५४) धस्थाने त्, दीदांसते, शीशां सते इत्यत्र मीमांसते इति वत् द्वित्वादिकं ज्ञेयम् । उक्तार्थेभ्योऽन्यत्र मानयति, पद्मनाभ पञ्जिकायां मानते, मानयति, बधते बाधयति दानते दानयति, निशानते, निशानयतीति प्रत्युदाहरणानि सन्ति । दो अवखण्डने, शो तनूकरणे इत्येतयोस्तन प्रत्ययेन यथाक्रमं दान शान इति रूपं ततस्त तत् करोतीति णिजा दानयति, शानयतीति स्यात् मानेर्जिज्ञासायां बधेश्चित्तविकारे, दानेरार्जवे, शानेर्निशाने इति सिद्धान्तकौमुदी ।

( ३ ) स्वानि गम्यमानं तुम् यस्येति बहुव्रीहिः । तुमर्थो गम्यमानो बुध्यमानोयस्येति फलितार्थः इति पद्मनाभ पञ्जिका, मिम्मस्तु स्वान-

इच्छार्थे गम्ये तुम्प्रत्ययान्ताद्धातोः सन् वा स्यात् । कर्त्तुमिच्छति चिकीर्षति, दिव्-दुद्यूषति, इह मा मुमूर्षति, नदीकूलं पिपतिषति इत्युपमानात् । इच्छासनन्तात्र सन्—चिकीर्षितुमिच्छति, इह भवत्येव-जुगुप्सिषते । ×

---

शब्दस्यार्थत्रयं-निवृत्त्यपकर्षं प्रसङ्गरूपं, अत्र तदेवार्थत्रयं घटते, तथाहि स्थानि निवृत्तिमत् तुम् यस्य, तस्मादन्तर्भूततुमर्थादित्यर्थः अथवा स्थानि अपकर्षवत् तुम् यस्य, अस्मिन् तुममपसार्थे सन् विधीयते इत्यर्थः। अथवा स्थानि प्रसक्ति तुम् यस्य तुमर्थयोग्याद्धातोरित्यर्थः । धातोः कर्म्मणः समानकर्त्तृकादिच्छायाम् इति (पाणिनि सूत्रम्—३।१।७) इषि कर्म्मणः इषिणैककर्त्तृकाद्धातो सन् प्रत्ययो वा स्यादिच्छायां इति सिद्धान्तकौमुदी, तुम् गर्भादिच्छायामिति संक्षिप्तसारसूत्रम् तुम् गर्भो यस्य स तुम् गर्भः अन्तर्भूतत्वात् गर्भं इव अन्तर्भूततुमर्थ इत्यर्थः । चिकीर्षति कृ+सन्, इञ्जनगमां सन्सीति (३।४।९०) ऋकार दीर्घः, तत ऋत इर् (३।४।७०) ऋकारस्थाने इर् रः प्रादीर्घः (२।३।८९) इकार दीर्घः की इत्यस्य द्वित्वं, कखछामिति (३।४।२८) क स्थाने च कुलोऽभ्यास इति (३।४।२९) अभ्यासस्य ह्रस्वः, तत इचकुर इति षत्वं चिकीर्ष धातु स्ततो लट्तिप् चिकीर्षति ; देवितु मिच्छति दुद्यूषति दिव्+सन् वऊठ वकारस्य ऊकार इकारस्थाने य, द्यू इत्यस्य द्वित्वं अभ्यासस्य ह्रस्वः, सकारस्य षत्व दुद्यूष-धातुस्ततो लट्ति, एवं भवितुमिच्छति बुभूषति, श्रोतु मिच्छति सुश्रूषते । मर्त्तुमिच्छति मृ+सन् उर्मौः (३।४।११। इति ऋकार स्थाने उर्, ततो रः प्रागिति दीर्घः मू इत्यस्य द्वित्व अभ्यासस्य ह्रस्वः, सस्य षत्वं मुमूर्षति, पतितुमिच्छति पत+सन्, इडागमः (३।४।१३) पकारस्य द्वित्वं इत्समोति लट् अभ्यासस्य इकारः पिपतिष धातुः लट्ति पक्षी—पिपत्-

४ स्वार्थकर्मणः काम्यः [स्वार्थकर्मकः ५।, काम्यः १। ](४)

इच्छायामेषितुरात्मार्थकर्मणः काम्यः स्यात्। दिवमिच्छति द्युकाम्यति, सत्पुत्रमिच्छति सत्पुत्रकाम्यति। स्वार्थ इति किं राज्ञः पुत्रमिच्छति।

---

सति। पिपतिषतीत्यादौ अप्राप्तिमि ओपचारिकी इच्छा स्वीकरणीया। श्वा मुमूर्षतीत्यादौ एवं विधमस्य दुःखं येन मर्त्तुमिच्छतीत्याप्रेते किन्तु मरणविषयापि इच्छा कदापि भवत्येव, यत इदृशं नाम तत् दुःखं येनास्य मरणं सुखं। इति गोयीचन्द्रः, पद्मनाभस्तु मर्त्तुमिच्छतीव, पतितुमिच्छतीव। यदा तु तुम् प्रत्यय एव तदा तुमोऽभिधानात् तुमगर्भता नास्ति मनोऽविषयत्वात् वाक्यमेव भवति, यथा भवितुमिच्छति इति गोयीचन्द्रः, तुमगर्भादितिकिम् कार्य्यमिच्छति इच्छायामिति किम्? कर्त्तुं जानाति। अतुमगर्भादुपासने सुव इति संक्षिप्तसारसूत्रं उपासने वाच्ये अतुमगर्भात् श्रृणोतेः सन् भवतीति तदर्थः, गुरुं शुश्रूषते उपास्ते इत्यर्थः। उपासनार्थाभावे तुम् गर्भादेव भवतीति गोयीचन्द्रः। प्रैषि-कास्वतुवर्थीयाच्छेषिको मतुवर्थिकः। सरूपः प्रत्ययोनिष्ठोन सन्निच्छा-समन्ततः इत्यनुस्मृत्याह इच्छा समन्तादिति स्वार्थात्तु भवत्येव।

(४) स्वस्मै इदं स्वार्थं स्वार्थञ्च तत् कर्म्म चेति। इति कर्म्मधारयः एषितुः स्वार्थकर्म्मणः इत्यर्थः। नासमस्तापेक्षात् काम्यादिः। इति संक्षिप्तसारसूत्रं असमस्तं अपेक्षत इति असमस्तापेक्षा तस्मान्नाम्नो न काम्यादिः स्यादिति तदर्थः यथा सन्तं पुत्रमिच्छति अत्र हि पुत्रशब्दोऽ-समस्तं सन्तमपेक्षते असमस्तता च यस्मान्नाम्नः प्रत्ययोऽभीष्टस्तेन सहैवास्यापेक्षा, तेन महाश्रयं पुत्रमिच्छतीत्यत्र समस्तेऽपि महाश्रय शब्दस्य पुत्रशब्देनासमस्ततायां न काम्यादिः, उपलक्षणमेतत् स्यमान्तरेऽ-

X

## ५। क्यजमान्ताव्ययात्। (५)

[क्यच् ०१।, अमान्ताव्ययात् (न-मान्त-अव्यय) ५। ]

इच्छायामेषितुरात्मार्थकर्म्मणः क्यच् स्यात्। आत्मनः पुत्रमिच्छति पुत्रीयति, दिव्यति क्येऽपदत्वादुत्वं न भवति (२।३।२, २।३।८४), गव्यति, रैयति। अमान्ताव्ययादिति किम्? किमिच्छति, स्वरिच्छति।

---

एषा व्यवस्था ज्ञेया, तेन कर्म्मणोऽण् इत्यत्रापि असमस्तापेक्षात् कर्म्मण उत्तरे अण् भवतीति ज्ञेयं तेन महान्तं कुम्भं करोतीति वाक्यमेव तिष्ठति। इति गोयीचन्द्रः। उक्ताच्च कर्म्मण इति सङ्क्षिप्तसारसूत्रम् उक्तादपि कर्म्मणः काम्यो न भवति इति तदर्थः। इष्टः पुत्रः, इष्यते पुत्रः। दिवमिच्छति द्युकाम्यति, दिव+काम्य एकार्थे च (२।३।२३) इति अमोलोपः 'दिव उत्' इति (२।३।८४) व स्थाने उकारः इकार स्थाने य, द्युकाम्य+लट् तिप्। राज्ञः पुत्रमिच्छतीत्यत्र राज्ञ इति पदं अन्यसम्बन्धद्योतनार्थं यदा राजसम्बन्धिनि पुत्रे पुत्रमिच्छतीति वाक्यं क्रियते तदा पुत्र काम्यतीति न भवतीत्यभिप्रायः। कर्म्मण इति किम् दात्रेणेच्छति।

(५) पुत्रमिच्छतीति पुत्रं+क्यच् एकार्थेचेति सुपोलुक पुत्र+य, क्यचीदस्येति (३।१।४३) पुत्र इत्यस्य अकारस्य स्थाने ईय, पुत्रीय धातुस्ततोलट् तिप् पुत्रीयति; दिवं इच्छति दिव्यति दिवं+क्यच्, एकार्थेचेति सुपोलुक् दिव्+य इति न क्येऽडेः इति पदत्वाभावात् न व स्थाने उत् दिव्य धातु स्ततो लट् तिप् दिव्यति। दीव्यतीति दीर्घस्तु प्राचां प्रमादिक एवेति सिद्धान्तकौमुदी. तत्र गिरमिच्छति गीर्य्यति पुरमिच्छति पूर्य्यतीति यदुदाहृतं तदस्माकं मते चिन्त्यमेव अकुरुकुरसपामिति दीर्घ-निषेधात्। गव्यति गामिच्छति गो+क्यच=गो+य, यि च प्रत्यये इति ओकार स्थाने अव्, गव्यधातुस्ततोलट् ति, एवं नाव्यति नावमिच्छति नावं

×

## ६ । उपमानादाचारेऽधिकरणाच्च ।

[उपमानात् ५।, आचारे ७।, अधिकरणात् ५।, च०।। ]

उपमानात् कर्म्मणोऽधिकरणाच्च परे आचारार्थे क्यच् बहुलं स्यात् । पुत्रमिवाचरति पुत्रीयति भृत्यं, मात्रीयति परस्त्रियम्, प्रासाद इव आचरति प्रासादीयति यः कुट्यां, पर्य्यङ्कीयति मञ्चके तस्य सन्तोषशीलस्य कुटिकाप्यप्सरायते ।

## ७ । कर्त्तुः क्यङोजोऽप्सरसोश्चान्तलुक् । (६)

[कर्त्तुः ५।, क्यङ् ०।।, आजोऽप्सरसोः (ओजस्, अप्सरस्) ६॥, च०।।, अन्तलुक्०।।]

---

+क्यच=नै+य, नाय+लट्तिप् रैयति रायमिच्छति राय +क्यच् = रै+य, रैय धातुस्ततो लट्तिप् । मान्ताव्ययानुकाम्यप्रत्ययोभवत्येवेति सिद्धान्तकौमुदी, किंकाम्यति स्वःकाम्यतीति ।

(६) सूत्रस्यास्य त्रिधा विभागः उपमानात् कर्त्तुराचारार्थे क्यङ् स्यादित्येकः, उपमानकर्त्तृभूताभ्यामोजोऽप्सरोभ्याम् क्यङ्, तयोश्चान्तलुगिति द्वितीयः, तथाभूतात् पयसः क्यङ् विकल्पेनान्तलुक्चेति तृतीयः । पाणिनिना अन्तःस्थितस्य सकारमात्रस्य विभाषया लोपोविहितः (३।१।११) ततश्च ओजसोऽप्सरसोर्नित्यमितरेषां विभाषयेति कारिकया ओजोऽप्सरोभ्यामन्यस्य सान्तस्य विभाषया सलोपोभवेदित्यायातं । पद्मनाभक्रमदीश्वरप्रभृतयस्तु ओजोऽप्सरसोर्नित्यमन्तलुक् पयसस्तु विकल्पेनेति विदधुः । तयोर्मते एभ्योऽन्यत्र सलोपो न भवति । वोपदेवेनापि विकल्पेन सलोपो विहितः, मुग्धबोधटीकायान्तु ओजायते, अप्सरायते, दुर्म्मनायते इत्येषु नित्यं सलोपो वक्तव्य इति वैशिष्ट्यं दृश्यते । पद्मनाभमते दुर्म्मनायते इत्यादौ भृशादिभ्यः (३।१ ८) इति अन्तवर्णलोपः । गरुड़ इव आचरति गरुड़+क्यङ्, गरुड़+य ह्रस्वस्य दीर्घ इति (३।३।२८) इति अकारस्य दीर्घः

उपमानात् कर्त्तुराचारे क्यङ् बहुलं स्यात्। गरुड़ इवाचरति, *गरुड़ायते, गव्यते गवयः, नाव्यते द्रौणिः, भिषज्यते कश्चित्*। ओजोऽप्सरसोश्चान्तलुक्। ओजायते, अप्सरायते। पयसोऽपि वा। पयायते, पयस्यते।

८। विप्‌च्। [विप्०१।, च०१।]

उपमानात् कर्त्तुराचारे विप् स्यात्। अश्व इवाचरति अश्वति खरः, विधवति रविः, गोदुहति कश्चित्। गल्भ क्लीव,-होड़ात्तङ् च

गरुड़ाय धातुस्ततो लट् ते, गौरिवाचरति गाः+क्यङ+य, यिच प्रत्यये इति ओकार स्थाने अव्, गव्यधातुस्ततो लट् ते, नौरिवाचरति, नौ+क्यङ् नौ+य औकार स्थाने आव् यि च प्रत्यये इत्यनेन, नाव्य धातुः+लट् ते, भिषगिवाचरति भिषज्+क्यङ्, भिषज्य धातु लट् ते अत्र क्ये पद संज्ञाभावात् जस्थाने गोम भवति। ओजस्+क्यङ् सलोपः, क्रसस्येति दीर्घः ओजाय धातुः, लट् ते, एवं अप्सरायते। पयायते इत्यत्र पयस्+ क्यङ् सलोपः अकार दीर्घः पयाय धातुः लट् ते, यत्र सलोपोन तत्र पयस् +क्यङ् पयस्यधातुः लट ते। यशायते यशस्यते ; विदायते विदस्यते इति सिद्धान्तकौमुदी, गोयीचन्द्रस्तु विदस्यते+इत्येकमेव पदमाह। कुमारीवाचरति कुमारायते, कुमारी+क्यङ, क्यङ् मानिनोः(४।७।११) इति पुम्वत् कुमार+य, अकस्य दीर्घः कुमाराय धातु' लट् ते, एवं हरिणीवाचरति हरितायते, गुर्व्वीव गुरूयते, युनीवाचरति य्वायते, सपत्नीवाचरतोति, सपत्नायते, सपतीयते, सपत्नीयते इति सिद्धान्तकौमुदी। यदा सपत्नस्य शत्रोः स्त्री सपत्नी, तदा सपत्नायते, यदा समानः पतिरस्या इति सपत्नी तदा सपतीयत इति, सपत्नीयते इत्यत्र तु विवाहजन्यसंस्कार-विशेषनिमित्तेन पतिशब्देन समासे नित्यस्त्रीत्वात् न पुम्वत्।

—गल्भादेस्तङ्, (क्विप्) च । गल्भते, क्लीवते, विहोड़ते, गल्भाञ्चक्रे । (१)

## ९ । भृशादिभ्यस्भुव्यच्वेर्लोपश्च हलः ।

[भृशादिभ्यः (भृश+आदि) ५।१।, च्व्यर्थे, (च्वि-अर्थ) ७।, क्यङ् ७।१।, अन्त-हलः ६।, लोपः १।, च०१।, ]

अभूततद्भावे भृशादिभ्यः क्यङ्, हलन्तस्यान्तलोपश्च । अभृशं भृशं भवति भृशायते, शीघ्रायते, वेहत्-वेहायते, उन्मनायते ॥ लोहितादेर्डाचः क्यष (लोहितादेर्डाजन्तात् क्यष स्यात्) (२) । लोहितायति, लोहितायते, मन्दायति, मन्दायते, लोहित-हरित-नील-

---

(१) उपमानात् कर्त्तुराचारार्थे क्विप्, तस्य सर्व्वलोप एव, संक्षिप्तसारे क्यङोलोपोविहितः, पाणिनिमते क्विपः क्विबिति संज्ञा । गल्भ ।—क्लीव—होड़ात् क्विप्, क्विपि सति तङ् च । वार्त्तिकमते अवप्लुक्कादेव गल्भात् क्विप्, तङ् च, केवलादुपसर्गान्तरविशिष्टाच्च क्यङ् वेति माधवादयः । अश्ववाचरतीति क्विपि अति, अतः, अन्ति । लिटि तु औ, अतुः, उः प्रत्ययग्रहणमपनीय अकेकाच इत्युक्तेर्माम् इति सिद्धान्तकौमुदी । क्विप्चेति चकारः क्यङा सह क्विपः साहचर्यार्थः । गल्भादिभ्योक्विप् जातेन वेति मिच्छतुमेव गल्भाञ्चक्रे इति अत्र प्रत्ययान्तत्वेनैव दयासकेतिलिटाम् (३।२।१०८) ।

(२) लोहितादेडजन्तात् क्यष स्यात्, चकारात् क्यङपि । क्यषिति परस्मैपदप्रयोगार्थम् । अत्र च्वि इत्यनुवृत्त्याऽभूततद्भावविषयत्वं ज्ञेयं, तत्र

पीत-मन्द-*भद्र-फेन-निद्रा-करुणा-घृणा, आकृतिगणोऽयम् । डाच् —पटपटायति, पटपटायते, कर्त्तुरित्येव—अपथं अथं भवति ।

१०. । कष्टादेरविशेषणात्तसे क्रमणे । (३)

[कष्टादेः (कष्ट-आदि) ५।, अविशेषणात् (अ-विशेषण) ५।, तसे ४।, क्रमणे ७। ]

क्यङित्येव कष्टाय क्रामतीत्यर्थे कष्टादेः क्यङ् स्यात् । कष्टायते, कक्षायते, पापं चिकीर्षतीत्यर्थः । कष्ट-कक्ष-सत्र-कृच्छ्र—गहन । न विशेषणात् कष्टाय तपसे क्रामति ।

---

लोहितशब्दस्यैव विशेषणं नतु डाचोऽसम्भवात्, नाप्यादिशब्दग्राह्याणां तस्य प्रत्याख्यानात्-इति सिद्धान्तकौमुदी । पटपटायते, पटत् शब्दात् डाच् प्रत्ययः, कृभ्वस्तियोगं विनाऽपीह डाच्, डाजन्तात् क्यङः क्यषस्य विधानादिति नागोजीभट्टः, ततः डाचि प्रकृत्येति (१।४।१८) इति द्वित्वं, तस्य च लुक्, कृत्स्य दीर्घ इति दीर्घः, पटपटाय धातुः लट् ते । यत्-लोहित श्याम दुःखानि हर्षं गर्व्वे सुखानि च । मूर्च्छा निद्रा कृपा धूमाः करुणा नित्यकर्म्मणीति पठित्वा श्यामादिभ्योऽपि पदद्वयमुदाहरन्ति, तद्भाष्यविरुद्धम्, तस्मात्तेभ्यः क्यङेव श्यामायते । इति लिङ्गविशिष्टपरिभाषया लोहिनी-शब्दादपि लोहिनीयति, लोहिनीयते इति च सिद्धान्त कौमुदी । कर्त्तुरित्येव अभृशंभृशंभवतीत्यत्र क्रियाविशेषणम् ।

( ३ ) कष्टनिमित्ताय पापकर्म्मणे क्रामतीत्यर्थे कष्टादेः क्यङ् भवति इति संक्षिप्तसारमतं, तेन तन्मते कष्टाय तपसे क्रामतीत्यत्र प्राप्तिर्नास्त्येव, मन्मते कष्टकार्य्यं अत्र कष्टनिमित्ताय पापकर्म्मणे प्रवर्त्तत इत्यस्मिन्नर्थे स्याद्भवति इति जोयीचन्द्रः । कष्टादयोवृत्तिविषये पापार्थाः तेभ्यो

* भद्रेति क्वचित्पाठः ।

११ । सुखादिभ्यस्तद्वेदयते । (४)

[सुखादिभ्यः (सुख आदि) ५।।।, तत्०२।, वेदयते तिङ० ]

तदनुभवतीत्यर्थे सुखादिभ्यः क्यङ् स्यात् । सुखं वेदयते सुखायते । सुख-दुःख तृप्त—कृच्छ्र-गहन-अलीक-करुण ।

१२ । वाष्पोष्मफेनधूमादुद्वमति ।

[वाष्प ऊष्म-फेन-धूमात् ५।, उद्वमति तिङ०]

एभ्यस्तदुद्वमतीत्यर्थे क्यङ् स्यात् । वाष्पमुद्वमति वाष्पायते, ऊष्मायते, फेनायते, धूमायते ।

१३ । रोमन्थाद्वर्त्तयति चनुचलने । (५)

[रोमन्थात् ५।, वर्त्तयति तिङ् हनुचलने ७ । ]

तद्वर्त्तयतीत्यर्थेऽस्मात् क्यङ् स्यात्, हनुचलनञ्चेत् । रोमन्थं

द्वितीयान्तेभ्यश्चिकीर्षायां क्यङ् स्यात् । पापं चिकीर्षतीति पदविग्रहः । इति सिद्धान्तकौमुदी ।

( ४ ) आत्मनः सुखादेरनुभव एव क्यङ् इति संक्षिप्तसारव्याकरणम् । आत्मन इति किम् ? परसुखस्याप्यानुमानिकोऽनुभवो विद्यत एवेति यथा सुखं अनुभवति प्रसाधकोदेवस्य इत्यत्र न ; सुख, दुःख, कक्षा, तृप्र, कृच्छ्र, अलीक, अास्र, सोढ़, कृच्छ्र, अंश, प्रतीप इत्यादयः सुखादय इति गोयीचन्द्रः । सुखादिभ्यः कर्त्तृभ्यः वेदनायामर्थे क्यङ् स्यात्, वेदनाकर्त्तुरेव चेत् सुखादीनि स्युः । कर्त्तृग्रहणं किम् ? परस्य सुखं वेदयते इति सिद्धान्तकौमुदी ।

(५) भक्षितस्य पुनरुद्गीर्य चर्वणं तदनुचलनम् । कीटो

वर्त्तयति रोमन्थायते गौः। हनुचलन इति किम्? कीटोरोमन्थं वर्त्तयति।

१४। शब्दादेः करोति। [शब्दादेः ५।, करोति तिङ्०]

तत् करोतीत्यर्थे शब्दादेः क्यङ् स्यात्। शब्दं करोति—शब्दायते, शब्द, वैर, कलह, अभ्र, कण्व, मेघ, अटा, अट्टा, अटाटा, शीका, कोटा, पोटा, सोटा, प्रुष्टा, सुदिन, दुर्दिन, नीहार॥ (६)

१५। नमस्तपोवरिवसः क्यच्।

[नमस्-तपस्-वरिवसः ५।, क्यच् ०१।]

तत् करोतीत्यर्थे नम आदिभ्यः क्यच् स्यात्। नमः करोति, नमस्यति देवान्, तपस्यति, वरिवस्यति गुरून् परिचरतीत्यर्थः। चित्रङः आश्चर्य्ये। चित्रीयते हेममृगम् ङित्वात्तङ्। (७)

रोमन्थं वर्त्तयतीत्यस्य उद्गीर्णं, बहिर्निर्गतं अवतीर्णं वा एकतो निर्गतं रोमान्थाख्यं द्रव्यं गुडिकां करोतीत्यर्थः। कैयटस्तु अपानदेशाद्विःसृतं द्रव्यमिह रोमन्थं, तदश्नातीत्यर्थः। चर्वणं करोतीति न्यासकारहरदत्तौ।

(६) शब्दयतीति तु शब्द शब्दक्रियायामित्यस्य चौरादिकस्य रूपं। वैरयतीत्यादि साध्विति कश्चित्। शङ्काशब्दस्यापि शब्दाद्यन्तर्गतत्वं, तथाच शङ्कायते ते मयतीति भट्टिः।

(७) ननु नमस्यतीत्यत्र नमःशब्दस्य सत्तायोगे कथं न चतुर्थीत्याह नैतदस्ति अर्थवद्ग्रहणेन नर्थकस्येत्यनुक्तौ। नमः शब्दस्य तत्र ग्रहणम्। सत्यपि चार्थवत्त्वे प्रत्ययार्थगुणीभूतस्य तस्य पदान्तरेण सम्बन्धस्य कर्त्तुमशक्यत्वात्। यद्वा उपपदविभक्तेः कारकविभक्तिर्बलीयसीति

१६। कण्ड्वादिभ्योयक्। (८)

[कण्ड्वादिभ्यः (कण्डु-आदि) ५।१।, यक्०१।]

तत् करोतीत्यर्थे कण्ड्वादिभ्योयक् स्यात्। कण्डुञ् कण्डुयति,

---

द्वितीया भविष्यत्येव। नमसः पूजायां, तपसस्तपश्चरणे, वरिवसः परिचर्य्यया स्वार्थे इति सिद्धान्तकौमुदी। नमसः प्रणामे इति संक्षिप्तसारः।

(८) कण्ड्वादयोगणपठिता द्विधा, धातवोनामानि च। तत्र धात्वधिकाराद्धातुभ्य एवायं प्रत्ययः, नतु, नामभ्यः। कण्ड्वादीनामनुबन्धः आत्मनेपदार्थः, स्वरित ञितोः (१।३।१२०) इत्यात्मनेपदं कण्डूयते, अकर्त्तर्थक्रियाफले तु कण्डूयति। इति गोयीचन्द्रः। सिद्धान्तकौमुद्यामपि एभ्योधातुभ्यो नित्यं यक् स्यात् स्वार्थे। धातुभ्यः किं ? प्रातिपदिकेभ्या-माभूत्, द्विधा हि कण्ड्वादयः, धातवः प्रातिपदिकानि च। कण्डुञ् गात्र-विघर्षणे कण्डूयति, कण्डूयते। मन्तु अपराधे ; चन्द्रस्तु भितमाह मन्तूयते, वल्गु पूजामाधुर्य्ययोः वल्गूयति, हृणीङ् रोषणे, लज्जायाञ्च कथं न पत्या धरणा हृणीयते इति नैषधचरितं। महीङ् पूजायां महीयते पूजां लभत इत्यर्थः। तिरस् अन्तर्द्धौ तिरस्यति। उरस् बलार्थः उरस्यति, बलवान् भवतीत्यर्थः। गद्गद वाक्स्खलने, गद्गद्यति। एला, खेला—विलासे, इत्यन्ये। लेट्, लोट् धौर्त्ये ; पूर्व्वभावे, स्वप्ने च ; दीप्तावित्येके, लेट्यति, लेटिता, लोट्यति,लोटिता। सुख दुःख तत् क्रियायां सुख्यति, दुःख्यति सुखं दुःखञ्चानुभवतीत्यर्थः। म्रग अन्वेषणे म्रगयति। आकृति गणोऽयम् अन्ये, ऽपि सन्ति, यथा मेधा आशुग्रहणे मेधायति, कुसुमक्षेपे कुसुम्यति, मगधपरिवेष्टने, नीचदास्ये इत्यन्ये मगध्यति। इरस्, इरज्, इरञ् ईर्ष्या-याम् इरस्यति, इरज्यति, रःप्रागिति ( ३।३।२८ ) दीर्घः ईर्य्यति ईर्य्येते। भिषज् चिकित्सायां भिषज्यति। सपर पूजायां, आरर आरा कर्म्मणि, भिष्णज् उपसेवायां, इषुध शरधारणे, चरण, वरण—गतौ,

कण्डूयते, सुखं अत इत्यतोलुक् सुखेयुः प्रकृतयो रूपम्; मृग—मृगयन्तः पदवीं। कण्डुञ्, असुञ्, मन्तु, वल्गु, हृणीङ्, महिङ्, तिरस, उरस्-सम्भव-गद्गद एला, केला, खेला, लेट, लोट, सुख, दुःख, मृगादि।

## १७। धातोरेकाचोहलादेरशुभवचोभृशाभीक्ष्ण्ये यङ्।

[धातोः ५।, एकाचः (एक-अच्) ५। हलादेः (हल्-आदि) ५।, अशुभवचः (न-शुभ-वच्) ५।, भृशाभीक्ष्ण्ये। (भृश+आभीक्ष्ण्य) ७।, यङ् ०१। ] (९)

एकाच्—हलादिः—योधातुस्तस्मादत्यर्थे, पौनःपुन्ये च यङ् भवति। भृशं पुनःपुनर्वा पचति पापच्यते, जाज्वल्यते, अजेर्वी

चुरश्च चौर्ये, तुरश्च त्वरायाम्, भुरश्च धारण पोषणयोः। लिट अल्प-कुत्सनयोः लिच्यति; लाट जीवने। इत्यादि।

(९) एकः अच् यत्र, स एकाच् तस्मात् एकाचः; हल् आदिर्यस्य स हलादिः तस्मात् हलादेः; इदं द्वयं धातोर्विशेषणं। भृशं अतिशयः, आभीक्ष्ण्यं पौनःपुन्यं, तयोरर्थयोर्गम्यमानयोः य एकाच् हलादिर्धातुस्तस्मात् यङ् स्यात् शुभवचनात्तु न स्यात्। क्रियाहि सर्व्वैव द्विविधा प्रधानभूता, गौणी च। तत्र विक्लेदनादिरूपा प्रधान क्रिया, अधिश्रयणादिरूपा गुणक्रिया, यदा तु प्रधानक्रिया समाप्यनन्तरमपि क्रियान्तरमनारभ्य सैवारभ्यते तदा पौनःपुन्यम्भवति। यदा पुनर्गुणक्रियायामेव भूयःसमाचरणात् प्रधानक्रियामेकामेव निर्व्वाहयति तदाक्रियातिशयो-भवति। फलातिरेकेणाप्यतिशयोभवति, यथा जाज्वल्यते दीपः। यङोऽित्त्व-मात्मनेपदार्थं पापच्यते पच+यङ् लिट् संयोति (१।४।१२) इति प्राप्ते द्विर्वचनेऽचः (१।१।१) इति पचात्स्य द्वित्वं, दीर्घोऽकितागमश्चेति

(६।३।११२) वेवीयते, असोर्भू (२।३।६८) वोभूयते, एकाच इति किम् ? भृशं आगच्छति, हलादेरिति किम् ? अभीक्ष्णमीहते, अशुभ-रुच इति किम् ? भृशं शोभते, रोचते ।

१८ । सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यः । (१०)

[सू—सूचि-सूत्रि-मूत्रि अट्-अश (अश्)-ऊर्णुभ्यः ५।।।]

एभ्यो भृशाभीक्ष्ण्योर यङ् स्यात् । अराय्यते, सोसूच्यते, सोसूत्र्यते, मोमूत्र्यते, अटाट्यते, अशू (अश्) अशाश्यते, प्रोर्णोनूयते । गत्यर्थात् कौटिल्य एव यङ् भवति । कुटिलं गच्छति जंगम्यते, चंक्रम्यते द्रमु—दं द्रम्यते । न भृशाभीक्ष्ण्योर भृशं गच्छति ।

·(६।४।४४) अभ्यासस्याकारस्य दीर्घः, पापच्+य पापच्य धातुस्ततो लटते, एवं जाज्वल्यते ज्वल+यङ्, जकारद्वित्वं, अभ्यासस्यदीर्घः जाज्वल्य+लट् ते अज+यङ् अजेर्वी (२।४।१२) अजस्थाने वी आदेश, वी इत्यस्य द्वित्वं गुणोयङ्लुकोः (७।४।८२) अभ्यासस्य इकारस्य गुणः वेवीयधातुस्ततो लट्ते वेवीयते । अस+यङ् अस्तेर्भू (२।४।५२) इति अस्स्थाने भू आदेशः । भू इत्यस्य द्वित्वं ह्रस्वः अभ्यासस्य ह्रस्वः (७।४।५९) इत्यनेन अभ्यासस्य भकारस्य बकारः, गुणोयङ्लुकोः इति उकारस्य गुणः बोभूयधातुस्ततो लट् ते । आगच्छति आङ्+लट्ति, ईह+लटते ईहते, भृशं शोभते, रोचते इत्यत्र यङ् नेति भाष्यम्, पौनः पुन्ये तु स्यादेव रोरुच्यते (रुच+यङ्, रकारद्वित्वं अभ्यासगुणः, रोरुच्य+लट् ते) एवं शोशुभ्यते । इति सिद्धान्तकौमुदी । ततश्च भृशं शोभते इत्युपलक्षणं अभीक्ष्णं शोभते इति मध्यममिति गोपीचन्द्रोक्तिस्तु चिन्त्यैव ।

(१०) अराय्यते ऋ+यङ् ऋ संयोगादेर्गुणः (७।४।२९) ऋकारस्य

## १९। लुप-सद-चर-जप-जभ-दह-दश-गॄभ्यो भाव-गर्हायाम्। (११)

[लुप—गॄभ्यः ५।।।, भावगर्हायाम् ७।]

गुणः, ऋर्यृणोररवाविति (३।४।७) रकारस्य द्वित्वं, दीर्घोऽनागमस्येति अभ्यासदीर्घः अराय्यंधातुस्तलो लट् ते ; सूचि+यङ्, णिच्लोपः सूकार-द्वित्वं अभ्यासगुणः सोसूच्य+लट् ते सूत्रि+यङ् णिलोपः सूकारद्वित्वं अभ्यासगुणः सोसूत्र्य+लटते, एवं मूत्रि+यङ् चौरादिका एते, अट+यङ्, अजादेर्द्वितीयः (३।४।५) इति टकारस्य द्वित्वं, अभ्यासस्य दीर्घः अटाट्य+लट् ते, एवं अश+यङ् अशाश्यते। प्र+ऊर्णु+यङ् अजादेरिति णुकारस्य द्वित्वं अभ्यासस्यगुणः ह्रस्वस्य दीर्घः इति (३।३।७८) मूत्र णुकार संश्लिष्टोकार दीर्घः प्रोर्णोनूयधातुस्तलो लट् ते सूत्र-मिदमजाद्यर्थं अनेकाजार्थञ्चेति पद्मनाभपञ्जिका।

हलाद्येकाच् चूरादिण्यन्तस्यैके इति सङ्क्षिप्तसार सूत्रं। अस्यार्थस्तु हलादिर्यो धातुरेकाच् चूरादिणिजन्तात् तस्माद् यङ् स्यादिति केषाञ्चि-न्मतम्। हलादेरिति किम्? अशमञ्जयति, एकाजिति किम्? पुनः पुनर्गो-वेषयति। एतन्मते न केवलं सूचि, सूत्रि मूत्रि इत्येतेभ्य एव नियमः किन्त्वेवं विधेभ्योऽन्येभ्योऽपि यङ् स्यात्। गत्यर्थात् कौटिल्य एव यङ् न भृशाभीक्ष्ण्ये तेन भृशं क्रामति पुनः पुनरटतीत्यादौ न यङ्।

जं गम्यते, गम+यङ गकारस्य द्वित्वं कुजगचोश्च इति (३।४।३०) अभ्यासस्य गकारस्य जकारः, अनुपधङमामिति (३।४।४६) अभ्यासान्ते अमागमः, जं गम्यधातोस्तलो लट् ते, एवं चम्+यङ् चकार द्वित्वं अनुप-धङमामिति अभ्यासान्ते अमागमः, चंचम्य+लट् ते, दमु+यङ् दकार द्वित्वं अभ्यासान्ते अम् दंदम्य+लट् ते। गत्यर्थादेव गति कौटिल्ये इति

एभ्यो धात्वर्थगर्हायामेव यङ् स्यात् । गर्हितं लुम्पति लोलुप्यते, चञ्चूर्य्यते, दंदश्यते, निजेगिल्यते । (१)

---

सङ्क्षिप्तसारसूत्रम्, कौटिल्यं हि त्रिविधं भवति, कुटिलं क्रामतीत्यत्र किं कुटिलं, विषमदेशं क्रामति, कुटिलचित्तं क्रामति, कुटिलगतिं वा क्रामतीति संशयनिरासार्थं गतिकौटिल्य इति कृतम् । इति गोयीचन्द्रः । केचित्तु सर्व्वे गत्यर्थाः प्राप्त्यर्था ज्ञानार्थाश्चेति मतमवलम्ब्य प्राप्त्यर्थज्ञानार्थयोरपि कौटिल्यार्थे यङ्, तस्य लुक् च भवतीत्याहुः तन्न मनोरमं, गत्यर्थद्वारा प्राप्त्यर्थज्ञानार्थलाभे गतिबुद्ध्याहारेति सूत्रे बुद्ध्यर्थस्य पृथक्त्वेनोक्तिर्न स्यादिति सुधीभिर्विभाव्यम् ।

(१) लुपॢ छेदने, सदॢ विसरणगत्यवसादनेषु, जप् जल्प् व्यक्तायां वाचि, जभि, जृभी गात्रविनामे, दह भस्मीकरणे, दंश दंशने, गॄ निःसरणे, चर गतौ । भावो धात्वर्थस्तस्य गर्हायां गम्यमानायां लुपादिभ्यो धातुभ्यो यङ् स्यात्, न भृशाभीक्ष्ण्ययोः । गर्हितमिति क्रियाविशेषणं छेदनस्य गर्हितत्वं निरर्थकत्वं, दोषदुष्टत्वञ्च । लुप+यङ् लुकारस्य द्वित्वं, गुणो यङ्लुकोः (३ । ४ । ४३) अभ्यासस्य उकारस्य गुणः, लोलुप्य+लट् ते, गर्हितं चरति, चर+यङ् चकारद्वित्वं चरफलोः परादुत्वेति, (३ । ४ । ४७) अभ्यासान्ते अम्, प्रकृतेरकारस्य उकारश्च, चंचूर्य+लट् ते, दंदश्यते, दन्श+यङ् अनिदितामिति (३ । ३ । ७२) न लोपः दकारद्वित्वं, अदुपधङमामिति अभ्यासान्ते अम्, दंदश्य+लट् ते, नि+गॄ+यङ्, ऋ स्थाने इर् (३।४ ७६) य्वोयङि (३ । १ । १) रकारस्य लत्वं गि इत्यस्य द्वित्वं अभ्यासस्य गुणः, निजेगिल्य+लट् ते, एवं सद—सासद्यते, (पापच्यते इति वत्) जप्—जं जप्यते । गॄ शब्द इत्यस्यापि यङन्तं केचिदिच्छन्ति, अमरीयान्तु साधु जपति । धात्वर्थ इतिविशेषणं किम् ? साधनगर्हायान्तु

## २० । यङोलुग्बहुलं प्रकृतिवत् परस्मैपदी च । (२)

[यङः ६।, लुक्०१।, बहुलं०२।, प्रकृतिवत्०१।, परस्मैपदी०१।, च०१।]

* बहुलं यङोलुग्भवति । स च यङ्लुगन्तः प्रकृतिवत्, परस्मैपदी च । बोभवीति, बोभोति, बोभूतः, बोभुवति. इं दृग्भि. बाहुल्या-

---

म भूत् गायत्रीं जपति वृषलः, गायत्रीजपे शूद्रस्यानधिकारात् साधन गर्हयम् । सदचरयोरपि कौटिल्यार्थप्राप्तौ विशेषवचनम् ।

यङादिप्रत्ययाः सर्व्वत्र काले विवक्षावशात् सर्व्वत्र वाच्येऽपि भवन्ति ।

(२) बहुलशब्दोऽत्र विकल्पार्थः—बहुलं विकल्पेन 'धातुभ्यो यङो लुग्भवति. स च यङ्लुगन्तः प्रकृतिवत् यङुत्पत्तेः प्राक् यत् यत्कार्य्यं विहितं यङ्लुकि तत्यपि तद्भवतीत्यर्थः, प्रकृतिवत्त्वे आत्मनेपदिनामात्मने पदप्राप्तौ नियमति परस्मैपदी चेति यङ्लुगन्तोधातुर्नियतं परस्मैपदी भवतीत्यर्थः । सङ्क्षिप्तसारमते यङ्लुगन्तानां कर्म्मव्यतिहार वर्ज्जं परस्मैपदित्वं, कर्म्म व्यतिहारे तु व्यतिलोलुवते धान्यं छात्रा इत्यात्मनेपदित्वमेव । अपि यङि यत् कार्य्यं द्विरुक्तिगुणादिकं विहितं यङ्लुक्यपि तद्भवतीति ज्ञेयम् । प्रत्ययलक्षणेन यङन्तात् द्वित्वं, अभ्यासकार्य्यं, धातुत्वं, लड़ादय इति सिद्धान्तकौमुदी, यङि यत्कार्य्यं तद्यङ्लुकि न भवतीति प्रवादस्य तु उक्त कार्य्येभ्योऽन्यत्र प्रवृत्तित्वाद्ये व्यक्तीभविष्यति यदुक्तमित्यादिना । बोभवतीति—भू+यङ्, तस्य लुक्, भू इत्यस्य द्वित्वं, टुलुप इति भ स्थाने ब, अभ्यासस्य गुणः, बोभूधातुस्ततो लट्ति यङ्लुको वा (३।३।९६) विकल्पेन ईट्, इगुपधयोरिति (३।१।८४) प्रकृतेरूकारस्य गुण एचोऽयवा इति ओकारस्थाने अव् बोभवीति । भू यङ् लुक् पूर्व्ववत्, बोभूधातुस्ततो लट्ति उकारगुणः बोभोति । एवं भू+यङ् लुक्, बोभ+लटतस्, क्ङित्वान्न गुणः बोभू+लट् अन्ति अन्तोदभ-

दनिट्त्वं नेष्यते यदुक्तं पाणिनीये श्रतिपा शपानुबन्धेन निर्द्दिष्टं यद्गणेन च। यत्रैकाच्ग्रहणं किञ्चित् पञ्चैतानि न यङ्लुकि ।

---

स्तात् (३ । ३ । ६४) इति अन्तस्थाने अत्, अचि युत्रीति (२ । ३ । ५२) उकार स्थाने उव् वोभुवति । दह+यङ्लुक्, हकारहित्वं अदुपधङमामिति । अभ्यासान्ते अनुस्वारागमः दंदह लट्झि, ढोढ़दादेस्तु घ इति (२ । ३ । १०७) ह स्थाने घ, भषस्तथोर्धोऽधः इति (३ । ३ । ८६) तकार स्थाने धकारः, झयस्तृतीय इति (२ । १ ५२) घ स्थाने ग, दंदग्धि । प्रकृतिवदित्यनेन दहधातोरनिट्त्वे प्राप्ते विशेषमाह बाहुल्यादनिट्त्वं प्रकृतिवत्वात् प्राप्तमिति शेषः, न इष्यते बाहुल्यञ्च क्वचित् प्रवृत्तिः, क्वचिदप्रवृत्तिः क्वचिद्विभाषा, क्वचिदन्यदेव विधेर्विधानं बहुधा समीक्ष्य चातुर्विधं बाहुलकं वदन्ति । एवं प्रवृत्तिश्च निवृत्तिश्च विभाषादि विधेः क्वचित् अपूर्ब्बस्य विधानं स्यात् बहुलन्तच्चतुर्विधमिति । अतोऽत्र प्रकृतिवत्त्वस्याप्राप्तिरेव । समतं सप्रमाणं करोति यदुक्तमित्यादिना श्रतिपा निर्द्दिष्टं यत् कार्य्यं यङ्लुकि तन्न भवति । श्रतिपा निर्द्दिष्टं यथा भावयतीत्यत्र यङः स्थानिवद्भावात् भसञ्जि ग्रहीत्यादिना (३ । ३ । १३९) सार्व्वधातुक इक्प्राप्तौ, तत्र बलोति प्रातिपा निर्द्देशात् तन्न भवति, शपा निर्द्दिष्टं यत् कार्य्यं यङ्लुकि तन्न भवति । एवं सर्व्वत्र, शपा निर्द्दिष्टं यथा बरीभरिषतीत्यत्र इवस्तेति (३ । ४ । १११) विकल्पेनेट्प्राप्तौ, तन्न भवतीति शपा निर्द्देशात्तन्निषेधः, स्नुक्रम्यादिस्वनेन (३ । ४ । १०९) नित्यमिट्, अनुबन्धनिर्द्दिष्टं यथा शोशवीत्यत्र शीङोरत् (३ । ३ । ६६) इति रदादेशो न भवति अनुबन्धनिर्द्दिष्टत्वात्, गणेन निर्द्दिष्टं यथा रोरोतीत्यत्र रुदादेरिति (३ । ३ । १७) न इट् गणेन निर्द्दिष्टत्वात् एतानि

तथाहि आचार्य्या यङ्लुकीच्छन्ति सेट्कत्वमनिटामपि। लुङि चैवाङमिच्छन्ति लृदित्सु इरिदादिषु। दंदह्षिषति, दंदह्षिषीष्ट, बंभ-

---

यङ् कार्य्याणि यङ्लुकि न भवन्ति। यङि यत्कार्य्यं तद्यङ्लुकि न भवतीत्यस्य प्रवादस्येतत्यङ्कार्य्यपरत्वमिति भावः। आचार्य्याः पाणिन्यादयः अनिटामपि धातूनां सेट्कत्वमिच्छन्ति, यथा बेभिदिता, इति, अधिकारादेवं बोद्धव्यं विकल्पस्य निषेध एव भाष्ये सेटामपि धातूनामनिट्त्वमिच्छन्ति बंभण्टा इति यङ्लुग्वृत्तिः। अनुबन्धेन निर्द्दिष्टस्य यङ्लुकि निषेधाद्विशेषमाह लृदित्सु, इरिदादिषु च लुङि अङ् इच्छन्ति, लृदित्-यथा अजंगमत, गम+यङ् लुक् गकारदित्वं कुजोर्गश्चोज इति ग स्थाने जः, अदुपधङ्गमिति अभ्यासान्ते अमागमः जंगमधातुः लुङ् दिप्, लृदिद्द्युतादिपुषादिभ्यः (३।१। ए २३) इति अङ् अजंगमत्। इरिदादि यथा भृशमजरत् इति वाक्ये अजीजरत्, अजरिजरत् अजर्जरत् जृ+यङ् लुक् जृ इत्यस्य द्वित्वं उरदिति (३। ४। २७) अभ्यासस्य ऋवर्णस्य अत्, ऋतश्चेति (३। ४। ४१) अभ्यासान्ते री, अजरी जृ लुङ् दिप् अङागमः, इरिजृ्रोति अङ्। ऋद्दृशो इङीति (३। ४। ७६) गुणः, अजरीजरत्, एवं अजरिजरदित्यत्र (३। ४। ५१) अभ्यासान्ते रि, अजर्जरदित्यत्र तेनैव सूत्रेणाभ्यासान्ते रक्, अन्या सर्व्वा प्रक्रिया तुल्यैव। अङभावपक्षे सिच्, सिचि वृद्धिरकः इति (३। ३। ७२) ऋकार वृद्धिः, इडयस्याद्धेधातुके (३।४।१२३) इति सिचि परे इट्, सिचोदिस्योरीट् (३। ३। २८) इति सिच उत्तरे ईट्, इट ईटि (३। २। ११८) इति सिचोलोपः, अन्या प्रक्रिया पूर्व्ववत् तेन अजरीजारीत्, अजरिजारीत्, अजर्जारीदिति पदत्रयं मिलित्वा षट् पदानि। दंदह्षिषति दह+यङ् लुक् दकार द्वित्वं, अदुपधङ्गमिति अभ्यासान्ते दंदह+सन् अनिटामपि सेट्कत्व-

णटि. पास्पर्द्धि, सोसुपोति, चोक्रुशीति । •न लघूपान्तेति (३।४।१०२) न गुणः । वेभिदिता, वेभिदाञ्चकार । यङादिलगार्द्धधातुकेति

---

भिच्छन्तीति वचनात् सनि इट्, इच् कुर इति, षत्वं दंदह्षि धातुः. लट्ति ; दंदह्षिषीष्ट, दह + यङ् लुक् । ( पूर्ववत् प्रक्रिया ) दंदह + लोङ्सीष्ट, इट्, षत्वं च पूर्ववत् ; बंभण्टि, भण+यङ् लुक् भकारस्य द्वित्वं टतुप इति भकार स्थाने ब, अभ्यासान्ते अनुस्वारागमः, बं भण+लट्ति. टुना षाष्टुः (१ । २ । ५८ ) तकारस्य टकारः । • पास्पर्द्धि, स्पर्द्ध+यङ् लुक्, •हलादिः संयोग इति ( ३ । ४ । ४ ) पकारस्यद्वित्वं, दीर्घोऽनागमस्येति अभ्यासदीर्घः, पास्पर्द्ध+लट्ति, झषस्तथोरिति ( ३ । ३ । ८६ ) त स्थाने ध' झयो झयोति ( १ । २ । ७६ ) धकारे परे धकारलोपः ; सोसुपोति सप+यङ् लुक्, स्वपेश्चङ् यङ् लुकि चेति ( ३ । ३ १३४ ) साचयग इक् सुकारद्वित्वं, गुणो यङ् लुकोरिति अभ्यासस्य गुणः, सोसुप+लट्ति, यङ् लुकोर्वेति ( ३ । ३ । २६ ) इट् ; एवं क्रुशधातौ यङ्लुकि चोक्रुशीति । वेभिदिता+भिद् यङ् लुक्, वेभिद्+लुट् ता, वेभिदाञ्चकारेत्यत्र, वेभिद्+लिट् आम्, यङि च वेभिदितेतिरूपं, भिद+यङ्, वेभिद्य +लुट् ता,. इट् वाक्यात्, अस्य हलोऽनोर्य्यादेः ( ३ । ३ । ६२ ) इति यकारस्य लोपः, यस्य लुकि ङित्वात् गुणत्वमिति पद्मनाभपर्यङ्कका. गोयीचन्द्रस्तु लुटि वेभिदिता, ल्टटि वेभिदिष्यतीत्यादावपि यन् (ङ) लुक् नित्यमित्याह । प्रकृतिवत्त्वात् प्रकृतिवत् कार्य्यप्रसक्तेः कृताभ्यासविधेरपि 'जंघन्' इत्येवं रूपं प्राप्तस्यापि आद्यप्रकृतेः, 'हन' इत्येतस्य वधादिप्रसक्त्याहि अजंवधीत् हन्+यङ् लुक् हकारद्वित्वं हजोबहोक इति हकारस्थाने

न गुणः (३।४।८८) प्रकृतिवत्त्वात् कृताभ्यासविधेराद्यप्रकृतेर्वधादेशादिकार्य्यञ्च। अजंबधीत्, अदोदुहीत्, सेट्कत्वान्न कस अवावचीत्. जोह्रुति बाहुल्यान्नित्यमचि लुक्—लोलुवः, नेह लोलूया।

---

जकारः, अभ्यासान्ते अमागमश्च जंहन्धातुः+लङ् दिप् सिच् अड़ागमः लुङि च तङि वेति (३।३।१०४) हन स्थाने बधादेशः, सिचि परे इट् सिच उत्तरे ईट् इट ईटि सिचो लोपः; अदोदुहीत्, दुह+यङ् लुक्, दोदुह+लुङ् दिप् सिच्, अड़ागमः ततः—सिच् सिचि इट् सिच उत्तरे ईट् इट ईटि सिचोलोपः शषसह हगुपान्तादित्यनेन (३।२।१२०) अनिट एव हान्तस्य कसविधानात् सेट्कत्वान्न कस, अत्रापि यङादिरगार्द्धधातुके इति न गुणः। वधादेशादिकार्य्यस्वेत्यत्र चकारेण सार्व्वधातुके च बोद्धव्यम्। सार्व्वधातुके यङ्लुकि विकरणा भवन्ति, आदेशोऽपि फणिभाष्ये कार्य्यं तथाहि अततिष्ठत्, अततिष्ठीत्, अजंगच्छत्, अजंगच्छीदिति यङ्लुग् वृत्तिः। कश्चिदाह हलादिकृत्रैव हन्तेर्वधादेशस्तन्मते अवधीदित्येव इति गोयीचन्द्रः सिद्धान्तकौमुदीमते अवधीत् अजङ्घनीदिति रूपद्वयम्। अवावचीत्, वच+यङ् लुक् वावच+लुङ् दिप्, सिजादिकं पूर्व्ववत्, अवावोचदिति क्रमदीश्वरः। जोह्रुति ह्रु+यङ् लुक्, जोह्रु लट् अन्ति, नक्किनः सार्व्वधातुके (२।३।५५) उ स्थाने व.; न तु क्नित्त्वस्य तु उवादेश प्रसक्तिरितिपद्मनाभपञ्जिका। अचि कर्त्तव्ये नित्यं यङ् लुगभवति लू+यङ् लुक् लोलू+अच् ऊकारस्थाने उवादेशः, लोलूया इत्यत्र डापि बाहुल्यात् यङोलुक् न भवतीति ज्ञेयं, लू+यङ्, लोलूय+डाप् तदपि यङ्लुङ्लुकम् इति सङ्क्षिप्तसारसूत्रम् धातुसम्बन्धिनि अचि परे हलन्तस्य धातोर्नित्यं लुक् स्यादिति तदर्थः। तदर्थीयप लब्धमिति गोयीचन्द्रः।

## २१ । चूरादिभ्यो णिच् ।

[चूरादिभ्यः (चूर—आदि) भ्यः ५।।।, णिच् ०।१ ।]

चूरादिभ्यो धातुभ्यः स्वार्थे (३) णिच् भवति । चोरयति, नाटयति ।

## २२ । प्रयोजके । [प्रयोजके ७।१ ।]

प्रयोजके (४) कर्त्तरि गम्ये धातोर्णिच् स्यात् । कुर्व्वन्तं प्रयुङ्क्ते कारयति, हारयति ।

---

(३) अनिर्द्दिष्टार्थः प्रत्ययः स्वार्थे भवतीति न्यायात् स्वार्थे इति, स्वार्थश्च चुरस्तेये, नट अवस्पन्दने इत्यादिगणपठितोऽर्थः इति, णिचो-णकार इत् वृद्ध्यर्थः; चकारश्च प्रसिद्ध्यर्थः । सङ्क्षिप्तसारे युजाद्यन्तर्गत धातूनां विकल्पेन, हिं सार्थकाणाञ्च विकल्पेन चूरादित्वं विहितं । वस्तुतः सर्व्वेभ्य एव धातुभ्यो विवक्षया स्वार्थे णिच् भवतीति ज्ञातव्यम् ।

( ४ ) प्रयोजकपदेनेह तत्समवेतप्रेषणाध्येषणतत्सम्बन्धाचरणमर्था लक्ष्यते, तथा चोक्तं—प्रेषणाध्येषणे कुर्व्वन् तत्समर्थानिवाचरन् । प्रयोजकोभवेत् कर्त्ता क्रिया तस्य णिचोच्यते । प्रेषणं भृत्यादेः कस्मिंश्चिदर्थे नियोजनं अध्येषणं आचार्य्यस्य सत्कारपूर्व्वकं नियोजनं अध्येषणं, तत्सम्बन्धाचरणञ्च । सिद्धान्तकौमुदीकारस्तु प्रयोजकव्यापारे प्रेषणादौ वाच्ये धातोर्णिच् स्यादित्याह । प्रयोजकश्च चेतनाचेतनसाधारण्येन ग्राह्यः । प्रेषणञ्च भृत्यादेर्निकृष्टस्य प्रवर्त्तनमात्रमित्यर्थः, आदिशब्देनाध्येषणा नुमत्यादीनां ग्रहणं समानस्याधिकस्य वा सत्कार पूर्व्वकं प्रवर्त्तनमध्येषणा प्रार्थनेत्यर्थः, अनुमत्यादिस्तु रागादेस्तदनुमतिं विना कार्य्यानिष्पत्तेः । इति तट्टीका । यत्र पुनः प्रेषणाद्यर्थः प्रयोजक व्यापारमन्तरैव बोध्यते तत्र न णिच् यथा वर्द्धन्तां त्वां सुरभयः । अत्र आशिषि लोट्, धातुनैव

## २३। सुपस्तत्करोत्यादौ बहुलमिष्ठवच्च।

[सुपः ५।, तत्करोतीत्यादौ (तत्-करोति-आदि) ७।, बहुलं०२।, इष्ठवत्०१।, च०१।]

तत्करोति, तदाचष्टे, इत्यादौ अर्थे सुवन्तात्णिच् स्यात्। इष्ठवत् कार्य्यञ्च, बहुलं टिलोपादि। सूत्रं करोति सूत्रयति, पटुमाचष्टे पटयति, मातरं मातयति, कुमारयति, अर्थापयति, सत्यापयति, वेदापयति, पाशं विमोचयति विपाशयति, रूपं पश्यति, निरूपयति, वीणया उपगायति, उपवीणयति, तूलैरनुकृष्णाति अनुतूलयति। श्लोकैरुपस्तौति, उपश्लोकयति, सेनया अभिमुखं याति अभिषेणयति, लोमान्यनुमार्ष्टि अनुलोमयति, त्वचं गृह्णाति त्वचयति, त्वचशब्दोऽदन्तः एवं हलि, कलि, व्रत, वर्ण; अजहलत्, हलि इहद्धलं; वर्म्मणा संनह्यति संवर्म्मयति, चूर्णैरवध्वंसते अवचूर्णयति, मुण्डं करोति मुण्डयति, एवं मुण्ड, मिश्र, श्लक्ष्ण, लवण, धवल, मलिन पवित्रादि। व्रतात्तन्मात्रभोजनने, निवर्त्तने च। पयोव्रतयति, वृषलान्नं व्रतयति ततो निवर्त्तेन इत्यर्थः। वस्त्रेण समाच्छादयति सम्वस्त्रयति, तूलानि विहन्ति वितूलयति तूलं धूलिः। करणेच्छात्वर्थे। हस्तिना अतिक्रामति, अतिहस्तयति, दात्रेण लुनाति दात्रयति। विन्मतोर्लुक्। स्रग्विनमाचष्टे स्रजयति, श्रुतवन्तमाचष्टे श्रुचयति।

कृदन्तोपाख्याने कृल्लुक्, प्रकृतिप्रत्यापत्तिः, प्रकृति वच्च—कारकम्। कंसवधमाचष्टे कंसं घातयति, बलिवन्धं वन्धयति बलिं, राजगमनं

---

प्रेषणार्थं उक्त, अतएव अकर्म्मकत्वाप्यस्य, सकर्म्मकत्वं, अन्तर्भावितण्यर्थो धातुः। एच्छतु मां भवानित्यत्र प्रेषणार्थे लोट् विहितः। इति

अचार्थे वेः क्रमेस्तङ् स्यात् । साधुः विक्रमतेऽश्वः । पादविक्षेप इति किम् ? विक्रामति राजा । (१)

८७ । प्रोपाभ्यामारम्भे । [प्र-उपाभ्यां ५॥, आरम्भे ७।]

आभ्यामारम्भे क्रमेस्तङ् स्यात् । प्रक्रमते भोक्तुं, उपक्रमते गन्तुम् ।

८८ । अप्रादेर्वा । अप्रादेः (न प्र-आदि) ५।, वा०१। ]

अप्रादेः क्रमेस्तङ् वा स्यात् । क्रमते, क्रामति वा ।

८९ । ज्ञो निह्नवे । [ ज्ञः ५।, निह्नवे ७।]

अपह्नवे ज्ञस्तङ् स्यात् । शतमपजानीते,

९० । अकर्मकाच्च । [ अकर्मकात् ५।, च०१। ]

ज्ञस्तङ् स्यात् सर्पिषो जानीते ।

९१ । सम्प्रतिभ्यामस्मरणे ।

[ सम्-प्रतिभ्याम् ५॥ अ (न) स्मरणे ७। ] (२)

---

(१) यद्यपि क्रमेः पादविक्षेपे इति पठ्यते तथापि पादविक्षेप इति कृतं अनेकार्था धातव इतिप्रसूचनार्थं इति गोयीचन्द्रः ।

(२) स्मरणमिति उत्कण्ठास्मरणं सूचितं, अतोऽनुत्कण्ठास्मरणे आत्मने पदं भवत्येव । स्मरणमात्रे न भवतीति बहूनां सम्मतम् । सम्प्रतिभ्यामनाध्याने इति पाणिनिसूत्रम् (१।३।४६) अनाध्याने इति योगो विभज्यते, * तत् सामर्थ्यादकर्मकाच्चेति प्राप्तिरपि वार्यते इति सिद्धान्त कौमुदी ततश्च मातुः संजानातीत्यत्र नात्मनेपदं ।

---

* 'अनाध्याने' इत्यत्र सम्प्रतिभ्यामित्येतत्पूर्वेण योगेन विभज्यते, सम्प्रतिभ्यामनाध्याने अनाध्याने च आत्मनेपदं न भवतीति अकर्मकादिति प्राप्तस्यात्मनेपदस्य निषेधः ।

आभ्यां प्रलङ् स्यात् । गेहं संजानीते, शतं प्रतिजानीते, अस्मरण इति किम् ? मातुः संजानाति ।

९२ । वदोद्दीप्तियत्नोपमन्त्रणज्ञान-सान्त्वनविमतिषु ।

[ वदः ५। दीप्ति-यत्न-उपमन्त्रण-ज्ञान-सान्त्वन-विमतिषु ७।॥ ]

एष्वर्थेषु वदस्लङ् स्यात् । वदते चार्व्वी लोकायते, गेहे वदते, उपमन्त्रणं रहस्युपच्छन्दनं कुलस्त्रीमुपवदते, ज्ञाने अयमेकोवदते । सान्त्वने भ्रान्तामुपवदते, विविधमतौ चेत्र वदते । (३)

९३ । व्यक्तवाचां सहोक्तौ ॥

[ व्यक्त वाचां ६।॥, सहोक्तौ ( सह+उक्ति ) ७ । ]

मनुष्याणां सहोच्चारणे वदस्लङ् स्यात् । विप्राः सम्प्रवदन्ते, व्यक्तवाचामिति किम् ? वरतनु सम्प्रवदन्ति कुक्कुटाः ।

९४ । अनोरकर्म्मात् । [ अनोः ५। अ (न) कर्म्मकात् ५। ]

अनु-वदस्लङ् स्यात् । अनुवदते कठः कालापस्य ; अकर्म्मकादिति किम् ? पूर्व्वोक्तमनुवदति । (४)

९५ । वा विप्रलापे । [ वा०।।, विप्रलापे ७। ]

---

(३) दीप्तिः प्रकाशः, यत्न उत्साहः । कुलस्त्रीमुपवदते प्रलोभयतीत्यर्थः, अयमेकोवदते वदितुं जानातीत्यर्थः, क्षेत्रे विप्रतिपद्यमानो विभिन्नं वदतीत्यर्थः ।

(४) अत्रापि व्यक्तवाग्विषय एव । तेन अनुवदति वीणा इत्यत्र आत्मनेपदम् ।

विरुद्धप्रलापात्मिकायां सहोक्तौ वदस्तङ् वा स्यात् । विप्रवदन्ते मौहूर्त्तिकाः, विप्रवदन्ति वा । सहोक्तावित्येव क्रमेण वदन्ति छात्राः । (५)

९६ । अवाद्गिरः । [अवात् ५।, गिरः ५। ]

अवाद्गिरतेस्तङ् स्यात् । अवगिरते, गिर इति किम् ? अव-गृणाति । (६)

९७ । समः प्रतिज्ञायाम् । [समः ५। प्रतिज्ञायां ७। ]

अत्रार्थे संगिरतेस्तङ् स्यात् । शब्दं नित्यं संगिरते । (७)

९८ । उदश्चरः सकर्म्मकात् ।

[उदः ५।, चरः ५।, सकर्म्मकात् ५। ]

उदश्चरतेस्तङ् स्यात् । गेहमुच्चरते, सकर्म्मकादितिकिम् ? नाद उच्चरति । (८)

---

(५) विप्रलापस्य यत्ववाग्विषय एव ग्राह्यत्वेन विप्रवदन्ति शकुनय इत्यत्र नात्मनेपदम् । शकुनयः पक्षिणः विप्रवदन्ति नानारवं कुर्व्वन्तीत्यर्थः ।

(६) गिरतेरितिनिर्द्देशो गृ शब्दे इत्यस्य क्र्यादेर्निरासार्थः । अव पूर्व्वस्य गृणातेरनभिधानात् प्रयोगएव नास्तीति जयादित्यादयः इति गोयीचन्द्रः ।

(७) मधुरमुद्गिरते भिक्षुरित्यसाधुरिति संक्षिप्तसारम् ।

(८) उच्चरते उत्क्रम्य गच्छतीति सिद्धान्तकौमुदी, उल्लङ्घयतीति सङ्क्षिप्तसारम् ।

९९ । समस्तृतीयायुक्तात् । [समः ५।, तृतीयायुक्तात् ५। ]

तृतीयान्तेन युक्तात् सञ्चरतेस्तङ् स्यात् । रथेन सञ्चरते रविः । (९)

१०० । दानस्याशिष्टव्यवहारे सापि चतुर्थ्यर्थे ।

[ दानः ५।, च०१', च (न) शिष्ट व्यवहारे ७।, सा०१।, अपि ०७।, च०१।, चतुर्थ्यर्थे (चतुर्थी अर्थे) ७।, ]

अत्रापि समोदानस्तृतीयायुक्तात्तङ् स्यात्, सापि तृतीया चतुर्थ्यर्थे । दास्या मालां संप्रयच्छते कामुकः । (१०)

१०१ । उपाद्यमः स्वीकरणे ।

[ उपात् ५ ।, यमः ५। स्वीकरणे ७।, ]

अत्रोपयमस्तङ् स्यात् । कन्यामुपयच्छते, उपायंसत माधवम् । (११)

× १०२ । युजेः प्रादेरसन्निर्दुरोऽयज्ञपात्रे । ×

[ युजेः ५।, प्रादेः (प्र+आदि) ५।, अ (न) सम्-निर्-दुरः ५। अ (न) यज्ञपात्रे ७। ]

(९) हेतुतृतीयायुक्तादपि भवति बुद्ध्या सञ्चरते, अत्र सूत्रे सकर्म्मकादकर्म्मकादपि सामान्येन विधानम्, तृतीयायुक्तादिति किम्? उभौ लोकौ सञ्चरतीति गोयीचन्द्रः ।

(१०) कामुकः सन् दास्यै मालां ददातीत्यर्थः, दास्यै मालादानमशिष्टव्यवहारः इति गोयीचन्द्रः । पूर्व्व सूत्रे सम इति षष्ठी, तेन सूत्रद्वयमिदं व्यवहितेऽपि प्रवर्त्तते । रथेन समुदाचरते, दास्या सम्प्रयच्छते इति सिद्धान्तकौमुदी ।

(११) पाणिग्रहणमिह स्वीकरणं गृह्यते, न स्वीकरणमात्रमिति जयादित्येनोक्तम्, सर्व्वधर्म्मचन्द्रादीनामप्येतन्मतं, तन्मते असम्मतिसूचनाय

यज्ञपात्रादन्यविषये प्रादेर्युजेस्तङ् स्यात्। उपयुङ्क्ते, प्रयुङ्क्ते नियुञ्जानः, यज्ञविदुर इति किम्? संयुनक्ति, नेह यज्ञपात्राणि प्रयुनक्ति। (१२)

१०३। समः क्ष्णुवः। [समः ५।, क्ष्णुवः ५।]

संक्ष्णौतेस्तङ् स्यात्। संक्ष्णुते शस्त्रम्। (१३)

१०४। भुजोऽपालने। [भुजः ५।, अ (न) पालने ७।]

पालनादन्यार्थे भुजस्तङ् स्यात्। ओदनं भुङ्क्ते, अनुभवे सुखं भुञ्जानः। नेह भुनक्ति पृथिवीं राजा पालयतीत्यर्थः। (१४)

प्राकटमुपयच्छते, भाष्यमिति दर्शितम् इति गोयीचन्द्रः, वस्तुतः स्वीकरणमात्र एव तेन "शास्त्राण्युपायंसत जितवराणि" इति भट्टिप्रयोगोऽपि सङ्गच्छते।

(१२) यज्ञविदुर इत्येते वर्ज्जिताद् उपसर्गात् युजेस्तङ् स्यात्। स्वरान्तोपसर्गादिति वार्त्तिकम्। युजिरयोगे इत्यत्राकर्त्रर्थक्रियाफलेऽपि आत्मनेपदार्थं वचनम् इति गोयीचन्द्रः।

(१३) समोऽक्ष्णुवत्तीत्यत्र क्ष्णु धातुमपठित्वा पृथक् सूत्रकरणं सकर्म्मकादपि तङ् विधानार्थमिति सिद्धान्तकौमुदी टीका।

(१४) भुजोऽनवने इति निर्द्देशो भुजपालनाभ्यवहारयोरित्यस्य रौधादिकस्य ग्रहणार्थः, तेन भुजकौटिल्ये इत्यस्य तौदादिकस्य ग्रहणं न भवति पालनव्यतिरिक्तेऽर्थे वर्त्तमानाद्भुनक्तेरात्मनेपदं भवति। इति गोयीचन्द्रः 'बुभुजे पृथिवीपालः पृथिवीमेव केवलां'मित्यत्रोपभोगार्थे एव न पालनार्थः।

१०५। शदेः शिति। [शदेः ५।, शिति ७।]

शदेः शिद्विषये तङ् स्यात्। शीयते, शीयमानः शितीतिकिम्? शत्स्यति।

१०६। मृङो लुङ्लिङोश्च।

[मृङः ५।, लुङ्लिङोः ७।, च०१।]

म्रियतेः शिद्विषये लुङ्लिङोश्च तङ् स्यात्। म्रियते, अमृत, मृषीष्ट, नियमः किम्? ममार, मरिष्यति।

१०७। पूर्ववत् सनः। [पूर्ववत् ०१।, सनः ५।]

असनन्तवत् सनन्तात् तङ् स्यात्। आस्ते आसिसिषते, आक्रमते आचिक्रंसते, नेह शिशत्सति, मुमूर्षति; नह्येतद्धातुमात्रं किन्तु शिदादि। (१५)

१०८। स्मृदृशः। [स्मृ-दृशः ५।]

आभ्यां सनन्ताभ्यां तङ् स्यात्। सुस्मूर्षते, दिदृक्षते।

---

(१५) न ह्येतद्धातुमात्रमिति शद धातुः, मृधातुश्च नात्मनेपदिनौ, किन्तु शिद्विषये शदः, शिद्विषये, लुङ् लिङोश्च मृङ आत्मनेपदित्वं विहितमतस्तदन्यत्र नात्मनेपदप्राप्तिः। पूर्वं यस्य परस्मैपदित्वं तस्य परस्मैपदित्वं यस्यात्मनेपदित्वं अनुबन्धेनोपसर्गसम्बन्धेनार्थविशेषेण वा तस्यात्मनेपदित्वमेव। निविविशते इत्यत्र नेर्विशः इति उपसर्गस्य निमित्तत्वं, तिष्ठासते इत्यत्र विकर्म्मस्थेभ्य इत्यर्थविशेषनिमित्तम्, मुमूर्षति, शिशत्सतीत्यत्र

१०९। श्रुवोऽनाङ्प्रतेः।

[ श्रुवः ५।, अनाङ्प्रतेः (न-आङ्-प्रति) ५। ]

आङ्प्रतिहीनात् शृणोतेः सनन्तात्तङ् स्यात्। शुश्रूषते, नेह आशुश्रूषति।

११०। अननोर्ज्ञः। [ अननोः (न-अनु) ५।, ज्ञः ५। ]

अनुहीनात् सनन्तात् ज्ञस्तङ् स्यात्। धर्मं जिज्ञासते, अननो, रिति किम्? पुत्रमनुजिज्ञासति,

१११। शकेर्जिज्ञासायाम्। [ शकेः ५।, जिज्ञासायां ७। ]

जिज्ञासायां शकेस्तङ् स्यात्। विद्यासु शिक्षते

११२। आमः करोते रामन्तवत।

[ आमः ५।, करोतेः ५।, आमन्तवत् ०१। ]

आमन्तात् करोतेरामन्तवत् तङ् स्यात्। ईहते, ईहाञ्चक्रे करोतेरितिकिम्? ईहाम्बभूव।

११३। णेरणि कर्म्म कर्त्तृत्वेऽनाध्याने।

[ णेः ५।, अणिकर्म्मकर्त्तृत्वे ७।, अनाध्याने (न-आध्यान। ७। ]

अस्वार्थोऽयमारम्भः। अण्यन्तस्य कर्म्मणः कर्त्तृत्वे ण्यन्तात् तङ् स्यात्। आरोहति गजं राजा आरोहयते गजः स्वयमेव राजानं, पश्यन्ति भृत्या नृपं, दर्शयते भृत्यान् नृपः स्वयमेव, इहिः कर्त्तृ-

---

नोपसर्गो, नार्थविशेषो नापि धातुविशेषः निमित्तं किन्तु कुडादीति गोयीचन्द्रः।

स्वक्रियोद्देश्यः कर्त्तृस्वभावः इति कर्म्मवद्भावाज्जिन्नविधिः, अनाध्याने इतिकिम् ? स्मरति शिवं शैवः, स्मारयत्येनं शिवः स्वयमेव । (१६)

(१६) अस्वार्थे इति वक्ष्यमाणेन णेरिति सन्धेया कर्त्तुः स्वार्थे क्रियाफले आत्मनेपदं वक्ष्यते इति ततोऽन्यार्थे इति, णिजुत्पत्तेः प्राक् यः कर्म्म आसीत्, स यदि णिचि कृते कर्त्ता भवति यस्या एव क्रियायाः कर्म्म आसीत् तस्या एव णिजन्ताया कर्त्तृत्वे सति अस्या विषय इत्यर्थः । ननु ण्यन्तावस्थायामपि हस्त्यादेः कर्म्मकर्त्तृत्वात् कर्म्मवत् कर्म्मकर्त्तृत्वेनैव कर्म्मवद्भावादात्मनेपद मिष्ट प्राप्नोति किमनेन इत्याशङ्क्याह, वह्नि कर्त्तृस्वक्रिय इति वह्निः वहधातु कर्त्तृस्थ क्रियः, कर्त्तृस्थ धात्वर्थः यद्यपि न्यग्भवनस्य हस्तिणि कर्म्मणि समवेतत्वात् कर्म्मस्थक्रियात्वमप्यस्य तथापि न्यग्भावनायाः प्रधानक्रियायाः कर्त्तृस्थत्वात् कर्त्तृस्थक्रियात्वमेवास्य न्याय्यम् हस्तपदादि सञ्चारसहितव्यापारविशेषः क्रिया, हस्तपदादिसञ्चाररहितव्यापार विशेषो भावः । इति क्रियाभावयोर्भेदः ; अत्र द्वे क्रिये वाच्ये न्यग्भवनं न्यग्भावनञ्च, अत्र न्यग्भवनस्य गजः कर्त्ता, न्यग्भावनस्य राजा न्यग्भवन्तं गज राजा न्यग्भावयतीत्यर्थः इति विष्णुमिश्रः एवं करिष्यदारोहयते निषादिनमिति माघः । एवं सखीभिव प्रातियुजोऽनुजीविनः समानसानानुसुहृदश्च वान्धवैरित्यादि भारविरपि, सिद्धान्तकौमुदीकारेण सूत्रेऽस्मिन् चत्वारि अवान्तरवाक्यानि दर्शितानि तथाहि (१) णेरात्मनेपदं स्यात् (२) अणौ या कर्म्म (क्रिया) सैव चेण्यन्तेनोच्यते (३) अणौ यत् कर्म्म (कारकं) स चेण्णौ कर्त्ता स्यात् (४) न त्वाध्याने । अस्वार्थस्तु णिजन्तादात्मनेपदं भवति चेत् यदि अणौ योव्यापारः सएव व्यापारः ण्यन्तेऽपि कथ्यते, तथा अणौ यत् कर्म्म कारकं णौ तस्य कर्त्तृत्वं भवेत्, तथा उत्कण्ठापूर्व्वक स्मरणार्थस्य बोधो न भवेत् । इति ।

११४ । भीस्म्योः प्रयोजकभये भीषभापस्मापश्च क्ङिति च ।

[ भी, -स्म्यो॰ ६॥, प्रयोजकभये ७।, भीष-भाप स्माप १।, च०१।, क्ङिति ७।, च०१।, ]

भयमुपलक्षणं प्रयोजकाद्भये विस्मये च भी,—स्मियोर्णिलङ् स्यात् । तयोश्च साहश्याद्भियो भीष,भापौ स्याताम्, स्मिङश्च स्मापः, ते स्यादेशाः क्ङिति च । मुण्डोभीषयते, भीषणम् । मुण्डोभापयते, भापकः । जटिलोविस्मापकः । क्ङिति चेति निर्द्देशात् कर्म्मण्यपि भीषाद्यादेशाः भीष्यते, प्रयोजक इतिकिम् ? काष्ठिकया भाययति, रूपेण विस्माययति त्रिलोकीम् ॥ (१)

११५ । गृधिवञ्च्योः प्रलम्भने ।

[ गृधि, वञ्च्यो ६॥, प्रलम्भने ७। ]

अनयोर्णिलङ् स्यात् । शिशुम् गर्द्धयते, वञ्चयते, प्रलम्भन इतिकिम् ? गर्द्धयति, वञ्चयति श्वानम् ।

११६ । लियोलापः पूजापरिभवयोश्च ।

[ लिय॰ ६। लाप १।, पूजापरिभवयो॰ ७॥, च०१। ]

---

(१) प्रयोजकाद्भयस्य विस्मयस्य वा प्रयोगकर्त्तु तदैव भीस्मियोर्णिलङ् स्यात् । भकारसादृश्यात् भियो भीष, भापौ, सकारसादृश्यात स्मिय स्माप इति । कथन्तर्हि "विस्मापयन् विस्मितमात्मवृत्तौ मनुष्यवाचे" ति । कस्मादेव हि तत्र स्मापः, अन्यथा शानजपि स्यात् । तथम् विस्माययन्नित्येव पाठ इति साम्प्रदायिका । यद्वा मनुष्य वाक् प्रयोजककर्त्री विस्मापयते, तथा सिंहो विस्मापयन्निति ण्यन्तात्सात्विति ।

पूजापरिभवयोर्विसम्वादे च लियोणेस्तङ् स्यात्। जटाभिरालापयते, श्येनोवर्त्तिकामुल्लापयते, शिशुमुल्लापयते, नान्यत्र कन्या मुल्लापयति। अत्र लियोवेति (३।३।१४७) लादेशः (२)

## ११७। मिथ्योपपदात् कृञोऽभ्यासे।

[ मिथ्योपपदात् ( मिथ्या-उपपद) ५।, कृञः ६।, अभ्यासे ७। ]

अभ्यावृत्तौ मिथ्याशब्दप्रयोगे कृञोणेस्तङ् स्यात्। पदं मिथ्याकारयते। (३)

## ११८। स्वरितञितः कर्त्तुः स्वार्थे क्रियाफले।

[ स्वरित-ञितः ५।, कर्त्तुः ६।, स्वार्थे ७।, क्रियाफले ७। ]

क्रियाफले कर्त्तुः स्वार्थे गम्ये गणपाठे प्रसिद्धा ये धातवः स्वरितेतो ञितश्च तेभ्यस्तङ् स्यात्। यजते, कुरुते, परार्थे यजति, करोति॥ (४)

## ११९। स्वार्थशब्दयोगे विभाषा।

[ स्वार्थशब्दयोगे ७।, विभाषा ०१। ]

---

रूपेण विस्मापयतीत्यत्र रूपं न विस्मयस्य प्रयोजकं किन्तु कारणमेव अकर्त्तृगतक्रियाफलार्थमिदं सूत्रमिति सङ्क्षिप्तसारम्।

(२) विसम्वादः प्रवञ्चनम्। जटाभिरालापयते पूजामधिगच्छतीत्यर्थः, उल्लापयते अभिभवति, वञ्चयति च।

(३) स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः।

(४) यद्यपि सर्व्वासामेव क्रियाणां फलं कर्त्रर्थमेव भवति फलाकाङ्क्षया विना कर्त्तुः प्रवृत्त्यसम्भवात्, तथापि फलशब्देनात्र प्रधानं

स्वार्थे क्रियाफले यदात्मने पदं विहितं तत् स्वार्थशब्दयोगे वा स्यात् । स्वं कटं कुरुते, करोति वा ; एवं वक्ष्यमाणेभ्योऽपि ।

१२० । अपाद्वदः । [ अपात् ५।, वदः ५। ]

स्वार्थे तङ् स्यात् । धनार्थी न्यायमपवदते । (५)

१२१ । यमः समुदाङोऽग्रन्थे ।

[ यमः ५।, समुदाङः (सम्-उत्-आङ् ) ५।, अग्रन्थे (न-ग्रन्थ) ७। ]

एभ्योयमस्तङ् स्यात् । व्रीहीन् संयच्छते, भारमुद्यच्छते, वस्त्रमायच्छते, अग्रन्थ इति किम् ? चिकित्सामुद्यच्छति । (६)

१२२ । अप्रादेर्ज्ञः ।

[ अप्रादेः ( न-प्र-आदि) ५। ज्ञः ५। ]

स्वार्थे प्रादिरहितात् ज्ञस्तङ्स्यात् । गां जानीते, परार्थे गां जानाति । (७)

---

फलमभिधेयं, यदर्थमसौ प्रधानक्रिया आरभ्यते तदेव प्रधानं फलम् । यथा यागक्रियायां यजमानस्य स्वर्गप्राप्तिः, पाकक्रियायाञ्च भोक्तुस्तृप्तिः, तदर्थमेव क्रियारम्भात् । दक्षिणा, वेतनादिप्राप्तिस्तु न प्रधानं फलम् । इति गोयीचन्द्रः ।

(५) अस्वरितञित्वादप्राप्ते विधानम् । इति गोयीचन्द्रः ।

(६) अधिगन्तुमुद्यमं करोतीति सिद्धान्तकौमुदी ।

(७) सकर्म्मकार्थमिदं ज्ञोऽकर्म्मकादित्यनेनैव अन्यत्र सिद्धेः । कथं तर्हि "इत्थं नृपः पूर्व्वमवालुलोचे ततोऽनुजज्ञे गमनं सुतस्येति" भट्टिः कर्म्मणि लिट् न्टपेणेति विपरिणाम इति सिद्धान्तकौमुदी ।

१२३ । णेः । [णेः ५।]

ण्यन्तात् स्वार्थे तङ् स्यात् । कारयते, धनार्थं पाठयते, परार्थे पाठयति ।

१२४ । अद्धेपाद्मायमायसपरिमुहरुचिनृतिवद्वसः ।

[ अद्-धे-पा-द्म-आयम-आयस-परिमुह-रुचि-नृति-वद्-वसः । ५ ]

वक्ष्यमाणनिषेधापवादोऽयम् एभ्योण्यन्तेभ्यः स्वार्थे तङ् स्यात् । आदयते, धापयते, पाययते, दमयते, भ्रन्तुं आयमयते, आयासयते, परिमोहयते, रोचयते, नर्त्तयते, वादयते, वासयते अन्यत्र भिक्षां वासयति, दमयति गजं, नर्त्तयति भुजम् ।

१२५ । न निगरणचलनार्थेङ्बुधयुधनशजनप्रुद्रुस्रुभ्यः ।

[ न०१।, निगरण-चलन-अर्थ, इङ्, बुध, युध, नश, जन, प्रु,द्रु, स्रु-भ्यः ५॥ ]

स्वार्थे भक्षणाद्यर्थादेर्णेरिति प्राप्ते आत्मनेपदं न स्यात् । आशयति, भोजयति, चलयति, कम्पयति, इङ् अध्यापयति, बोधयति, योधयति, नाशयति, जनयति, प्रावयति, द्रावयति स्रावयति ।

१२६ । अणावकर्म्मकाच्चेतनकर्त्तृकात् ।

[ अ (न) णौ ७।, अ (न) कर्म्मकात् ५।, चेतन कर्त्तृकात् ५। ]

अण्यन्ते यच्चेतनकर्त्तृकोऽकर्म्मकस्ततोण्यन्तात् स्वार्थे तङ् न स्यात् । आस्ते विप्रः आसयति विप्रं, चेतनेतिकिम् ? शोषयते व्रीहीनातपः;

अणाविति किम्? आरोहयते विप्रः तं प्रयोजयति आरोहयते, कर्त्तरीत्येव भाव्यते दयितो नार्य्या। (८)

१२७। शेषात् कर्त्तरि परस्मैपदम्।

[ शेषात् ५।, कर्त्तरि ७।, परस्मैपदम् ०१। ]

आत्मनेपदहीनाद्धातोः कर्त्तरि परस्मैपदं स्यात्। याति, प्रविशति, वर्द्धयति, पुनः कर्त्तृग्रहणं कर्म्मकर्त्तरि निरासार्थं विष्पष्टार्थञ्च।— आत्मनेपदमिच्छन्ति परस्मैपदिनां क्वचित्। कदाचित् कुप्यते माता नोदरस्था हरितकी, प्रियामुखं किम्पुरुषश्चुचुम्बे। परस्मैपदमप्याहुः क्वचिदेवात्मनेपदे वलद्बाधां राधां सिञ्चदलयः। तिङोपि तिङमिच्छन्ति क्रियति पुरुषाकारो नानुवर्त्तयन्ति भाग्याणि।

१२८। अनुपराभ्यां कृञः। [ अनुपराभ्याम् ५। कृञः ५।, ]

आभ्यां कृञः सर्व्वत्र परस्मैपदं स्यात्। अनुकरोति, पराकरोति।

१२९। परिप्रवहः परिमृषः। [ परि-प्र-वहः ५॥, परि-मृषः ५। ]

आभ्यां परस्मैपदं स्यात्। परिवहति, प्रवहति, परिमृष्यति।

१३०। क्षिपेरतिप्रत्यभिभ्यः।

[ क्षिपेः ५।, अतिप्रत्यभिभ्यः (अति-प्रति-अभि) ५।॥ ]

एभ्यः क्षिपेस्तङ् स्यात्। अतिक्षिपति, प्रतिक्षिपति, अभिक्षिपति।

१३१। रमो व्याङुपपरिभ्यः।

[ रमः ५।, व्याङुपपरि (वि-आङ्-उप-परि) भ्यः ५।॥ ]

---

(८) एवमात्मनश्च प्राक्कर्म्मणः कर्त्तृत्वे न स्यात्। घातयत्यात्मा स्वयमेवात्मानमिति सङ्क्षिप्तसारः।

एभ्यो रमस्तङ् स्यात्। विरमति, आरमति, परिरमन्।

१३२। उपादकर्म्मकाद्वा।

[ उपात् ५।, अकर्म्मकात् ५। वा०१। ]

अकर्म्मकादुपरमस्तङ् वा स्यात्। भोजनादुपरमति, उपरमते वा।

१३३। द्युतादे र्लुङि। [ द्युत-आदि ५।, लुङि ७। ]

तद्वा स्यात्। व्यद्युतत्, व्यद्योतिष्ट, अलुटत्, अलोटिष्ट द्युतादयो द्वाविंशतिः।

१३४। वृद्भ्यः स्यसनोः। [ वृद्भ्यः ५।।।, स्य-सनोः ७।। ]

स्ये, सनि च वृतादेस्तद्वा स्यात्। वर्त्स्यति, वर्त्तिष्यते, विवृत्सति, विवर्त्तिषते। वृतु, वृधु, शृधु, स्यन्दू क्लृपू।

१३५। क्लृपो लुटि च। [ क्लृपः ५।, लुटि ७।, च०१। ]

तद्वा स्यात्। कल्प्तासि, कल्पितासे, कल्प्स्यति, कल्पिष्यते।

१३६। सुट् कात् पूर्व्वोऽड्भ्यासव्यवाये च।

[ सुट् ०१।, कात् ५।, पूर्व्वः १।, अट्-अभ्यास व्यवाये ७।, च०१। ]

इयमधिक्रियते। अधिकारसूत्रम्।

१३७। संपर्य्युपात् कृञः समवायभूषणे।

[ संपर्य्युपात् (सं-परि-उप) ५।, कृञः ५।, समवाय भूषणे ७। ]

समादेः कृञः कात् पूर्व्वः सुट् स्यात्। समवायभूषणे। संस्कृतं। अड्भ्यासव्यवाये च। समस्करोत्, परिचस्कार, उपस्कुरु। समः साधनविशेषे च। संस्कारः।

१३८। उपात् प्रतियत्नविकृतवाक्याध्याहारेषु।

[ उपात् ५।, प्रतियत्न-विकृत-वाक्य-अध्याहारेषु ७॥ ]

उपादेष्वर्थेषु कृञः सुट् स्यात्। उपस्कुरुते, विकृते उपस्कृतं भुङ्क्ते, गम्यमानवाक्यस्योपादाने उपस्कृतं जल्पति नित्यमेषः कथं ततोनिश्चिनुमः पदार्थम्।

१३९। किरो लवणे। [ किरः ५। लवणे ७। ]

किरतेः कात् पूर्वः सुट् स्यात्। उपस्कीर्य्य लुनाति, लवण इति किम्? उपकिरति पुष्पम्।

१४०। प्रतेश्च हिंसायाम्। [ प्रतेः ५।, च० १।, हिंसायाम् ७। ]

प्रतेरुपाच्च हिंसायां किरतेः सुट् स्यात्। उरोविदारं प्रतिचस्करे नखैः, उपस्कीर्णा दस्युः।

१४१। आश्चर्य्यमद्भुते। [ आश्चर्य्यं ०१।, अद्भुते ७। ]

निपात्यते।

१४२। गोष्पदं सेवितासेवितप्रमाणेषु।

[ गोष्पदं ०१।, सेवित-असेवित-प्रमाणेषु ७॥ ]

निपात्यते। गोभिः सेवितो गोष्पदोदेशः, असेविते गोष्पदं वनम्, गोष्पदपूरं वृष्टोदेवः। आस्पदं कृत्यप्रतिष्ठयोः। स्यात् अपरस्पराः क्रियासातत्ये अपरस्पराः सार्थो यान्ति अविच्छेदेनेत्यर्थः।

१४३। पारस्कराद्योऽपि संज्ञायाम्।

[ पारस्करादयः (पारस्कर-आदि) १॥।, अपि ०१।, संज्ञायाम् ७। ]

एते संज्ञायां साधवः स्युः। पारस्करोदेशे। कुस्तुम्बुरु

धान्यके। अपस्करो रथाङ्गे। अवस्करो वर्च्चस्के। प्रतिष्कषोऽग्रगाम्यादौ। प्रस्कण्वहरिश्चन्द्र ऋषौ, मस्कर मस्करिणौ वेणुपरिव्राजकयोः। कास्तीरमजस्तुन्दञ्च नगरे। कारस्करो वृक्षे। रथस्पा नदी। किष्किन्दः पर्व्वतः। परः शताद्यास्ते येषां परा संख्या शतादिकात्। तद्बृहतोस्तलोपे च। तस्करश्चौरे। बृहस्पतिः सुरगुरौ। वनस्पति वृक्षे। प्रायश्चित्तादयोऽप्यत्रैव द्रष्टव्याः।

१४४। डलयोरलयोश्च व्यत्ययो बहुलम्।

[डलयोः ६॥, रलयोः ६॥, व्यत्ययः १।, बहुलं ०१।]

एषां द्वयोर्द्वयोर्व्यत्ययो बहुलं भवति। चूड़ा, चूला, जड़ं जलं वलभी, वड़भी; विलालः, विड़ालः, बिरालश्च। नड़ोनलः, रलयोः खल्वपि. वारः वालः, गुड़ं गुलं, रघुः, लघुः, कापारिका, कापालिका अरं, अलं, अङ्गुरी, अङ्गुली, रोम, लोम, विरोचनं विलोचनम्; भीरुः, भीलुः कृपश्चश्च स्व सामर्थ्ये। कल्पते क्लृप्तः नान्यत्र कृपा, कृपणाः। ग्रोयङि। निर्जेगिल्यते। नान्यत्र गीर्य्यते, अचि वा गिरति, गिलति। गरोविषे। गलः कण्ठे।

अयतौ प्रादेरप्रतेः। प्लायते, प्लायते, प्रतेस्तु प्रत्ययते परेर्व्वा घाङ्कयोः। परिघः पलिघः, पर्य्यङ्कः पल्यङ्कः। क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव। विधेर्विधानं बहुधा समीक्ष्य चातुर्विधं बाहुलकं वदन्ति।

इति श्रीपद्मनाभ दत्तकृतौ सुपद्मव्याकरणे तृतीयाध्यायस्य प्रथमः पादः।

---

## अथ तृतीयाध्यायस्य

द्वितीयः पादः।

(ङितसंज्ञादिप्रकरणम्)।

१। ङिदपिन्लुङ्सार्व्वधातुके।

ङित् ०१।, अ (न) पित्-लुङ्-सार्व्वधातुके १ ।। ]

अपिल्लुङ्—अपित्—सार्व्वधातुके ङितौ भवतः। अतत, अतथाः कुरुत, चिन्वन्ति; अपिदिति किम्? करोति। (१)

२। व्यचेरणिदसिः। [व्यचेः ५। अ (न) णित्-असिः १। ]

व्यचेर्णिदसिभ्यामन्यः प्रत्ययो ङिद्भवति। विचिता, विचितुं, अणिदसिरिति किम्? णि—व्याचयति, असि—उरुव्यचाः।

३। असंयोगाद्लिङ्लिटक्कित्।

[ अ (न) संयोगात् ५।, अ (न) लित्—लिट् ०१।, कित् ०१। ]

---

(१) लुङ् च, सर्व्वधातुकञ्च लुङ् सार्व्वधातुके, (द्वन्द्व), न पित् अपित् अपितौ लुङ् सार्व्वधातुके कर्म्मधारयः, अपित् लङ्सार्व्वधातुके ङित्संज्ञके भवतः इति सूत्रार्थः। ङित्त्वञ्च गुणादिनिषेधार्थं, अनुनासिकलोपार्थं, सार्व्वोयणादिविधानार्थञ्च।

असंयोगाद्धातोरलिल्लिट् कित् स्यात्। चक्रतुः, जुङ्गुवुः, ऊचुः, दुद्रुवुः, संविव्युः, संविव्यिरे एच आत्त्वं, न व्याज्यावेञोलिङ्यपोरिति (३।२।१३८) यण इक्निषेधात्, आतोलुगिट्किङिदचोः इत्यातो (३।३।८८) लुक्, असंयोगादिति किम्? ववल्लिवन्भे जलधिर्ममन्थे अलिदिति किम्? विभेदिथ, आमादेशे लिटो न स्थानिवत्त्वम् ओषाञ्चकार। (२)

## ४। मृड-मृद-गुध-कुश-क्लिश-वद-वसः क्त्वा।

[ मृड—वसः ५।, क्त्वा ०१। ]

वक्ष्यमाणनिषेधापवादोऽयं। मृडादेः सेट् क्त्वा कित् स्यात्। मृडित्वा, मृदित्वा, गुधित्वा, कुशित्वा, क्लिशित्वा, उदित्वा, उषित्वा। (३)

## ५। ग्रह-रुद-विद-मुषः संश्च।

[ ग्रह—मुषः ५।, सन०१।, च०१। ]

---

(२) असंयोगान्तादित्यर्थः। अलिदिति णल् थलभ्यामन्यः। ननु आमादेशे कृते परिचायकाभावात् कथं कित्त्वं सिध्यतीत्याह आमादेश इति कित्त्वञ्च पूर्व्ववत् गुणादिनिषेधार्थं।

(३) सूत्रेऽस्मिन् क्वचित् क्लिशस्थाने क्लिष इति पठितम्। पद्मनाभपञ्जिकायां क्लिश, क्लिष इति द्वयोर्ग्रहणं कृतम्। ननु क्त्वाप्रत्ययः किद्भवत्येव तत्कथं कित्त्वं विधीयत इत्याशङ्क्याह वक्ष्यमाणनिषेधापवादोऽयमिति 'न क्त्वा सेडिति (३।२।१९) सूत्रेण सेट्क्त्वाया यत् कित्त्वं निषिद्धं तस्य निषेधस्यापवादार्थम्।

एभ्यः सेट् क्त्वा, सँश्च कितौ स्याताम्। गृहीत्वा, जिघृक्षति; रुदित्वा, रुरुदिषति; विदित्वा विविदिषति; मुषित्वा, मुमुषिषति।

६। इको झल्।

[ इकः ५।, झल् १।, (इक्-उपान्त्य) ५।, च०, सन् ०१।, अनिट् (न-इट्) ०१। ]

इगन्तादिगुपधाच्च धातोरनिडादिः सन् कित् स्यात्। चिचीषति, चिकीर्षति इगुपान्त्याच्च-बिभित्सति, बुभुत्सते अनिडिति किम्? शिश्रयिषते।

७। उश्च।

[ उः (ऋ) ५।, इगुपधात् (इक्-उपध) ५।, लिङ्-सिचौ १।।, तङि ७। ]

ऋकारान्तादिगुपधाच्च धातोरात्मनेपदे लिङ्, सिचौ कितौ स्याताम्। कृषीष्ट हृषीष्ट, अकृत, अहृत, तीर्षीष्ट, अतीर्ष्ट स्वयम्, इगुपधात्-भित्सीष्ट, भुत्सीष्ट, अभित्त, अबुद्ध, अनिडित्येव वर्द्धिषीष्ट, अवर्द्धिष्ट।

८। स्थाघ्वोरिच्च।

[ स्था-घ्वोः ६।।, सिच् ०१।, आत् ०१।, इत् ०१।, च०१। ]

स्थाघ्वोस्तङि सिच् कित् स्यात्। आत इच्च। उपस्थित, घु-अदित, अधिषाताम्; इटमाहचर्य्यान्नेति अधायिषाताम्। (४)

९। न क्त्वा सेट्। [ न०१।, क्त्वा०१।, सेट् (स-इट्)०१। ]

सेट् क्त्वा किन्न स्यात्। शयित्वा, देवित्वा, वर्त्तित्वा, स्यन्दित्वा।

---

(४) पुनः सिज्ग्रहणं लोडोनिवृत्त्यर्थं, कित्करणं गुणनिषेधार्थम्

१०। ऋति,-क्लिशि,-मृषि,-तृषि,-वञ्चि,-लुञ्चि,-नोपध-थ-फान्ताद्वा।

[ ऋति—नोपध-थ-फान्तात् (न-उपध-थ-फ-अन्त) ५।, वा०१। ]

एभ्यः सेट् क्त्वा किन्न स्यात्। ऋतः सौत्रः—ऋतित्वा, अर्त्तित्वा, क्लिशित्वा, कशित्वा; मृषित्वा, मर्षित्वा; तृषित्वा, तर्षित्वा; वचित्वा, वञ्चित्वा; लुचित्वा, लुञ्चित्वा; नोपधथफान्तात्-ग्रथित्वा, ग्रन्थित्वा, गुफित्वा, गुम्फित्वा। (५)

११। हलादेर्व्युपधादवयः संश्च।

[हल्-आदेः ५।, व्युपधात् (उ-इ-उपध) ५।, अवयः (न-व-य) ५।, सन्०१। च०१।]

उ-इ, वी, उपधे यावत्, तस्माद् व्युपधाद्धातोरवयन्तात् सेट् क्त्वा संश्च कितौ वा न स्याताम्। द्युतित्वा, द्योतित्वा; दिद्युतिषते, दिद्योतिषते; लिखित्वा, लेखित्वा; लिलिखिषति, लिलेखिषति, अ-व-य इति किम्? देवित्वा, क्नोयित्वा; हलादेरिति किम्? एषित्वा, एषिषिषति; सेड़ित्येव भुक्त्वा, बुभुक्षते।

१२। न निष्ठा शी-पूङ-स्विदि-मिदि-क्ष्विदि-धृषः।

[ न०१।, निष्ठा०१।, शी—धृषः ५। ]

एभ्यः सेट् निष्ठा किन्न स्यात्। शयितः, शयितवान्; पवितः, पवितवान्; प्रस्वेदितः, प्रस्वेदितवान्; प्रमेदितः, प्रमेदित-

---

(५) अथित्वा, अन्थित्वेति क्वचित् पाठः।

वान्; प्रधर्षितः, प्रधर्षितवान्। स्विदादेरादितोभावारम्भयोरितीट् (३।४।१४४)। उड्डयतेश्चाकित्त्वम् उड्डयितः, नेह उड्डीनः।

१३। मृषः क्षान्तौ। [मृषः ५।, क्षान्तौ ७।]

निष्ठा किन्न स्यात्। मर्षितं, मर्षितवान् क्षान्ताविति किम्? अवमृषितं ते वाक्यम्।

१४। उदुपध-शब्विकरणाद्वा भावारम्भयोः।

[उदुपध (उत्-उपध)—शब्विकरणात् (शप्-विकरण) ५।, वा० १।, भावारम्भयोः (भाव आरम्भ) ७॥]

उदुपान्तात् शब्विकरणाद्धातोर्भावादिकर्मणोः सेट् निष्ठा किद्वा स्यात्। द्युतितं, द्योतितमनेन; आरम्भे—प्रद्युतितः, प्रद्योतितो भानुः द्योतितुमारब्ध इत्यर्थः। शब्विकरणादिति किम्? निगुधितं ते वाक्यम्।

१५। धातोः। [धातोः ५।]

अधिकारसूत्रम्। आकृत्परिसमाप्ते धातोः कार्य्यमधिक्रियते। (६)

---

(६) आकृत्परिसमाप्तेरिति, कृद्वक्तव्यमिति तिङोऽन्ये कृत्संज्ञकाः प्रत्यया भविष्यन्ति तेषां समाप्तिपर्य्यन्तं धातोः कार्य्यं, वक्तव्यमित्यधिकृतमिति वेदितव्यम्। अधिकारस्य कार्य्यिकार्य्यनिमित्तादिपदानां यदुदीरणं। वक्ष्यमाणार्थसङ्क्षेपादधिकारः स उच्यत इति कार्य्यित्वेनैव।

×१६। क्त-क्त-वतू निष्ठा। [क्त,-क्त-वतू १॥, निष्ठा० १। ]

संज्ञासूत्रम्। एतौ निष्ठासंज्ञकौ स्याताम्। भिन्नः, भिन्नवान्।

१७। शित्लट्लोट्लिङ्लङः सार्व्वधातुकम्।

[ शित्-लट -लोट्-लिङ्-लङ्: १।।।, सार्व्वधातुकं ०१।] (७)

संज्ञासूत्रम्। अत्र धात्वधिकारे शिदादयः प्रत्ययाः सार्व्वधातुकसंज्ञाः स्युः। सार्व्वधातुकप्रदेशाः सार्व्वधातुके यगित्येवमादयः। (३।२।१४२)

१८। शेष मलुङार्द्धधातुकम्।

[ शेषं०१।, अलुङ्०१।, आर्द्धधातुकम्०१। ]

संज्ञासूत्रम्। शिदादेरन्यच्छेषं, तल्लुङ्वर्ज्जितमार्द्धधातुकसंज्ञं भवति। (८)

अथ कालाधिकारः।

१९। वर्त्तमाने लट्। [ वर्त्तमाने ७।, लट्०१। ]

आरब्धक्रियाया आपरिसमाप्तेर्वर्त्तमानः कालः। तत्र धातोः परे लट् स्यात्। (९) अस्ति, भवति, तिष्ठन्ति गिरयः, स्रवति नदी;

---

(७) शितः शप्, श्यन्, श्नु, शत्, श्नप्रभृतयः।

(८) लुङ् न सार्व्वधातुकं, न आर्द्धधातुकम्।

(९) लट् प्रत्ययो भवतीति क्वचित् पाठः। ननु वर्त्तत इति समाख्याबलात् प्रस्तुतक्रियैव वर्त्तमानपदेनोच्यते, एकस्मिन्नपि चिकीर्षिते वस्तुनि क्रियाभेदात् त्रयः कालाः प्रवर्त्तन्ते तथाच "दग्धा च दहनीयस्य

२०। भूते लुङ्। [भूते ७।, लुङ् ०१।]

अतीतकाले धातोर्लुङ् स्यात्। अभूत्, अपठत्, अचैषीत्। (१०)

२१। अनद्यतने लङ्। [अनद्यतने (न—अद्यतन) ७।, लङ् ०१।]

अद्यतनहीने भूते लङ् स्यात्। षठप्रहरादूर्द्ध मनद्यतनः कालः। आसीत्, अकरोत्।

२२। ऌड़भिज्ञावचने ऽयदि।

[ऌट् ०१।, अभिज्ञावचने ७।, अ(न) यदि ७।]

स्मरणोक्तौ भूतेऽनद्यतने धातोर्ऌट् स्यात्। स्मरसि काश्यां वत्स्यामः, संभविष्याव एकस्यामभिजानासि मातरि। अयदीति किम्?—यद्योगे माभूत्। वयस्य जानासि यत् काश्यामवसाम।

---

दृश्यमाना च दृश्यते। वर्त्तिरेकाभिसंयोगाद्वर्त्तमानः स उच्यते। साधयितुं प्रस्तुतं यावता परिसमाप्यते तावानेव वर्त्तमानोविवक्षितः। "वर्त्तमानत्वञ्च प्रयोगसमकालयत्नादिहेतुकत्वं-क्रियाप्रवृत्तौ यो हेतुस्तदर्थं यद्विचेष्टितम्। तत्समीक्ष्य प्रयुञ्जीत गच्छतीत्यविचारयन्नित्युक्तेः। क्रियोत्पत्तौ यो हेतुर्यत्नादिर्यच्च तदर्थं क्रियार्थं विचेष्टितं चेष्टादिकायिकव्यापारः तनद्द्वयं समकालिकं वीक्ष्य गच्छतीति प्रयुञ्जीत। ननु नित्योव्यापीकालः स कथं वर्त्तमानादिरूपः इति चेत् सत्यं कालस्य वर्त्तमानत्वादिः क्रियाद्वारकः, तथा च क्रियाभेदाय कालस्तु संख्या सर्व्वस्य भेदिकेतिहर्य्युक्तेः।

(१०) सामान्यतोभूतेह्यस्तनेऽनद्यतने परोक्षेऽपरोक्षे च लुङ्विधिरिति पद्मनाभपञ्जिका।

२३ । साकाङ्क्षे यदि वा । [ साकाङ्क्षे ७।, यदि ७।, वा०१। ]

साकाङ्क्षे वक्तरि यद्युपपदे अभिज्ञोक्तौ लृङ् वा स्यात् । स्मरसि यन्मगधे वत्स्यामः, तत्र दुग्धं पास्यामः, स्मरसि यन्मगधे अवसाम, तत्र दुग्धं अपिवाम । अयद्योगेऽपीत्येके ।

२४ । परोक्षे लिट् । [ परोक्षे ७।, लिट् ०१। ]

भूतानद्यतने परोक्षे लिट् स्यात् । चकार, ववृधे, सुप्तोऽहं किं विललाप ? मत्तोऽहं किं विचचार ? । लोकाख्याते विवक्षातः परोक्षे चापरोक्षवत्—अहन् कंसं विष्णुः, न्यक्षिपच्चाङ्गदं यत्नात्, अभन्नृपः । वितर्केऽद्यतने चाऽनद्यतनवद् बुधाः, अद्यारुणद्धाटिकाम् । (११)

---

(११) यद्यपि क्रिया नामाऽत्यन्तापरिदृष्टा पूर्व्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितुमिति भाष्योक्तेः सर्व्वासां क्रियाणां परोक्षत्वं तथापि तदनुकूलशक्तिमतां व्यापारविशिष्टानां साधनानां पारोक्ष्यापरोक्ष्याभ्यां क्रियाणां तथात्वे द्रष्टव्ये । स्वव्यापारस्य वर्त्तमानता दशायामपि व्यासङ्गादिना स्वयं तदप्रतिसन्धाने अहं पपाचेति प्रयोगो भवत्येव । मत्तादिक्रियावत् तस्या अपि परोक्ष्यसम्भवात् । इत्यस्य बक्ष्यमाण पुरस्तात् तस्य मत्ता किलाहमिति प्रयोग इति मनोरमा । ननु इन्द्रियाविषयः परोक्षः कालः, आत्मसाध्या च क्रिया प्रत्यक्षा, तत्,कथमस्मद्विषयकोऽलिट् प्रवर्त्ततामित्याह सुप्तोऽहमिति अत्र स्वयं जनिताऽपि क्रिया कर्त्रा नोपलक्ष्यते केवलं फलवलादनुमीयते अतस्तज्ज्ञानं मनसापि दिक्षेन्द्रियाऽप्रत्यक्षमेवेति विद्या मिश्रः 'उत्तमे चित्तविक्षेपे' इति कस्यापि

२५। अत्यन्तापह्नवे च। [अत्यन्तापह्नवे ७।, च०१।]

लिट् स्यात्। कलिङ्गेषु स्थितोऽसि मया, नाऽहं कलिङ्गान् जगाम।

२६। हशश्वतो लङ् च। [ह-शश्वतोः ७।, लङ् ०१। च०१।]

हान्त-शश्वतोर्योगे लङ्, लिट् च स्यात्। इति हाऽकरोत्, शश्वदकरोत्, चकार वा।

२७। प्रश्ने चासन्नकाले। [प्रश्ने ७।, च०१ आसन्नकाले ७।]

पञ्चवर्षाभ्यन्तरे प्रश्ने लङ्, लिटौ स्याताम्। पृच्छामि त्वां, अगच्छश्चैत्रः जगाम वा।

२८। लट् स्मेनाऽपरोक्षे च।

[लट् ०१।, स्मेन ३।, च (न) परोक्षे ७।, च०१।]

परोक्षेऽपरोक्षे भूतानद्यतने स्मेन युक्ताल्लट् स्यात्। पचति स्म, करोति स्म।

२९। ननौ पृष्टप्रतिवचने। [ननुना ३।, प्रश्नोत्तरे ७।]

प्रश्नादुत्तरे ननुना युक्ताद्भूतमात्रे लट् स्यात्। अकार्षीः कटं? ननु करोमि। न, नुभ्यां वा। न करोमि, नाकार्षम्; नु करोमि, न्वकार्षम्।

---

सूत्रं चित्तविक्षेपएव उत्तमे लिट् इति तदर्थः। सुप्तस्याकारणे चानु-रत्यन्तापह्नवेऽपि च। दर्शनादेरभावे च चिह्न विद्यात् परोक्षतामिति।

**३० । पुरा लुङ् चास्मे ।** [ पुरा ०१, लुङ् ०१, च०१। अ (न) स्मे ७।]

भूतानद्यतने पुरा युक्ताल्लुङ् च स्यात् । अवात्सुरिह पुरा विप्राः, वसन्तीह पुरा मृगाः । पक्षे लङ्लिटौ अवसन् पुरा, ऊषुः पुरा ; अस्म इति किम् ? पुरा वसन्ति स्म । उक्तम् भूते ।

**३१ । भविष्यति लृट् ।** [ भविष्यति ७।, लृट् ०१। ]

भविष्यति काले लृट् स्यात् । भविष्यति, करिष्यति ।

**३२ । अनद्यतने लुट् ।** [अनद्यतने (न-अद्यतन) ७।, लुट् ०१।]

भविष्यानद्यतने लुट् स्यात् । श्वः कर्त्ता, परश्वोभोक्ता । आशङ्कायामद्यतने च इयं नूनं कदा गन्ता चैवं पादौ दधातीति । (१)

**३३ । यावत् पुराभ्यां लट् ।** [ यावत्, पुराभ्यां ३॥, लट् ०१। ]

आभ्यां निपाताभ्यां युक्ताद्भविष्यति लट् स्यात् । यावद्-गच्छामि, पुरा गच्छामि । *

**३४ । कदाकर्ह्योर्वा ।** [ कदा।कर्ह्योः ७॥, वा ०१। ]

कदा कर्हि—योगे भविष्यति लड्वा स्यात् । कदा जयति, जेष्यति, जेता वा, कर्हि याति, यास्यति, याता वा ।

---

(१) अनागतेऽह्नि श्वः, परश्वस्तत्परेऽहनीत्यमरः । शङ्काऽत्रानुशोचनं, तस्मिन् गम्ये । वाक्यगम्ये तु न स्यात् । अवसायीभविष्यामि दुःखस्यास्य कदा न्वहमिति भट्टिः ।

* एवं शाकल्यप्रक्रमावधा राद्धिवित्ति वर्द्धमानः ।

## ३५ । किं कतरकतमेर्लिप्सायाम् ।

[ किम्-कतर कतमैः ३।।।, लिप्सायाम् ७। ]

एभिर्योगे लिप्सायां लङ् वा स्यात् । लब्धुकामः पृच्छतीति, कस्ते भिक्षां ददाति, दास्यति, दाता वा एवं कतरः कतमश्च । (२)

## ३६ । वाञ्छितादन्यसिद्धौ च ।

[ वाञ्छितात् ५।, अन्यसिद्धौ ७।, च०१ । ]

इप्सितादन्यसिद्धौ (३) गम्यमानायां लङ् वा स्यात् । यो दध्योदनं ददाति, स स्वर्गं गच्छतीति दातारं प्रोत्साहयतीत्यर्थः । पक्षे लुट्, लृटौ च ।

## ३७ । लोड़र्थलक्षणे च । [ लोट् –अर्थलक्षणे ७।, च०१। ] (४)

प्रैषादिलक्षणे गम्ये धातो लङ् वा स्यात् । गुरुश्चेदागच्छति, आगमिष्यति, आगन्ता वा अथ त्वं छन्दोऽधीष्व । प्रैषोऽत्राध्ययनं, तस्य लक्षणं गुर्वागमनमिति । ऊर्द्ध मौहूर्त्तिके लिङ् च । मुहूर्त्तस्योपरि गुरुश्चेदागच्छति, आगच्छेत् अथ त्वं अधीष्व पक्षे लुङ्, लृटौ च । (५)

(२) लब्धुमिच्छा, लिप्सा, तस्यां गम्यमानायां ।

(३) प्ररोचनायामित्यर्थः ।

(४) लोड़र्थः प्रैषादिः, तस्य लक्षणं ।

(५) मुहूर्त्तादूर्द्धं ; ऊर्द्ध मुहूर्त्ते तत्र भवः ।

३८। वर्त्तमानसामीप्ये वर्त्तमानवद्वा।

[ वर्त्तमानसामीप्ये ७।, वर्त्तमान वत् ०१।, वा०१। ]

वर्त्तमानसामीप्ये भूते, भविष्यति च वर्त्तमानवत् प्रत्ययो वा स्यात्। कदा त्वं आगतोऽसि, अयमागच्छामि, आगच्छन्नस्मि, पक्षे अयमागमं, आगतोऽस्मि कदात्वं यास्यामि, एष यास्यामि। (६)

३९। आशंसायां भूतवच्च।

[ आशंसायां ७।, भूतवत् ०१।, च०१। ]

वाञ्छायां भविष्यति, वर्त्तमानवत् भूतवच्च प्रत्ययो वा स्यात्। गुरुश्चेदागच्छति, आगमदागतः, आगमिष्यति, आगन्ता वा युष्मास्वम्भोऽधीमहे, अध्यगीष्महि, अध्येष्यामहे, अध्येतास्महे च। (७)

४०। क्षिप्रार्थोपपदे लृट्।

[क्षिप्रार्थोपपदे (क्षिप्र+अर्थ+उपपद) ७। लृट् ०१। ]

---

(६) अत्र गुणवचनेनापि षष्ठीसमासः। सामीप्यमुभयत्र सम्भवतीत्याह भूते भविष्यति च। इति विद्या मिश्रः।

(७) अनागतस्येष्टस्य लिप्सा आशंसा "सोऽमिषे मामुपायंस्थाः" "मामुपायंस्त रामेति वदन्ती सादरं वच" इति च भट्टिः। अत्र वर्त्तमानसामीप्ये चानुवर्त्तते इति विद्यामिश्रः।

आशंसायां क्षिप्रार्थोपपदे लृट् स्यात्। गुरुश्चेत् क्षिप्रमागमिष्यति त्वरितमध्येष्ये। (८)

४१। लिङाशंसायाः। [लिङ् ०१।, आशंसार्थैः (आशंसा-अर्थे) ३।।।]

आशंसार्थैर्योगे लिङ् स्यात्। उपाध्यायश्चेत् आगच्छेत्, आशंसे, छन्दोऽधीयीय, अवकल्पे क्षिप्रमधीयीय। (९)

४२। क्रियासातत्यसामीप्ययोर्यथाकालमनद्यतने लुङ्, लृटौ।

[क्रिया-सातत्य-सामीप्ययोः ७।।, यथाकालं ०२।, अनद्यतने ७।, लुङ्-लृटौ १।।]

क्रियाप्रबन्धे कालानां सामीप्ये च यथाकालं भूतभविष्यदनद्यतने लुङ्लृटावेव स्याताम्। यावज्जीवं भृशमन्नमदात्, दास्यति च येयं पौर्णमास्यतिक्रान्ता तस्यां गुरुवन्दनाधित, आगामिन्यामाधास्यते च। (१०)

---

(८) विनंक्ष्यति पुरी क्षिप्रं तूर्णमेष्यति सम्पद इति भट्टिः।

(९) आशंसा न हि नः प्रेते जीवेम दशमूर्द्धनीति भट्टिः।

(१०) सततस्य भावः सातत्यं क्रियाणां सातत्यसामीप्ये क्रिया सातत्यसामीप्ये पूर्ववत् समासः, ननु क्रिया सामीप्य वक्तव्ये कथं कालानामित्युक्तं नैवं क्रियासामीप्यमपि सम्भवत्कालनिरपेक्षं न स्यादित्युक्तं। अन्यलकाराणामपवादोऽयमिति विद्यामिश्रः। क्रियासातत्य इति किम्? ददौ स दयितां भात्रे, सामीप्य इति किम्? अयोध्यां श्वः प्रयातोऽसि।

४३ । सीमक्तौ चावरे लृट् ।

[ सीमोक्तौ (सीमा—उक्ति) ७।, अवरे ७।, लृट् ०१। ]

सीमक्तौ सत्यां अवरस्मिन् कालविभागे भविष्यदनद्यतने लृड़ेव स्यात् । योऽयमापाटलिपुत्रात् गन्तव्यः पन्थाः, तस्य यदवरं कौशम्ब्यास्तत्र द्विरोदनं भोक्ष्यामहे ।

४४ । कालविभागे चानह्नोरात्राणाम् ।

[ काल विभागे ७।, च०१।, अनह्नो (न-अह्नः) रात्राणां ६।।। ]

सीमोक्तौ अहोरात्रसम्बन्धिहीने अवरस्मिन् कालविभागे लृड़ेव स्यात् । आगामिवत्सरस्य यदवरं वैशाख्यास्तत्र गयां यास्यामः, अनह्नोरात्राणामिति किम् ? आगामिमासस्य योऽवरः पञ्चदशरात्रः (११) तत्राध्येतास्महे ।

४५ । परस्मिन् वा । [परस्मिन् ७।, वा ०१। ]

परस्मिन् कालविभागे ऽनद्यतने लृड् वा स्यात् । आगामिवर्षस्याग्रहायण्याः परस्मिन् धर्म्मं श्रोष्यामः, श्रोतास्मः ।

४६ । लिङ् निमित्ते लृङ् क्रियातिपत्तौ ।

[ लिङ् निमित्ते ७।, लृङ् ०१।, क्रियातिपत्तौ (क्रियाअतिपत्ति) ७। ]

भविष्यति, भूते च क्रियातिपत्तिः सम्भवति । तत्र हेतुफलयोरत्यन्तलिङ् विषये लृङ् स्यात् । यदि वर्षसहस्रमजी-

---

(११) पञ्चदशानां रात्राणां समाहारः इति द्विगुः रात्रेर्वर्षापुण्ये-त्यादि सूत्रेण पुंस्त्वम् ।

विष्य', तदा पुत्रपौत्रादीनद्रच्‍यं, अमङ्गलात् वसुधा तोये यदि त्व' नाधरिष्यथाः। (१२)

४७। आ शेषाद्भूते। [आ०।।, शेषात् ५।, भूते ७।]

अधिकारसूत्रम्। शेषशब्देन सममभिव्याप्य क्रियातिपत्तौ भूते लृङ् विकल्पनीयः, ततः परं नित्यमेव।

४८। लड़पिजात्वोः सर्व्वत्र गर्हायाम्।

[लट् ०१।, अपि-जात्वोः ७।, सर्व्वत्र ७।, गर्हायाम् ७।]

अपि जातुयोगे कालसामान्ये गर्हायां लट् स्यात्। अपि भवान् वृषलं याजयति, मन्त्रे जातु वदन्त्यज्ञाः। अलिङ् विषयत्वात् लृङ् नास्ति।

४९। कथमि लिङ् च वा।

[ कथमि ७।, लिङ् ०१।, च०१।, वा०१। ]

कथमि सति गर्हायां लिङ्, लट् च वा स्यात्। कथं वृषलं याजयेत्, याजयति, पचे यथाप्राप्तं याजयिष्यति कथमयोयजत्, इत्यादि क्रियातिपत्तौ भूते लृङ् विकल्पनीयः त्व माशङ्किषथाः। कथं भविष्यति नित्यमेव।

५०। किंकतरकतमेषु लिङ् लृटौ।

[ किं, कतर, कतमेषु ७।।।, लिङ्, लृटौ १।। ]

(१२) कुतश्चिद्वैगुण्यादनतिपत्तिः क्रियातिपत्तिरिति विष्णुमिश्रः। यद्यहं नाथ नायास्यं विनसा हतबान्धवा नाभाखस्त्वमिति भट्टिः।

किमादिषु सत्सु गर्हायां सर्व्वलकारापवादो लिङ्लृटौ स्याताम्। को नाम कतरो नाम वृषलं याजयेत्, याजयिष्यति क्रियातिपत्तौ अयाजयिष्यत्।

५१ अश्रद्धाऽमर्षयोश्च। [अश्रद्धाऽमर्षयोः ७।।, च०१।]

अनवक्लृप्तौ क्रोधे च लिङ्, लृटौ स्याताम्। न श्रद्दधे नावकल्पयामि स राजसूयं याजयेत्, याजयिष्यति, न मर्षयामि, दुर्ज्जनः पूजां लभेत, लप्स्यते।

५२। किं किलास्त्यर्थयोर्लृट्।

[ किं किलास्त्यर्थयोः (किं-किल-अस्ति-अर्थ) ७।।, लृट्०१। ]

अनयोर्योगे अश्रद्धादौ गम्ये लृडेव स्यात्। किं किल स भवान् जाल्मं याजयिष्यति, न श्रद्दधे लक्षणेनावकल्पयामि अस्ति भवति विद्यते वधिरो नाम वेद्मध्येष्यते।

५३। यद्यदियदाजातुषु लिङ्।

[ यत्-यदि-यदा जातुषु ७।।।, लिङ्०१। ]

एषु सत्सु लिङेव स्यात्। अश्रद्धादौ—न श्रद्दधे नावकल्पयामिदं ग्लायेत् यत्कृच्छ्रेषु भवानपि, न मर्षयामि यदि याजयेत्, यदा याजयेत्, जातु संमुह्येत् पण्डितो जनः। क्रियातिपत्तौ न सहे यद्यूयं अयाजयिष्यत।

५४ यच्च-यत्रयोर्गर्हायाञ्च। [यच्च-यत्रयोः ७।।, गर्हायां ७।, च०१ ]

अनयो र्योगेऽश्रद्धामर्षयोर्गर्हायाञ्च लिङेव स्यात्। यच्च यत्र

भवान् सीदेत्, नावकल्पयामि न मर्षयामि विगर्हे क्रियातिपत्तौ यच्चायमकरिष्यत् ।

५४ । आश्चर्य्ये ।   [ आश्चर्य्ये ७। ] (१)

यच्च यत्र योगेऽद्भुते लिङेव स्यात् । आश्चर्य्यं यच्च यत्र भवान् याजयेत्, क्रियातिपत्तौ यच्च यत्रायं वेदमगास्यत् ।

५५ । श्रेषे लृङयदौ ।   [ श्रेषे ७।, लृट् ०१।, अ (न) यदौ ७। ]

यच्च यत्राभ्यामन्यस्मिन्नाश्चर्य्ये लृङेव स्यात् । अन्धतमन्धोनाम गिरिमधिरोक्ष्यति, बधिरोनाम वेद मध्येष्यते । अथयदि स भुञ्जीत आश्चर्य्यं यदि स अभोक्ष्यत । (२)

५६ । उताप्योर्लिङ् वाढ़ार्थे ।

[ उत-अप्योः ७।।, लिङ् ०१।, वाढ़ार्थे (वाढ़+अर्थे) ७। ]

उत कुर्य्यात्, अपि कुर्य्यात् । भूते वेति निवृत्तम् । अतोभूते भविष्यति च क्रियातिपत्तौ लृङ् नित्यं स्यात् । उताऽकरिष्यत् । (३)

(१) आश्चर्य्यं इति पृथक्करणमुत्तरार्थमिति पद्मनाभपञ्जिका । आश्चर्य्यं यच्च यत्र त्वां प्रव्रयाम वयं स्थितमिति भट्टिः ।

(२) श्रेषे यच्च यत्राभ्यामन्यस्मिन् यदा, जातुप्रभृतावुपपदे इति पद्मनाभपञ्जिका ।

(३) वाढ़ार्थे, प्रश्नार्थे प्रतिज्ञामार्थे च वर्त्तमानयोरुताप्योः । सर्व्वेषामपवादोऽयमिति विष्णुमिश्रः । भूते च क्रियातिपत्तौ नित्यमिति पद्मनाभपञ्जिका ।

५७। शक्तिसम्भावनेऽलमप्रयोगे। (४)

[ शक्ति सम्भावने ७।, अलम् अप्रयोगे ७। ]

शक्ति-सम्भावने लिङ् स्यात्। अपि शिरसा गिरिं भिन्द्यात्, लृङि अपि शैलमभेत्स्यत्। नालं प्रयोगे अलं हस्तिनं हनिष्यति।

५८। वा धातौ सम्भावनार्थेऽयदि।

[ वा ०१।, धातौ ७।, सम्भावन-अर्थे ७।, अ (न) यदि ७। ]

सम्भावनार्थधातावुपपदे लिङ् वा स्यात्। सम्भवयामि, अवकल्पयामि भवान् भुञ्जीत भोक्ष्यते वा अयदीति किम्? न श्रद्दधे यत् स भुञ्जीत, लृङि श्रद्दधे अभोक्ष्यत भवान्।

५९। हेतुफलयोः। [ हेतु-फलयोः ७। ]

अनयोर्वर्त्तमानाद्धातोर्लिङ् वा स्यात्। दक्षिणश्चेत् यायात् शकटं पर्य्याभवेत्, पक्षे लृट्। नेह वर्षतीति धावति इति शब्देनैव हेतु सम्भावनस्य द्योतनात्। लृङि दक्षिणश्चेत् अयास्यत् शकटं पर्य्याभविष्यत्। (५)

६०। इच्छार्थाद्वर्त्तमाने। [ इच्छा-अर्थात् ५।, वर्त्तमाने ७। ]

(४) लिङित्येव, शक्त्युपलक्षणं नेन सम्भवनमात्रे चेति पद्मनाभपञ्जिका।

(५) हेतुः कारणं, फलं हेतुजं सुखं, तयोरेकवाक्यवर्त्तमानाद्धातोरित्यर्थ इति पद्मनाभपञ्जिका। इति शब्द एव हेत्वर्थः, तेनैव हेतुसम्भावनस्य द्योतनाल्लिङादिर्न भवति। यदि धातुरेव इति धातुफलं द्योतयति तदैव लिङादिः स्यादिति।

इच्छार्थाद्वर्त्तमाने लिङ् वा स्यात्। इच्छति, इच्छेत्; वष्टि, उश्यात्;

## ६१। इच्छार्थेषु विधिसंप्रश्नप्रार्थने च लिङ्लोटौ।

[इच्छा-अर्थे ७, विधि-संप्रश्न-प्रार्थने ७।, च ०१,, लिङ्लोटौ १॥]

इच्छार्थे धातौ सति विध्यादौ च गम्ये धातोर्लिङ्लोटावेव स्याताम्। कामये त्वं भुञ्जीथाः, इच्छामि त्वं भुङ्क्ष्व; विधिरज्ञातज्ञापनं, नियोगो, नियोगतःकरणं, अज्ञातज्ञापनं— विधि दृष्टार्थोऽदृष्टार्थश्च कृषिं कुर्य्यात्, करोतु वा; स्वर्गकामो यजेत्, यजतु वा; नियोगो बहुविधः अधीष्टिः, आमन्त्रणं, प्रैषश्च, तत्र सत्कारपूर्व्वकोनियोगोऽधीष्टिः, गुरो मामध्यापयेः, अध्यापय वा। यदृच्छानियोग आमन्त्रणम् यथारुचि भुञ्जीत, भुङ्क्तां वा; दत्तपूर्व्वकोनियोगः प्रैषः तत्र लोट् कृत्याश्च वक्ष्यन्ते, नियोगतः करणं निमन्त्रणम् श्राद्धादौ इह भुञ्जीत, भुङ्क्तां वा। संप्रश्नः सम्प्रधारणं, किन्नु तर्कमधीयीय, किं वेद मध्ययै; प्रार्थने लभेय भिक्षां लभै वा। (६)

## ६२। कामप्रवेदनेऽकच्चिति।

[कामप्रवेदने ७।, अ (न) कच्चिति ७।]

---

(६) इच्छार्थधातावुपपदे सतीति चकारो विध्यादिसमुच्चयार्थः। पुनर्लिङ्ग्रहणं लोट्समावेशाद्विकल्पनिरासार्थमिति। नियोगतः करणं यस्य लङ्घने प्रत्यवायो न भवेत् तदेव निमन्त्रणमिति च पद्मनाभपञ्जिका।

इच्छाप्रकाशने तौ स्याताम्। इच्छा मे कामो मे शृणुयाद् भवान्, शृणोतु वा। अकच्चितीति किम्? कच्चित् जीवति ते पिता। (७)

६३। प्रैषानुज्ञाप्राप्तकालेषु लोट् कृत्याश्च।

[ प्रैष-अनुज्ञा-प्राप्तकालेषु ७।।।, लोट्_ कृत्याः १।।।, च ०१। ]

एषु लोट्, कृत्याश्च भवन्ति। पृथक् लोट्ग्रहणं कृत्य-समावेशार्थं। ग्रामं गच्छेत्, त्वया ग्रामो गन्तव्यः। अनुज्ञायाम् एवं कुरु, एवं कर्त्तव्यम्। कटकरणे प्राप्तस्ते कालः कटं कुरु कटस्त्वया कार्य्यः। (८)

६४। लिङ् चोर्द्धमौहूर्त्तिके।

[ लिङ्_ ०१।, च ०१।, ऊर्द्धमौहूर्त्तिके ७। ]

ऊर्द्धमौहूर्त्तिकार्थाद्धातोः प्रैषादौ गम्ये लिङ्, लोट्, कृत्याश्च स्युः। ऊर्द्धं मुहूर्त्तात् त्वं कटं कुर्य्याः, कुरु च; त्वया कटः कर्त्तव्यः।

६५। स्मे लोट्। [ स्मे ७।, लोट्_ ०१। ]

ऊर्द्धमौहूर्त्तिकेऽर्थे स्म योगे प्रैषादौ गम्ये लोडेव स्यात्। ऊर्द्धं मुहूर्त्तात्, कटं करोतु स्म भवान्। (९)

---

(७) कच्चिच्छब्दः कामप्रवेदनार्थः, तस्य प्रयोगे इति पद्मनाभपञ्जिका।

(८) प्राप्तः कालो यस्येति बहुव्रीहिर्न तु प्रथमातत्पुरुष इति पद्मनाभपञ्जिका।

(९) विध्यर्थे प्राप्ते स्मयोगे नियमोऽयम्।

६६। अधीष्टौ च। [अधीष्टौ ७।, च ०१।]

अध्येषणायां स्म-योगे लोड़ेव स्यात्। अङ्ग स्म विद्वन्मां प्रावय। (१०)

६७। कालसमयवेलासु लिङ् यदि। (११)
[काल-समय-वेलासु ७।।।, लिङ् ०१।, यदि ७।]

कालादिषु यदि सति लिङ् स्यात्। कालोऽयं यदि त्वं भुञ्जीथा; कालोऽयं, समयोऽयं, वेलेऽयं, भोक्तुमिति तुम् भविष्यति। (१२)

६८। अर्हशक्त्योः कृत्यतृचश्च। (१३)
[अर्ह शक्त्योः ७।।, कृत्य तृचः १।।।, च ०१।]

अर्हार्थे, शक्तौ च लिङ्, कृत्य, तृचः स्युः। भवान् कन्यामुद्वहेत, युना कन्या वोढ़व्या, युवा कन्याया उद्वोढ़ा।

---

(१०) सूत्रे चकारोऽनुकर्षणार्थः, अङ्गेति सम्बोधनम् लिङ् निरासार्थमिति पद्मनाभपञ्जिका।

(११) यच्चयत्रयदाजातुष्विति यो लिङ् विहितः सो-ऽश्रद्धामर्षयोरेवेत्ययं भिन्नो यद्योगे लिङ्विधिरिति पद्मनाभपञ्जिका।

(१२) अधिज्यमायुधं कर्त्तुं समयोऽयं रघोरिति कालिदासः।

(१३) अर्हणं अर्हः योग्यता, शकनं शक्तिः सामर्थ्यं तयोर्वर्त्तमानात्, धातोरिति विष्णुमिश्रः।

६९ । आशिषि लोङ्लोटौ । [आशिषि ७।, लोङ्-लोटौ १।।]

एतौ स्याताम्, कल्याणं वः क्रियासु चिरं जीव ।

७० । माङि लुङ् । [माङि ७।, लुङ् ०१।]

माङि सति लुङेव स्यात् । मा साहसं कार्षीः, मोञ्जि-ग्रहः स्वपौरुषम् ।

७१ । स्म परे लङ् च । [स्म-परे ७।, लङ् ०१।, च ०१।]

स्म-परे माङि सति लुङ् लङौ स्याताम् । मास्म द्राक्षीत् मास्म पश्यत् ।

७२ । धातुसम्बन्धे प्रत्ययाः । [धातु सम्बन्धे ७।, प्रत्ययाः १।।]

धात्वर्थसम्बन्धे भिन्नकाला अपि प्रत्ययाः सिध्यन्ति । अग्निष्टोमयाजी, पुत्रोऽस्य जनिता, वनं गतः श्वोभविता, गोमानयमासीत्, वसन् ददर्श । (१४)

७३ । क्रिया-समभिव्याहारे लोट् लोटो, हि-स्वौ, वा च तध्वमोर्यथाविध्यन् च ।

[क्रिया-समभिव्याहारे ७।, लोट् ०१।, लोटः ६।, हि स्वौ १।।, वा ०१।, च ०१।, तध्वमोः ७।।, यथाविधि ०१।, अन् ०१।, च ०१।]

क्रियासमभिव्याहारे धातोर्लोट् कालत्रयेऽपि लोटस्तु हि-स्वौ भवतः, ता च त,-ध्वं विषये च वा, यथाविध्यनु च

(१४) धात्वर्थविशेषणविशेष्यभावलक्षणेन भिन्नकाला अपि प्रत्ययाः समा तिङ कृत तद्धिता विशेष्यधात्वर्थकाले सिध्यन्ति, साधवो भवन्ति ।

यस्माद्धातोर्लोट् विहितस्तस्यैवानुप्रयोगश्च । लुनीहि, लुनीहीत्येवाऽयं लुनाति, लविष्यति, अलावीत्, न छिनत्त्याद्यनुप्रयोगः, अयमर्थः ईदृगसौ त्वरावान् यदन्यानपि प्रेरयन् तां क्रियां स्वयमेव करोति एवं लुनीत लुनीतेत्येवायं लुनाति तद्विषये हि-स्वौ लुनीहि, लुनीहि वा अधीष्व, अधीष्वेत्येवायमधीते, अध्यैष्ट, अध्येष्यते, अधीध्वमधीध्वमित्येवायमधीते ध्वं विषये स्वो अधीष्व अधीष्वेति वा एवं परस्मैपदात्मनेपदिनोः सर्व्वलकारे सर्व्ववचनेऽप्यनुसन्धेयम् । (१५)

७४ । समुच्चये वा सामान्यवचनस्यानु च ।

[ समुच्चये ७।, वा ०।१।, सामान्यवचनस्य ६।, अनु ०।१।, च ०।१ ]

क्रियासमुच्चये पूर्व्ववल्लोट् विधिर्व्वा स्यात् । अत्र सामान्यवचनस्यानुप्रयोगः । स्वमट ग्राममटाटोर्व्वीमित्येवायमटति, इमा वटतः, ओदनं भुङ्क्ष्व सक्तूनपि वधानाः खाद इत्येवायमभ्यवहरति । अभ्यवहारस्त्रिषु समः पचे यथा ग्रामञ्च । एवं सर्व्वलकारेष्वन्वेयम् । इतिकालाधिकारः ।

७५ । लः कर्त्तृ-कर्म्मभावेषु । [ लः १।१।, कर्त्तृ-कर्म्म-भावेषु ७।१।]

लकाराः कर्त्तरि, कर्म्मणि, भावे च स्युः । भवति, क्रियते

(१५) समभिव्याहारः पौनः पुन्यार्थः भृशार्थश्च त, ध्वमोरिति विषये सप्तमी । यथाविधीति पदार्थानतिवृत्तावव्ययीभावः । अनु चेति पश्चात् प्रयोगश्चेति पद्मनाभपञ्जिका ।

कटः, क्रियेते कटौ, क्रियन्ते कटाः, भावे भूयते । एको हि भावः केवलो धात्वर्थ इति ।

७६ । लट्‌लृटो स्तिप्, तस्, अन्ति ; सिप्, थस्, थ ; मिप्, वस्, मस् । ते, आते, अन्ते ; से, आथे, ध्वे ; ए, वहे, महे । [ लट्‌लृटोः ६॥, तिप्—महे०॥। ]

लट्‌लृटोः स्थानेऽमी तिबादयः स्युः । भाति, भातः, भान्ति । इत्यादि । आत्मनेपदे—शेते, शयाते, शेरते ; शेषे, शयाथे, शेध्वे ; शये, शेवहे, शेमहे । लृटः पास्यति, पास्यतः, पास्यन्ति, पास्यामि, पास्याव, पास्यामेत्यादि ।

७७ । लोटस्तुप्, तां, अन्तु ; हि, तं, त ; आनिप्, आवप्, आमप् । तां, आतां, अन्तां ; स्व, आथां, ध्वं ; ऐप्, आवहैप्, आमहैप् । [ लोटः ६।, तुप्—आमहैप् ०१॥। ]

लोटः स्थानेऽमी तुबादयः स्युः । पातु, पातां, पान्तु ; पाहि, पातं, पात ; पानि, पाव, पाम । दत्तां ददातां, ददताम् । दत्स्व, ददाथां दद्ध्वम् । ददै, ददामहै, ददामहै ।

७८ । लिटो णल्, अतुस, उस् ; थल्, अथुस्, अ ; णल्, व, म । ए, आते, इरे ; से, आथे, ध्वे ; ए, वहे, महे । [ लिटः ६।, णल—महे ०१॥। ]

लिटः स्थानेऽमी णलादयः स्युः । पपौ, पपतुः, पपुः ।

पपिथ, पपथुः पप। पप पपिव, पपिम। ददे, ददाते, ददिरे। ददिषे ददाथे, ददिध्वे। ददे, ददिवहे, ददिमहे।

७९। विदो लटो वादितो नव।

[ विदः ५।, लटः ६।, वा ०।, आदितः ५।, नव ०।।।। ]

वेत्तेर्लट आदितो नव णलादयो वा स्युः। वेद, विदतुः, विदुः। वेत्थ विदथुः विद। वेद, विद्व, विद्म। पक्षे वेत्तीत्यादि।

८०। ब्रुवः पञ्चाहश्च। [ ब्रुवः ५।, पञ्च ०।।।।, आहः १।, च ०।। ]

ब्रुवोलट आदितः पञ्च णलादयो वा स्युः। ब्रुव आहादेशश्च आह, आहतुः आहुः। आत्थ, आहथुः पञ्चेति किम्? ब्रूथ पक्षे ब्रवीतीत्यादि।

८१। लुटः—ता, तारौ, तारस्; तासि, तास्थस्, तास्थ; तास्मि, तास्वम्, तास्मस्। ता, तारौ, तारस्; तासे, तासाथे, ताध्वे; ताहे, तास्वहे, तास्महे।

[ लुटः ६।, ता—तास्महे ०।।।। ]

लुटः स्थानेऽमी तादयः स्युः। कर्त्ता, कर्त्तारौ, कर्त्तारः; कर्त्तासि, कर्त्तास्थः, कर्त्तास्थ; कर्त्तास्मि, कर्त्तास्वः, कर्त्तास्मः। कर्त्ता, कर्त्तारौ, कर्त्तारः; कर्त्तासे, कर्त्तासाथे, कर्त्ताध्वे; कर्त्ताहे कर्त्तास्वहे, कर्त्तास्महे।

८२। लुङ्, लङ्, लृङां—दिप्, तां, अन्; सिप्, तं,

त ; पम्, व, म। त, आतां, अन्त ; थास्, आथां, ध्वम् ; इ, वहि, महि। [लुङ्, लङ्, लृङाम् ६।।।, दिप्—महि ०१।।।]

लुङ्, लङ्, लृङां स्थाने प्रत्येकं दिवादयः स्युः। दिप् सिपोरिकारपकारौ चिह्नार्थौ। अभूत्, अभूतां, अभूवन् ; अभूः, अभूतं, अभूत। अभूवम्, अभूव, अभूम। अक्रूत, अक्षातां, अक्षत ; अक्षथा, अक्षाथां, अक्षढ्वं ; अक्षि, अक्ष्वहि अक्ष्महि। लङः खल्वपि—अभवत् अभवताम्, अभवन् ; अभवः अभवतं, अभवत ; अभवं, अभवाव, अभवाम ; अवर्द्धत, अवर्द्धेतां, अवर्द्धन्त इत्यादि। लृङः—अभविष्यत्, अभविष्यतां, अभविष्यन् ; अवर्द्धिष्यत अवर्द्धिष्येतां, अवर्द्धिष्यन्त।

८३। लिङो यात्, याताम् युस् ; यास्, यातं, यात ; याम्, याव, याम। ईत, ईयातां, ईरन् ; ईथास, ईयाथां, ईध्वम् ; ईय, ईवहि, ईमहि। x

[लिङः ६।, यात—ईमहि ०१।।।]

लिङः स्थानेऽमी यादादयः स्युः। भवेत्, भवेतां, भवेयुः भवेः, भवेतं भवेत ; भवेयं, भवेव, भवेम। वर्द्धेत, वर्द्धेयातां, वर्द्धेरन् ; वर्द्धेथा, वर्द्धेयाथां, वर्द्धेध्वम् ; वर्द्धेय, वर्द्धेवहि, वर्द्धेमहि।

८४। लोङो-यात्, यास्तां, यासुस् ; यास्, यास्तं, यास्त ; यासं, यास्व, यास्म। सीष्ट, सीयास्तां, सीरन् ;

सीष्ठास्, सीयास्थां, सीध्वम् ; सीय, सीवहि, सीमहिङ् । किच्चाद्यर्द्धम् ।

[ लोङः ६।, यात्—सीमहिङ् ०१।।। ] । कित ०१।, च ०१।, आद्यर्द्धं (आदि अर्द्धे) ०१। ]

लोङः स्थाने अमो यादादयः स्युः । आद्यर्द्धं कित्संज्ञकञ्च स्यात् । ङकारस्तिङिति प्रत्याहारार्थः । भूयात्, भूयास्तां, भूयासुः । भूयाः, भूयास्तं, भूयास्त । भूयासं, भूयास्व, भूयास्म । वर्द्धिषीष्ट, वर्द्धिषीयास्तां, वर्द्धिषीरन् ; वर्द्धिषीष्ठाः, वर्द्धिषीयास्थां, वर्द्धिषीध्वं, वर्द्धिषीय, वर्द्धिषीवहि, वर्द्धिषीमहि ।

८५ । लः स्तिङि पूर्व्वार्द्धं शतृकसू च परस्मैपदम् ।

[ लः ६। तिङि ७।, पूर्व्वार्द्धं (पूर्व्व अर्द्ध) ०१।, शतृ-कस् १।।, च ०१।, परस्मैपद ०१। ]

तिङि विषये लादेशानां पूर्व्वार्द्धनवकं, शतृ, कसू च परस्मैपदसंज्ञकानि स्युः । परस्मैपदप्रदेशाः शेषात् कर्त्तरि परस्मैपद मित्येवमादयः (३।[illegible]।२०) ।

८६ । परार्द्धं मानश्चात्मनेपदं तङ् च ।

[ परार्द्धं (पर-अर्द्ध) ०१।, आनः ०१।, आत्मनेपदं ०१।, तङ् ०१।, च ०१। ]

तिङि विषये लादेशानां परार्द्धं नवकं शानकानयोरानश्च ते द्वे आत्मनेपदसंज्ञके भवतः, तङ्संज्ञके च ।

८७ । लुङः सिजातोऽन उस् । X

[ लुङः ६।, सिजातः (सिच्-आत) ५।, अनः ६।, उस् ०१। ]

सिजन्तादातश्च लङोऽन उस् स्यात्। अकार्षुः, अस्थुः, सिजात इति किम्? अभूवन्।

८८। लङोऽभ्यस्तविदो गुणश्चेकः।

[लङः ६।, अभ्यस्तविदः ५।, गुणः १।, च०१। इकः ६।]

अभ्यस्तसंज्ञकाद्विदश्च लङोऽन उस् स्यात्, इगन्तस्य गुणश्च। अजुहवुः, अददुः, ऐयरुः, अजक्षुः, अजागरुः, अशासुः, विदः— अविदुः अविदन्नित्येके।

८९। अनभ्यस्ताद्विषो वा।

[अनभ्यस्तात् (न-अभ्यस्त-आत) द्विषः ५।, वा०१।]

अनभ्यस्तादादन्ताद्विषश्च लङो अन उस् वा स्यात्। अयुः, अयान् वा, अद्विषुः, अद्विषन् वा।

९०। उस्यातो लुक्। [उसि ७।, आतः ६।, लुक्०१।]

अन उसि परे आतो लुक् स्यात्। अदुः, अदधुः।

९१ अन्तोदभ्यस्तात्। [अन्तः १।, अत०१।, अभ्यस्तात् ५।]

अभ्यस्तात् परस्यान्त स्थाने अद्भवति। जुह्वति, बिभ्यति, जक्षतु, जाग्रतु, बोभवतु।

९२। तङ्यनतः। [तङि ७।, अनतः (न-अत्) ५।]

आत्मनेपदेऽनदन्तात् परस्यान्त स्थाने अद्भवति। आसते व्यतिभाते, ददतां, व्यक्रीणत, अकुर्वत, अवर्द्धिषत, अनत इति किम्? च्यवन्ते।

९३ । शीङोरत् । [ शीङः ५।, रत् ०१। ]

शीङः परस्यान्त स्थाने रद्भवति । शेरते, शेरतां, अशेरत ।

९४ । वेत्तेर्व्वा । [ वेत्तेः ५।, वा ०१। ]

तङि वेत्तेरन्तो रद्वा स्यात् । संविद्रते, संविदते, समविद्रत, समविदत ।

९५ । भुवो वुगचि लुङ् लिटोः ।

[ भुवः ५।, वुक् ०१।, अचि ७।, लुङ् लिटोः ७॥ ]

अनयोरचि भुवो वुक् स्यात् । अभूवन्, बभूव, अस्थानि वत्त्वान्न लिङामि वोभुवाञ्चकार ।

९६ । दीङोर्युग्लिटि । [ दीङः ५।, युक् ०१।, लिटि ७। ]

लिङचि दीङोयुक् स्यात् । उपादिदीये ।

९७ । आत औ णलः । [ आतः ५।, औ ०१।, णलः ६। ]

आदन्तात्णल: स्थाने और्भवति । ययौ, ववौ, पपौ ।

९८ । तुह्योस्तातङाशिषि वा ।

[ तुह्योः ६॥, तातङ् ०१।, आशिषि ७।, वा ०१। ]

आशिषि विषये तु-हिस्थाने तातङ् वा स्यात् । करोतु, कुरुतात्, पुषाण, पुष्णीतात् ।

९९ । जेस्त्वन्त्वोरन्तद्रत । [ जेः ५।, त्वन्त्वोः ६॥, रन्तः १।, द्रत् ०१। ]

जेर्ल्लोटस्त्वन्त्वो रन्त द्रत् स्यात् । जयति, जयन्ति ।

१०० । अतोयेद्यामियश्च ।

[ अतः ५।, या०१।, इत्०१।, याम्०१।, इयम्०१।, च०१। ]

अतः परोलिङो या इत् स्यात्, याश्च इयम्भवति। भवेत्, भवेयम्, अतः किम्? पुनीयात्।

१०१ । आदिदपित् । [ आत्०१।, इत्०१।, अपित्०१। ]

अतः पर आकार इद्भवति। पचेताम्, जयेताम् अपिदिति किम्? यजावहै, अत इति किम्? व्यतिभाते।

१०२ । अतो दीर्घो वमि । [ अतः ६।, दीर्घः १।, वमि ७। ]

व,मयोः परयोरतो दीर्घः स्यात्। भवामि, भवावः, भवामः।

१०३ । युस्येत् । [ युसि ७।, एत्०१। ]

युसि परे अत एत् स्यात्। भवेयुः, दीव्येयुः, अतः किम्? पुनीयुः।

१०४ । प्रकृतीचः सीध्वंलुङ्लिटां धोढो यणहस्थेनिटोवा च ।

[ प्रकृतीचः (प्रकृति—इच्) ५।, सीध्वं—लुङ्—लिटाम् ६।।।, यणहस्थेनिटः (यन्-ह-स्थ-इन्-इट्) ५।, वा ०१।, च०१। ]

प्रकृतेरिचः परेषां सीध्वं, लुङ्लिटां धस्य ढः स्यात्। कृषीढ्वं चोषीढ्वं, लुङ् अच्योढ्वं, लिट् चकृढ्वे ; यण् हकार स्यात् इन् इटश्च विकल्पेन, यायिषीढ्वं, यायिषीध्वं वा, अग्राहिढ्वं, अग्राहिध्वं वा, अकारिढ्वं अकारिध्वम्वा। इट् लविषीढ्वं, लवि-

षीध्वं वा, दिदीविढ्वे, दिदीविध्वे वा, जग्रहिढ्वे, जग्रहिध्वे वा। इच इति किम्? भित्सीध्वम्, यण् इस्त इति किम्? आसिध्वम्।

१०५ दयासकाशायनेकाच्प्रत्ययेभ्यो निङाम् कृभ्वस्ति लिट् चानुः।

[दयाम् काशयनेकाच्प्रत्ययेभ्यः (दय, आस्, काश, अय्, अनेकाच्, प्रत्यय) ५।।, लिट् ०।।, आम०१।. कृभ्वस्ति (कृ भू-अस्ति) लिट्०१।, च०१, अनु. १। ]

दयादिभ्यः परस्य लिङाम् स्यात्, कृभ्वस्ति विहितो लिट चानुप्रयुज्यते। दयाञ्चक्रे, आसाम्बभूव, काशामास पलायाञ्चक्रे, अनेकाचः—चकासाम्बभूव, दरिद्राञ्चकार, चुलपाञ्चकार, चुलुम्पः सौत्रधातुः। प्रत्ययान्तात् चिकीर्षाम्बभूव, बोभूयाञ्चक्रे, नेन्याञ्चकार, कारयाम्बभूव, व्यवधानेऽपि तं पातयां प्रथममास पपात पश्चात्, पुत्रीयाञ्चकार, शब्दायाम्बभूव, बोभूयामास, अनेकाच्त्वे सिद्धे प्रत्ययग्रहणमेकाजर्थं तेन विप्याञ्चकार।

१०६ गुर्विजादेरनृच्छ्रणोः।

[ गुर्विजादेः (गुरु इच् आदि) ५।, अनृच्छ्रणोः (न —ऋच्छ ऊर्णु) ५। ]

गुरुरिच् आदिर्यावतस्तस्माल्लिट आम् भवति। कृभ्वस्ति लिट्चानु प्रयुज्यते। ईहाञ्चक्रे, उम्भाञ्चकार, इन्दाम्बभूव, छन्दसि न-लोपात् समीधे। अनृच्छ्रणोरिति किम्? आनर्च्छ, प्रोर्णुनाव, गुर्विजादेरिति किम्? इयेष।

## १०७। उषजागृविदोवा वेरगुणश्च।

[उष-जागृ-विदः ५।, वा०१।, वेः ६।, अगुणः (न-गुणः) १।, च ०१ ]

एभ्यो लिट् आम् वा स्यात्। कृभ्वस्ति लिटश्चानुप्रयोगः। ओषाञ्चकार, उवोष: जागरामास, जजागार, विदेरगुणः विदाञ्चकार, विवेद।

## १०८। भीह्रीभृहुवोद्विरतद्व्च।

[भी, ह्री, भृ, हुवः ५।, द्विः १।, अतः ६।, इत्०१।, च०१। ]

एभ्योलिडाम् वा स्यात्। कृभ्वस्ति विहितो लिट् चानु प्रयुज्यते, द्वित्वमतद्व्च। बिभयाञ्चकार, विभाय; जिह्रयाम्बभूव, जिह्राय; बिभरामास, बभार; जुहवाम्बभूव, जुहाव; एषां द्विरिति करणं मनुमापयति अन्यस्य लिङ्गाम कृते द्वित्वं न भवतीति।

## १०९। विदां करोत्विति लोटि वा।

[विदां करोतु, तिङन्तानुकरण -१।, इति ०१।, लोटि ७।, वा ०१। ]

विदेर्लोटि वा निपात्यते। इति शब्दः प्रकारार्थस्तेन सर्व्ववचनान्येव भवन्ति। विदां करोतु, विदां कुरुतां, विदां कुर्व्वन्तु। विदां कुरु इत्यादि—पक्षे वेत्तु, वित्तां विदन्तु।

## ११०। अथ धातोर्विकरणाः। अधिकारसूत्रम्।

## १११। लृङ्लृटोः स्यः। [लृङ्-लृटोः ७।।, स्यः १। ]

लृङि, लृटि च परे धातोरुत्तरे स्यः प्रत्ययो भवति। अभविष्यत्, भविष्यति।

११२। लुङि सिच्। [ लुङि ७।, सिच् ०१। ]

लुङि परे धातोः सिच् स्यात्। अचैषीत्, अह्रौषीत् अकार्षीत्।

११३। स्पृश-मृष-कृष तृप दृपो वा।

[ स्पृश—दृपः ५।, वा ०१। ]

एभ्योलुङि सिच् वा स्यात्। अस्प्राक्षीत्, अस्पार्क्षीत्, अस्पृक्षत्। अताप्सीत्, अत्राप्सीत्, अतृपत् एवं सर्व्वत्र।

११४। गाति स्था घु पिबति भूभ्योऽतङि लुक्।

[ गाति (गा), स्था, घु, पिबति (पा), भू-भ्यः ५।।।, अतङि (न-तङ्) ७।, लुक् ०१। ]

एभ्यः परस्मैपदे सिचो लुग्भवति। इणिकोर्गा लुङि (२।३।१०५) अगात्, अध्यगात्; अस्थात्; घु—अदात्, अधात्; पा—अपात्; भू—अभूत्; गाति, पिबतीति किम्? गै अगासीत्, पा रक्षणे—अपासीत् अतङीति किम्? अगायिषाताम्।

११५। घ्राधेशाच्छासो वा।

[ घ्रा-धे शा छा-सः ५।, वा०१। ]

एभ्योऽतङि सिचोलुग्वा स्यात्। अघ्रात्, अघ्रासीत्; अधात् अधासीत्; अशात्, अशासीत्; अच्छात्, अच्छासीत्; असात्, असासीत्।

११६ । ×तनादेस्तथासोरक्ञः ।

[ तनादेः (तन-आदि) ५।, त-थासोः ७॥, अ (न) क्ञः ५। ]

एभ्यस्तथासोः परयोः सिचो लुग्वा स्यात् । अतत, अतनिष्ठाः ; करोतेस्तु परेण नित्यमेव ।

११७ । ह्रस्वझलोझलि लोपोऽनागमात् ।

[ ह्रस्व—झलः ५।, झलि ७।, लोपः १।, अनागमात् (न-आगम) ५। ]

ह्रस्वान्तात्, झलन्ताच्च झलि परे सिचो लोपः स्यात् । वेति-निवृत्तम्-आहत, समस्कृथाः ; झलन्तात्—अभित्त, अवुद्ध, अभित्तां, अवात्ताम्, ह्रस्वादिति किम् ? व्यजेष्ट, झल इति किम् ? सममंस्त, झलीति किम् ? आहसाताम्, अनागमादिति किम् ? अकारिष्ठाः ।

११८ । इटईटि । [ इटः ५।, ईटि ७। ]

ईटि परे इट उत्तरस्य सिचो लोपः स्यात् । व्यकारीत्, अदेवीत्, आरोदीः

११९ । शषहइगुपान्तादृशोऽनिटः कसः ।

[ श-ष-ह-इगुपान्तात् (इक्-उपान्त) ५।, अ-(न) दृशः ५।, अनिटः ५।, कसः १। ]

शषहान्तादिगुपधादनिटो लुङि कसः स्यात् । सिचोऽपवादः । अदिक्षत्, अद्विक्षत्, अघुक्षत्, अदृश इति किम् ? अद्राक्षीत् । अनिट इति किम् ? अमोषीः ।

१२० । श्लिषः आलिङ्गने । [ श्लिषः ५।, आलिङ्गने ७। ]

श्लिषः कसः स्यात् । अश्लिक्षत् कन्याम् । आलिङ्गन इति किम् ? समाश्लिषत् जतुः काष्ठम्

१२१। लुग्वा दुहदिहलिहगुहां तथधवेषु तङि।

[लुक् ०१।, वा ०१।, दुह-दिह-लिह-गुहां ६।।।, त-थ-ध-वेषु ७।।।, तङि ७। ]

दुहादेस्तथधवेषु परतस्तङि लुग्वा स्यात्। अदुग्ध अधुक्षत; अदिग्धाः अधिक्षथाः; अलीढ्वं (१) अलिक्षध्वं, अगुह्वहि, अघुक्षावहि। ईषत्पृष्टतरवकारोऽयं तेनाफलपरत्वात् ढत्वाभावः। दुहेश्च घत्वं नास्ति। अदुग्वहि, अधुक्षावहि।

१२२। णि-श्रि द्रु-स्रु-कमः कर्त्तरि चङ्।

[णि-श्रि द्रु स्रु कमः ५।, कर्त्तरि ७।, चङ् ०१। ]

ण्यन्तादेर्लुङि कर्त्तरि चङ् स्यात्। णेः-अचीकरत्, श्रादेः अशिश्रियत्, अदुद्रुवत्, असुस्रुवत्, अचकमत्; कर्त्तरीति किम्? अकारयिषातां कटौ तेन।

१२३। धेश्विभ्यां वा। [धे, श्विभ्यां ५।।, वा ०१। ]

धेटः श्वयतेश्च लुङि, चङ् वा स्यात्। अदधत्, अधासीत्, अधात्; अशिश्वियत्, अश्वयीत्, अश्वत्। कर्त्तरीत्येव अधिषातां गावौ वत्सेन।

१२४। ऋ सृ शास्ति सु ख्या वचोऽङ्।

[ऋ-सृ-शास्-अस्-ख्या वचः ५।, अङ् ०१। ]

एभ्यो लुङि कर्त्तर्यङ् स्यात्। आरत्, समारन्त, असरत्, अशिषत्, आस्थत्, पर्य्यास्थन्त, आख्यत्, अवोचत्।

(१) लिह ध्वं अड़ागमः, होढ़ोदादेस्तु इति हस्य ढकार, ढ़ना धाघटु इति ध्व इत्यस्य धकारस्य ढकारो ढ़ुलोप इति ढकार लोपः पूर्व्वेस्येकार दीर्घश्च अलीढ्वं।

१२५। क्लृलिपि सिचः। [क्लृ-लिपि-सिचः ५।]

एभ्योलुङ्यङ् स्यात्। आक्लृत्, अलिपत्, असिचत्,। तङि वा। आक्लृत आक्लास्त ; अलिपत, अलिप्त ; असिचत, असिक्त।

१२६। ऌदिद्द्युतादिपुषादिभ्योऽतङि।

[ऌदित्-द्युतादि-पुषादिभ्यः ५।।।, अ(त) तङि ७।]

ऌदितो, द्युतादेश्च, पुषादेश्च परस्मैपदे लुङि अङ् स्यात्। अगमत्, अशकत्, व्यद्युतत्, अश्वियत्, अपुषत्, अशुषत् पुषादि दिवाद्यन्तर्गण: तेनाऽन्यत्र अपोषीत्।

१२७। इरिज्जॄ श्वि स्तम्भु म्रुचु म्लुचु ग्रुचु ग्लुञ्चो वा।

[इरित्-जॄ-श्वि-स्तम्भु-म्रुचु-म्लुचु ग्रुचु- ग्लुञ्चः ५।, वा०१।]

इरिदादिभ्योलुङ्यङ् वा स्यात्। अभिदत् अभैत्सीत्, अजरत्, अजारीत्, अश्वत्, अश्वयीत्, अशिश्वियत्, अस्तभत्, अस्तम्भीत्, अम्रुचत्, अम्रोचीत्, अम्लुचत्, अम्लोचीत् अग्रुचत्, अग्रोचीत्: अग्लुचत्, अग्लुञ्चीत्, केचिद्ग्लुञ्चे नलोपं नेच्छन्ति अग्लुञ्चदिति।

१२८। श्वि वचो रङि श्व वोचौ।

[श्वि, वचोः ६।।, अङि ७।, श्व-वोचौ १।।]

अनयोरङि परे श्ववोचौ स्याताम्। अश्वत्, अवोचत्।

१२९। अस्यते रस्थः। [अस्यतेः ६।, अस्थः १।]

अस्यतेरङि अस्थः स्यात्। आस्थत्।

१३०। पतेः पुम्। [पतेः ६।, पुम् ०१।]

पतेरङि पुम् स्यात्। अपप्तत्।

१३१। इण् त पदः। [इण् ०।१, ते ७।, पदः ५।]

लुङि तकारे परतः पद्यतेरुत्तरे कर्त्तरि इण स्यात् उदपादि शस्यं, त इति किम्? उदपत्सातास्।

१३२।* दीप जन बुध पूरि तायि प्यायो वा।*

[दीप-जन-बुध पूरि-तायि-प्यायः ५।, वा ०।१।]

दीपादेर्लुङि त भूते इण् वा स्यात्। क्रुद्धोऽदीपि, अदीपिष्ठ, अजनि, अजनिष्ट; अबोधि, अबुद्ध; अपूरि अपूरिष्ट; अतायि अतायिष्ट; अप्यायि, अप्यायिष्ट।

१३३। कर्म्मकर्त्तरि न रुधतपोर्वाच दुहाचोः।

[कर्म्मकर्त्तरि ७।, न ०।१।, रुध, तपोः ६।।, वा ०।१।, च ०।१।, दुहाचोः (दुह अच्) ६।।]

वक्ष्यमाण इण् कर्म्मकर्त्तरि रुधतपोर्न स्यात्, वाच-दुहाचोः। अरुद्ध गौः स्वयमेव, अतप्त तपस्तापसः, दुहेरजन्तस्य च वा अदुग्ध गौः स्वयमेव अदोहि वा; अकृत कटः स्वयमेव अकारि वा अलविष्ट केदारः स्वयमेव अलावि वा; इह विकरणस्य निषेधो नागमस्येण: अकारिषाताम्।

१३४।* णिस्नुनमश्रन्थिग्रन्थिब्रुकिरादिसनात्मनेपदाऽकर्म्मकाणां न यगिणौ।

[णि स्नु-श्रन्थि ग्रन्थि ब्रु-किरादि-सन-आत्मनेपद-अकर्म्मकाणां ६।।।, न ०।१।, यक् इणौ १।।]

ण्यन्तादेः कर्म्मकर्त्तरि यगिणौ न स्याताम्। अत्र पारिशेष्यात् कर्त्तरि विहित विकरण एव। कारयते कटः स्वयमेव प्रस्नुते गौः स्वयमेव प्रास्नोष्ट स्वयं, नमते दण्डः स्वयमेव अनंस्त

स्वयं। ग्रन्थते माला स्वयमेव अग्रन्थिष्ट स्वयं, ब्रूते कथा स्वयमेव अवोचत, किरते हस्ती स्वयमेव अकीर्ष्ट स्वयं; समन्तात् चिकीर्षते कटः स्वयमेव अचिकीर्षिष्ट स्वयं, तङ् अधिकारे येऽकर्म्मकास्तेषां विकुर्व्वते सैन्धवाः स्वयमेव स्वयमश्वोव्यकृत, कथं चेतांसि विक्रियन्ते व्यवस्थितविभाषाया अनुवृत्तेः।

१३५। दुहेर्न यक्। [दुहेः ५।, न ०१।, यक् ०१। ]

दुहेर्यक् न स्यात्। दुग्धे गौः स्वयं, लङ् अदुग्ध गौः स्वयं।

१३६। क्षिपिरञ्जोर्यकि वा परस्मैपदम्।

[क्षिपि, रञ्जोः ६।।, यकि ७।, वा ०१।, परस्मैपदम् १। ।

अनयोः कर्म्मकर्त्तरि यग्विषये परस्मैपदं वा स्यात्। क्षुभ्यति पादः स्वयमेव क्षुभ्यते वा; रज्यति वस्त्रं स्वयमेव रज्यते वा स्वयमन्वरज्यदनुसारकः।

१३७। कर्म्मस्थधात्वर्थे कर्म्मवत् कर्म्मकर्त्ता। (१)

[ कर्म्मस्थधात्वर्थे (कर्म्मस्थ-धातु-अर्थे) ७।, कर्म्मवत् ०१।, कर्म्मकर्त्ता १। ]

कर्म्मस्थायां क्रियायां सत्यां कर्म्मणा तुल्यक्रियः कर्त्ता कर्म्मवद्भवति। इण्यगात्मनेपदार्थं। अपाभ्योदनः स्वयमेव भिद्यते

(१) धातोरर्थं क्रियोच्यते, क्रिया हि द्विविधा काचित् कर्म्मसमवायिनी, काचित् कर्त्तृसमवायिनीति, तत्र कर्म्मसमवायिन्यां क्रियायां सत्यां कर्म्मणा तुल्यक्रियः कर्त्ता कर्म्मकर्त्ता, शाकपार्थिवादित्वान्मध्यपदलोपः समासः, कर्म्मवद्भवति अयमर्थः यदा एकस्यां क्रियायां यस्य कर्म्मत्वमासीत् तत्रैव तस्य कर्त्तृत्वं विवक्ष्यते तदा तस्य कर्त्तृत्वमतिदिश्यते, एकस्यापि कर्म्मकर्त्तृत्वयोस्तुल्यक्रियत्वमबाधितमेव तथाहुक्तं क्रियमाणन्तु यत्

कुशूलः स्वयमेव, कर्म्मस्थेति किम्? कर्त्तृस्थे माभूत्। गच्छति ग्रामः स्वयमेव कथं कर्त्तृस्थे आरोहयते हस्ती हस्तिपकं स्वयमेव, विशेषविधानात्तङ्। क्वचित् दुहिपच्योः सकर्म्मकयोः कर्म्मवत् दुग्धे गौः क्षीरं स्वयमेव, उडुम्बरो लोहित फलं पच्यते, क्वचित् करणेनतुल्यक्रियः कर्त्ता कर्म्म वद्भवति। परिवारयति कण्टकै वृक्षं जनः, परिवारयन्ते वृक्षं कण्टकाः स्वयमेव।

१३८। तपस्तपः कर्म्मकस्यैव। ×

[ तपः ६।, तपःकर्म्मकस्य ६।, एव ०१। ]

तपः कर्म्मकस्यैव तपःकर्त्ता कर्म्मवद्भवति। तप्यते तपः स्तापसः तपःकर्म्मकस्यैवेति किम्? वितपति पृथिवीं सविता (सूर्य्यः)।

१३९। दुष् ते लुङ्भावकर्म्मणाः।

[ दुष् ०१।, ते ७।, लुङि ७।, भावकर्म्मणोः ७।। ]

कर्म्म स्वयमेवहि सिध्यति, सुकरैस्तद्‌गुणै वुद्धाः कर्म्मकर्त्तेति तद्विदः "किञ्च" स्वव्यापारे हि कर्त्तृत्वं सर्व्वत्रैवास्ति कारके व्यापारभेदापेक्षायां करणत्वादिसम्भव" इति। यस्मिन् कर्म्मणि कर्त्तवस्थां प्रतिपन्नेऽपि तादृशी क्रिया लक्ष्यते यादृशी कर्म्माऽवस्थायां स कर्त्ता कर्म्मवद्भवतीति न्यासकृतः; कर्म्मणि यानि विहितानि यक् यगात्मने पदानि तानि कर्म्म कर्त्तर्य्यतिदिश्यन्ते। "कर्म्मस्थेऽपि च धात्वर्थे कर्म्मकर्त्ता च कर्म्मवत् कर्त्तृस्थेऽपि च धात्वर्थे कर्म्मकर्त्ता च कर्त्तृवदित्युक्तेः, कर्म्मस्थः पचतेर्भावः कर्म्मस्थाश्च भिदादयः। कर्म्मस्थाः कर्म्मभावस्थाः गमनादयस्तु कर्त्तृस्थाः; कर्त्तृस्थो वुध्यतेर्भावः कर्त्तृस्थाश्च गमादयः" इति सिद्धान्तकौमुदी टीका।

त-भूते लुङि भावकर्म्मणोर्द्धातोरिण् स्यात्। अभावि कटेन, अदोहि गौर्गोपेन।

१४०। न तपोऽनुतापे। [न ०१।, तपः ६।, अनुतापे ७। ]

इणास्ति। आत्मनाऽतप्त पापेन कर्म्मणा।

१४१। इणस्तलुक्। [इणः ५।, तः ६।, लुक् ०१।]

सामान्येन इणः परस्य लङ्तकारस्य लुक् स्यात्। समपादि शस्यम्।

१४२। सार्व्वधातुके यक्।

[सार्व्वधातुके ७।, यक् ०१।]

भावकर्म्मणोः सार्व्वधातुके यक् स्यात्। भूयते, क्रियते कटः।

१४३। कर्त्तरि शबनदक्कादियङ्लुकः। (२)

[कर्त्तरि ७।, शप् ०१।, अनदक्कादि यङ्लुकः (न-अद, ह्ल-आदि यङ्लुक) ५।]

अदादिजुहोत्यादियङ्लुगन्तादन्यस्माद्धातोः कर्त्तरि सार्व्वधातुके परतः शप्प्रत्ययो भवति। भवति, पचति, चिकीर्षति, पुत्रीयति, कारयति; अनदक्कादेरिति किम्? अत्ति, जुहोति, बोभोतीति।

(२) अद भक्षणे, हु दाने, तौ अदह्लु, अद हु आदी येषां गणपठित धातूनां ते अदक्कादयः, ते च यङ्लुक् च समाहारे द्वन्द्वः अदक्कादि यङ्लुक् न अदक्कादि यङ्लुक्, अनदक्कादि यङ्लुक्, पर्य्युदासे नञ्, तस्माद्धातोः कर्त्तृवाचिनि सार्व्वधातुके शप् भवति। शपः शकार, पकारौ चित्कार्थौ।

१४४। दिवादिभ्यः श्यन् ।

[ दिवादिभ्यः ५।।।, श्यन् ०१। ]

शपोऽपवादः। दिवादेः सार्व्वधातुके श्यन् स्यात्। दीव्यति, सीव्यति।

१४५। वा भ्राश, भ्लाश, भ्रमु, क्रमु, क्लमु, त्रसि, त्रुटि, लसः।

[ वा ०१।, भ्राश -लसः ५। ]

एभ्यः श्यन् वा स्यात्। भ्राश्यते, भ्राशते; भ्लाश्यते, भ्लाशते; भ्रमु चलने, भ्रमु अनवस्थाने, द्वाभ्यामेव भ्राम्यति, भ्रम्यति, भ्रमति क्राम्यति, क्रम्यति, क्रामति, क्लाम्यति, क्लामति; त्रस्यति, त्रसति। त्रुट्यति, त्रुटति; लस्यति, लसति।

१४६। समोयसः केवलाच्च।

[ समः ५।, यसः ५।, केवलात् ५।, च ०१। ]

संपूर्व्वाद्यसोदैवादिकाच्च श्यन् वा स्यात्। संयस्यति, संयसति, यस्यति, यसति; अन्यतोनित्यमेव प्रयस्यति।

१४७। स्वादिभ्यः श्नुः। [ स्वादिभ्यः ५।।।, श्नुः १। ]

स्वादेः शपोऽपवादः श्नुः स्यात्। सुनोति, मिनोति।

१४८। क्षवि, धिवि, श्रुवां, क्ष, धि, ष्ट, च।

[ क्षवि, धिवि, श्रुवां ६।।।, क्ष, धि, -ष्ट ०१।।।; च ०१।।। ]

क्ष्व्यादेः श्नुः स्यात्। क्ष्याद्यादेशाश्च; क्षणोति, शृणोति।

१४९। अक्षो वा। [ अक्षः ५।, वा ०१। ]

अक्षः श्नुर्वा स्यात् । अक्ष्णोति, अक्षति ।

१५० । तनूकृतौ तक्षः । [तनूकृतौ ७।, तक्षः ५।]

तक्षः श्नुर्वा स्यात् । तक्षति, तक्ष्णोति, तनूकृताविति किम् ? सन्तक्षति वाग्भिः ।

१५१ । तुदादिभ्यः शः । [तुदादिभ्यः ५।।।, शः १।]

एभ्यः शः स्यात् । तुदति, नुदति ।

१५२ । रुधादेः श्नम् । [रुधादेः ५।, श्नम् ०१।]

एभ्यः श्नम् स्यात् । रुणद्धि, भिनत्ति ।

१५३ । तनादिभ्य उः । [तनादिभ्यः ५।।।, उः, १।]

एभ्यः उः स्यात् । तनोति, सनोति ।

१५४ । क्रादेः श्ना प्वादिह्रस्वश्च ।

[क्रादेः ५।, श्ना ०१।, प्वादि (पू-आदि) ह्रस्वः १।, च ०१।]

एभ्यः श्नाप्रत्ययः स्यात् । प्वादीनां ह्रस्वश्च । क्रीणाति, पुनाति ।

१५५ । स्तम्भ स्तुम्भ स्कम्भु स्कुम्भु स्कुभ्यः श्नुश्च ।

[स्तम्भ, स्तुम्भ, स्कम्भु, स्कुम्भ, स्कु, भ्यः ५।।।, श्नुः १।, च ०१।]

स्तम्भादिभ्यः सौत्रेभ्यः श्नुः स्यात् । श्ना च स्तभ्नोति, स्तभ्नाति, स्तुभ्नाति, स्तुभ्नोति ; स्कभ्नोति, स्कभ्नाति ; स्कुभ्नोति, स्कुभ्नाति ; स्कुनोति, स्कुनाति । उक्ता विकरणाः

इति श्रीपद्मनाभदत्तकृतौ सुपद्मव्याकरणे तृतीयस्याध्यायस्य द्वितीयः पादः ।

---

# अथ तृतीयाध्यायस्य

## तृतीयः पादः

(पदकदम्ब-साधन-प्रकरणम्)

१। ज्झल्भ्यो हेर्धिः शा शासेश्चास्तेरेत्।

[ जुझल्भ्यः ५।, हेः ६।, धिः १।, शा ०१।, शासेः ६।, च०।, अस्तेः ६।, एत् ०१।]

जुहोतेर्झलन्ताच्च हेर्धिः स्यात्, शासेश्च शा, अस्तेश्च एद्भवति। जुहुधि, भिन्धि, छिन्धि, शाधि, एधि। (१)

२। हलः श्ना आनश् हौ।

[ हलः ५।, श्ना ०६।, आनश् ०१।, हौ ७। ]

(१) अत्र चकारः समुच्चयार्थः ननु झलन्तादनयोर्हेर्धौ सिद्धे आदेशमात्रं विधीयते इति केचित्, अनयोः परत्वान्नित्यत्वाच्च आदेशे कृते झलन्ताभावात् हेर्धित्वेऽप्युभयं विधीयत इति केचित्। इति विष्णुमिश्रः शादेशस्य निरवकाशत्वात् धिआदेशो न भवतीति विष्णुमिश्रः। जुहुधि-हु+लोट् हि अनेन हि स्थाने धि, जुहुत्वादेरिति (१०।४।२) हुकारद्वित्वं। चजमहोजः (१०।४।३) इति पूर्व्व हकारस्थाने जकारः, भिदिर्विदारणे इत्यस्मात् लोट् हि, हि स्थाने धिः, रुधादित्वात् (१५।२।२।३) श्नम्, श्नमस्त्वो रतः (३।३।८) इत्यनेन श्नमः अकारलोपः झयो-झयिसवर्णे इति (७६।२।१) दकारलोपः। एवं छिद इत्यस्य छिन्धि। शास+हि हि स्थाने धिः, शासः स्थाने शा, शाधि अस+हि, हि हिस्थाने धि, असस्थाने ए एधि।

८ । कुर् ङिन् सार्व्वधातुके । [कुर० १।, ङिन्सार्व्वधातुके ७। ]

ङित्-सार्व्वधातुकविषये करोतेः कुरादिश्यते । कुरुतः कुर्व्वन्ति ङिति किम् ? करोति । (१)

९ । असस्तोरतः । [अस—अस्तोः ६।, अतः ६ । ]

लगित्येव-ङित्सार्व्वधातुके असधास्तोश्चातोलुक् स्यात् । रुन्धः, रुन्धन्ति, स्तः, सन् ; अत इति किम् ? परत्वाल्लङि वृद्धौ सत्यां—आस्तां, आसन् । (२)

१० । सः सि । [ सः ६।, सि ७। ]

---

(८।३।२) कृ स्थाने कुर् उप्रत्ययः तस्य लोपः, कृ+यात् कुर्य्यात् । परत्वादन्तरङ्गत्वाच्च कुरादेशे कृते उप्रत्ययः ।

(१) कृ+तस्, कुरादेशः उ प्रत्यय न गुण वृद्धीति ( ६६।४।३ ) न गुणः, कुरुतः, कुर्व्वन्ति, कृ+अन्ति, कुरादेशः उप्रत्ययः इकोयणचीति उकार स्थाने व । करोतीत्यत्र तु ङित्त्वाभावात् न कुरादेशः, ऋकारस्य (८४।४।३) गुणः ।

(२) रुध+तस् अम् (न) अम् इत्यस्य अकार लोपः त स्थाने ध ( ७६।२।१ ), झयोझयीति धकार लोपः, रुन्धः रुध+अन्ति अम् तस्य अकार लोपः, रुन्धन्ति, अस्+तस् अकार लोपः स्तः, अस्+शतृ अकार लोपः सत् शब्दः पुं प्रथमैक वचनं, स्त्री सती । लङि वृद्धि विधायकसूत्रस्य परवर्त्तित्वात् तेनाटकारलोपं बाधित्वा प्रथमं वृद्धिः वृद्धौ सत्याञ्च अकाराभावान्न लोपः । अस+लङ् तां अकार वृद्धिः आस्तां अस+लङ् अन् अकार वृद्धिः आसन् ।

लुगित्येव-अस्तेः सकारस्य लुक् स्यात्। व्यतिसे पिति च वक्तव्यम् असि। (१)

११। ह एति। [हः ११, एति ७।]

एति परे अस्तेः सोहः स्यात्। व्यतिहे। (२)

१२। श्नाभ्यस्तयोरातः। [श्ना—अभ्यस्तयोः ६॥, आतः ६।]

ङित् सार्व्वधातुके अनयोरात् लुक् स्यात्। पुनन्ति, अपुनन्; ददति, जाग्रति, दद्यात्। (३)

१३। ई हल्यघोः। [ई ०१।, हलि ७।, अघोः (न-घु) ६।]

---

(१) अस्तेरित्यनुष्वज्यते, सकारे ङितीत्यवगन्तव्यं। व्यतिसे कर्त्तरि क्रियाविनिमये (५।३।१।३) इति आत्मनेपदं वि+अति+अस्+से अकार लोपः, सलोपः। ननु अस्तेः सार्विति वीनर्चित सूचितम् तदभावात् कथं तद्ववेदित्याह पिति चेति वक्तव्यं वक्तव्यं, व्याख्येयमित्यर्थः स इति योगविभागात् पित्यपि सकारे लच्यार्थवोधो भवति।

(२) व्यतिहे इत्यत्र पूर्व्ववत् तङ् वि+अति+अस+ए, अकार लोपः, स स्थाने हः।

(३) पु+लट् अन्ति श्ना (ना), तस्य आकार लोपः पुनन्ति, पु+लङ् अन् श्ना तस्य आकार लोपः। ददति दा+अन्ति आकार लोपः, द्वित्वं अन्तोऽदभ्यस्तादिति (६।१।२।३) अन्तस्थाने अत्, जाग्रति जा+यङ् लुक् जा इत्यस्य द्वित्वं (७।४।३) जा।ग्रा+लट् अन्ति आकार लोपः, अन्ति स्थाने अत्। दद्यात्, दा+लिङ् यात् दा इत्यस्य द्वित्वं अभ्यासकार्यः आकार लोपः दद्यात्।

हलि परे श्नाभ्यस्तयोरात ईत् स्यात् । पुनीतः, पुनीयात्; जिहीते, जिहीयात्; अघोरिति किम्? धत्ते, दद्यात् । (१)

१४ । इद्दरिद्रातेः । [इत्०१।, दरिद्रातेः ६। ]

ङित् सार्व्वधातुके दरिद्रातेरीत्वापवाद इत् स्यात् । दरिद्रितः, दरिद्रियात्; हलीत्येव दरिद्रति । (२)

१५ । भीहाकोर्व्वा । [ भी-हाकोः ६॥, वा०१। ]

हलि तत्र भीहाकोरिद्वा स्यात् । भिय ईत इत् विभितः; बिभीतः; बिभियात्, बिभीयात्; जहितः, जहीतः । आ च हौ, जहिहि, जहीहि जहाहि च । (३)

१६ । लोपोऽयि । [लोपः १।, यि ७। ]

यादौ तत्र जहातेरातो लोपः स्यात् । जह्यात्, जह्युः ।

१७ । श्नोतः श्नानि । [श्नोतः ६।, श्नानि ७ ।]

(१) पु+तस् श्ना आकार स्थाने ईकारः, पुनीतः, पु+लिङ् यात् श्ना आकार स्थाने ईकारः, हा+लटते आकार स्थाने ईकारः हीकार द्वित्वं, अभ्यास ह्रस्व ह स्थाने ज जिहीते, हा+यात् जिहीयात ।

(२) दरिद्रा+तस् आकार स्थाने इकारः दरिद्रितः, दरिद्रा+यात् आकार स्थाने इकारः दरिद्रियात्, दरिद्रा+अन्ति आकार लोपः अन्ति स्थाने अत् ।

(३) हा हि प्रत्यये परे हाक इत्यस्य आकारस्य आकारस्य वा आकारस्य ईत्वाद्यपवादार्थं विकल्पद्वयेन पदत्रयार्थस्य येन जहीहि प्रोक्तं सैदेहि, अहिहि विहिद्यं, जहाहि प्रमदावन मिति भट्टिः ।

श्यनि परे ओदन्तस्योतो लोपः स्यात्। सोऽध्यवस्यति, दो—द्यति।

१८। शमादेर्दीर्घः। [शमादेः (शम-आदि) ६।, दीर्घः १।]

श्यनि शमाद्यष्टस्य दीर्घः स्यात्। शाम्यति, शमु, तमु, दमु, श्रमु, भ्रमु, क्षमु, क्लमु, मदी।

१९। ष्ठिवुक्लम्वाचमां शिति।

[ष्ठिवु क्लमु—आचमां ६।।।, शिति ७।]

एषां शिति दीर्घः स्यात्। निष्ठीवति, क्लामति, आचामति।

२०। क्रमः परस्मैपदे। [क्रमः ५।, परस्मैपदे ७।]

शिति दीर्घः स्यात्। क्रामति, क्रामन्, नेह क्रमते।

२१। स्थादेस्तिष्ठादिः।

[स्थादेः (स्था-आदि) ६।, तिष्ठादिः (तिष्ठ-आदि) १।]

शिति स्थादेस्तिष्ठादिरादिश्यते। तिष्ठति। पाघ्रोः पिब, जिघ्रौ। पिबति, जिघ्रति। ध्मोधमः। धमति। म्नोमनः। आमनति। दाणयमोर्यच्छः। यच्छति। दृशेः पश्यः। पश्यति। ऋत्तेर्ऋच्छः। ऋच्छति। सर्त्तेर्धाव वेगे। धावति, अन्यत्र सरति। शदसदोः शीयसीदौ। शीयते, सीदति। इषोरिच्छः। इच्छति। गमोगच्छ। गच्छति। ज्ञाजनोर्जा। जानाति, जायते, शितीत्येव पाति।

२२। अदाद्युतो वृद्धिः पिति हलि।

[आद्युतः (अदादि + उत्) ६।, वृद्धिः १।, पिति ७।, हलि ७।]

पिति हलादौ सार्व्वधातुके अदादेरुदन्तस्य वृद्धिः स्यात्। रौति, रौषि, नौति, कौति, स्तौति हलीति किम्? रवाणि, रवीति, स्तवीति ईट् वैदिके।

२३। ऊर्णोर्न लङि वाऽन्यस्मिन्।

[ ऊर्णोः ६।, न१०', लङि ७।, वा०१।, अन्यस्मिन् ७।]

उर्णोस्तव लङि वृद्धिर्नास्ति। प्रौर्णोत्, प्रौर्णोः ; वाऽन्यस्मिन् प्रोर्णौति, प्रोर्णोति पितीत्येव प्रोर्णुतः।

२४। अदेत्तनुहः। [ अत्०१।, एत्०१।, तनुहः ६।]

पिति हलि तृहेः अमोऽदेद्भवति। तृणेढि, अतृणेट्।

२५। ब्रुव ईट्। [ब्रुवः ५।, ईट्०१।]

पिति हलि ब्रुव ईट् स्यात्। ब्रवीति, ब्रवीतु ; पितीत्येव ब्रूयात् ; हलित्येव ब्रवाणि।

२६। यङ् लुको वा। [ यङ्लुकः ५।, वा०१।]

पिति हलि यङ्लुगन्तादीट् वा स्यात्। लालपीति, लालप्ति ; बोभवीति, बोभोति ; पितीत्येव व्यतिबोभूते।

२७। रुदादेरिड्यचि।

[रुदादेः (रुद-आदि) ५।, इट्०१।, अयचि (न—य्-अच्) ७ ]

अयचि सार्व्वधातुके रुदादेरिट् स्यात्। रोदिति, रुदितः इडागमः परवद्भिति न गुणः अयचीत्येव रुद्यात्, रुदन्ति रुदि स्वपि, श्वसि, अनि, यक्षि।

२८। ईडीशभ्यां से ध्वे च।

[ ईडीशभ्यां (ईड् ईश्) ५।II, से ७।, ध्वे ७।, च० । ]

आभ्यां से ध्वे च परे ईट स्यात्। ईडिषे, ईशिषे ; ईडिध्वे, ईशिध्वे। (१)

२९। सिचोदिस्योरीट्।

[ सिचः ५।, दिस्योः ७।I, इट ०१। ]

दिस्योः परतः श्रूयमाणसिच उत्तरे ईट् स्यात्। अवादीत्, अकार्वीत्। सिपि माङि भियो वा। मा भैषीः, मा भैः। (२)

३० अस्तेर्लङि। [अस्तेः ५।, लङि ७। ]

दिस्योरीट् स्यात्। आसीत्, आसीः।

३१। रुदादेरञ्च। [ रुदादेः ५।, अत्० १।, च० ।। ]

रुदादेर्लङि दिस्यो रत् स्यात्। ईट् च इटोऽपवादः (३।३।२७)

(१) अनीशोडः सध्वे इति चन्द्रगोमिना सूत्रयित्वा अनजनने इत्यस्य व्यतिजज्ञिध्व, इत्युदाहृतम्, तस्य छान्दसत्वादुपेक्षितमाचार्य्येण ।

(२) श्रूयमाणसिच इति वचनात् सिचो लुकि न भवति, यथा अगात्। अवादीत् वद+लुङ दिप् अडागमः (२।४।३) सिच्, सिचः उत्तर ईट्, सिचि परे इट्, इटि वघोरतोन्तात इति (७४ ४।३) वृद्धिः इटः ईटीति सिचोलपः (११८।२।३) ईकार दीर्घः अवादीत्, अकार्वीत् कृ+लुङ् दिप, अडागम सिचि वृद्धिरिति (७१।४।३) वृद्धिः सिच उत्तर ईट्। मा+भी+लुङ् दिप् माभैषीः, पक्षे माभैः।

अरोदत्, अरोदीत्; अरोदः, अरोदीः; अस्वपत्, अस्वपीत्; अस्वपः, अस्वपीः। (१

३२। अदः। [अदः ५।]

अदेर्लङि दिस्योरत् स्यात्। आदत्, आदः। (२)

३३। दिपि सस्तः सिपि वा।

[दिपि ७।, सः १।, तः १।, सिपि ७।, वा० १।]

दिपि सान्तस्य सस्तः स्यात्। अशात्, अचकात्; अशास्त्वं, अशास्त्वं वा नास्तेरिड्व्यवधानात् आसीः। (३)

३४। दधो रुः। [दधोः ६।।, रुः १।]

लङि सिपि दस्य धस्य च रुः स्याद्वा। अभिनस्त्वं, अभिनत्त्वं वा, अरुणस्त्वं, अरुणत्त्वं वा; नर्दयङ्लुकि रलोपदीर्घत्वे अनानाः, गधोर्भषन्ताचकत्वात् (८२।३।२) गस्य घत्वे कृते धस्य रुत्वे अजघाः। (५)

---

(१) रुदादेरिडचि इत्यनेन प्राप्तस्य।

(२) अच चानुकृष्टं न सर्व्वमिति परिभाषया, अदित्यनुवर्त्तते, न ईट् इति विष्णुमिश्रः।

(३) स इति सान्तस्य धातोः नास्तेरिति; टिदागमः परवदिति न्यायात् इटः प्रत्ययत्वमतिदिश्यते ततश्च प्राप्तो निषेधः।

(४) दधोरिति दान्तधान्तयोः ग्रहणं अनानाः नर्दे यङलुकि मानर्द नद् सिप् अडागमः दकारस्य रत्वे कृते "ढ्लोपो ढ्रोरिति (७२।२।१) इति र लोपः पूर्व्वदीर्घश्च। अनानाः एवं गृध इत्यस्य अजघाः। चरिक्री च लुकीति अभ्यासान्तम् (५०।४।३)।

३५ । शीङः शे सार्व्वधातुके । X

[ शीङः ६।, शे ०१।, सार्व्वधातुके ७। ]

सार्व्वधातुकमात्रे शीङः शे स्यात् । शेते, शयाते, शयानः ।

३६ । शय् यि क्ङिति । [ शय् ०१।, यि ७।, क्ङिति ७। ]

यादौ क्ङिति प्रत्यये शीङः शयादिश्यते । शय्यते, संशय्यमानः, आशय्यते, शय्या, क्ङितीति किम् ? शेयम् ।

३७ । प्रादेरूहो ह्रस्वः । [ प्रादेः ५।, ऊहः ६।, ह्रस्वः १। ]

यादौ क्ङिति प्रादेरूहो ह्रस्वः स्यात् । समुह्यते, समुह्यमानः, अत्युह्य गतः । क्ङितीत्येव अत्यूह्योऽयमर्थः ।

३८ । ह्रस्वस्य दीर्घोऽकृत्सार्व्वधातुके ।

[ ह्रस्वस्य ६।, दीर्घः १।, अ(न) कृत्सार्व्वधातुके ७। ]

अकृत्सार्व्वधातुके क्ङिति यकारे च परे ह्रस्वान्तस्य दीर्घः स्यात् । भूयायते, चीयते, वल्गयति, तोस्तूयते, स्तूयते ; अकृत् सार्व्वधातुक इति किम् ? प्रकृत्य, सुनुयात्, चिनुयात् । अतो दीर्घो न यकि । सुख-सुख्येयुः ; चिकीर्ष्यते ; अतः (९३। ३।३) इत्यतोलुक् ।

३९ । इणो न लोङि प्रादेः ।

[ इणः ६।, न ०१।, लोङि ७।, प्रादेः ५। ]

प्रादेरुत्तरस्य इणोलोङि दीर्घो न स्यात् । उदियात्, अन्वियात्, प्रादेरिति किम् ? ईयात् । (१)

---

( १ ) प्रादिर्विंशतिरुपसर्गाः ।

४०। ऋतो री। [ऋतः ६।, री ०१।]

अकृत्सार्व्वधातुके क्ङिति यकारे ऋतो री स्यात्। मात्रीयते, चेक्रीयते, त-परः किम्? निजेगिल्यते, चेकीर्य्यते।

४१। रि लोङ्यकोः श्रे रियः।

[रि ०१।, लोङ्यकोः ७।।, श्रे ७।, रियः १।]

लोङि, यकि च ऋतो रिः स्यात्, श्रे रियश्च। ह्रस्वविधानान्न दीर्घः। क्रियते, क्रियात्, योत्येव कृषीष्ट; श्रे रियः— म्रियते, आद्रियते; क्ङित्येव—हरति। (१)

४२। शासः शिषङ्हलोरनाङः।

[शासः ६।, शिष् ०१।, अङ्हलोः ७।।, अ (न) आङः ५।]

अङि हलादौ क्ङिति च शासः शिषादिश्यते। अशिषत्, शिष्टः, क्यप् शिष्यः, शिष्यते, आदेशसामर्थ्यान्नेह शाधि, अनाङ् इति किम्? आशास्तः, आशास्यते, आशीः, आङः क्विपि निपात्यते।

४३। अमः सृजदृशोः झल्यकिति।

[अमः १।, सृजदृशोः ६।।, झलि ७।, अकिति ७।]

अनयोर्झलादावकित्यमागमः स्यात्। स्रष्टा, अस्राक्षीत्, द्रष्टा, अद्राक्षीत्; कितीति किम्? सृष्टः, सिसृक्षति। (२)

---

(१) यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते। यस्य तु विधेर्निमित्तत्वमस्ति नाऽसौ बाध्यते इत्यभिप्रेत्य, ह्रस्वविधानसामर्थ्यादिति।

(२) अम इत्यस्य मित्त्वं मिदचोऽन्त्यात्पर इत्यर्थं। सिसृक्षतीत्यत्र इक

## ४४। सृप-तृप-दृप-स्पृश-मृश-कृषां वा।

[सृप-कृषां ६।।, वा ०१।]

एषां झल्यकिति अमागमः स्याद्वा। स्रप्ता, सर्प्ता, स्प्रष्टा स्पर्ष्टा; अकितीत्येव—अस्पृक्षत्। (१)

## ४५। इदितो नुम्धातोः।

[इदितः ( इत् इत् ) ५।, नुम् ०१।, धातोः ५।]

इदितोर्धातोर्नुमागमः स्यात्। वन्दते, कम्पते, अभिनन्दते। (२)

## ४६। शे मुचादेः। [शे ७।, मुचादेः ६।

इगुपान्त्याच्चेति (१।२।६) कित्त्वं, एवं दिदृक्षतीति विष्णुमिश्रः। दृक्षीष्ट इत्यत्र उरिगुपधाच्च लोङ्सिचौ तङीति (७।२।३) कित्त्वमिति पद्मनाभपञ्जिका।

(१) सृप्लृ गतौ, तृप प्रीणने, दृप हर्षमोचनयोः स्पृश संस्पर्शे, मृष सहने, मृषति तितिक्षायां उभयोरिव तथा कृष कर्षणे, कृष विलेखने इत्युभयोरिति पद्मनाभपञ्जिका। असाप्सीत्, असार्प्सीत् इति पदद्वयं बहुषु पुस्तकेषु दृश्यते तदतीव मन्दं, क्वापि व्याकरणे सृपेः सिजविहितत्वात् केवलं लृदनुबन्धादङेव। तथाच गिरिमन्वसृपद्रामो लिप्सुर्जनकसम्भवामिति भट्टिः। एवं त्रप्ता, तर्प्ता, द्रप्ता दर्प्ता, मृषकृषोरुदाहरणं मृग्यमिति विष्णुमिश्रः।

(२) इत् (इकारः) इद् यस्य स इदित् केवलेदनुबन्धस्य धातोर्नुम्, न विशिष्टानुबन्धस्य, तेन भिदिर इत्यादीनां न स्यात्। टुनदि समृद्धावित्यादौ तु टुकारस्य पृथक् करणात् न विशिष्टानुबन्धः।

एषां शे नुम् स्यात् । मुञ्चति, लिम्पति ; मुच, लुप, विद्, लिप, सिच, कृति, खिद, पिश: । (१)

४७ । मस्जिनशोर्झलि ।

[ मस्जिनशोः ६॥, झलि ७ ]

अनयोर्झलि नुम् स्यात् । मस्जेरन्त्यात् पूर्व्वं नुममिच्छन्ति, मङ्क्ता, मङ्क्ष्यति ; नंष्टा, नंक्ष्यति झलीतिकिम् ? नशिता रधादि । (२)

४८ । रधिजभोरचि । [ रधिजभोः ६॥, अचि ७। ]

अनयोरचि नुम् स्यात् । रन्धयति, रन्धकः, जम्भयति, जम्भकः । अचोति किम् ? रन्धा, जब्धः । (३)

४९ । रधेरिटि लिट्येव ।

[ रधेः ६।, इटि ७।, लिटि ७।, एव ०१। ]

(१) मुचॢमोचने, लुपॢच्छेदने, विद्ॢलाभे, लिप उपलेपे, सिच एते उभयपदिनः । कृतीच्छेदने, खिदपरिघाते, पिश अवयवे एते परस्मैपदिनः इति पद्मनाभपञ्जिका ।

(२) टुमस्ज शुद्धौ तुदादिः, नश अदर्शने दिवादिः । ननु मस्जेर्नुमि कृते सकारस्यादित्वाभावात् कथं स्कोर्निर्जाद्योरित्यादिना (१०६।३।२) सकारलोपः स्यात्, न च प्रागेव सलोपः प्राप्नोति इति, नित्यत्वादन्तरङ्गत्वाच्चनुमेव स्यात् इत्यत आह मस्जेरन्त्यात् पूर्व्वमिति विष्णुमिश्रः । अन्त्यात् पूर्व्वमिति जकारात् पूर्व्वमित्यर्थः सकारात् पूर्व्वं नुमि कृते सलोपस्य स्थानिवत्त्वादनुस्वारस्य परसवर्णत्वं न स्यादिति पद्मनाभपञ्जिका ।

(३) रधहिंसायां, जभगात्रविनामे, जभमैथुने इत्युभयोरेव ।

इति रधेर्लिट्येव नुम् स्यात् । नान्यत्र रध्निव, न कसौ रेधिवान्, नियमः किम् ? रधिता, रधितुम् । (१)

५० । रभलभोरशब्लिटोः ।

[ रभलभोः ६॥, अशब्लिटोः ( न-शप्-लिट् ) ७॥ ]

अनयोरचि नुम् स्यात् । आरम्भयति, आरम्भौ, लम्भयति, लम्भकः । अशब्लिटोरिति किम् ? आरभते, आरेभे

५१ । लभेराङो यति । [लभेः ६।, आङः ५।, यति ७। ]

आङोलभेर्यति नुम् स्यात् । आलभ्यं ।

५२ । उपात् स्तुतौ । [ उपात् ५।, स्तुतौ ७। ]

नुम् स्यात् । उपलम्भ्या विद्या, स्तुताविति किम् ? उपलभ्य किञ्चित् ।

५३ । प्रादेः खल्घञोः न केवलसुदुर्भ्याम् ।

[प्रादेः ५।, खल्घञोः ७।, न केवलसुदुर्भ्याम् ५।। ]

अनयोः प्रादेर्लभेर्नुम् स्यात् । सुप्रलम्भः प्रादेरिति किम् ? इषल्लभः, लाभः, लभेर्घञि केवलाच्च दृश्यते कात्यायनी तुष्टुवरिष्टलम्भात्, राष्ट्रलम्भः । न केवलसुदुर्भ्याम् सुलभः, दुर्लभः, सुलाभो दुर्लाभः, केवलेति किम् ? अतिसुलम्भः, कथमति सुलभः सुलभसिद्धौ पश्चात् प्रादिसमासेन ।

५४ । णमिणोरप्रादेर्वा ।

[णमिणोः ७॥, अप्रादेः ५।, वा०१। ]

---

(१) पूर्व्वेण प्राप्ते नियम्यते, इति नुम् चेत् लिट्येवेति ।

अनयोर्लभेर्नुम् स्यात्। लम्भं लम्भं, लाभं लाभं ; अप्रादेरिति किम्? नित्यं प्रलम्भं, प्रालम्भि।

५५। वनतितनाद्यनिटामनुनासिकलोपो झलि किङिति।

[ वनति-तनादि-अनिटाम् ६।॥, अनुनासिकलोपः १।, झलि ७।, किङिति ७। ]

एषां झलादौ किङित्यनुनासिकलोपः स्यात्। वतिः, ततं, सन्ततिः, क्षनु—क्षतिः, क्षत्वा ; ङिति—अतत, अतथाः ; अनिटां यमि, रमि, णमि, गमि, हनि, मन्यतीनां—यत्वा, यतिः, ङिति हतः झलीतिकिम्? वनितं, गम्यते।

५६। न क्तिचि दीर्घस्य।

[ न०१। क्तिचि ७।, दीर्घः १।, च०१। ]

वनत्यादेः क्तिचि न लोपो नास्ति। ङमः क्विझलोः किङितीति (८८।३।२) दीर्घस्य न भवति। वन्तिः, तन्तिः।

५७। क्वियपोर्वङ्गलम्। [ क्वियपोः ७॥, वङ्गलम् ०१। ]

तेषामनुनासिकः क्वौ यपि च वङ्गलं लुप्यते। अदात्, संयत्, आनत्, परीतत्, वाहुल्यान्नेह ब्रह्महनौ ; यपि—संयत्य, अनुमत्य, आहत्य, वाहुल्यादवमन्य मानिनीमानम्। वा गमादेः आगत्य, आगम्य, विरत्य, विरम्य, उन्मत्य, उन्मन्य वाहुल्यादत उत्त्र अप्रयोगः।

५८। हनस्तङि सिचि। [ हनः ६।, तङि ७।, सिचि ७। ]

तङि सिचि हन्तेर्न-लोपः स्यात्। आहत, आहसाताम्।

५९ । यमोगन्धने । [ १ मः ६।, गन्धने ७। ]

हिंसार्थसूचने यमस्तङि सिचि म-लोपः स्यात् । उदायत गन्धन इति किम् ? आयंस्त पादम् । (१)

६० । वोपयमने । [ वा०१।, उपयमने ७। ]

स्वीकारे तङि सिचि यमो म-लोपः स्यात् । उपायत कन्यां, पक्षे उपायंस्त ।

६१ । गमेर्लोङि च । [ गमेः ६।, लोङि ७। च०१। ]

गमेस्तङि सिचि लोङि च मलोपः स्याद्वा । सङ्गसीष्ट, सङ्गंसीष्ट ; समगत, समगंस्त भ्रमरः सरोरुहेण । (२)

६२ । जनसनखनामाञ्झलि क्ङित्सनि ।

[ जन-सन-खनाम् ६।।, आम०१।, झलि ७।, क्ङित्सनि ७। ]

एषां झलादौ क्ङिति सनि च नकारस्याद्भवति । जातं, जंजातं, (३) सातं, सातिः, सिज्लुकि (११५।२।३) असात,

(१) उदायत उत्+आ+यम+लङ् त, सिच, अनेन सूत्रेण मलोपः ततो ह्रस्वझल इति (११७।२।३।) सिचो लोपः । आयंस्त=आ+यम+लुङ् त अत्र गन्धनार्थाभावात् मलोपाभावे न सिचो लोपः, म स्थाने अनुस्वारः ।

(२) सम्+गम+लोङ्सीष्ट=सङ्गसीष्ट ; सम्+गम+लुङ्-त= समगत ।

(३) जन+यङ् लुक् क्त । जातं जातः, सातं सात इति क्वचित् पाठः ।

असाथञ ; सिषासंति ; खातं, खातिः, झलीति किम् ? जिजनिषति, चिखनिषति । (१)

६३ । ये वा । [ये ७।, वा०१। ]

जनादेर्यादौ क्ङिति आद् वा स्यात् । जायते, जन्यते ; खायते, खन्यते ; चाखायते, चंखन्यते ।

६४ । तनेर्यकि । [तनेः ६।, यकि ७। ]

आद्वा स्यात् । तायते, तन्यते ।

६५ । सनः क्तिचि लुक् च वा ।

[ सनः ६।, क्तिचि ७।, लुक्०१।, च०१।, वा०१। ]

सनोतेः क्तिचि आद्वा स्यात् । लुक् च वा । सातिः, सतिः, सन्तिः ।

६६ । श्नान्न लुक् । [ श्नात् ५।, न०६।, लुक् ०१। ]

श्नमः परस्य नो लुक् स्यात् । भुनक्ति, छिनत्ति ।

६७ । शपि दंशरञ्जसञ्जस्वञ्जाम् ।

[ शपि ७।, दंश, रञ्ज, सञ्ज, स्वञ्जां ६।।। ]

एषां शपि नो लुक् स्यात् । दशति, रजति, प्रसजति, परिष्वजते ।

६८ । रञ्जेर्घञि भावकरणयोः ।

[ रञ्जेः ६।, घञि ७।, भावकरणयोः ७।। ]

---

(१) अत्र सनि इडागमे झलपरत्वाभावान्नात्वम् ।

घणि रञ्जे र्नो लुक् स्यात्। भावे रागोवर्त्तते, करणे रागं कुङ्कुमं; रजनाद्या औणादिकाः।

६९। णौ मृगरमणे। [ णौ ७।, मृगरमणे ७। ]

णौ रञ्जेरत्र नोलुक् स्यात्। रजिता मृगाः, रजयति मृगं।

७०। स्वञ्जेर्लिटि वा। [ स्वञ्जेः ६।, लिटि ७।, वा०१। ]

अस्य नो लुक् स्यात् वा। सस्वजे, सस्वञ्जे वा।

७१। अनिदितामनुषङ्गस्य क्ङिति।

[ अनिदितां ६॥, अनुषङ्गस्य ६।, क्ङिति ७। ] (१)

क्ङित्येषामनुसङ्गस्य नो लुक् स्यात्। सक्तं, सनीस्रस्यते, दनीध्वस्यते, अनिदितामिति किम्? कम्प्यते।

७२। लङ्गिकम्प्योरुपतापाङ्गविकारयोः।

[ लङ्गिकम्प्योः ६॥, उपताप, अङ्गविकारयोः ७॥ ]

(१) न इदित्, अनिदित्, इदनुबन्धभिन्नानामित्यर्थः। धातूनां अनुषङ्गस्य नकारस्य लोपः। इति सूत्रार्थः सङ्गमनुगत इति प्रादिसमासः तस्य संयोगादिभूतनकारस्येति पद्मनाभपञ्जिका। उभयोर्विभाषयोर्मध्ये यो विधिः स नित्य इति न्यायात्। स्वञ्जेर्लिटि वा, क्तिजान्तनशांवेति विभाषयोर्मध्यस्था विधयो नित्याः अतोऽत्र न—लुक्कार्य्यस्य नित्यत्वं। इति विद्या मिश्रः। सन्ज+क्त सक्तं, स्रन्स+यङ् सनीस्रस्यते, ध्वन्स+यङ् दनीध्वस्यते उभयत्र नीगन्ते इति सूत्रेण (४५।३।१) अभ्यासान्ते नी आगमः।

अनयोरत्वार्थे नो लुक् स्यात्। विलगितः, विकम्पितः। (१)

७३। दंशेर्यङ्लुकि पिति च।

[ दंशेः ६।, यङ्लुकि ७।, पिति ७।, च०१।। ]

अत्र दंशेर्नोलुक् स्यात्। दंदशीति, दंदष्टः।

७४। क्त्वि जान्तनशां वा। [ क्त्वि ७।. जान्तनशां ६।।. वा०१ ]

जान्तानां नशेश्च क्त्वि नो लुक् वा स्यात्। रक्त्वा, रंक्त्वा वा; अक्त्वा, अंक्त्वा वा, नष्ट्वा, नंष्ट्वा वा; क्ङितीत्येव अञ्जित्वा।

७५। भञ्जेरिणि च। [ भञ्जेः ६।. इणि ७।. च०१।। ]

भञ्जेरिणि क्त्वि च नो लुक् स्याद्वा। अभाजि, अभाञ्जि वा; भक्त्वा, भंक्त्वा वा।

७६। नाञ्चेः पूजायाम्। [ नाञ्चेः ६।. पूजायाम् ७। ]

अत्राञ्चे र्नोलुक् नास्ति। अञ्चिता गुरवः, अञ्चति, समक्तो ऽन्यत्र। (२)

(१) लगि गत्यर्थे, कपि चलने, इदित्वादप्राप्ते विधिरयं इति पद्मनाभ पञ्जिका। अनयोरूपतापाङ्गविकारयोर्नकारो लुप्यते विगलितो रोग इत्यर्थः, विकपितो देहोविकारो रोगेतर इति विष्णुमिश्रः।

(२) पूज्ये साधुसम्भाषणं। तथा च उदञ्चिताञ्चोञ्चितदञ्चिणोच दिति भट्टिः। समक्त इति तु अक्त अनुपादाने इत्यस्मात् क्तः, मिथ्या नकारस्य नकारश्च।

७७। क्त्वि स्कन्दस्यन्दोः। [क्त्वि ७।, स्कन्दस्यन्दोः ६॥]

अनयोः क्त्वि नो लुक नास्ति। स्कन्त्वा, स्यन्त्वा, प्रस्कन्द्य।

७८। शे तृन्फादेः। [शे ७।, तृन्फादेः ६।]

एषां शे नोलुक् नास्ति। तृम्फति, तुम्फतु; तृन्फ, तुन्फ, दृन्फ, दृन्फ, ऋन्फ, शुन्भ, (शुन्फ), उन्भ, (उन्फ) गुन्भ (गुन्फ)।

७९। स्यदो जवे। [स्यदः ६।, जवे ७।]

स्यात्। स्यन्दोऽन्यत्र।

८०। एधौद्मावोदप्रश्रथहिमश्रथाः।
[एध औद्म अवोद प्रश्रथ हिमश्रथाः १॥]

अमी निपात्यन्ते। इन्धो+घण=एधः, उन्दो+मन्=ओद्म, ओद्मीकुर्व्वन् कुचतटभुवं, अव्—अवोदः, ईषदार्द्रः, प्रश्रथः, हिमं श्रथ्नाति मुञ्चति कर्म्मणोऽण हिमश्रथश्चन्द्रमाः।

८१। कसस्यातोऽचि। [कसस्य ६।, अतः ६।, अचि ७।]

निपातप्रसङ्गाल्लुगित्येव। अचि कसस्यातो लुक् स्यात्। अधुक्षि, अघुक्षि।

८२। गम हन जन खन घसां क्ङित्यनङि।
[गम हन जन खन घसां ६॥, क्ङिति ७।, अनङि (न अङ्) ७।]

अजादौ क्ङिति गमादेरतो लुक् स्यात्। जग्मुः, संजग्मिरे, जघ्नुः, घ्नम्, घ्नन्ति, जज्ञे, निचख्नुः, जक्षुः, अनिदिताम् इति किम्? अगमत्, अघसत्।

८३ । धि सोलोपः । [धि ७।, सः ६।, लोपः १।]

धे सकारस्य लोपः स्यात् । चकाधि, आध्वं, वस—निवध्वं वस्वं, ऐषिध्वं, अलविढ्वं ; लोपेऽपि सिचोट् ।

८४ । जोजि यणच्परे । [जः १।, जि ७।, यण अच् परे ७।]

यणच्परे जकारे परतः सो जो भवति । भृज्ज्यते, बभ्रज्ज्य, बभृज्ज्यते मज्जति, मज्जन् ।

८५ । झषस्तथोर्धोऽधः ।

[झषः ५।, तथोः ६॥, धः १।, अधः ६।]

अधाञो झषन्तात्तथोर्धः स्यात् । दोग्धि, अबुद्धाः, लब्धम् । अध इति किम् धत्तः ।

८६ । सस्तः सि लुप्ते चार्द्धधातुके ।

[सः ६।, तः १।, सि ७।, लुप्ते ७।, च०१।, आर्द्धधातुके ७।]

आर्द्धधातुके सकारे परतः सस्तो भवति । जिघत्सति, वत्स्यति, अवात्सीत्, लुप्ते च अवात्तां प्रत्ययलोपलक्षणेनैव सिद्धे लुप्तग्रहणमुक्तं खलु ज्ञापयति षढोः कः सेऽसुपीत्यत्र (११३।३।२) सिचो लोपे कत्वं मा भूत् तेन अद्दष्टाः अद्दड्ढमिति आर्द्ध धातुक इति किम् ? वस्से आर्द्धधातुके विधिरास्यमिथ्योः ।

८७ । आतोलुगिट्क्ङिद्द्यचोः ।

[आतः ६।, लुक्०१।, इट्क्ङिद्द्यचोः ७॥]

इटि क्ङिद्यचि परे आतोलुक् स्यात् । पपिथ, पपिव, पपथुः, पपुः आर्द्धधातुक इत्येव—यान्ति ।

८८। दरिद्रो बहुलं। [ दरिद्रः ६।, बहुलं ०२। ]

आर्द्धधातुके बहुलं दरिद्रातेरातोलुक् स्यात्। दरिद्राति दरिद्रयति, अचि—दरिद्रः। लुङ्सनोरिटि इणि वा। अदरिद्रीत्, स्वागमे, अदरिद्रासीत्, अदरिद्रि, अदरिद्रायि·वा, दिदरिद्रिषति, दिदरिद्रासति; क्वसौ न लिङाम् ददरिद्रान् ददरिद्रावानित्येके, बाहुल्यान्नेह—दरिद्रायकः, दरिद्राणं।

८९। अतः। [ अतः ६। ]

आर्द्धधातुके ऽतोलुक् स्यात्। वरः—यायावरः, चिकीर्षिता, चिकीर्ष्यते।

९०। यस्य हलोऽनीर्ष्यादेः।

[ यस्य ६।. हलः ५।, अनीर्ष्यादेः ( न-ईर्ष्यादि ) ५। ]

आर्द्धधातुके हलः परस्य यस्य लुक् स्यात्। वेभिदिता सुखितुं; वेभिदितुम् नेह ईर्ष्यिता, हल इति किम्? लोलूयिता लोलुया कथं पुत्रकाम्या बहुलानुवृत्तेः।

९१। क्यस्य वा। [ क्यस्य ६।, वा०१। ]

हलः परस्य क्यस्य लुग्वा स्यात्। समिधिता समिध्यिता, नमसितुं, नमस्यितुं व्यवस्थितविभाषया नेह—नमस्या, तपस्या, वरिवस्या।

९२। णेर्लोपोऽनिड़ास्वाय्यामन्तेलुषु। X

[ णेः ६।, लोपः १।, अनिडा—लुषु [ न इड आलु, आय्य, आम, अन्तड, इत्नु ७।।। ]]

इडादिवर्ज्जिते आर्द्धधातुके णिङ्णिचो र्णेर्लोपः स्यात्। कामनः, याष्टिः, पाक्ति, पाचनं, अचीकरत्, कारकः, कार्य्यते, क्विप् घटकाः ; कस्तु चकारान् अनिडादिष्विति किं ? कारयिता, इट्—साहचर्य्यादिणिच घटयिष्यते, स्पृहयालुः, स्पृहयाय्यः, आम्, कारयामास ; अन्तट् मण्डयन्तः, औणादिकः इत्न् हर्षयित्नु, णेरिष्णु श्छन्दसीति नोच्यते कारयिष्णुरिति बहुलानुवृत्त्या यति गणेयं, ङापि चिन्तियेति च।

९३। इटि निष्ठायाम्। इटि ७। निष्ठायां ७।

णेर्लोपः स्यात्। कारित, गणितः।

९४। यप्यय् लघुपूर्व्वात्।

[ यपि ७।. अय्०१।, लघुपूर्व्वात् ५। ]

लघुपूर्व्वात् वर्णात् यपि णे रय् स्यात्। प्रवेभिद्य्य, प्रणमय्य ; लघुपूर्व्वादिति किम् ? प्रयोध्य, प्रपाद्य।

९५। वाप्नोतेः। [ वा०१, आप्नोतेः ६। ]

आप्नोतेर्यपि णेरय् वा स्यात्। प्रापय्य, प्राप्य।

९६। अस्तिब्रुवोर्भूवचौ।

[ अस्ति ब्रुवोः ( अस्ति, ब्रू ) ६॥, भूवचौ ( भू, वच ) १॥ ]

आर्द्धधातुकेऽस्तिभूब्रुवोर्वचः स्यात्। भविता, भविष्यति, भूत ; वक्ता, उवाच, नास्तेरनुप्रयोगस्य ईहामास।

९७। भ्रस्जो भर्ज्ज् वाऽनृतः ।*

[ भ्रस्जः ६।, भर्ज्ज् ०१।, वा०१।, अनृतः ( न-ऋत् ) ६। ]

आर्द्धधातुके ऋद्विषयादन्यत्र भ्रस्जो भर्ज्ज् वा स्यात् । भ्रष्टा, भर्ष्टा ; बभ्राज, बभर्ज्ज ; अनृत इति किं भृष्टं ।

९८। अदो जग्धः क्तित्ति यपि ।

[ अदः ६।, जग्धः १।, क्तित्ति ( कित्, ति ) ७।, यपि ७। ]

कित्तकारे यपि चादो जग्धः स्यात् । जग्धः ; जग्ध्वा, प्रजग्ध्य, कित्तिति किम् ? अत्ता बहुलानुवृत्त्या अन्नं ।

९९। लुङ् सनपि घस्लृघण्यनुपसर्गे लिटि वा ।

[ लुङ् सनपि ( लुङ्, सन्, अप् ) ७।, घस्लृ०१।, घञि ७।, अनुपसर्गे ( न उपसर्गे ) ७।, लिटि ७।, वा०१। ] *

लुङादिष्वदो घस्लृः स्यात् । लृदित्वादङ्, अघसत्, अघासि जिघत्सति ; अप्-प्रघसः, निघसः, घञ-घासः, नोपसर्गे, न्यादः लिटि वा जघास, जक्षतुः ; आद, आदतुः ।

१००। वेञोवयिर्यश्च क्किति वो वा ।

[ वेञः ६।, वयिः १।, यः १।, च०१।, क्किति ७।, वः १।, वा०१। ]

वेञो लिटि वयि र्वा स्यात् । उवाय, क्किति—यस्य वकारो वा ऊयतुः, ऊवतुः, पक्षे ववौ ववतुः ।

---

* क्वचित् तु सूत्रमिदं लुङ् सनपि घस्लृः । घञ्यनुपसर्गे । लिटि वा । इत्येवं त्रिधा विभक्तम् ।

१०१। हनोवधो लीङ्यनिणि।

[ हनः ६।, वधः, १।, लीङि ७।, अनिणि ( न इण ७। ]

लीङि हन्तेर्वधः स्यात्। वध्यात्, वध्यास्तां, वधिषीष्ट ; अनिणीति किम् ? घानिषीष्ट।

१०२। लुङि च तङि वा।

[ लुङि, ७।, च०१।, तङि ७।, वा०१। ]

लुङि हन्तेर्वधः स्यात्। अवधीत्। तङि वा—आवधिष्ट आहत, अवधि, अघानि। ण्यति च। वध्यः, घात्य। न जनवधेति (८२।४।३) वृद्धिनिषेधः।

१०३। इणिकोर्गा लुङि।

[ इणिकोः ६॥, गा०१।, लुङि ७। ]

लुङ्यनयोर्गाः स्यात्। अगात्, अध्यगात्। अगायि ग्रामः, अध्यगायि पाठः।

१०४। णिसनोर्गमिरबोधने।

[ णि, सनोः ६॥, गमिः १।, अ (न) बोधने ७। ]

णौ सनि च इणिकोर्गमिः स्यात्। गमयति ग्रामं, जिगमिषति, अधिजिगमिषति, अबोधन इति किम् ? आत्मानं (१) प्रत्याययति, अध्याययति, प्रतीषिषति, इकः अधीषिषति। (२)

---

(१) अर्थान् प्रत्याययतीति क्वचित् पाठः।

(२) अजादेः सनः सकारस्य द्वित्वम्।

१०५ । इङः सनि । [इङः ६।, सनि ७। ]

सनि इङो गमिः स्यात् । शास्त्रमधिजिगांसते ।

१०६ । गाङ् लिटि । [गाङ् ०१।, लिटि ७। ]

लिटि इङो गाङ् स्यात् । अधिजगे (१) ।

१०७ । णौ सञ्चङोर्व्वा । [णौ ७।, सन्, चङोः ७॥, वा ०१। ]

णौ परतः सन् चङ विषये इङो गाङ् वा स्यात् । शास्त्रमधिजिगापयिषति, शिष्यं अध्यापिपयिषति, (२) चङ्—अध्यजीगपत्, अध्यापिपत् ।(३)

१०८ । लुङ्लृङोर्गीः । [लुङ्, लृङोः ६॥, गीः १। ]

अनयोरिङोगीर्वा स्यात् । अध्यगीष्ट, अध्यैष्ट, लृङि—अध्यगीष्यत, अध्यैष्यत ।

१०९ । चक्षिङः ख्याञ् । [चक्षिङः ६।, ख्याञ् ०१। ]

आर्द्धधातुके चक्षिङः ख्याञ् स्यात् ।

व्याख्याता, व्याख्यास्यति, व्याख्यास्यते, ञित्वादुभयपदी ; कर्म्मणि—व्याख्यायते, बाहुलकानुवृत्तत्या नेह वर्ज्जने संचक्ष्या दुर्ज्जनाः वर्ज्जनीया इत्यर्थः ; सर्व्वधातुभ्योऽसिः—नृचक्षा राक्षसः, टनः विचक्षणः ।

---

(१) ङकारः परप्रसिद्धः ।

(२) अधीयानं प्रयोक्तुमिच्छति ।

(३) अधीयानं प्रैरयत् ।

११०। वा लिटि। [वा०१।, लिटि ७।]

लिटि चक्षिङः ख्याङ् वा स्यात्। आचख्यौ, आचख्ये आचचक्षे वा।

१११। अजेर्वीरक्यघणप्सु। ✗

[ अजेः ६।, वीः १।, अक्यघणप्सु ( न क्य, घण, अप्, ) ७॥ ]

* अजेर्वीः स्यात्। प्रवायकः, प्रवयनीयं, वीता, वीतः ; अक्यादिष्विति किम्? समज्या, समाजः, अप्—समजः।

११२। टनाक्विद्धलोर्वा।

[ टनाऽक्विद्धलोः ( टन, अकित् हल् ) ७॥, वा०१। ]

टनेऽकिद्धलि चाजेर्व्वीर्वा स्यात्। प्रवयणं, प्राजनं, प्रवेष्यति प्राजिष्यति, प्रवेता, प्राजिता।

११३। प्यायः पीर्लिङ्यङोः।

[ प्यायः ६।, पीः १।, लिट्, यङोः ७॥ ]

लिटि यङि च प्यायः पीः स्यात्। आपिप्ये, आपेपीयते।

११४। अप्रादेर्निष्ठायामाङ्स्त्वन्धूधसोः।

[ अप्रादेः ६।, निष्ठायां ७।, आङः ५।, तु०१।, अन्धु, ऊधसोः ७॥ ]

अप्रादेर्निष्ठायां प्यायः पीः स्यात्। पीनोबाहुः, पीनवान्, अप्रादेरिति किम्? प्रप्यानः आङ्स्त्वन्धूधसोः आपीनोऽन्धुः आपीनमुधः। अन्धूधसोरिति किं आप्यानं स्वाध्यकपठांसं।

११५। चायः कीर्यङि। [चायः ६।, कीः १।, यङि ७।]

यङि चायतेः कीः स्यात्। चेकीयते।

११६। हनोघ्नीर्हिंसायां।

[हनः ६।, घ्नीः १।, हिंसायां ७।]

यङि हन्तेर्घ्नीः स्यात्। जेघ्नीयते; हिंसायामिति किम्? जंघन्यते।

११७। आदीर्घ्राध्मोः। [आत्, ५।, ई: १।, घ्रा, ध्मोः ६।]

यङि घ्रा, ध्मोरात ईः स्यात्। जेघ्रीयते, देध्मीयते।

११८। घुमा स्था गा पिब साहाकोऽकि यपि क्ङ्-झलि।

[घुमास्थागापिबसाहाक (घु-मा, स्था, गा (गे), पिब (पा), सा (सो), हाक्) ६।, अक्वियपि (न-क्वि, यप्) ७।, क्ङ् त्, झलि ७।]

हलादौ क्ङ्त्येषामादीर्भवति। दीयते, धीयते, देधीयते; धेट्—धीतं, धीतवान्, मीयते, स्थीयते, तेष्ठीयते, गै—गीयते, गीतं, पै—पीयते, पेपीयते, पीतः; सोः—सीयते, व्यवसेसीयते; हाकः—हीयते, हीनः, पिब-सा-हाक इति किम्? पातेः-पायतेः—पातः; ओहाङ्—उज्झायते, हानः; अक्वियपीति किम्? क्विप्-संस्थाः यपि-प्रदाय। तेनोद्धीय खलेनेत्यपि बाहुल्यात् आपीयेति च पीङ्पाने।

११९। लीङ्गेत्। [लीङि ७।, एत् १।]

लोङि तेषामादेत् स्यात् । देयात्, धेयात्, प्रमेयात्, स्थेयात्, गेयात्, पेयात्, अध्यवसेयात्, हेयात् । किङ्तीत्येव (१) दासीष्ट ।

१२० । स्थोऽन्यस्य संयोगादेर्वा ।

[ स्थः ५।, अन्यस्य ६।, संयोगादेः (संयोग-आदि) ६।, वा०१। ]

लोङि तिष्ठतेरन्यस्य संयोगादेर्धातोरत एद्वा स्यात् । ध्येयं, ध्यायात् ; म्लेयात्, म्लायात् ।

१२१ । दोस्यतिमास्थामित्तिकिति वा च शाछोः ।

[ दोस्यतिमास्थां ( दो, सो, मा, स्था ) ६॥, इत् ०१।, ति ७।, किति ७।, वा०१।, च०१।, शाछोः ( शा, छा, ) ६॥ ]

तादौ किति एषामादित् स्यात् । दितिः, निर्दितिः, दितं, अवदितवान् ; सितिः, सितं ; मितं, मित्वा ; स्थितिः । शाछोर्वा निशितं, निशातं, छितं, छातं । नित्यं संशितव्रत इति । (२)

१२२ । दोदद्घोः । [ दः ६।, दत्०१।, घोः ६। ]

तादौ किति दोदत् स्यात् । दत्त्वा, दत्तं, दत्तवान् । घो रिति किम् ? अवदातं, स्यतेरित्वं उक्तं ।

---

(१) मासीष्ट इति क्वचित् पाठः ।

(२) क्वचित् दित्वा, निर्दितं, अवसितवान, इत्येतान्युदाहरणानि दर्शितानि ।

## १२३। मरुत् प्राद्यचस्तो वा दीर्घश्चेणोऽनारम्भे।

[ मरुत्प्राद्यच: ( मरुत् प्र-आदि-अच् ) ५।,० तः १।, वा०१।, दीर्घः १। च०१।, इण: ६।, अनारम्भे ( न-आरम्भ ) ७। ]

मरुत्शब्दादजन्तात् प्रादेश (१) तादौ क्तिति दस्तो वा स्यात्। इणान्तस्य दीर्घश्च। मरुद्दत्तो, मरुत्तो वा ; प्रदत्तं, प्रत्तं ; विदत्तं, वीत्तं वा ; सुदत्तं, सूत्तं ; द्यतेरपि—अवत्तोमारः, अच इति किम्? निर्द्दितं, अनारम्भ इति किम्? आदि कर्मणि न भवति—प्रदत्तं।

## १२४। धाञो हिः, क्त्रि ह्राकश्च।

धाञः ६।, हिः १।, क्त्रि ७।, ह्राकः ६।, च०१। ]

तादौ क्तिति धाञो हिः स्यात्। हित्वा, विहितं ; क्त्रि-ह्राकश्च। हित्वा राज्यं वनं गतः, तीत्येव—विहाय।

## १२५। स्फायः स्फीर्निष्ठायां।

[ स्फायः ६।, स्फीः १।, निष्ठायां ७। ]

निष्ठायामस्य स्फीः स्यात्। स्फीतं, स्फीतवान्।

## १२६। स्त्यः स्तीः प्रात्। [ स्त्यः ६।, स्तीः १।, प्रात् ५। ]

प्रस्त्यायतेर्निष्ठायां स्तीः स्यात्। प्रस्तीतः प्रस्तीमः प्रस्तीमवान् प्रस्तीतवान्। (२) प्रादिति किम्? संस्त्यानः।

(१) अजन्त प्रादेश्चेति क्वचित् पाठः।

(२) प्रस्त्योवेति निष्ठा तकारस्य मकारः

१२७। श्यः शीः स्पर्शद्रवमूर्त्त्योः।

[ श्यः ६।, शीः १।, स्पर्श, द्रवमूर्त्त्योः ७॥ ]

भक्तार्थयोः श्यैङः शीः स्यात्। शीतोवायुः, शीतवान्
द्रवस्य काठिन्ये—शीनं घृतं, शीना वसा; स्पर्शादौ किम्?
आश्यानः कर्द्दमः।

१२८। प्रतेश्च, अभ्यवपूर्व्वस्य वा।

[ प्रतेः ५।, च०१।, अभि, अव, पूर्व्वस्य ६।, वा०१। ]

निष्ठायां प्रतेश्च श्यैङः शीः स्यात्। प्रतिशीनः, प्रतिशीनवान्;
अभ्यवपूर्व्वस्य वा—अभिशीनः, अभिश्यानः; अवशीनः, अव-
श्यानः, अवशीनवान्, अवश्यानवान्।

१२९। शृतं क्षीरहविषोः पाके।

[ शृतं ०१।, क्षीर, हविषोः ६॥, पाके ७। ]

श्रातेः श्रपेश्च निपात्यते। शृतं क्षीरं, शृतं हविः अन्यत्र
श्राणाः श्रपिताः।

१३०। वचि स्वपि यजादेः साचो यण इक् किति।

[ वचि, स्वपि, यजादेः (यज-आदि) ६।, साचः (सह अच्) ६।, यणः ६।, इक् ०१।, किति ७। ]

किति वच्यादेः साचो यण इक् स्यात्। उक्ता, ऊचुः, प्रोच्य,
सुप्ता, सुप्यते, यजादि—यजि, वपि, वहि, वसि, वेञः, व्येञ्,
ह्वेञ्, वद, श्वि—इज्यात्, इष्टिः, उप्यते, ऊढ़, उषितं, उतं,

साच—ग्रहणात् व्येञो यस्यैव—संवीतं, आहूतं, उच्छूनः, उदितः, संवदित इति वद—स्यैर्य्यं ।

१३१ । सनि प्रच्छः । [सनि ७।, प्रच्छः ५।]

यण इक् स्यात् । पिपृच्छिषति ।

१३२ । स्वपेश्चङ् यङ्लुकि च ।
[स्वपेः ६।, चङ्, यङ् लुकि ७।, च०१ । ]

एषु, सनि च स्वपेर्यण इक् स्यात् । सुषुप्सति, असूषुपत्, सोषुप्यते, सोष्पोति, सोषोप्मि (१) ।

१३३ । स्यमिव्योर्यङ्लुकोः ।
[स्यमि-(स्यम्,) व्योः (व्येञ) ६॥, यङ् लुकोः ७॥ ]

अनयोर्यङि, यङ्लुकि च साचोर्यण इक् स्यात् । सेसिम्यते, सेसिम्मि ; वेवीयते, वेवेति, वेवयीति ; आर्द्धधातुक इति निवृत्तं ।

X१३४ । भ्रस्जि ग्रहि व्रश्चि प्रच्छि ज्या वयि वहि व्यधि व्यचां क्ङिति ।

[भ्रस्जि, ग्रहि, व्रश्चि, प्रच्छि, ज्या, वयि, वहि, (वश,) व्यधि, व्यचां ६॥ क्ङिति ७। ]

---

(१) स्वपन्तं प्रयुक्तवान् इति णिच् ततो णुङ्चङि द्विर्वचनं उपधा दीर्घश्च ।

एषां क्ङिति (२) साचीयण इक् स्यात्। भृष्टं, भृज्ज्यात्, भृज्ज्यते, भृज्जति, गृहीतं, गृह्णाति, वृक्णं, वृश्चति, पृष्टं, पृच्छति, जीनः, जिनाति, जयतुः, जयुः, वश्च—उश्चितं, उश्च्यते, उश्चन्ति, व्यध—विद्धं, विध्यति, व्यच—विचितवान्, विचितिः, विचितं।

१३५। ह्वोर्द्विरुक्तिहेतौ णिव्यावाये च।

[ ह्वः ६।, द्विरुक्तिहेतौ ७।, णि—व्यवाये ७।, च०१। ]

ह्वेऽत्र यण इक् स्यात्। जुहाव, जोहूयते, जुहूषते; णि—व्यवाये च—जुहावयिषति, अजूहवत्, द्विरुक्त-हेताविति किम्? ह्वाययाञ्चकार।

१३६। श्वेर्वालिड्यङोः। [ श्वेः ६।, वा०१।, लिट्-यङोः ७। ]

णौ च संश्चङोः। [ णौ ७।, च०१।, संश्चङोः (सन् चङ) ६। ]

अत्र श्वेर्यण इक् स्यात्। शुशाव, शिश्वाय, शुशुवतुः, शिश्वियतुः, यङ्—शोशूयते, शेश्वीयते; णौ—च संश्चङोः शुशावयिषति, शिश्वाययिषति, अशूशवत् अशिश्वियत्।

१३७। न व्या [illegible] लिड्यपोः।

[ न० [illegible] ७। ]

एषां लिटि यपि च यण इक् नास्ति। संविव्युः, संविव्याय, जिज्यतुः, प्रज्याय, ववुः, प्रवाय; न वय्यादेशस्य निषेधः पृथगुपादानात्—जयुः।

---

(२) किति ङितिचेति क्वचित् पाठः।

१३८। परेर्व्यो यपि वा। [परेः ५।, व्यः ६।, यपि ७।, वा०१।]

यपि परे व्यो यण इग् वा स्यात्। परिवीय, परिव्याय।

१३९। वग्नेर्न यङि। [वगेः ६।, न०१।, यङि ७।]

यङि वग्नेर्यण इक् नास्ति। वावग्यते।

१४०। श्वि व्या ज्याक्कामिग्दीर्घः।

[श्वि, व्या, ज्या, क्कां ६।।।, इक् ०१।, दीर्घः १।]

एषां यण इग् दीर्घो भवति। शूनं, संवीतं, जीनं, आहूतं, कथं जिनाति? (प्वादित्वात् १५४।४।२)।

१४१। एचः पाठेऽश्रित्यात्।

[एचः ६।, पाठे ७।, अश्रिति ७।, स्यात्०१।]

अश्रिति परे धातोरुपदेशमात्रे एच आत्वं स्यात्। धेट्—धाता, धातुं धीयते; ग्लै—ग्लाता, दो—दाता, दातव्यं, अश्रितीति किम्? धयति—स्तनन्धयः बालः।

१४२। न व्योर्लिल्लिटि। [न०१।, व्यः ६।, लित्लिटि ७।]

व्येञोर्लिल्लिटि आत्वं नास्ति। संविव्याय, संविव्ययिथ, लिडिति किम्? संविव्युः।

१४३। मिमीङ्दीङां यपि च।

[मि, मीङ्_दीङां ६।।।, यपि ७।, च०१।]

एषामेज्विषये यपि च विधिवशादिष आत्वं स्यात्। प्रमातव्यं, अपमाय, अपमानं, अपमाय, उपदातां, उपदाय।

१४४। नमिमीञ्लियां खल्घोरचि च।

[ न०१।, मि, मी, लियां ६॥।, खलघोः ७॥, अचि ७।, च०१। ]

ईषन्मयोमयः ईषल्लयोलयः ।

१४५। लियो वा। [ लियः ६।, वा०१। ]

ली, लीङोरेज् विषये यपि चात्वं वा स्यात्। अलैषीत्, अलासीत्, अलास्त, अलेष्ट, विलाता, विलेता, विलानं, विलयनं, विलापयति, विलाययति, विलाय, विलीय।

१४६। नित्यं स्फुरस्फुलोर्घणि।

[ नित्यं ०१।, स्फुरस्फुलीः ६॥, घणि ७। ]

घण्यनयोरेच आत्वं स्यात्। विस्फारः, विस्फालः।

१४७। ढे सहिवहोरोदवर्णस्य।

[ ढे ७।, सहि, वहोः ६॥, ओत् ०१।, अवर्णस्य ६। ]

ढे परे सहिवहोरवर्णस्य ओत् स्यात्। सोढा, अवोढां, सोढ्वा, साढ्वेत्यपि विभाषायामपीच्छन्त्येके।

१४८। दीधीवेव्योरीलुक् यीवर्णयोः।

[ दीधी, वे व्योः ६॥, ई—लुक् ०१।, यीवर्णयोः ( यि, इवर्णे ) ७॥, ]

यीकार उच्चारणार्थः। यकारेवर्णयोः परयोरनयोरीलुक् स्यात्। *आदीध्यते, आदीध्यगतः, दीधितिः, वेव्यते, छान्दसाविमौ धातू।

१४९। आदेर्णो नः। [आदेः ६।, णः ६।, नः १।]

गणपाठे धातोरादेर्णो नः स्यात्। णीङ्-नयति, णम—नमति। (२)

१५०। षः सोऽस्नुपृष्ठिवुष्वक्कीनां।

[षः ६।, सः १।, अ-स्नुप्, ष्ठिवु, ष्वक्कीनां ६॥]

गणपाठे धात्वादेः षः सो भवति। ष्ठा-स्थाता, ष्मिङ-स्मयते अस्नुबादेरिति किम्? स्नुप्धातोः षोड़ीयति-षड़्दन्ता अस्य षोड़न्तः पृषोदरादि, षोड़न्तमाचष्टे णिच टिलोपः, पचाद्यच्—षोड़स्ततः क्यच, ष्ठिवु—निष्ठीव्यति, ष्वक्कति।

इति श्रीपद्मनाभदत्तकृते सुपद्मे व्याकरणे तृतीयस्याध्यायस्य तृतीयः पादः।

(२) उपदेशमात्रे उच्चारणमात्रे कार्य्यान्तरेभ्यः प्रागिति यावत्।

## अथ तृतीयाध्यायस्य

### चतुर्थः-पादः ।

#### अडागमादिप्रकरणम् ।

**१। अट् प्रागमाङि लुङ लङ लृङ्क्षु तेनाजादेस्तु वृद्धिश्च ।**

[ अट् ०।१, प्राक् ०।१, अमाङि ७।, लुङ लङ, लृङ्क्षु ७।।।, तेन ३।, अजादेः (अच् आदि) ६', तु ०।१, वृद्धिः १।, च० १ । ]

अमाङ्योगे लुङ्, लङ्, लृङ्क्षु परतोधातोः प्रागड़ागमोभवति । अभूत्, अभवत्, अभविष्यत्; तेन सह अजादेस्तु वृद्धिश्च । ऐधिष्ट, ऐधत, ऐधिष्यत; संग्रामयतेरुपसर्गात् प्रागड़ागममिच्छन्ति—असंग्रामयत्, संग्रामयुद्धे धातुरप्यस्ति, अमाङीति किम्? मा त्वं भूः, मा स्म भवन्तौ स्तां । नाजादिसुपोऽन्नाद्यन्तस्य । अप्परायत, न्नाद्यन्तस्य—'ओजढ़त् । इच्छाभ्यासादेशयोः न्नतयोरजादित्वं—ऋ-ऐयः; वश—औष्टां; यज—ऐज्यत । (१)

---

(१) अमाङीत्यत्र किमुपपदसप्तमी, क्रियायोगसप्तमी वेति सन्देहं परिहरन्नाह,—अमाङ्योग इति माङ्शब्देन माङ्योगोलक्षित: । इह प्राक् इति वचनात् धातोरित्यधिकृतं यद्वर्त्तते तदत्र पञ्चम्यन्तं वेदितव्यम् । लृङ्क्षु इत्यत्र ङ्याभ्यामिति न्नागमः । अट् आगमः अड़ागमः

## २। द्विराद्येकाजच्यादेशः स्थानिवच्च ।x·

[ द्विः १।, आद्येकाच् (आदि, एक अच्) ०१।, अचि ७।, आदेशः १।, स्थानिवत् ०१।, च ०१। ]

आदिरेकाजवयवः प्राग् द्विर्भवति। इत्यधिक्रियते—एकाजिति—बहुव्रीहिः आद्यन्तवदेकोऽपि स्वरो द्विरुच्यते। इयाय, पपाच, पपाठ, आट; द्वित्वे कर्त्तव्येऽचि परे कृतादेशः स्थानिवत्—निनाय, ययुः, जघ्नुः, आयल्लोपादेशयोः स्थानिवत्त्वेन द्वित्वं; अचीति किम्? जेघ्रीयते, यङीत्वं न स्थानिवत् एतदेवज्ञापकं अन्यकार्य्यात्परा द्विरुक्तिः लिङादिष्विति। क्नेञ-जुहाव, तृ-तितीर्वान्, पॄ-पुपूर्वान्। णि-लोपात् द्विरुक्तिः परः,

---

आट टकारः पुनरासेवादड्व्यवायेत्यादि विशेषणार्थम्। तेन आटा सह अजादेः पुनः वृद्धिश्च विधीयते।

तु शब्दो वाक्यभेदे समुच्चये च। स्तामिति अस् धातोर्लिङि प्रथमाद्विवचनम्। कथं मानिषाद प्रतिष्ठान्त्वमगम इति चेदाह अत्र पदसमावेशान्न माङ् योगः, माशब्देन योगः इति केचित्, अथवा मनीनां वचने यद्यद् दृश्यते पदमन्यथा तत् सर्व्वं वैदिकं ज्ञेयं तत्र वक्तुं क ईश्वरः। नाजादेरिति—अजादिस्तप् ओजायत, ओजायिष्ट, ओजायिष्यत, एवं अमृदायत। क्राद्यन्तस्याजादेस्तु सुब्धातोरड़ागमो भवत्येव। यथा—ओजढ़न्, ऊढमख्यातवानिति णिच् ततो लुङ् दिप्, चङ् ऊढयत्वादेः प्रकृत्यचाद्यप्रकृत्यन्त इति ढकारस्य सूमाकारेण सह ढकारस्य द्विरुक्तिः (६।४।२) घभागद्धोज इति ढस्य धत्वं। ढहाभ्यासा देशयोरिति—इष्टसिद्धौ विधयो विध्यन्तरमपेक्षन्ते एव इत्यत्र आर्त्तिरिव ह्रस्वभ्यासस्य

तेनाजादेर्द्वितीयोद्विर्भवति । आटिटत्; णौ-कृतं स्थानिवदेव अजुहवत् । (२)

## ३ । हलादिः संयोगे शर्पूर्व्वस्तु खयः प्राक् शरः ।

[ हलादिः १।, संयोगे ७।, शर्पूर्व्वः १।, तु ०।, खयः १।, प्राक् ०।, शरः ५ । ]

संयोगे सति आदिभूतोहलेकाज् द्विर्भवति । ध्यान-

इयादेशे कृते अटा सह अजादेर्द्विरिति एवं वशकान्ताविव्यस्य थोष्टा इत्यत्र तु वकारस्य उकारादेशे कृते अड़ागमेन सह वृद्धिः ततश्च इष्टाभ्यासादेशयोरित्यस्य आभ्यास आदेशयोरिति पदच्छेदः अभ्यासे भवः आभ्यासः । अभ्यासस्थाने आदेश इति यावत्, तत्र आदेशश्च तयोः । एतेन हि अड़ागमात् प्राक् द्विरुक्तिरिति ज्ञायते, अन्यथा ऐय इत्यताजादित्वात् प्रागेव वृद्धि प्रसक्तेः, इह आदेश इत्यस्य श्लिष्टत्वं अभ्यासादेश आदेश इत्यतयोः श्लेषः । आदेशे कृते अजादित्वमित्येता-वता सिद्धेऽपि स्पष्टार्थमुक्तम् ।

(२) द्विरिति वारार्थे सुप्रत्ययः । एकाजिति एकोऽच् यस्येति बहु-व्रीहिः, आदिश्च एकाजश्चेति कर्म्मधारयः आयलुगादेशयोरिति आयादेश-लुगादेशश्च इति तयोः लुक् रूप आदेशः अथवा लुक् आदिश्यते यस्य यत्र वा स लुगादेशः, इयाय इत्यत्र आयादेशः, य्युरित्यत्र आकार-लुक् जघ्नुरित्यत्र अकारलुक् । अत्र प्रत्ययस्याचि परे य आदेशस्तस्यैव ग्रहणं अन्यकार्य्यात् परा द्विरुक्तिरिति ऋच्छ इत्यत्र यत्र इक् कृते, ऋधा-तोश्च ऋत इरिकृते, एधातोश्च उर्णोरित्युरि कृते द्विर्भवति । ननु यदि अन्यकार्य्यात् परैव द्विरुक्तिस्तर्हि कथं आटिटदित्यादि णिलोपोद्विरुक्तेः पर इति ज्ञापकमिति ज्ञापिता विधयो ह्यनित्या भु इत्यनित्यताऽऽगमः

दध्मान; शर्पूर्व्वस्तु खयः शरः प्रागेव द्विर्भवति—चुश्चोत, निटिष्ठेव, चस्कन्द। (१)

## ४। अजादेर्द्वितीयो वन्द्रादौ त्वन्त्यः।

[ अजादेः ६।, द्वितीयः १।, वन्द्रादौ (व्, न्, द, र्, आदि) ७।, तु ०।।, अन्त्यः १।]

अजादेर्धातोर्द्वितीय एकाच् द्विर्भवति। अटिटिषति, णेर्लोपे—आटिटत्, वन्द्रादौ संयोगेऽन्त्यो हलेकाच् द्विर्भवति। व्—उब्जिजिषति, न्-उन्दिदिषति, उच्चिच्छिषति, द्-अड्डिडिषति, र्-अर्च्चिचिषति, अर्कीयितुमिच्छति—अर्च्चिकायिषते। (२

---

प्रायः। णौ-कृतमिति अजुहवदित्यत्र णौ कृतवृद्धेः स्थानिवत्त्वेन ऊशब्दो-द्विर्भवतीति पद्मनाभपञ्जिका, मिश्रस्तु कथमजुहवदित्यत्र ह्वे शब्दस्य द्विरुक्तिरित्याह णौ कृतमिति, णौ णिचि यत् कृतं तत्सर्व्वं स्थानिवदेव इति। वस्तुतः अच्चादेशस्थानिवदित्यनेनैव गतार्थत्वे पुनरुक्तिरिदम्। अथवा तस्यैवोदाहरणान्तरमिदं।

(१) शर् पूर्व्वायस्येति बहुव्रीहिः न तु शरः पूर्व्वः। शरः प्राक् इति शरमतिक्रम्य प्राक् भवतीत्यत्र। इति पद्मनाभपञ्जिका। चुश्चोत, इत्यादौ श्चुतिर क्षरणे, ष्ठिवु निरसने, स्कन्दिर्गतिशोषणयोरित्येषां लिटि णलिरूपत्रयं।

(२) वनदरादौ त्विति तुशब्दोभेदार्थः। यदि व, द, र, णः संयोगस्यादिभूताः स्युस्तदा अजादेर्विधीयते किन्त्वन्त्यहलेकाजिति। उब्ज आर्जवे, उन्दि क्लेदने, उछि उञ्छे, दड् अभियोगे, अर्च्च पूजायां, आद्यौ तौदादिकरौधादिकौ भौवादिकाः शेषाः। अर्क इवाचरतीति क्यङन्तात् तुम्।

५ । ईर्ष्यो यः सन् वा । [ ईर्ष्यः ६।, यः १।, सन् ०१।, वा ०१ । ]

द्विः स्यात् । ईर्ष्यियिषति, ईर्ष्यिषिषति । (१)

६ । र्य्यन्ययोरनौ । [ र्य्य, न्य, योः ६।।, र् नौ ( र् न् ) १।। ]

र्य्यन्ययोः संयोगे र,नौ द्विरुच्येते । अरार्य्यते, अर्य्यमाख्यातवान् अरर्य्यत्, अनन्यत् । (२)

७ । उढ़यत्यादेः प्रकृत्यचाद्यप्रकृत्यन्तः ।

[ उढ़यत्यादेः ६।, प्रकृत्यचा (प्रकृति, अच्) ३।, आद्यप्रकृत्यन्तः (आद्य प्रकृति अन्त) १ । ]

एषां प्रकृत्यचा सह मूलप्रकृत्यन्तोद्विर्भवति । उढ़माख्यातवान् औजढ़त्, वहोढ़काऽौढ़स्य लुप्ताकारेण सह द्विरुक्तः—एवं ऐयष्टत् । (३)

८ । कण्डूयादेर्यः । [कण्डूयादेः ६।, यः १। ]

एषां योद्विरुच्यते । कण्डूयियिषति, असूयियिषति ।

---

(१) ईर्ष्य ईर्ष्यार्थः तस्य यः, सन् वा द्विरुच्यते, वा शब्दः समुच्चयार्थः। यकारद्विर्वचनं पूर्व्वेण प्राप्तमप्यनूद्यते क्रमव्यवस्थार्थं तेन युगपन्न स्यात् ।

(२) वनदरादौ त्वन्त इत्यस्य बाधकमिदम् । अरार्य्यते, इत्यत्र भृशार्थे ऋ धातोः यङ्ऋच्छत्यॄतामिति गुणः । अरर्य्यदित्यत्र सुपस्तत्करोत्यादाविति णिच् ततो लुङ् दिप् चङ् । एवमनन्यत् अन्यमाख्यातवान् इति वाक्यम् ।

(३) इष्टमाख्यातवान् ऐयष्टदिति ।

९। अजादेर्नाम्नो वा यथेष्टन्तु हलादेः।

[ अजादेः ६।, नाम्नः ६।, वा ०१।, यथेष्टं ०२।, तु ०१।, हलादेः ६। ]

अजादेर्नाम्नो यकारोवा द्विरुच्यते। अश्वीयियिषति, अश्वि-श्वीयिषति हलादेर्नाम्नोयथेष्टं द्विरुच्यते। पुपुत्रीयिषति पुति-त्रीयिषति, पुत्रीयियिषति, पुपुतित्रीयियिषति।

१०। पूर्व्वोऽभ्यासः। [ पूर्व्वः १।, अभ्यासः १। ]

धातोर्द्विरुक्तस्य पूर्व्वोऽभ्याससंज्ञः स्यात्। द्विरुक्तजक्षादिष ट्कोऽभ्यस्तं। द्विरुक्तमुभयं, (१) जक्षादिषट्कञ्च अभ्यस्तसंज्ञं भवति। ददति, जक्षति जक्ष, जागृ, दरिद्रा, चकास्, शास्, दिधी ; अभ्यस्तप्रदेशाः अन्तोऽदभ्यस्तादित्येवमादयः। (९।२।३)

११। लिट् संश्चङ् यङ् लुक्यनभ्यासस्य।

[ लिट् ०१।, सन्, चङ्, यङ्, लुकि ७।, अनभ्यासस्य (न—अभ्यास) ६। ]

एषु धातोर्द्विरुक्तिः स्यात्। प्रोर्णुनाव, डुढौके, चिकीर्षति, अचीकरत्, चेक्रीयते। यङ्-साविध्याद् यङ्लुकि च—चर्क-रीति, चर्कर्त्ति ; एतत् पृथगुपादानं खलु ज्ञापयति—यङि यत्-कार्य्यं तद् यङ्लुकि न भवति। अनभ्यासस्येति किम्? चेक्रीयि-यते ; लिटोऽस्थानिवत्वान्न लिड़ामि—दयाञ्चक्रे।

१२। जुहोत्यादेः कर्त्तरि सार्व्वधातुके।

[ जुहोत्यादेः ६।, कर्त्तरि ७।, सार्व्वधातुके ७। ]

---

(१) उभयमित्यनेन प्रथमं परञ्च गृह्यते। सर्व्वं द्विरुक्तमित्यर्थः।

एषां कर्त्तरि सार्व्वधातुके द्विर्भवति। जुहोति, जिहीतां, अभिमीत, अद्यात्।

१३। पदमाभीक्ष्णवीप्सयोः।

[ पदं ०१।, आभीक्ष्ण, वीप्सयोः ७॥ ]

अनयोः सुप्तिङन्तं पदमेव द्विरुच्यते। आभिक्ष्ण्ये—तु— भुक्त्वा, भुक्त्वा व्रजति, नदीमवस्कन्दमवस्कन्दमाचामति, लुनीहि लुनीहीत्येवायं लुनाति, आमन्त्रणे भीम भीम पश्य पश्य युग-पद्व्याप्तुमिच्छा—वीप्सा। गृहे गृहे अश्वाः, नदीं नदीमवस्कन्द-मुपस्पृशति दृष्टाद्युतरमाद्युतरमानय। न समासे नद्यवस्कन्द माचामति।

१४। त्रिश्चतुरपि सम्भ्रमे। [ त्रिश्चतुर् ०१।, अपि०१।, सम्भ्रमे ७।

त्वरायां पदं त्रिश्चतुरपि भवति। अहिरहिरहि पश्य पश्य पश्य।

१५। गुणसादृश्य पीड़ानुपूर्व्व्येषु बहुलं समासवच्च।

[ गुण, सादृश्य, पीड़ा, आनुपूर्व्व्येषु ७॥, बहुलं ०२।, समासवत् ०१। च ०१। ]

एषु द्विरुक्तं पदं बहुलं समासवद् भवति। गुणे सुखसुखेन प्रिय-प्रियेण; सादृश्येऽपि गुणवचनस्यैव दृष्यते। पटुपटुः, मृदु मृदो, पूर्व्वपदस्य पुंवत्। मन्दमन्दमुदितः प्रययौ खं भीत भीत इव शीतमयूखः। पीड़ायां गतगता नष्टनष्टा आनु-

पूर्व्वां ज्येष्ठज्येष्ठं प्रवेशय, एकैकमक्षरं जपति, वाहुल्यात् मन्दं मन्दं नुदति पवनः। (१)

१६। उपर्य्यध्यधसः सामीप्ये।

[ उपर्य्यध्यधसः (उपरि, अधि, अधस्, ) १।।, सामीप्ये ७। ]

एते समीपे द्विर्भवति। उपर्य्युपरि, अध्यधि, अधोऽधोग्रामं सामीप्ये इति किम् ?। सर्व्वस्योपरि चन्द्रमाः।

१७। परिरसमासे वर्ज्जने।

[ परिः १।, असमासे ७।, वर्ज्जने ७। ]

द्विः स्यात्। परिपर्य्युदधेः, समासे तु—पर्य्युदधि वृष्टो देवः।

१८। डाचि प्रकृत्या तस्य (२) लुगनुकरणे।

[ डाचि ७।, प्रकृत्या ३।, तः ६।, च०१।, लुक् ०१।, अनुकरणे ७। ]

डाचि परे पदं प्रकृत्या द्विर्भवति। तान्तस्य तस्य च लुक् च। (३) पटपटाकृत्य, खरट्खरटा करोति ; अनुकरण इति किम् ? सुखाकरोति।

---

(१) अत्र कर्म्मधारय समासातिदेश एव।

(२) प्रकृत्यन्तस्यलुगिति क्वचित् अनुकरणे डाचि परे अनुकृतं पदं द्विः स्यात् सति द्वित्वे तान्तस्य तस्य लुक्।

(३) अन्तस्य च इत्यन्यत्र पाठः।

१९। इतरेतरान्योन्यपरस्परं क्लीवमेकत्वे सुपश्च स्त्री नपुंसकयोराम् वा ।

[इतरेतरान्योन्यपरस्परं (इतर-इतर, अन्य-अन्य पर-पर) ०१।, क्लीवं ०१।, एकत्वे ७।, सुपः ६, स्त्रीनपुंसकयोः ७॥, आम् ०१।, वा०१। ]

इदं त्रयं कर्म्मव्यतिहारवृत्ति निपात्यते। नित्यमेकवचनं क्लीवञ्च ; तेभ्यश्च स्त्रीनपुंसकयोर्वर्त्तमानेभ्यः सुप आम् वा स्यात् । इतरेतरं इतरेतराम्वा स्त्रियौ क्लीवे वा स्पर्द्धेते, इतरेतरेण, इतरेतराम्वा स्त्रीभ्यां स्त्रीभिर्वा कुलैर्व्वा स्पर्द्ध्यते। एवमन्योन्यं अन्योन्येन अन्योन्यां वा, परस्परस्य परस्पराम्वा मित्रे व्यतिस्तुतः पुंसि तु आम् न भवति ।

२०। यथास्वे यथायथं । [यथास्वे ७।, यथायथं ०१। ]

अत्रेदं निपात्यते। यथायथं ताः सहिताः नभश्चरैः। (३)

२१। क्वचिद्द्वन्द्वघनाघनौ ।

[क्वचित् सप्तम्यन्त अव्ययं, द्वन्द्व, घनाघनौ १॥]

एतौ क्वचिदर्थे निपात्येते। द्वौ, द्वौ—द्वन्द्वं कलहयुग्मयोः द्वन्द्वनाम समासः। मत्तादौ—घनाघनः।

२२। चराचरादयो वा। [चर-चरादयः १॥, वा०१। ]

(१) यथायथं ताः सहिता नभश्चरप्रभाभिवद्भासितशैलवीरुधं घनं विमुक्ताः वनजायतेक्षणाः स्वयवतीनां दधुरेकरूपताम् ।

एते द्विरुक्तया वा निपात्यन्ते । चराचरः, चलाचलः, पतापतः, वदावदः ; पक्षे—चरच्चलः पतोवदः उक्तं द्विर्वचनं ।

२३ । अव्यक्तानुकरणस्येतावतो लुग्वा ऽनन्तवच्चाभीक्ष्णे तु तः ।

[ अव्यक्तानुकरणस्य ( अव्यक्त-अनुकरण ) ६।, इतौ ७।, अतः ६।, लुक् ०१।, वा०१।, अनन्तवत् ०१।, च०१।, आभीक्ष्णे ७। तु०१', तः ६। ]

इतौ परे अव्यक्तानुकरणस्यातो लुग्वा स्यात् । अपदान्तवच्च । अतोलुकि टकारादेस्तृतीयो न भवति । घटिति करोति घटदिति वा ; गम्भीरमम्बुदैर्नदितं । आभीक्ष्ण्ये तु तकारस्यैव लुग्वा इतौ परे पटपटेति करोति पटत् पटदिति वा ; पदमिति निवृत्तं ।

२४ । ह्रस्वोऽभ्यासस्य । [ ह्रस्वः १।, अभ्यासस्य ६। ]

धातोरभ्यासस्य ह्रस्वः स्यात् । ययौ, जग्लौ, एच इन् ह्रस्वत्वे डुढौके ।

२५ । उरत् । [ उः ६।, अत्०१। ]

अभ्यासस्य ऋवर्णस्यात्स्याद्भवति । ववृधे, चक्रे, ऋऌवर्णयोः सावर्ण्यात् चक्लृपे ।

२६ । कखङ्कां चोङस्त्वञः ।

[ क, ख, ङां ६॥, चः १।, ऊः६।, च०१।, अः १। ]

एषामभ्यासानां चः स्यात्। चुकुपे, चिखनिषति, चेछि-द्यते ;—ङस्य ञः ञुङ्वे।

२७। न कवतेर्यङि। [न०१।, कवतेः ६।, यङि ७। ]

कुङो यङि कश्चोन स्यात्। कोकूयते, अकोकूयिष्ट।

२८। घजगह्वोजः। [घ, ज, ग, ह ६।, जः १। ]

एषामभ्यासानां जः स्यात्। जघास, जझामि, जगाम ; जग्रहे, जुहाव।

२९। ट्तुपोर्द्वितीयस्य प्रथमो झषस्य जश्च।
[ट्, तु, पोः ६।, द्वितीयस्य ६।, प्रथमः १।, झषः ६।, च०१।, जश्०१। ]

अभ्यासस्य ट्तुपोर्द्वितीयस्य प्रथमो भवति। निटिष्ठेव, तस्थौ, पफाल, झषस्य जश् तच्चतुर्थस्य तृतीयो भवति। डुढौके, दधौ, बिभर्त्ति।

३०। धोधाञोङितस्ध्वतथे।
[ धः १।, धाञः ६।, ङित् स, ध्व, त, थे ७। ]

ङिति सकारादौ धाञो दत्वापवादो धकार एव तिष्ठते ; धत्से, धत्स्व, धद्ध्वं, धत्तां, धत्थ, यङ्लुकि धात्तः दात्त-यत्येके ; ङितीकिम् ? दधासि।

३१। द्युति स्वाप्योर्द्विः।
द्युति, स्वाप्योः ( द्युत, स्वापि ) ६॥, द्वि, सु १॥ ]

अनयोरभ्यासस्य दि,सु इत्येतौ स्यातां। दिद्युते, देद्युत्यते ; स्वापिर्ण्यन्तः—सुष्वापयिष्यति। न घणन्तादेः—स्वापस्ततोणिच् सिष्वापयिषति।

३२। निजादेर्गुणः सार्व्वधातुके।

[निजादेः ६।, गुण १।, सार्व्वधातुके ७।]

निजिर, विजिर, विष्ल, एषामभ्यासानां गुणः स्यात्। नेनेक्ति, अनेनेक्, वेवेक्ति, अवेवेक्, वेवेष्टि, अवेवेट्, सार्व्व-धातुक इति किम्? निनेज।

३३। अत्तेरियः। [अर्त्तेः ६।, इयः १।]

अस्य इयः स्यात्। इयर्त्ति, ऐयः, इयृयात्, सार्व्वधातुक इत्येव—आर।

३४। पृभ्ञ्जादेरच इत्। [पृ, भञ्जादेः ६।, अचः ६।, इत् १।]

एषां सार्व्वधातुकेऽच, इत् स्यात्। पिपर्त्ति, पिपूर्य्यात्। डुभञ्, माङ्, हाङः। बिभर्त्ति, अबिभः, बिभृयात्, मिमीते, जिहीते।

३५। लिटि भुवोवः। [लिटि ७।, भुवः ६।, वः १।]

लिट्यभ्यासस्य भुवो वः स्यात्। बभूव।

३६ । वचिज्यादिव्यथेरवेञ इणयवयोर्व्य, ज्य, स्वे विजिसु ।

[ वचि, ज्यादि, व्यथेः ६।, अवेञः ६।, इण् ०१।, य, व—योः ६॥, व्य, ज्य, स्वे, ७।, वि, जि, सु, ७१। ]

वच्यादेर्ज्यावयित्यादेर्व्यथेश्च णिष्वभ्यासयोर्यवयोरिण् स्यात् । उवाच, इयाज, वयि—उवाय ; व्य, ज्य, स्वे, वि जि सु इत्येतेषु: । संविव्याय, संविव्ययिथ, विव्यथे, जिज्यौ, सुस्वाप, अवेञ इति वेञरूपस्यैव निषेधो—नादेशस्य ववौ ।

३७ । आनच्यत ऋदुपधाश्नुद्विहलां ।

[ आन् ० १।, अचि ७।, अतः ६।, ऋदुपधाश्नुद्विहलां (ऋदुपध, अश्नु, द्विहल्) ६।। ]

एषां मभ्यासस्याचि परे अतः स्थाने आन् भवति । आनर्द, आनृधतु:, अश्नु—व्यानशे, द्विहलां—आनञ्ज, आनङ्ग, आनर्च । नाञ्छेः आञ्छि आयामे (१) आञ्छ, आञ्छतुः अचीति किम् ? चचार ; द्विहलामिति किम् ? आट ।

३८ । इत् सनि । [ इत् ० १।, सनि ७। ]

अत इत्येव—सनि परेऽत इत् स्यात् । पिपासति, पिपक्षति ।

३९ । ओः पुयणजेऽवर्णपरे ।

[ ओः ६।, पु, यण, (पवर्ग, य, व, र, ल), जे ७।, अवर्ण—परे ७। ]

अवर्ण—परे पवर्गे, यणि, जकारे च सन्यभ्यासस्य उकारस्य

(१) आयामे इति क्वचित् पाठः ।

इत् स्यात् । पु—पिपावयिषति, विभावयिषति, यणि—यियावयिषति, रिरावयिषति, लिलावयिषति । जुः सौत्रः । जिजावयिषति, णौ—कृतं स्थानिवदेव इति स्थानिनोऽपि तदुक्तिः । अवर्ण-पर इति किम् ? बुभूषति ।

४० । प्रु द्रु स्रु स्रु प्लुङ् च्युङां वा ।

[ प्रु, द्रु, स्रु, स्रु, प्लुङ्, च्युङां ६॥।, वा०१। ]

एषां यण व्यवधानेऽवर्णे परे सनि वा धोरिन् स्यात् । पिप्रावयिषति, पुप्रावयिषति, चिच्यावयिषति, चुच्यावयिषति. अवर्ण पर इत्येव—पुप्रूषते ।

४१ । गुणोयङ्लुकोः ।   [ गुणः १।, यङ्. लुकोः ७॥ ]

यङि, यङ्लुकि चाभ्यासस्य गुणः स्यात् । लोलूयते, लोलवीति ।

४२ । दीर्घोऽनागमस्यातः ।

[ दीर्घः १।, अनागमस्य (न-आगम) ६।, अतः ६। ]

यङि, यङ्लुकि चाविद्यमानागमस्यातो दीर्घः स्यात् । पापच्यते, पापचीति, आशांश्यते, आशोति. अनागमस्येति किम् ? जंगम्यते ।

४३ । नीरन्ते—वञ्चु, स्रंसु, ध्वंसु, भ्रंसु, कष, पत, पद, स्कन्दां ।

[ नीः १।, अन्ते ७।, वञ्चु, स्रंसु, ध्वंसु, भ्रंसु, कष, पत, पद, स्कन्दां ६॥। ]

यङि, यङ्लुकोरेषामभ्यासस्यान्ते नीः स्यात्। वनीवच्यते, वनीवञ्चीति; सनीस्रंस्यते, सनीस्रंसीति; दनीध्वस्यते, दनीध्वंसीति; बनीभ्रस्यते, बनीभ्रंसीति; चनीकष्यते, चनीकषीति, पनीपत्यते, पनीपतीति, पनीपद्यते, पनिपदीति, चनीस्कन्द्यते, चनीस्कन्दीति।

## ४४। अदुपधङमां जप जभ दह दन्श भञ्ज पशाञ्चानुस्वारोऽन्तवच्च।

[ अदुपधङमां ( अत् उपध, ङम् (ङ, ञ, ण, न, ) ६।।, जप, जभ, दह, दन्श, भञ्ज, पशां ६।।।, च०१।, अनुस्वारः १।, अन्तवत् ०१।, च०१। ]

यङि, यङ्लुकि चैषामभ्यासस्यान्ते अनुस्वारागमः स्यात्। स च पदान्तवच्च वा परसवर्णार्थं; अदुपधङमान्तानां—चंचूर्य्यते, चंचुरीति; वंभण्यते, वम्भणीति; तंतन्यते, तन्तनीति; जंगम्यते, जङ्गमीति; जपादेः—जंपप्यते, जम्जपीति; जंजभ्यते, जञ्जभीति, दंदह्यते, दन्दहीति; दंदश्यते, दन्दशीति, लुकि चास्य न स्य लोप उक्तः; वंभज्यते, वम्भञ्जीति, पश, वन्धने पंपश्यते, पम्पशीति, अदिति त—परः किं वाभाम्यते (१)।

## ४५। चरफलोः परादुच्च।

[ चर, फलोः ६।।, परात् (पर-अत्) ०१।, उत्०१।, च०१। ]

यङि, यङ्लुकोरनयोरभ्यासस्यान्तेऽनुस्वारः स्यात्। प्रकृतेरत उच्च चंचूर्य्यते, चंचूरः, चञ्चूर्त्तिः; पंफुल्यते; पम्फुलीति।

---

(१) भामक्रोधे भ्वादिः आत्मनेपदी।

४६। उत्ति च। [उत्०१।, ति ७।, च०१।]

पुनरुद्ग्रहणमयङ्लुगर्थं तादौ च अदुन्नवति। चूर्त्तिः ञिफला—विशरणे प्रफल्तं पद्मं।

४७। रीर्ऋन्मध्यस्य। [रीः १।, ऋन्मध्यस्य (ऋत्-मध्य) ६।]

ऋन्मध्यस्य धातोरभ्यासस्यान्ते रीः स्यात्। यङि, यङ्लुकोः परतः वरीवृत्यते, वरीवृतीति, (१) परीपृच्छ्यते, परीपृच्छीति।

४८। रुरिकौ च लुकि। [रुरिकौ १॥, च०१।, लुकि ७।]

ऋन्मध्यस्य यङ्लुक्यभ्यासस्यान्ते रुरिकौ स्यातां। रीश्च। नर्नर्त्ति, नरिनर्त्ति, नरीनर्त्ति, नर्नृतीति, नरिनृतीति, नरीनृतीति ऋन्मध्यस्यैव, जागर्द्धि, तस्मादौ जागृढः, जरीगृढा-वेत्येके—केचिद्ग्रहेर्यङ्लुकि यण इकमिच्छन्ति तेषां मतेन जरी-गर्ढि जरीगृहीतीत्यादि।

४९। ऋतश्च। [ऋतः ६।, च१।]

यङ्लुकि ऋदन्तस्य धातोः रभ्यासस्यान्ते रुरिकौ स्यातां। रीश्च। चर्कर्त्ति, चरिकर्त्ति, चरीकर्त्ति, ऋ-अरर्त्ति, अर्य्यर्त्ति, अररीति अर्य्यरीति, अर्य्यृतः; अर्य्यृतीत्यादि तपरः किम्? कॄ—चाकर्त्ति, करोतेः चर्करीतमिति यङ्लुकः संज्ञायां।

५०। णौ चङ्यनग्लोपि त्वरादेः सन्वल्लघौ लघुणो दीर्घस्य।

---

(१) वरीवध्यते, वरीवधीति। इति क्वचित् पाठः।

[ णौ ७।, चङि ७।, अनह्लोपि स्वरादेः (न-अक्-लोपि, स्वर, आदि) ६।, सन्वत् ०१।, लघौ ७।, लघ्विणः (लघु-इण्) ६।, दीर्घः १।, अ०१। ]

चङि परे णौ परतोऽभ्यासस्य लघौ धातुवर्णे परे सन्वद्भवति। लघ्विणो दीर्घश्च। अपीपठत्, अबिभ्रजत्; ओरित्वं अपीपवत्, अबीभवत्। प्रु, द्रु, श्रु, स्रु, प्लु, च्युङां वा। अपिप्रवत् अपुप्रवत्, अशिश्रवत्, असुश्रवत्, अदिद्रवत्, अदुद्रवत्, लघाविति किम्? अररक्षत्, अजजागरत्, अदिदीपत्, आटिटत्, इत्यत्र णौ परे लघुपरत्वाभावान्न दीर्घः। णाविति किम्? अचकमत्, अनह्लोपि स्वरादेरिति किम्? चुरादौ कथ, वर, गणादेरदन्तस्यातो लुकि अचकथत्, दृषदमाख्यातवान्—अददृषत्, घटं कृतवान्—अजघटत्, कथं अवीवदद्वीणां, परिवादकेन, णौ णिलोपेऽपि * व्याकृतिनिर्देशात् सिद्धं; त्वरादीनां त्वर, प्रथ, म्रद, स्मृ, दृ, स्तृ, स्पृशाम्। अतत्वरत्, असस्मरत्, अददरत्। ऊर्णोर्न दीर्घः। प्रोर्णुनवत्।

५१। गणोर्व्वा। [ गणः ६।, वा०१। ]

---

* वादितवन्तं प्रयोजितवान् इति वाक्ये तदन्तोपाख्याने तत्कृत प्रकृतिप्रत्ययापत्तिप्रकृतिवच्च कारकमित्यनेन प्रकृतौ सत्यां णिलोपो विहितः ततोऽन्लोपित्वे कथं सन्वदिति पूर्वपक्षः, अत्र सिद्धान्तमाह णौ णिलोपि इति णिपदमत्र जातिपरं जातेरेकत्वान्नित्यत्वाच्च सर्वदाऽवस्थान मिति नान्लोपित्वम्। सजातीयस्य द्वितीयस्य णेर्विद्यमानत्वात् लुप्तोऽपि प्रथमो णिरवस्थवद्गृह्यते इति भावः।

गणयतेर्णौ चङि सन्वद्वा स्यात्। अजीगणत्, अजगणत्, पर्व्वतीय इति माऽवजीगणः।

५२। वेष्टिचेष्टोरेत्।

[ वेष्टि चेष्टोः (विष्, चे ष्टि,) ६।, एः ६।, अत् ०१। ]

णौ चङ्यनयोरभ्यासस्य इकारस्यात्वं वा स्यात्। अविवेष्टत्, अववेष्टत्, अचिचेष्टत्, अचचेष्टत्, इत्यभ्यासविधिः।

५३। उपधा ह्रस्वोऽनग्लोपिशास्वृदितां।

[ उपधा ह्रस्वः १।, अनग्लोपि ( न-अक्लोपिन् )—शास्वृदितां (शास्-ऋत्-इत् ) ६॥ ]

चङि परे णौ परतो धातोरुपधायाः ह्रस्वः स्यात्। अचो-करत्, अजीहरत् अजूहवत्, असीसरत्। उपधाह्रस्वत्वे कृते द्विर्व्वचनं मा भवान् आटिटत्। उपधेति किम्? अचकाङ्क्षत्, अग्लोपि शास्वृदितामिति किम्? मालामाख्यातवान्, अममालत्, मातरं अममातत्, शासेः, अशशासत्, ऋदितां वा धृ—अववाधत् ढौकृ, अडुढौकत्।

५४। भ्राज भाष भास दीप जीव मीन पीड़, कण रण वन भणश्रणाम्वा।

[भ्राज, भाष, भास, दीप, जीव, मीन, पीड़, कण, रण, वन, भण, श्रणां ६।।।, वा०१।]

एषां णौ चङ्युपधाया ह्रस्वो वा स्यात्। अवभ्राजत्, अबिभ्रजत्, अबभाषत्, अबीभषत्, अजिजीवत्, अजिजिवत्।

अचकाणत्, अचीकणत्; अबभाणत्, अबीभणत्, अशश्राणत्, अशिश्रणत्।

५५। अलुक् पिवतेः क्रताभ्यासविधेः।

[अलुक् १।, पिवतेः ६।, क्रताभ्यासविधेः (क्रत-अभ्यास-विधि) ६।]

णौ, चङि क्रताभ्यासकार्य्यस्य पिवतेरुपधाया अतो लुक् स्यात्। अपीप्यत् अपीप्यतां।

५६। इतस्थो वाच जिघ्रतेः।

[इत् १।, स्थः ६।, वा० १।, च० १।, जिघ्रतेः ६।]

णौ चङि तिष्ठतेरुपधाया इत् स्यात्। अतिष्ठिपत्, घ्रौबा। अजिघ्रिपत्, अजिघ्रपत।

५७। ऋट ऋत्। [ऋटः १।, ऋत् १।]

णौ चङ्युपधा ऋवर्णस्य ऋदा स्यात्। इरगारामपवादः। इर् अचीकृतत्, अचीकीर्त्तत; अर्-अवीवृतत्, अववर्त्तत; आर् अमीमृजत् अममार्ज्जत्। (१)

५८। इजभ्रनगमां सनसि दीर्घोवा च तनेः।

[इजभ्रनगमां (इज्-हन-गम्) ६।।।, सन् सि ७।, दीर्घ १।, वा० १।, च० १।, तनेः ६।]

सन्—सकारे परत इजन्तादेर्दीर्घः स्यात्। चिचीषति चिकीर्षति, तुष्टूषति, चिकीर्षति, हन—जिघांसति, (२) इङोगमि

(१) ऋग्रहणे दीर्घस्यापि ग्रहणं।

(२) इह इन्तेरदादिकस्य साहचर्यात् इङोगमेरेव ग्रहणं न पुन-भावादिकस्य गम्लृ गताविसस्य।

अधिजिगांसते तनेर्वा—तितांसति, तितंसति ; सीति किम् ? जिगमिषति, तितनिषति।

५९। दम्भेर्धीपधिपौ द्विर्लुक् च।

[ दम्भेः ६।, धीप, धिपौ १।।, द्विर्लुक्० १।, च० १। ]

दम्भेः सन-सि धीप, धिपौ, स्यातां। द्विरुक्तस्य लुक् च। धीप्सति, धिप्सति, सीत्येव—दिदम्भिषति।

६०। घुमीमामच इस्।

[ घुमीमां (दा, धा, मी, मा,) ६।", अचः ६।, इस्० १। ]

एषां सन-सि अच इस् भवति। द्विरुक्तेर्लुक् च। दित्सति, धित्सति ; माञो मित्सते (मा, मेङ्, माङः) मा—मित्सति, प्रमित्सते।

६१। रभ लभ शक पत पदामित्।

[ रभ, लभ, शक्, पत, पदां ६।।, इत्० १। ]

एषां अच इत् स्यात्। सन—सि द्विरुक्तस्य लुक् च। आरिप्सते, लिप्सते, शिक्षते, पित्सते ; सीत्येव—पिपतिषति।

६२। राधोऽहिंसने। [ राधः ६।, हिंसने ७। ]

अच इत् स्यात्। द्विर्लुक् च। अपरित्सति हिंसन इति किम् ? आरिरात्सति।

६३। ऋध ईर्। आप्ज्ञपेरीत्।

[ ऋधः ६।, ईर्० १।, आप्, ज्ञपेः ६।, ईत्०१। ]

एषां सन्-सि अच ईरीतौ स्यातां। द्विर्लुक् च। ईत् सति ईप्सति, ज्ञपेर्णि—लोपे—ज्ञीप्सति, सौत्येव—अर्द्दिधिषति, जिज्ञ-पयिषति, इवन्तर्द्धेति (११३।४।३) विकल्पेन इट्।

## ६४। मुचेरोद्वा कर्म्मकर्त्तरि।

[ मुचेः ६।, ओत्० १।, वा० १।, कर्म्मकर्त्तरि ७। ]

अस्याच ओद्वा स्यात्। द्विर्लुक्च। मोक्षते वत्सः स्वयमेव, मुमुक्षते, कर्म्मकर्त्तरीति किम्? मुमुक्षति वत्सं गोपः।

## ६५। देङो दिगि लिटि। [देङः ६।, दिगि ०१।, लिटि ७।]

अच इति निवृत्तं। लिटि देङो दिगिः स्यात्। द्विर्लुक् च दिग्ये, दिग्याते।

## ६६। अदेन्मध्येऽसंयोगपार्श्वेऽनादेशाभ्यासस्यागुणवादिशसिददोऽणिति।

[ अत्०१।, एत्०१।, मध्ये ७।, अ संयोगपार्श्वः १।, अनादेशाभ्यासस्य (न-आदेश अभ्यास) ६।, अगुण वादि शसि ददः (न-गुण, व आ द, श स, द द) ६।, अणिति (न-ण् इत् ७।) ]

अणिति लिटि परेऽनादेशाभ्यासस्य धातोर्मध्ये ऽसंयोग पार्श्वेऽत एद्भवति। द्विर्लुक् च। रेणतु, रेणुः, रेणिथ, पेचुः, पेचिथ, पेचे। अनादेशाभ्यासस्येति किम्? बभणतुः, असंयोग पार्श्व इति किम्? ततक्षुः, तत्सरतुः, ममकथ, पपक्थ, अणितीति किम्? रराण, पपाच।

अगुणादेरिति किम्? विशशरतुः, विशशरिथ; बादि बबले, ग्रस—विग्रग्रसतुः, विग्रग्रसिथ; दद—ददद, दददाते। रधिजभोः संयोगेऽप्यनुमि—रेधा. नेभ्र, नेह—ररन्धिव।

६७। तृफल भजत्रपश्रन्थग्रन्थ दम्भां नश्च लुक्।

[ तृ, फल, भज, त्रप, श्रन्थ, ग्रन्थ, दम्भां ६॥, नः ६', च०१।, लुक्०१। ]

एषामणिति लिटि परे अत, एद्भवति। द्विर्लुक् च। नोपान्तस्य नस्य च लुक्। तरतेर्गुणार्थं वचनं। तेरतुः, तेरिथ. थेलुः, थेलिथ, भेजुः, भेजिथ, त्रेपुः, त्रेपिथ, त्रेपे, त्रेपिरे, श्रेथुः, श्रेथिथ, ग्रेथुः, ग्रेथिथ, देभुः, देभिथ; श्रन्थग्रन्थदम्भां केचिदेत्वं विकल्पयन्ति, नलोपस्तु नित्यमेव, तन्मतेन शश्रथुः, जग्रथुः दद-भिथ। नशेर्लुङ्मि च। पुषाद्यङ्-अनेशम्। मनेराशिस्यके। मेनका।

६८। राधोहिंसायां। [ राधः ६।, हिंसायां ७। ]

अस्य विधिबलादाेत् एत् स्यात्। द्विर्लुक् च। अपरेधुः, अपरेधिथ, हिंसायामिति किम्? आरराधतुः।

६९। वा जॄभ्रमु त्रसि वमि फणादीनां।

[ वा०१।, जॄ, भ्रमु, त्रसि, वमि, फणादीनां ६॥ ]

अणिति लिट्येषामवर्णस्य एद्वा स्यात्। द्विर्लुक् च; जेरुः, जजरु, जेरिथ, जजरिथ, एवं—भ्रेमुः, बभ्रमुः, त्रेसुः, तत्रसुः, वेमुः, ववमुः, फणादेः—फेणुः, पफणुः, फण, राज, भ्राज, भ्राश, भ्लाश, स्यम, स्वन: इति फणादि।

## ७०। सिचि वृद्धिरकोऽश्विजागृः परस्मैपदे।

[ सिचि ७।, वृद्धिः १।, अकः ६।, अश्विजागृः (न-श्वि, जागृ) ६।, परस्मैपदे ७।]

अक इत्यवर्णं उत्तरार्थः। इगन्तस्य सिचि परस्मैपदे वृद्धिः स्यात्। अजैषीत्, अहौषीत्, अलावीत्, अनावीत्, अश्विजागृरिति किम्? अश्वयीत्, अजागरीत्; परस्मैपद इति किम्? व्यजेष्ट। वोर्णोः। प्रौर्णावीत्, प्रौर्णवीत्; अगुणपक्षे प्रौर्णुवीत् सिचीति वर्त्तते—वान्यस्येति (७।४।२) यावत्।

## ७१। अनिटो हलन्तस्य। [ अनिटः ६, हलन्तस्य ६। ]

सिचि परस्मैपदे अनिटो हलन्तस्याको वृद्धिः स्यात्। पच—अपाक्षीत्, रन्ज-अरांक्षीत्, भन्ज—अभांक्षीत्, अभैत्सीत्, अरौत्सीत् अनिट इति किम्? अदेवीत्।

## ७२। इटि लघोरतो ल्रान्तवदव्रजां।

[ इटि ७।, लघोः ६।, अतः ६।, ल्रान्त वद व्रजां (ल,र्-अन्त, वद व्रज) ६।।। ]

लान्तरान्तादेरिडादौ सिचि परस्मैपदे वृद्धिः स्यात्। अचालीत्, अचारीत्, अवादीत्, अव्राजीत्, लघोरिति किम्? अवल्गीत्।

## ७३। वान्यस्यैकाचो हलादेरल्मान्त क्षण वध श्वसेदितां।

[ वा०१।, अन्यस्य ६।, हलादेः (हल्-आदि) ६।, अह्मान्तक्षण वधश्वसेदितां (न-ह-म-य-अन्त, क्षण, वध, श्वस, एदित्) ६।।। ]

लान्तादेरन्यस्यैव हलादेरेकाचोहमयान्तादि—वर्जितस्य

इड़ादौ सिचि परस्मैपदेऽतोवृद्धिर्व्वा स्यात्। अपाठीत्, अपठीत्, अतानीत्, अतनीत्, एकाच इति किम्? चकास्,  अचकासीत्, अह्मयन्तादीनामिति किम्? ह—अग्रहीत्, म—अवमीत्, य—अव्ययीत्, अक्षणीत्, हनोवध—अवधीत्, अश्वसीत्; एदितां अहसीत्, अलगीत्, सिचीति निवृत्तं।

## ७४। ऋत इद्धातोः।

[ऋतः ६।, इर०१।, धातोः ६।, च०।]

अगुणवृद्धिविषयार्थं वचनं। ऋदन्तस्य, ऋदुपधस्य च धातोः ऋत इर् स्यात्। किरति, कीर्य्यते, चिकीर्षति, आस्तीर्णं, कॄत-कीर्त्तयति, कीर्त्तनं, परत्वाद्गुणवृद्धिभ्यां वाध्यते चिचकरतुः, चिचकार; न सुपः अनुव्यते।

## ७५। उदोष्ठ्यपूर्वस्य। [उः १।, पोः ५।]

पवर्गादुत्तरस्य ऋत उर् स्यात्। पिपूर्त्ति, पिपूरति, पोपूर्य्यते, पुपूर्षति, वृ-वुवूर्षति, भृ-वुभूर्षति, मृ—मुमूर्षति, परत्वाद् गुणवृद्धौ—निपपरुः, निपपार।

## ७६। मिदेर्गुणः। [मिति ७।, मिदेः ६।, गुणः १।]

मित्यस्य गुणः स्यात्। मेद्यति, अमेद्यत्।

## ७७। ऋदृशोऽङि। [ऋ, दृशोः ६।।, अङि ७।]

ऋवर्णान्त—दृशोरङि गुणः स्यात्। आरत, असरत्, अदर्शत्।

७८। ऋसंयोगाद्यृतोर्यक्यङ्लीङ्येषु।

[ऋ, संयोगाद्यृतोः (संयोग आदि-ऋत्) ६।, यक्, यङ्, लीङ्येषु (यक्, यङ्, लीङ्य,) ७॥ ]

एभ्वर्तेः संयोगादेश्चॄदन्तस्य च गुणः स्यात्। यक्, अर्य्यते, अरार्य्यते, अर्य्यात्, अर्य्यास्तां, स्मृ-स्मर्य्यते, सास्मर्य्यते, स्मर्य्यात्; ध्वृ—ध्वर्य्यते, दाध्वर्य्यते, ध्वर्य्यात्। न सुटः कञ्योगादिषु। संस्क्रियते, संचेस्क्रियते, संस्क्रियात्।

७९। ऋऋतोश्च लिटि। [ऋऋतोः ६।, (ऋच्च ऋदन्त) लिटि ७।]

लिटि ऋऋदन्तयोश्चसंयोगाद्यृतश्च गुणः स्यात्। आनर्छ, आनर्छतुः, ऋतः—निजगरुः, तस्तरुः, तेरुः, ऋ—आरुः संयोगाद्यृतः—सस्मरुः, दध्वरुः, सञ्चस्करुः, णिति परत्वाद्वृद्धिः निजगार। ऋतो न कसौ। तितीर्वान्।

८०। श्रृ दृ पॄ ह्रस्वो वा। [श्रृ, दृ, पॄ ७१।, ह्रस्वः १।, वा०१।]

एषां लिटि ह्रस्वो वा स्यात्। शश्रुः, शशरुः; शश्रृवान्, शिशीर्वान्. दद्रुः, ददरुः; पप्रुः, पपरुः।

८१। इगन्तलघूपधयोरुत्रोश्चाक्ङिति।

[इगन्तलघूपधयोः (इक्-अन्त्,-उपध) ६॥, उश्चोः (उ, अ) ६॥, च०१।, अक्ङिति ७।]

पर्य्युदासे (१) नञि क्ङितोऽन्यस्मिन् परे इगन्तस्य लघू-

(१) नञ् (निषेधः) हि द्विविधो भवति पर्य्युदासः, प्रसज्यप्रतिषेधश्च। तत्र पर्य्युदासस्थले विधेः प्राधान्यं निषेधस्य च अप्राधान्यं।

पदस्य च धातोरन्योश्च विकरणयोर्गुणः स्यात् । जयति, वर्द्धते, करोति, चिनोति, लघूपधस्येति किम् ? सूदयति, अकिङ्तीति किम् ? जितं, बिभिदुः, चिनुतः, नियमः किम् ? अकेनिषं इटो न गुणः । लिखादेष्टनादौ वहुलं । लिखनं, लेखनं, लेखनीयं, लिखनीयं लिख्यं, लेख्यं, नित्यं लेखनी, मिलनं । ष्ठिवुसिवो-र्दीर्घश्च । निष्ठीवनं, निष्ठेवनं, सीवनं सेवनं ।

## ८२ । जागरवीणल्ङित् सु ।

[ जागुः ६।, अवीणल्ङित्सु ( न-वि, इण, णल्, ङित्) ७।॥ ]

प्रतिषेधवृद्धिविषये च जागर्त्तेर्गुणः स्यात् । जागरितः, जागर्यते, जागर्यात् । जागरयति, जागरकः अवीणल्ङित् स्विति किम् ? औणादिकोविक् जागृविः, इण अजागारि, णल् जजागार परत्वाणलि वोत्तमे अहं जजागरेति ङिति जागृ-यात् ।

## ८३ । गोहोऊदच्योतः ।

[ गोहः ६।, ऊत् ०१।, अचि ७।, ओतः ६। ]

गोहो अचि ओत ऊत् स्यात् । उपगूहयति, निगूहनं, निगूहयति, अचीति किम् ? घोक्ष्यति । गोह इति किम् ? गुहा ।

---

नञपि समस्तो भवति । ततश्चात्र विधेर्गुणस्य प्राधान्यात् निषेधस्य चाप्राधान्यम्. क्ङितोऽन्यस्मिन् इत्यर्थ-लाभात्ः ।

## ८४। मृजेर्वृद्धिः सन्यपि क्ङिदचि तु वा।

[ मृजेः ६।, वृद्धिः १।, सनि ७।, अपि ०१।, क्ङिदचि ७।, तु०१।, वा०१। ]

मृजेर्गुणापवादो वृद्धिः स्यात्। मार्ष्टा, मार्ष्टि, मार्ष्टव्यं, सनि कित्वेऽपि मिमार्क्षति, क्ङिदचि तु वा ममार्ज्जुः, ममृजुः मार्ज्जन्ति, मृजन्ति ; व्यवस्थित—विभाषाया नित्यं तुन्दपरिमृजः।

## ८५। अदुपधेचोर्णिति।

[ अदुपधेचोः (अत् उपधा-इच्) ६॥, णिति ७। ]

अदुपधस्य इजन्तस्य च धातोर्णिति वृद्धिः स्यात्। पाचयति, पाचकः, नायः, भावः, कारयति, संविव्याय ; णेर्न वृद्धिरिणागमे। घटयिष्यति।

## ८६। णलि वोत्तमे। [ णलि ७।, वा०१।, उत्तमे ७। ]

उत्तमे णलि वृद्धि र्वा स्यात्। अहं पपाच, पपच वा; चकार, चकर वा।

## ८७। न जनवधमान्तानां मिण क्ञतोरणाचमि कमि वमि यमि रमि णमि गमां।

[ न०१।, जन, वध, मान्तानां (न-जन वध-म अन्त) ६॥, इण क्ञतोः (इण्-क्ञत्) ७॥, अनाचमि कमि वमि यमि रमि णमि गमां (न-आ-चमि, कमि यमि रमि णमि गम्) ६॥ ]

जनादेरिणि क्ञति च वृद्धि र्नास्ति। अजनि, जनः, जनकः ; अवधि, वधः, वधकः ; अशमि, शमः, शमकः, अनाचमादेरिति किम्? आचामि, आचामकः, कामः, वामः, यामः, रामः,

प्रणाश, गामुकः। अमेर्णके वृद्धिः चुरादि पाठाद्वा। आमकः, घणि—आमश्चामयतेः। वेः श्रमेर्घणि वा। विश्रामो, विश्रमः।

८८। घटादेर्णौ ह्रस्वश्च।

[ घटादेः (घट, आदि) ६।, णौ ७।, ह्रस्वः १।, च०।। ]

णौ घटादेर्वृद्धिर्नास्ति। दीर्घस्य च ह्रस्वः स्यात्। घटयति, घटकः, व्यथयति, व्यथकः, रमयति, रमकः, गमयति, गमकः, उद्घाटयति, संक्रामयतीत्यपि चुरादिपाठात्। दीर्घस्य च ह्रस्वश्च—हेड़, हिड़यति, श्रा पाके-श्रपयति। घट, व्यथ, प्रथ, प्रस, म्रद, स्खद, लज्ज, दच, क्षप, कृप, (१) कन्द, क्रन्द, (२) क्लद, क्रद, त्रिलवग, इति षितः। ज्वर, गड़, हेड़, वट, भट, परिभाषणे। नट नृतौ। नट गतावित्येके। ष्टक, चक, कखे, रगे, लगे, ह्रगे, ह्लगे, षगे, ष्टगे, सम्बरणे। कगे नोच्यते। अक, अग कुटिलायां गतौ। कण, रण, गतौ। चण, शण, श्रण, दाने। चण गतावप्येके। श्रथ, श्नथ, क्रथ, क्लथ, हिंसायां। चनु, वनु नोच्यते। ज्वल दीप्तौ। स्वन, शब्दे। ज्वल, हल, ह्मल, चलने। नउ जिह्मोन्मथने। मदी हर्ष-ग्लेपनयोः। स्मृ आध्याने। भृ भये। नृ नये। श्रा पाके। मारण, तोषण, तेजन, निशामनेषु ज्ञा। चल कम्पने। छदिरूर्जने। ध्वन शब्दे। स्वन अवतंसन इत्यप्येके। जलो, जृष क्नुपु, रञ्जोऽमन्तास्य। ज्वल, ह्मल, ह्वल नमाऽनुपसर्गा

(१) क्षप, क्लप इति क्वचित् पाठः।

(२) कन्द, क्लन्द इति क्वचित् पाठः।

वा। स्मा, क्मा, वनुरमाश्च। न कम्यमिचमां। शमोऽदर्शने। यमोऽपरिवेषणे। स्खदेरप, परिभ्याश्च न घटादित्वं। अपस्खादयति, परिस्खादयति। फण गताविति घटादयः।

## ८९। णमिणोर्दीर्घो वा।

[णमिणोः (णम्-इण्) ७॥, दीर्घः १।, वा०१।]

णौ घटादेर्णमि, इणि च दीर्घो वा स्यात्। घटं घटं, घाटं घाटं वा ; अघटि, अघाटि, घटयिष्यते, घाटयिष्यते। शमं शमं, शामं शामं, अशमि, अशामि ; शं शमयतेः—शं शमं, शं शामं ; अशंशमि, अशंशामि, अचञ्जि, अचाञ्जि, अदम्भि, अदाम्भि, अह्रिडि, अह्रीडि ; न जनवधोरिति (८७।४।३) निषेधात् अजनि, अवधि।

## ९०। न गुणवृद्धी पिवाद्यग्लोपिनां।

[न०१।, गुण, वृद्धी १॥, पिवादि अग्लोपिनां (अक्-लोपि) ६॥]

एषां गुणवृद्धी न स्यातां। पिवति, कुरुते, अध्यगीष्ट। गियोऽनिणि पिवादित्वं। इणि अध्यगायि। अग्लोपिनां—गुणयति, लघयति। चुरादौ—कथ, वर गणादयोऽदन्ताः णौ तेषा मग्लोपित्वात्। कथयतीत्यादि। दीधी, वेव्यौ छान्दसौ, तयोश्च पिवादित्वं, अदीध्यकः।

## ९१। कुटादेरणिति। [कुटादेः ६।, अणिति ७।]

अणिति प्रत्यये कुटादेर्गुणवृद्धी न स्यातां। कुटिता, कुटितुं,

संकुटितव्यं, अधुवीत्, अणितीति किम् ? घण-कोटः, उत्-कोटयति ।

९२ । विजेरिटि । [विजे: ६।, इटि ७। ]

अस्येटि गुणो न स्यात् । उद्विजिता, उद्विजितु, इटीति किम् ? उद्वेजनं, ण्यन्तादुद्वेजिता दृष्टिभिरिति ।

९३ । वोर्णोः । [ वा०१।, ऊर्णोः ६। ]

ऊर्णोरिटि गुणवृद्धी वा न स्याताम् । प्रोर्णविता, प्रोर्णुविता, सिचि-प्रोर्णावीत्, प्रोर्णवीत्, प्रोर्णुवीत् ।

९४ । न भू सुङोर्लुङ्लोटोः ।
[ न०१।, भू, सुङोः ६॥, लुङ्, लोटोः ७॥ ]

भुवोलुङि, सुङोलोटि गुणो न स्यात् । अभुत्, अभूः, सुवै, सुवावहै ।

९५ । यङादि लुक् आर्द्धधातुके वातः ।
[ यङादि लुक् (यङ्-आदि-लुक्) ०१।, आर्द्धधातुके ७।, वा०१।, अतः ५। ]

यङादिलुगन्तानामार्द्धधातुके गुणवृद्धी न स्याताम् । लोलुवः, चञ्चुरः, वेभिदिता, मरीमृजः, नेन्ययति, वोभुवाञ्चकार, चरिक्रयति, तातृ—तातिरयति, तातिराञ्चकार, क्य—लुक् समिधिता, समिधकः । विलोपस्य च विधुवयति रविः, अतोवृद्धिर्वा पापाचयति, पापचयति ।

९६। न लघूपान्तस्याचि पिति सार्व्वधातुके।

[न०१। लघूपान्तस्य ६।, अचि ७, पिति ७।, सार्व्वधातुके ७। ].

लघूपान्तस्य द्विरुक्तस्य धातोरजादौ पिति सार्व्वधातुके गुणो न स्यात्। नेनिजानि, अनेनिजं, वेभिदीति, चञ्चुरीति, यिवन्तस्य च—गोदुहति, अचीति किम्? वेभेति, हलि दीर्घत्व चञ्चूर्त्तिः।

९७। इड़यच्यार्द्धधातुके।

[इट्०१।, अयचि (न-य्, अच्) ७।, आर्द्धधातुके ७। ]

याद्यजादिवर्जिते आर्द्धधातुके परे धातोरिड़ागमोभवति। भविता, भविषीष्ट, पठिष्यति, अयचीति किम्? भव्यं, भवनीयं, आर्द्धधातुकविधिरापदापरिसमाप्तेः।

९८। स्वृ स्रु धूञूदिन्निष्कुष रधादि दरिद्राद्वा।

[स्वृ स्रु धूञूदिन्निष्कुष रधादि दरिद्रात्, स्वृ, स्रधूञ्, (उत-इत्) निष्कुष, रधादि, दरिद्र) ५।, वा०१। ]

एभ्योऽयच्यार्द्धधातुके इड् वा स्यात्। स्वरिता, स्वर्त्ता, स्रुतिः, स्रुयत्योः, सविता, सोता, धविता, धोता, उदित्, गाहिता, गाढ़ा, गोपिता, गोप्ता, मार्जिता, मार्ष्टा, निष्कोषिता, निष्कोष्टा, रधिता, रद्धा, रधि, नशि, तृपि, दृपि, द्रुह, मुह, स्नुह, इति रधादि; दरिद्रा—ता—दरिद्रिता, दरिद्रिषति, दरिद्रासति।

९९। न प्रकादेः। [न०१, प्रकादेः (प्रक्-आदि) ५। ]

अकारादेरित्यास्ति । शक्ता, शक्ष्यति, पक्ता, पक्ष्यति ।
अनिडकः शकिः कान्ते चान्ते पचि, वचो विचिः ।
सिचि, मुंचि, रुचो, (१) चैक ष्कान्ते प्रच्छिरुदाहृदः ॥
भजि, भञ्जि यजि, त्यजि, रञ्जिरुजः
सृजि, सञ्जि, विजि, स्वजि, मञ्जि, भुजः ।
युजि, भृज्जि, निजोऽपि च जान्तगणे
गुणसिन्धुभिरूचिर इत्यनिटः ।
अदिं हदिं स्कन्दि, भिदि, छिदि, क्षुदीन्
शदिं, सदिं, खिद्यति, पद्यतो, चिदिं । (२)
तुदिं, नुदिं, विद्यति विन्द, इत्यपि
प्रतीहि दान्तान् दश पञ्च चानिटः । विन्द इति श्नमा निर्देशः
क्रुधि, राधि, रुधि, क्षुधि, वुध्यतयो
व्यधि, शुध्यति, सिध्यति, बन्धि, युधः ।
सह साधयः इत्यनिटो धगणे
हनि, मन्यति, चेत्यपि नान्तगणे ॥
स्वपि, वपि, तपि, लिप्यापि, शपोपि क्षिपि सृपि लिपि
लुम्पि कृपयश्च ।
पान्तगणेष्वथ भान्ते रभि लभि जभयोप्यनिटः । मान्ते
यमि रमि नमि गमयश्च ।

(१) रिचोचैक इति पाठान्तरम्
(२) भिदिं इति क्वचित् पाठः ।

शिषि, श्लिषो, दुष्य, विषि, द्विषि, त्विषीन्
पिषिं कृषिं, पुष्यति, शुष्य, तुष्यतीन्।
दिशिं, दृशिं, दंशि, मृशीं. रिशिं, निशिं,
रुशिं, स्पृशि, क्रोशविशोऽनिटो जगुः।
घसिश्च वसतिः सान्ते, हान्ते दहति मेहती।
दिहि दुहि लिहो रोह, वहो नहि रिमेऽनिटः॥

ऋदुदन्तावनेकाचो (ऋत्-उत्-अन्त अनेक् अच्), वृङ् वृञो. रु, क्षु यु, ष्णुवः नु,च्नु, श्रिञो, श्वि, डी, शोङ् सेटोऽजन्ता उदाहृताः एभ्योऽन्ये स्वरान्ताः सर्व्वेऽप्यनिटः। चेता, स्तोता, कर्त्ता, क्रञादेर्दीर्घत्वे लाक्षणिकत्वन्न भवति। चिकीर्षति, बुभूर्षति, तुष्टूयति।

## १००। वर नर ति त्रादौ क्तत्यभणादेः।

[ वर, नर, ति, त्रादौ (त्र-आदि) ७।, क्तित ७।, अभणादेः (न-भण-आदि)५। ]

वरादौ क्तीमास्ति। वर—ईश्वरः, न—याचञा, र—दीप्रः, क्तिन्—दीप्तिः त्र-वस्त्रं; आशिष्यन्यात् क्विप्—विद्युत्. क्रु तस्रु, तु—जन्तुः, मन् भस्म, त—हस्तः, सिक्—कुक्षिः, सु—इक्षुः, स—वत्सः, क—कल्कं, सर—अक्षरः, एते औणादिकाः। अभणादेरिति किम्? भणितिः, निपठितिः, संकुचितिः। (१)

## १०१। स्नौतेस्तङि। [स्नौतेः ५।, तङि ७। ]

(१) ग्रहीतिः, संकुटितिरिति क्वचित् पाठः

दृष्टास्ति। कर्मणि—प्रश्नोता, प्रश्नोषीष्ट, अतङीति किम्? (२) प्रश्नविता।

१०२। क्रमेस्तङर्हात्। [क्रमेः ५।, तङर्हात् (तङ्-अर्ह) ५।]

आत्मनेपदनिमित्तात् क्रमेरिणास्ति। प्रचिक्रंसते, उपक्रंस्यते, आक्रंस्यते, तङर्हत्वात्—क्ति च—उपक्रान्ता। तङर्हादिति किम्? निष्क्रमिता।

तरादेस्तुमादौ वेत्येके। तर्त्तुं, तरितुं, तर्त्तव्यं, तरितव्यं; आदि—शब्दात्—जप्त्वा, जपित्वा; जप्तव्यं, जपितव्यं।

१०३। श्रुकोऽजागः क्ति।

[श्रुकः (श्रि-उकः) ५।, अजागः (न-जागृ) ५।, क्ति ७।]

श्रिउगन्ताच्च क्तीणास्ति। श्रितः, कृत्वा, भूत्वा, सूतं सूतिः, (३) हुतं, तीर्त्वा, पूर्णं (४) जपेरपि निषेधमिच्छामि जप्तं, अजागुरिति किम्? जागरितः।

१०४। सनि ग्रहु गुह गुपादेश्च।

[सनि ७।, ग्रह, गुह, गुपादेः (गुप-आदि) ५।, च०१।]

ग्रहादेः श्रुकश्च सनोणास्ति। जिघृक्षति, जुघुक्षति, गुपादेरनिच्छार्थे जुगुप्सते, तितिक्षते, चिकित्सति। श्रुकश्च कित्वाद्गुणः शिश्रीषति, रुरुषति।

(२) अ-ङि तु इति क्वचित् पाठः।

(३) सूनः (सूयतेः) इति क्वचित् पाठः।

(४) पूर्तमिति क्वचित् पाठः।

१०५ । ऋ पूङ् स्मिङ्ग्रूकिरादिभ्य इट ।

[ ऋ, पुङ्, स्मिङ्, अशू, किरादिभ्यः ( किर आदि) ५।॥, इट् ०१। ]

एभ्यो निषेधविकल्पापवादः सनीट् स्यात् । अरीरिषति, पिपविषते, स्मिङ्—सिस्मयिषते, अशू अशिशिषते, कॄ—चिकरिषति, गॄ जिगरिषति, दृङ—दिदरिषति, धृङ्—दिधरिषति, प्रच्छ—पिपृच्छिषति ।

१०६ । इवन्तर्द्ध भ्रस्ज दम्भु श्रि स्वृ यूर्णु भरति ज्ञपि सनि तनि पतिभ्यो वा ।

[ इवन्त—पतिभ्यः (इव्-अन्त, ऋध, भ्रस्ज, दम्भ, श्रि, स्वृ, यु, ऊर्णुङ, भृ, ज्ञपि, सनि, तनि, पति ) ५।॥, वा०१।

एभ्यः सनीड् वा स्यात् । इवन्ताद्—दिदेविषति, दुद्यूषति, ऋध—अर्दिधिषति, ईर्त्सति, भ्रस्ज विभ्रज्जिसति, विभ्रक्षति, दम्भु—दिदम्भिषति, धिप्सति, धीप्सति, श्रिञ्—शिश्रीषति, शिश्रयिषति, स्वृ—सिस्वरिषति, सुस्वूर्षति, यु—यियविषति, युयूषति, ऊर्णु—प्रोर्णुनविषति, प्रोर्णुनूषति, भृ—बिभरिषति, बुभूर्षति, ज्ञपिर्ण्यन्तः—जिज्ञपयिषति, ज्ञीप्सति, सनि—सिसनिषति, सिसांषति, तितनिषति, तितांसति, पत, पिपतिषति, पित्सति ।

१०७ । वृतः । [वृतः (वृङ्, वृञ ऋतः ) ५। ]

वृङ् वृञ, ऋतश्च सनीड् वा स्यात् । प्राविवरिषुः, प्रावि-

वरीषुः, प्रावुवूर्षुः, ऋतः—तितरिषुः, तितीर्षुः लाक्षणिकत्वान्नेह चिकीर्षति (१)। सनीति—निवृत्तम् (१०४।४।३)।

१०८। तङि लीङ् सिचोः संयोगादृतश्चाऽस्तुटि।

[ तङि ७।, लीङ्, सिचोः ७॥, संयोगयृतः (संयोग-आदि-ऋत्) ५।, च०१।, अस्तुटि (न स्तुट्) ७।]

तङि लीङ् सिचोः (२) वृतः संयोगादेश्चर्दन्ताच्च इड् वा स्यात्। वरिषीष्ट, वृषीष्ट, आस्तरिषीष्ट, आस्तीर्षीष्ट, ध्वृ—ध्वरिषीष्ट, ध्वृषीष्ट ; सिचि—अवरिष्ट, अवृत, आस्तरिष्ट, आस्तीर्ष्ट, अध्वरिषातां, अध्वृषातां ; अस्टुटीति किम्? संस्कृषीष्ट, समस्कृत, तङीति—किम्? आस्तारिष्टां, आस्तारिषुः नित्यमिट्।

१०९। कृ सृ वृ भृ स्तु द्रु श्रु स्रुवो न लिटि।

[ कृ, सृ, वृ, भृ, स्तु, द्रु, श्रु, स्रुवः ५।, न०१।, लिटि ७। ]

एभ्य एव लिटीण्नास्ति। चकृव, चकृढ्वे, ससृव, ववृव, ववृवहे, बभृव, बभृवहे, तुष्टुव, दुद्रुव, शुश्रुव, सुस्रुव, अस्टुटीत्येव—सञ्चस्करिव, सञ्चस्करिम, नियमः किम्? बिभिदिव, रधादेर्वेत्येवी—ररन्धिव, रेध्व, ररन्धिम, रेध्म, मुमोहिथ, मुमोढ़।

---

(१) चिकीर्षुरिति क्वचित् पाठः। अत्र सनि ऋकारस्य दीर्घत्वात् न विकल्पेन इट्प्राप्तिरित्यर्थः।

(२) लीङ् सिचोरात्मनेपदे इति क्वचित् पाठः।

११०। ऋतस्स्वादेः थलि।

[ ऋतः ५।, स्वादेः (सु-आदि) ५।, थलि ७। ]

ऋदन्तात्, सु, द्रु—प्रभृतेश्चैव थलोऽस्ति। सस्मर्थ, सस्वर्थ, चकर्थ, (१) ऋत एकाच इति वक्तव्यं, तेन—जजागरिथ, स्वादिग्रहणं परविकल्पापवादार्थं (११२।४।३)—तुष्टोथ, सुस्रोथ, सुस्तोथ, दुद्रोथ, असुटीत्येव—सञ्चस्करिथ।

१११। अण् सृज् दृश्त्वतोऽनिटो वा।

[ अण्, सृज्, दृश्, अत्वतः (अत्-वत्) ५।, अनिटः (न-इट्) ५।, वा०१। ]

अकादिपाठेऽनिटोऽणन्तात्, सृजि, दृशिभ्याञ्च, अत्वतश्च (२) थलोड् वा स्यात्। अणन्तात्—पपिथ, पपाथ वा; जिगयिथ, जिगेथ; जुहविथ, जुहोथ वा; सृज—ससर्ज्जिथ, सस्रष्ठ; दृश—ददर्शिथ, दद्रष्ठ; अत्वतः—शेकिथ, शशक्थ; बभञ्जिथ, बभ्रष्ठ; जघनिथ, जघन्थ, अनिट इति किम्? लुलविथ, दुधविथ, जग्रहिथ, अत इति किम्? रुरोहिथ, बिभेदिथ, तपरः किम्? रराधिथ।

११२। अद्यर्त्ति वृवयिभ्य इट्।

[ अयर्त्ति ह्ववियः (अदि, अर्त्ति, (वृ), इ, वयि ५।। इट् ०१। ]

एभ्यस्थलि प्रतिषेधविकल्पापवादः (११०।४।३, १११।४।३)

---

(२) जघथ इति क्वचित् पाठः।

(२) अत् विद्यमानोऽस्य इति अत्वत् तस्य अकार मध्यवर्त्ति न इत्यर्थः अत् इति तपरनिर्द्देशात् आकारमध्यवर्त्तिन राधधातौ न निषेधः।

इट् स्यात् । आदिथ, घस्लृदेशाच—जघसिथ, आरिथ, ववरिथ, वेञो वयि—उवयिथ, ऋनस्त्वादेर्नियमात् ( ११०।४।२ ) नव्योलिखिटोत्यात्वनिषेधादमणन्ताच व्येञ इट् सिद्ध एव—संविव्ययिथ ।

११३ । वसौ सद्विरुक्त्येकाजाद्घसः ।

[ वसौ ७।, सद्विरुक्त्येकाजाद्घसः (स-द्विरुक्ति-एक-अच्, आदन्त, घस्) ५। ]

कृतद्विर्वनैकाच, आदन्ताच, घसश्च, वसाविट् स्यात् । आदिवान्, पेचिवान् ; आतः—पपिवान्, तस्थिवान्, घस—जक्षिवान्, सद्विरुक्त्येकाच इति किम् ? बिभिद्वान्, चिच्छिवान् ।

११४ । वा गम हन विद्लृ विश दृशः ।

[ वा०१।, गम, हन, विद् लृ, विश, दृशः ५। ]

एभ्योवसाविड् वा स्यात् । जग्मिवान्, जगन्वान्, जघ्निवान्, जघन्वान्, विविदिवान्, विविद्वान्, विविशिवान्, विविश्वान्, ददृशिवान्, ददृश्वान् ।

११५ । ऋद्धनः स्ये । [ ऋद्धनः (ऋत् हन्.) ५।. स्ये ७। ]

आभ्यां स्ये इट् स्यात् । करिष्यति, हनिष्यति, अहनिष्यत् ।

११६ । वधादेशाच्च लोङसिचोः ।

[ वधादेशात् (वध-आदेश) ५।, च०१।, लीङ. सिचो ७॥ ]

इट् स्यात् । वधिषीष्ट, अवधिष्ट, अयधीत्येव (८७।४।२)—वध्यात्

११७। अञ्जेः सन् सिचोः ।

[ अञ्जेः ५।, सन्-सिचोः ७॥ ]

इट् स्यात् । ऊदित्वेन (८८।४।३) विकल्पे प्राप्ते नित्यार्थं वचनं । अञ्जिजिषति, आञ्जीत् ।

११८। स्तु सू धुञः सिच्यतङि ।

[ स्तु, सू, धूञः ५।, सिचि ७।, अतङि ७। ]

इट् स्यात् । अस्तावीत्, असावीत्, अधावीत्, अतङीति किम् ? अस्तोष्ट, असोष्ट, अधोष्ट, अधविष्ट ।

११९। यम रम नमातः सुच् ।

[ यम, रम, नमातः (यम, रम, नम, आत्) ५।, सु ०१।, च०१। ]

एभ्यः सिचोट् स्यात् । स्वागमश्च । अयंसीत्, अयंसीष्टां, अरंसीत्, अनंसीत्, आदन्तात्—अयासीत्, अधासीत्, दरिद्रातेश्च —अदरिद्रासीत्, अदरिद्रीत् अतङीत्येव—आयंस्त, अरंस्त, व्यत्यभास्त ।

१२०। तीषु सह लुभ रुष रिषो वा ।

[ ति ७।, इषु, सह, लुभ, रुष, रिषः ५।, वा०१। ]

एभ्यस्तकारादाविड् वा स्यात् । इषु—एष्टा, एषिता ; सहिता, सोढ़ा ; लोभिता, लोब्धा ; रोष्टा, रोषिता ; इष गतौ नित्यं प्रेषिता ।

१२१। सेऽसिचि कृत चृत छृद तृद नृतः ।

[ से ७।, असिचि (न-सिच्) ७।, कृत, चृत, छृद, तृद, नृतः ५। ]

कृतादेः सकारादाविड् वा स्यात् । कर्त्स्यति, कर्त्तिष्यति, अकर्त्स्यत्, अकर्त्तिष्यत् चर्त्स्यति, चर्त्तिष्यति, कृत्स्यति, कर्दिष्यति, नर्त्स्यति, नर्दिष्यति, निनृत्सति, निनर्त्तिषति, असिचीति किम् ? अकर्त्तीत् ।

१२२। गमेरतङीट् । [गमेः ५।, अतङि (न तङ्) ७।, इट् १।]

पुनरिट्ग्रहणं नित्यार्थं सेऽतङि विषये गमेरिट् स्यात् । गमिष्यति, जिगमिषति, इङोगमेश्च कृतिः । अधिजिगमिषिता व्याकरणस्य, अतङीति किम् ? संगंस्यते, सङ्गंसीष्ट, अधिजिगांसते ।

१२३। तङि वृतादेः कृपो लुटि च ।

[तङि ७।, वृतादेः (वृत-आदि) ५।, कृपः ५।, लुटि ७।, च०१। ]

सेटकत्वे सिद्धेऽपि नियमः । से तङेव वृतादेरिट् स्यात् । वर्त्तिष्यते, वर्द्धिषीष्ट, अवर्द्धिष्यत, स्यन्दिष्यते, कृपो लुटि च— कल्पिष्यते, कल्पितासे ; तङीति किम् ? वर्त्स्यति, तङि नियमात् परस्मैपदे स्यन्दि, कृपिभ्यां ऊदित्वाद्विकल्पोऽपि (९८।४।२) निषिद्धः । व्यवस्थितविभाषया वा । सिस्यन्त्सति, चिक्लृप्सति, कल्प्तासि, कृति—विवृत्सिता, विवृत्सितुं, सेऽतङ्विषयत्वान्नेट् (१२४।४।२) ।

१२४। न श्वीदिदादिड्डीय श्वसि वमि विभाषितेटो निष्ठायां ।

[न०१।, श्वीदिदादिड्डीयश्वसि—इटः (श्वि-ईत् इत्-आत्-इत्, डी, श्वसि, वमि, विभाषित इट्) ५।, निष्ठायां ७। ]

श्वेरोदादेव निष्ठायामिषास्ति । शूनः, शूनवान्, ईदितः—नग्नः, उद्विग्न, आदितः—मिन्नः, खिन्नः, मूर्च्छा—मूर्त्तः, मूर्च्छितः इति तारकादित्वादितः ; डीयादेः—डीय इति श्यना निर्देशः उड्डीनः, डीङ्गोभौवादिकादप्रतिषेधः । उड्डयित, ध्वस्तः, वान्तः विभाषितेटो यस्य विकल्पेन क्वचिदिङ्गतः ; ऊदितः (८८।४।३) —गूढः, गूढ़वान्, उदित् (१४०।४।३) वृद्धः, रधादौ —नष्टः ।

१२५ । धृष ग्रसो वैजात्ये ।

[ धृष, ग्रसः ५।, वैजात्ये ७। ]

आभ्यामविनीततयां निष्ठायामिषास्ति । धृष्टं, विश्वस्तः अन्यत्र धर्षितः, विग्रसितः ।

१२६ । कषः कृच्छ्र गहनयोः ।

[ कषः ५।, कृच्छ्र, गहनयोः ७॥ ]

निष्ठायामिषास्ति । कष्टं व्याकरणं, कष्टं वनं, कषित मन्यत ।

१२७ । घुसेरविशब्दने । [ घुसेः ५।, अविशब्दने ७। ]

निष्ठायां इषास्ति । घुष्टा रज्जुः, विशब्दने तु अवघुसितं ते वाक्यं प्रतिज्ञातं ख्यातं वा ।

१२८ । अर्दः सन्निविभ्यः ।

[ अर्देः ५।, सं, नि, वि, भ्यः ५।॥ ]

इषास्ति । समर्णः, न्यर्णः, व्यर्णः, अभेः सन्निकर्षे । अभ्यर्णा सेना, अभ्यर्दितमन्यत्र ।

१२९ । मनु पति निष्क ष गत्यर्थधाव इट् ।
[ मनु, पति, निष्कु ष, गत्यर्थ,—धाव; ५।, इट् ०१। ]

एभ्योनिषेधापवाद इट् स्यात् । मनितः, पतितः, निष्कुषितः, धावितः गत्यर्थ इति किम् ? धौतं वस्त्रं ।

१३० । क्लिष्ट विरिब्धादयोऽविष्पष्टस्वरादिषु ।
[ क्लिष्ट, विरिब्धादयः (विरिब्ध—आदि) १।।, अविष्पष्ट-स्वरादिषु (न-विष्पष्ट-स्वर-आदि) ७।। ]

अविष्पष्टाद्यर्थे क्लिष्टादयोऽनिटः साधवः स्युः । क्लिष्टमविष्पष्टे, क्लेशितमन्यत्र, विरिब्धः स्वरोविरेभितमन्यत्र; आदि शब्दात्—क्षुब्धोमन्थे, क्षुभितमन्यत्र; स्वान्तं हृदि, ध्वान्तं तमसि; लगि—लग्नः संसक्ते; फण—फाण्टमनायासे । वढो वाढ़ं प्रतिज्ञाभृशयोः । दृहेर्दृंहेश्च परिदृढोऽधिपे; दृंढेदृंढः स्थूलवलिनोः ।

१३१ । णे रध्ययने वृत्तं । [ णेः ५।, अध्ययने ७।, वृत्तं ०१। ]

ण्यन्तस्य वृते वृत्तं निपात्यते, अध्ययनश्चेत् । वृत्तं सूत्रमनेन ।

१३२ । वा दान्त, शान्त, दस्त, पूर्ण, स्पष्ट, छन्न, ज्ञप्ताः ।
[ वा०१।, दान्त—ज्ञप्ता; १।। ]

एते ण्यन्ता वा निपात्यन्ते । दान्तः, दमितः; शान्तः, शमितः; पूर्णः, पूरितः; दस्तः दासित, स्पष्टः, स्पाशितः, छन्नः, छादितः; ज्ञप्तः, ज्ञपितः ।

१३३। रुष्यमत्वरसंघुषास्वनः ।

[ रुष्यमत्वर संघुषास्वनः (रुषि-अम्-त्वर-संघुष-आ-स्वन) ५। ]

एभ्योनिष्ठायामिड् वा स्यात् । रुष्टः, रुषितः ; अभ्यान्तः, अभ्यमितः, तूर्णं, त्वरितं ; संघुषितं, संघुष्टं ; आस्वान्तः, आस्वनितः ।

१३४। हृषेर्लोम विस्मित प्रतिहतेषु ।

[ हृषः ५।, लोम, विस्मित, प्रतिहतेषु ७॥ ]

लोम्नि कर्त्तरि विस्मिताद्यर्थे हृषेर्निष्ठायामिड् वा स्यात् । हृष्टं, हृषितं वा लोम, केशैः ; हृष्टो, हृषितः विस्मितः, प्रतिहतो वा ।

१३५। अपचितश्च । [ अपचितः ५।, च ०१। ]

चायते र्वा निपात्यते । पचेऽपचायितः ; अपचितिर्नित्यं ।

१३६। आदितोभावारम्भयोः ।

[ आदितः (आत्-इत्) ५।, भावारम्भयोः ७॥ ]

आदितोनिष्ठायां पूर्व्वेण निषेधे (१२४।४।३) प्राप्ते भावादिकर्म्मणोरिड् वा विधीयते । मिन्नं, मेदितमनेन ; प्रमिन्नः, प्रमेदितः । ञिक्ष्विदा ... श्वस्तं, श्वसितं ; वान्तं, वमितं । शकः कर्म्मणि क्ते । शक्तो घटः कर्त्तुं शकितो वा ।

१३७। क्लिशपूङ्क्त्वानिष्ठयोः ।

[ क्लिश, पूङः ५।, क्त्वा निष्ठायाः ७॥ ]

इड् वा स्यात् । क्लिष्ट्वा, क्लिशित्वा ; क्लिष्टं, क्लिशितं, क्लिष्टवान्, क्लिशितवान् ; पूत्वा, पवित्वा ; पूतः, पवितः ।

१३८। क्षुधि वसति विमोहनार्थलुभि पूजार्थाञ्च इट्।

[ क्षुधि, वसति, विमोहनार्थ—लुभि, पूजार्थ-अञ्चः ५।, इट् ०१। ]

एभ्यः क्त्वा निष्ठयोरिट् स्यात्। क्षुधित्वा, क्षुधितः ; उषित्वा, उषितः ; आकुलीकरणे—लुभित्वा ; पूजायामञ्चतेः—अञ्चित्वा, अञ्चितो गुरुः ; अन्यत्र तोषु सह लुभरुषेति क्त्वोट् (१२०।४।३) वा लुब्ध्वा, लुभित्वा ; हलादेर्व्युपधादित्वकित्त्वे (११।२।३)— लोभित्वा ; इह निषेधः—लुब्ध, उदक्तमुदकं कूपात्।

१३९। जॄव्रश्चः क्त्वि। [ जॄ, व्रश्चः ५।, क्त्वि ७। ]

निसेधविकल्पापवाद इट् स्यात्। जरित्वा, व्रश्चित्वा।

१४०। उदितोवा। [ उदितः ५।, वा ०१। ]

उदितः क्त्वोड् वा स्यात्। शान्त्वा, शमित्वा, शिष्ट्वा, शासित्वा ; स्रस्त्वा, स्रंसित्वा ; उवुन्दिर निशामने। वुन्त्वा, (१) वुन्दित्वा।

१४१। ग्रहेरिड् दीर्घोऽलिटि।

[ ग्रहेः ५।, इट्०१।, दीर्घः १।, अलिटि (न-लिट) ७। ]

ग्रहेरिड् दीर्घः स्यात्। गृहीत्वा, ग्रहीतुं; अलिटीति-किम् ? जगृहिव।

१४२। वा वॄतोऽलोङ् परस्मैपदसिचोः।

[ वा०१।, वॄतः (वृङ्, वृञ्, ऋत्) ५।, अलोङ परस्मैपद सिचोः ७॥ ]

---

(१) वुन्द+क्त्वा, खरिप्रथम इति द् स्थाने त् झयोझयीति तकार लोपः।

वृङ् वृञ् वृत इट् दीर्घो वा स्यात्। वरीता, वरिता ; प्रावरीष्ट, प्रावरिष्ट ; तरिता, तरीता, वृत इति किम्? करिष्यति, अलीङ् परस्मैपदसिचोरिति किम्? वरिषीष्ट, आस्तरिषीष्ट परस्मैपदसहचरिते सिचि प्रावारिषुः, आस्तारिषुः, अलिटीत्येव (१४०।४।३)—तेरिथ।

## १४३। स्य सिचि लीङ्लुटि भावकर्म्मणोरज्झनग्रहदृशोर्वेण्।

[ स्य, सिचि ७।, लीङ्, लुटि ७।, भावकर्म्मणोः ७॥, अजझन ग्रह दृशः (अच् हन, ग्रह, दृश्, ) ५।, वा०१।, इण् ०१। ]

अजन्तादेः स्यादौ भावादिकर्म्मणोरिण् वा स्यात्। भाविष्यते, भविष्यते, कारिष्यते, कारिष्यते, घानिष्यते, हनिष्यते, ग्राहिष्यते, ग्रहीष्यते, दर्शिष्यते, द्रक्ष्यते ; सिचि—अदायिषातां अदिषातां, अघानिषातां, अहसातां, अग्राहिषातां अग्रहीषातां, अदर्शिषातां, अदृक्षातां, लीङि—दायिषीष्ट, दासीष्ट, घानिषीष्ट, वधिषीष्ट, ग्राहिषीष्ट, ग्रहीषीष्ट, दर्शिषीष्ट, दृक्षीष्ट ; लुटि—नेता नायिता, हन्ता, घानिता, ग्राहिता, ग्रहीता, द्रष्टा, दर्शिता।

इति श्रीपद्मनाभदत्तकृतौ सुपद्मे व्याकरणे तृतीयोऽध्यायः।

---

# अथ चतुर्थाध्यायस्य

## प्रथमः पादः

### (कृत्प्रकरणम्)

१। **कृद्बहुलं।** [ कृत् ०१।, बहुलं २। ]

कृदित्यधिक्रियते। स च बहुलं स्यादिति च। (१)

२। **लट्लृटोरस्मादौ शतृ शानश्च।**

[ लट् लृटोः ६॥, असमादौ (न-स्म-आदि) ७।, शतृ ०१।, शानः १।, च०१। ]

लट् लृटोः स्थाने कृत्संज्ञकः शतृ, शानश्च भवति। पृथङ्-निर्देशोऽयथासंख्यार्थः। भवन्, कुर्वन्, चिकीर्षन्, धारयन्नुप-निषदं; शानः—पवमानः, अधीयानः, कुर्वाणः, क्रीणानः, भाव्यमानो, भूयमानः; लृटः—खल्वपि, करिष्यन्, करिष्य-माणः। क्रियायाः हेतुलक्षणयोः। (२) अर्जयन्नास्ते, जल्पन्तो-

---

(१) कृदित्यस्य द्वैविध्यं संज्ञाधिकारभेदात्, तस्मादतः परे ये प्रत्ययास्ते कृत् संज्ञका वेदितव्याः। वाक्यभेदमभ्युपगच्छन्नाह सचेति—स च कृत्संज्ञकः प्रत्ययो बहुलं स्यादिति च अधिक्रियते। क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव। विधेर्विधानं बहुधा समीक्ष्य चातुर्विधं बाहुलकं वदन्ति।

(२) शतृ इति लुप्तविभक्तिक निर्देशः। शतृशानयोः पृथग्विभक्ति निर्देशेन यथाक्रमस्य प्रतिषेधः कृतः, अन्यथा शतृशानावित्येवं सिद्ध्यात्। तथासति लटः स्थाने शतृ, लृटः स्थाने शान एव प्रसज्येत, न तु

ज्ञातव्याः। (१) माङ्याक्षेपे। (२) माजीवन् मापक्ष्यमाणः, बाहुल्यात् (३) क्वचिन्नित्यं, हे पचन्, हे पचमानः, पचन्तं, पचमानं, पश्य। पक्ष्यता, पक्ष्यमाणेन, कृतं। क्वचिन्नियमः। अर्हन् पूज्ये। द्विषन् शत्रौ। सुन्वन् यजमाने। क्वचिन्न स्यात्। पचतितरां, असादाविति किम्? पचतिस्म, करोतिस्म, पुरायाति।

३। विदो लटः स्वसुः। [विदः ५।, लटः ६।, स्वसुः (वम्) ०१।]

स्यात्। विद्वान्, विद्वांसौ, विद्वद्भि।

४। इङः शतृ शक्तौ। [इङः ५।, शतृ०१।, शक्तौ ७।]

इङः सामर्थ्ये लटः शतृः स्यात्। अधीयन् पारायणं, नेह कष्टेनाधीते।

द्वयोः स्थाने द्वौ। शित् करणं सार्व्वधातुकचिह्नार्थम्। कारयिष्यमाण इति क्वचित् पाठः।

(१) हेतुस्तत्पत्तिर्लक्षणमस्य प्रेरणोधर्म्मः। अर्ज्जयन्नास्ते इत्यत्र अर्ज्जनमस्यस्थितिहेतुः, जल्पन्तीघातत्या इत्यत्र जल्पनं घानस्य लक्षणम्। क्रियाया इति किम्? यदुत् भवते तद्भघटचोत् भवर्ति साधवस्य हेतुः। इति शब्देन हेतोरुक्तावपि न, यथा हस्ती पलायते इति धावते।

(२) लुङ्बाधकोऽयं विधिः। आक्षेपादन्यत्र माङि लुङेव भवति।

(३) बाहुल्यात्—भवन्, भवति; सन्, अस्ति; जानन्, जानातीत्यादुभयविध प्रयोग एव भवति। तिङः सम्बोधनाद्यसम्भवात्तत्र (सम्बोधन कर्म्मकरणाधिकरणादिषु) नित्यमेव शतृशानौ। पूजादेरन्यत्र न शतृ यथा अर्हति चौरोबधम्, द्वेष्टि रोगी औषधम्। सुरां सुनोति। उत्तरपदेऽपि शतृशानौ नित्यम् पतत्पतङ्गप्रतिमः, असद्विसम्छेदः।

५। शानः शक्तिवयः शीलेषु। परस्मैभाषाच्च।

[ शानः १।, शक्ति, वयः, शीलेषु ७॥, परस्मैभाषात् ५।, च०१। ]

शक्त्यादौ सर्व्वधातुभ्योलटः शानः स्यात्। हस्तिनं निघ्नानः, शिखण्डं वहमानः, हसमानोविप्रः।

६। लिटः क्वसु कानौ। [ लिटः ६।, क्वसु, कानौ १॥ ]

लिटो बहुलं क्वसुकानौ स्यातां। शुश्राव—शुश्रुवान्, उपसेदिवान्, तस्थिवान्, ऊषिवान्, तितीर्व्वान्; कानस्तङि—पेचानः चिक्यानः। दाश्वानादि छान्दसं।

७। ईयिवान् अनाश्वाननूचानः।

[ ईयिवान्, अनाश्वान्, अनूचानः १॥ ]

एते निपात्यन्ते। इटि—ईयियिवान्, उपेयिवान्; इडभावे नञि अनाश्वान्, धृतजपधृतेरनाशुषः। अनुवचेरतङ्यपि। कर्त्तरि कानः अनूचानः।

८। कृत्याः प्राङ् णकात्।

[ कृत्याः १॥, प्राक् ०१॥, अव्य, णकात् ५। ]

णकात् प्राक् कृतः कृत्यसंज्ञका वेदितव्याः।

९। तव्यानीयौ। [ तव्यानीयौ (तव्य-अनीय) १॥ ]

धातोस्तव्यानीयौ स्यातां। भवितव्यं, भवनीयम्

१०। वास्तव्यः कर्त्तरि। [ वास्तव्यः १।, कर्त्तरि ·

निपात्यते। वसतीतिवास्तव्यो जनः।

११ । यद्णन्तादेरात एञ्च ।
[ यत् ०१, अणन्तादेः ५।, आतः ६।, एत्०१।, च०१। ]

अणन्तादेर्यत् स्यात्। आदन्तस्यादेच। दित्स्यं, धित्स्यं, देयं, धेयं, हव्यं, भव्यं, आदिशब्दात् विभज्यं। तकि, शकि, शसि, सहि, चति, यति, जनञ्च। तक्यं, शक्यं, शस्यं, सह्यं, चत्यं, यत्यं, जन्यं। पवर्गादवपि, रपि, लपि त्रपि, दभि, चमः। जप्यं, लभ्यं, रम्यं, वपादेस्तु ण्यत् वाप्यं, लाप्यं, दभः, सौत्रः, अवदाभ्यं। गद, नद, चर, यमोऽप्रादेः। गद्यते इदं गद्यं, साद्यंत्यनेन मद्यं, चर्य्यं, यम्यं, प्रादेस्तु ण्यत् प्रगाद्यं, काद्यं, नियम्यं पश्चात् प्रादिसमासेन। आचरेरगुरौ, आचर्य्यो धर्म्मः, गुरौ—तु ण्यत् आचार्य्यः। अवद्यं गर्हे। पण्यं विक्रये। पाण्यमन्यत्र, वर्य्योऽनिरोधे। मुख्य इत्यर्थः। अन्यत्र वार्य्या ऋत्विजः। अजर्य्यं संगते। वह्यं करणे। वहन्त्यनेन वह्यं शकटं। अर्य्यः स्वामिवैश्ययोः। आर्य्योऽन्यत्र। उपसर्य्यास्यादृतुमत्याम्।

१२। सुपो वदः क्यप् च। [ सुपः ५।, वदः ५।, क्यप ०१।, च०१। ]

सुपः वदः क्यप् स्यात्। यञ्च। ब्रह्मोद्यं, ब्रह्मवद्यं, सत्योद्यं, सत्यवद्यं, तदस्यास्तीत्यत् सत्यवद्यो रघूत्तमः सुप इति किम्? वाद्यं वाहुल्यान्नित्यं। मृषोद्यं। प्रादेरनोरेव। अनूद्यं नान्यत्र अभिवाद्यं।

१३। भुवो भावे। [ भुवः ५।, भावे ७। ]

सुपोभुवः क्यप् स्यात्। ब्रह्मभूयं, ब्रह्मत्वं।

१४। हनः स्त्रियां नस्त च।

[ हनः ५।, स्त्रियां ७।, नः ६।, त०१।, च०१। ]

भावे क्यप् स्यात्। ब्रह्महत्या।

१५। ऋदुपध शास्वेति स्तु दृ वृञ जुषोऽक्लृप चृतेः क्यप्।

[ ऋदुपधशास्वेति—जुषः ( ऋत्-उपध, शास्, एति इण्, स्तु, दृ, वृञ, जुष) ५।, अ-क्लृप, चृतेः (न-क्लृपचृत्) ५।, क्यप् ०१। ]

ऋदुपधादेः क्यप् स्यात्। वृत्यं, शिष्यं, इण्-इत्यः, स्तुत्य, आदृत्यः, वृत्यः, जुष्यः, वृङस्तु वार्य्यः अक्लृप चृतेरिति किम्? कल्प्यं, चर्त्यं। खेच खनः—क्यप् खेयं।

१६। भृञोऽसंज्ञायां। [ भृञः ५।, असंज्ञायां (न-संज्ञा) ७। ]

क्यप् स्यात्। भृत्यः संज्ञायांन्तु भार्य्या। वा समः। संभृत्यः, सभार्य्यः।

१७। ग्रहेः पदपरतन्त्र पक्षवाह्यासु।

[ ग्रहेः ५।, पद, परतन्त्र, पक्ष, वाह्या सु ७।॥ ]

एष्वर्थेषु ग्रहेः क्यप् स्यात्। प्रगृह्यं पदं, गृह्यः परतन्त्रः, पक्षोऽर्जुनगृह्योहरिः। ग्रामगृह्या सेना ग्रामवाह्यादृत्यर्थः।

१८। रुच्य कुष्ट पच्याऽव्यथाः।

[ रुच्य—व्यथाः (रुच्य, कुष्ट पच्या अव्यथ्य) १।॥ ]

निपात्यन्ते। रोचते रुच्यः, कुष्टेन पच्यन्ते कुष्टपच्याः शालयः न व्यथते अव्यथ्यः। राजसूयः क्रतौ। सूर्य्योऽर्कें। कुप्यंधने।

गोप्यमन्यत्र। आज्यं घृते। आङ्ग्यमन्यत्र। पुष्यसिद्ध्यौ नक्षत्रे। भिद्योद्ध्यौ नदे। भिद्यः, उद्यः उज्झमन्यत्र। युग्मं याने। विपूयो मुञ्जे। विनीयः कल्के। जित्या हली। जित्या स्यात्। हलि हृद्दङ्गलश्चेत्।

१९। कृ, वृषि, मृजि, शंसि, दुहि, गुहिभ्यो वा।
[ कृ, वृषि—गुहिभ्यः ५॥, वा०१। ]

एभ्यः क्यप् वा स्यात्। कृत्यं, कार्य्यं, वृष्यं, वर्ष्यं, मृज्यं, मार्ग्यं, शस्यं, शंस्यं, दुह्यं, दोह्यं, गुह्यं, गोह्यं।

२०। ऋहलासुयवोण्यत्।
[ ऋ, हल, आ-सु, यवः (यु) ५।, ण्यत०१। ]

ऋवर्णान्ताद्धलादेश्च ण्यत् स्यात्। कार्य्यं, तार्य्यं, पाक्यं, आसाव्यं, याव्यं।

२१। मृजेः पाणिसमराभ्यां।
[ मृजेः ५।, पाणिसमराभ्यां ५॥ ]

ण्यत् स्यात्। पाणिसर्ग्या रज्जुः। समरसर्ग्यः।

२२। ओरावश्यके। [ ओः ५।, आवश्यके ७। ]

उवर्णान्तादावश्यके ण्यत् स्यात्। भाव्यं, अवश्यलाव्यं, लव्यमन्यत्र।

२३। अमावसेर्यश्च। [ अमावसेः (अमा-वस) ५।, अत्०१।, च०१। ]

अमापूर्व्वाद्वसेर्यश्च स्यात्। ण्यच। सह वसतोऽस्यां चन्द्रार्काविति अमावस्या, अमावास्या वा।

२४ । प्रणाय्योऽकामाऽसम्मतयोः ।

[ प्रणाय्यः १।, अकामाऽसम्मतयोः (न-काम, न-सम्मत) ७॥ ]

स्यात् । प्रणाय्योनिष्कामोऽसम्मतश्च । आनाय्यो दक्षिणाग्नौ । पाय्यं माने । माङो निपात्यते । सान्नाय्यं हविर्विशेषे । निकाय्योऽवहे । चिञो निपात्यते । धाय्या सामिधेन्यां । धाञो निपात्यते । सामिधेनी ऋक् ।

२५ । क्रतौ कुण्डपाय्य, सञ्चाय्यौ ।

[ क्रतौ ७।, कुण्ड—य्यौ १॥ ]

एतौ क्रतौ स्यातां । कुण्डैः पीयते सोमोऽस्मिन्निति कुण्ड-पाय्यः । सञ्चीयते सोमोऽत्रेति सञ्चाय्यः ।

२६ । अग्नौ चित्योपचाय्य परिचाय्य समूह्याः । चित्या च ।

[ अग्नौ ७।, चित्योपचाय्य—समूह्याः (चित्य, उपचाय्य, परिचाय्य, समूह्य) १॥।, चित्या ०१।, च०१। ]

एतेऽग्निविषये स्युः । चित्योऽग्निः, उपचीयते उपचाय्यः, परिचाय्यः, समूह्यः, स्त्रियां भावे चित्या—अग्नि चित्या ।

२७ । कर्म्मकर्त्तरि केलिमोहलः ।

[ कर्म्मकर्त्तरि ७।, केलिमः १।, हलः ५। ]

हलन्तादत्र केलिमः स्यात् । पचेलिमा माषाः, स्वयमेव, भिदेलिमं काष्ठं ; उक्ताः कृत्याः (क) ।

---

(क) कृत्यप्रत्ययाः यत्, ण्यत्, तव्य, अनीय, क्यप्, केलिमाः । तथा-

२८। ण्वक टचौ कर्त्तरि वर्त्तमाने।

[ ण्वक टचौ १४, कर्त्तरि ७।, वर्त्तमाने ७। ]

एतौ ण्वक, टचौ वर्त्तमाने कर्त्तरि स्याताम्। कारकः, कर्त्ता, वाहुल्यात् पादाभ्यां ह्रियते पादहारकः। ण्वको भविष्यति, तुमर्थे च। वर्षशतस्य पूरकः, ओदनं भोजको व्रजति भोक्तुमित्यर्थः। शीलाचारसाधुषु निन्दादेः। निन्दकः, हिंसकः, निन्द, हिंस, क्लिश, खाद, परि-रट, परि-क्षिप, परि-वादि, व्यभाष, असूय। प्रादेर्देवि क्रुशश्च। परिदेवकः, आक्रोशकः।

२९। नृति खनि, रजेः शिल्पिनि टकण्।

[ नृति, खनि, रजेः (रञ्ज) ५।, शिल्पिनि ७।, टकण् १। ]

एभ्यः शिल्पिनि टकण् स्यात्। नर्त्तकः, नर्त्तकी, खनकः, खनकी, रजकः, रजकी निपातनान्न-लोपः।

३०। प्रुसृल्वोऽकः साधुकारिणि।

[ प्रु, सृ, ल्वोः (लु) ५।, अकः १।, साधुकारिणि ७। ]

एभ्यः साधुकारिण्यकः स्याद्वा। प्रवकः, सरकः, लवकः।

३१। जीवादेराशिषि।

[ जीवादेः (जीव-आदि) ५।, आशिषि ७। ]

अकः स्यात्। जीवतात्, जीवकः, नन्दकः।

---

दिमाः पञ्चभावे कर्म्मणि च भवन्ति, अन्तश्च कर्म्मकर्त्तरि। तथाच—कृत्याः पञ्च समाख्याता भावे कर्म्मणि यत्, ण्यतौ, तव्यानीयौ च क्यप्; षष्ठः—केलिमः कर्म्मकर्त्तरीति।

३२ । नन्दादेरनः । ]नन्दादेः (नन्द-आदि) ५।, अनः ।] (ख)

एभ्यः कर्त्तरि वर्त्तमाने अनः स्यात् । ण्यन्तात्, नन्दयतीति, नन्दनः, मदनः, वासनः, भूषणः, साधनः, शोभनः, लोकनः, दीपनः, अण्यन्तात्—तपनः, णत्वे—लवणः ; अण् विषये च जनार्द्दनः मधुसूदनः, इत्यादि ; क्रोधभूषार्थे शीलाचारसाधुषु —क्रोधात्, क्रोधनः, कोपनः, भूषार्थात्—भूषणः, मण्डनः । चलनशब्दार्थादकर्म्मकाच्च । चलनार्थात्—चलनः, वेपनः, कम्पनः, शब्दार्थात्—शब्दनः, रवणः, अकर्म्मकादिति किम् ? पठिता तत्त्वं, टण् भविष्यति । आत्मनेभाषादय (आत्मनेभाषात् अ-य) दीप, दीक्ष, ङितो, हलादेः, शीलादौ—वर्त्तनः, देव्, देवनः, वर्द्धनः, अयन्तादेरिति किम् ? आप्यायिता, दीपिता, दीक्षिता, शयिता, हलादेरिति किम् ? एधिता, अकर्म्मकादित्येव— वसिता, वस्त्रं । जु, चंक्रम्य, दंद्रम्य, सृ, गृधि, ज्वल, शुच, लष, पत, पदः । शीलादौ—जुः सौत्रः जवनः, चंक्रमनः, दंद्रमनः, गर्द्धनः, पूर्व्वेणैव सिद्धे पदग्रहणं, सकर्म्मकार्थं प्रपदनः ।

३३ । पचादेरच । [ पचादेः (पच-आदि) ५।, अच् ०१। ]

एभ्यः कर्त्तरि वर्त्तमानेऽच् स्यात् । पचतीति पचः, वदः, कद्रदः, देवः, मेघः, श्वेतः, स्पर्शः, योधः, स्मरः, लेहः, स्नेषः, लोलुवः, चञ्चुरः, चोरः । प्रायोऽण्विषये च । श्वपचः, जातिस्मरः, शक्तिधरः, गदाधरः, गङ्गाधर, इञ्जोऽनुतृप्तिष्य कर्म्मणः ।

---

(ख) क्वचिन्नन्द्यादेरिति पाठः ।

अंशहर, मनोहरः, पित्तहरं, चौरं वाक्यहरा दूती, अनुत्क्षिप्य कर्म्मणः इति किम् ? भारहारः ।

३४ । वयसि च । [वयसि ७ाच, च०१।]

वयसि गम्यमानेऽप्य् स्यात् । कवचहरः, क्षत्रियः, कुमारी वा ; अस्थिहरः श्वा । आङि ताच्छील्ये । पुष्पाहरः, विद्याधरः । अर्हः । पूजार्हः । शक्त्यादेर्ग्रहः । शक्तिग्रहः । शक्ति, लाङ्गुल, अङ्कुश, यष्टि, तोमर, घट, घटी, धनुषः । सूत्रादवधारणे । सूत्रमर्थतोऽवधारयति सूत्रग्रहः, सूत्रग्राहोऽन्यत्र । किं बहु यत्तदः टञः । किंकरा, बहुकरा, यत्करा, तत्करा । शमः संज्ञायां । शङ्करः । स्तम्बेरमोहस्तिनि । कर्णे जपः सूचके । शीङः सुपः । उत्तानः शेते, उत्तानशयः, अवमूर्द्धशयः, पार्श्वाभ्यां शेते, पार्श्वशयः, उरःशयः, खे शेते, खशयः, गुहाशयः । दिग्धसह-पूर्व्वाच्च । दिग्धसहशयः ।

३५ । ज्वलादेरप्रादेर्णोँश्च ।

[ज्वलादेः ज्वल-आदि ५।, अप्रादेः (न-प्र-आदि) ५।, णः १।, च०१।]

ज्वलादेर्णः स्यात् । अश्च । ज्वालः, ज्वलः, चालः, चलः, रामः, रमः । कषपर्य्यन्ता ज्वलादयः । अप्रादेरिति किम् ? प्रज्वलः ।

३६ । श्याद्व्यधास्रुसंस्र्वतीन वसावह्वितन श्वसः ।

[श्याद्व्यधा—श्वसः (श्या, आत्-व्यध, आस्रु, संस्रु, अति-इण, अव-सो, अव-हृ, वितन, श्वस) ५

एभ्यो णः स्यात्। अवश्यायः, श्यायग्रहणं सोपसर्गात् कत्रा-धनार्थं। आतः, दायः, धायः, व्यधादेर्व्याधः, आस्रयः, संस्रावः, अवसायः, अवहारः, वितानः, श्वासः।

३७। दूणीग्रहभुवो वा नुपसर्गे।

[ दू, णी, ग्रह, भुवः (भू) ५।, वा०१।, अनुपसर्गे (न-उपसर्ग) ७। ]

एभ्यो णः स्यात् वा। दावोदवः, नायोनयः, ग्राहोग्रहः, भावोभवः, उपसर्गे तु प्रभवः।

३८। इगुपधज्ञादेः कः।

[ इगुपध, (इक्-उपधः ज्ञादे) (ज्ञा-आदि) ५।, कः १। ]

इगुपधात् ज्ञादेः कः स्यात्। ईग्रः, वुधः, कुग्रः, क्षग्रः, ज्ञादेः, जानातीति ज्ञः, प्री, प्रियः, कॄ, किरः, ग्रह-गृहं, गृहाः। बाहुल्यात् सुप्युपपदेऽपि। मूलं विभुजतीति, मूलविभुजो रथः, नख—मुचं धनुः। कौमोदते, कुमुदं, सरोरुहं अपोविभर्त्तीति अब्भ्रं, महोभ्रः। शोकापनुदः प्रिये। तुन्द परिमृजोऽलसे। तुन्द परिमार्जोऽन्यत्र। करणादौ च। अयुध्यते अनेनेति आयुधं शस्त्रं आविध्यतेऽनेन आविधः त्रयोदिव्यन्त्यत्रेति त्रिदिवः सर्गः।

३९। क्तादेर्घ्नः। [ क्तादेः (क्त-आदि) ५।, घ्नः ५। ]

क्तघ्नः, शत्रुघ्नः, स्तम्बोहन्यते स्तम्बघ्नः, गौर्हन्यते, अस्मै गोघ्नः अतिथिः। उपघ्न आश्रये। निघ्न आयत्ते।

४०। आतः प्रादेरप्रादौ सुपश्च।

[ आतः ५।, प्रादेः ५।, अप्रादौ (न-प्रादि) ७।, सुपः ५।, च ०१। ]

आदन्तात् प्रादेः कः स्यात्। प्रस्थः, सुस्थः, प्रज्ञः, सुष्ठुः। असति प्रादौ सुबन्तमात्राच्च—गां ददातीति गोदः, नृपः, सर्व्वज्ञः, अङ्गुलित्रः, आतपात् त्रायते आतपत्रं छत्रं, द्वाभ्यां पिबतीति द्विपः, कच्छपः, मधुपा स्त्री, धीरपा, स्वस्थः, मध्यस्थः, नदीष्णः। प्रादाविति किम्? कर्म्मणोऽण् गोसन्दाय।

४१। समादौ च ख्यातेः।

[ समादौ (सम्-आदि) ७।, च०१।, ख्यातेः ५। ]

सुपः संपूर्व्वादौ च सति ख्यातेः कः स्यात्। गोसंख्यः, स्त्र्याख्यः। प्रे दा ज्ञः। शुभप्रदः, तिथिप्रज्ञः। उदस्थो भावे च। आखूनामुत्थानं आखूत्थो वर्त्तते; कर्त्तरि च तत उत्तिष्ठतीति तदुत्थो दरीमुखत्थेन समीरणेन।

४२। गेयाद्गष्टक्। [ गेयात् ५।, गः ५।, टक् ० १। ]

गेयाद्गायतेष्टक् स्यात्। वेदगः, वेदगी, सामगः, सामगी।

४३। सुराशीध्वोः पिबते।

[ सुरा शीध्वोः ७।।, पिबतेः ५। ]

एतयोरुपपदयोष्टक् स्यात्। सुरापी, शीधुपी, कथं मधुपी, भ्रमरी, जातेङी।

४४। लक्षणे जायापत्योष्टनः।

[ लक्षणे ७।, जायापत्योः ७।।, टनः ५। ]

अनयोर्हनष्टक् स्यात्। जायाघ्नो रेखा, पतिघ्न्नी तिल-कालकः।

४५। अमनुष्यकर्तृके च।

[अमनुष्य कर्तृके (न-मनुष्य-कर्तृक) ७।, च०।।]

अमनुष्यकर्तृके उपपदे हनष्टक् स्यात्। वातघ्नं तैलं, पित्तघ्नी तिक्ता, श्लेष्मघ्नं त्रिकटु; नेह मनुष्या नारी। नगराद् हस्तिनि। नगरघ्नो, व्याघ्रो, नेह नगरघातो हस्ती।

४६। शक्तौ हस्ति कवाटयोः।

[शक्तौ ७।, हस्तिकवाटयोः ७।। ]

अनयो हनष्टक् स्यात्। हस्तिघ्नः कपाटघ्नो, शक्ताविति किम्? हस्तिघातो विषेण।

४७। णनोऽहो व्रीहिकालयोः।

[णनः १।, हः ५।, व्रीहि, कालयोः ७।।]

व्रीहौ काले चाभिधेये हो णनः स्यात्। हायनो व्रीहि रब्दश्च। क्वनो हेतौ णनः स्यात्। कारणम्।

४८। ग स्थकट् णनौ। [गः ५।, थकट्, णनौ १।।]

गायतेस्थकट् णनौ स्याताम्। गाथकः, गायनो।

४९। पा, घ्रा, ध्मा, धे, दृशः शः।

[पा—दृशः ५।, शः १।]

एभ्यः शः स्यात्, ततो विकरणश्च। पिबः, जिघ्रः, आजिघ्रः, उद्धमः, उद्धयः, उत्पश्यः।

५०। अप्रादेर्लिम्प, विन्द, धारि, पारि, वेदि, चेति, शाति, साह्युदेजिभ्यः।

[अ-प्रादेः (न-प्रादि) ५।, लिम्प—साह्युदेजिभ्यः (शाहि-उत्एजि) भ्यः ।।। ]

एभ्योऽप्रादेः शः स्यात्। लिम्पः, विन्दः, धारयः, पारयः, वेदयः, चेतयः, शातिः सौत्रः शातयः, साहयः, उदेजयः। गवादेर्विन्देः संज्ञायाम्। गोविन्दः, अरविन्दः, कुविन्दः, नेर्लिम्पेः। निलिम्पा, नाम देवाः।

५१। दाञ्_धाञो वा। [दाञ्_धाञः ५।, वा ०१।]

आभ्यां शो वा स्यात्। ददो दायः, दधो धायः।

५२। ग्रहादेर्णिन्। [ग्रह-आदेः ५।, णिन् ०१।]

एभ्यः कर्त्तरि णिन् स्यात्। ग्राही, स्थायी, परिभावी। आवश्यकाधमर्ण्ययोः। अवश्यं कारी कटस्य, ऋणे शतं दायी।

५३। शीलाभीक्ष्णयोः सुपोऽजातेः।

[शील-आभीक्ष्णयोः ७॥, सुपः ५।, अजातेः (न-जाति) ५।]

अनयोरर्थयोः सुबन्तादजातेर्णिन् स्यात्। शीले शीघ्रं भोजी, नित्यस्नायी, मृदुभाषी, वृद्धसेवी। आत्मानं श्रावयतीति आत्मश्रावी, आभीक्ष्ण्ये पुनः पुनर्मधु पिबति मधुपायी, क्षीरपायी, कषायपायी, सजातेरिति किम्? तृणं नेता शीले तृण्। साधोः। साधुकारी, साधुदायी। ब्रह्मणो वदः। ब्रह्मवादी। कुमारशीर्षाद्धन्तेः कुमारघाती, शीर्षघाती। कर्त्तुरुपमानात्।

सिंह इव नर्द्दति सिंहनर्द्दी, हंसगामी। व्रते। स्थण्डिल-शायी, अश्राद्धभोजी।

५४। मनः। [मनः ५।]

सुपोमन्यते णिन् स्यात्। दर्शनीयां मन्यते दर्शनीयमानी भार्य्यायाः, रिपुमानी भ्रातुः।

५५। ख्यस्वात्ममाने। [ख्यः १।, च०१।, आत्ममाने ७।]

आत्ममाने गम्ये मनः ख्यः स्यात्; णिन् च। पण्डितम्मन्यः पण्डितमानी, साधुम्मन्यः, साधुमानी। करणाद्भूते यजः। (णिन् स्यात्)। हविषा इष्टवान् हविर्याजी।

५६। गर्हायां कर्म्मणो हनः।
[गर्हायां ७।, कर्म्मणः ५।, हनः ५।]

णिन् स्यात्। पितृव्यं हतवान् पितृव्यघाती, मध्या-सक्तघाती।

५७। इन् विक्रयः। [इन् ०१।, विक्रयः ५।]

भूते गर्हायामिन् स्यात्। तैलविक्रयी, घृतविक्रयी।

५८। भविष्यति गमिगाम्यादयः।
[भविष्यति ७।, गमि, गाम्यादयः (गामी-आदि) १।।।]

एते भविष्यति इनन्ता णिनन्ताः स्युः। गमी, गामी; आगामी, स्थायी, भावी।

५९ । आङः शीलाचारसाधुषु ।

[ आ ०१, ङः ५।, शील-आचार-साधुषु ७।।। ]

क्विपर्य्यन्तमयमधिकारः ।

६० । तृण् । [ तृण्०।। ]

कर्त्तरि धातोः शीलादौ गम्ये तृण् स्यात् । मण्डूक गत्या वर्त्तमान इत्येव । शीले विरुद्धं वक्ता खलः, आचारे वधूं मुण्डयितारः आविष्टायनाः, साधौ मन्ता खेलः, निर्णेता वेदार्थं मनुः ।

६१ । संपृच्, वि-विच्, त्यज, रज, भज, संसृजादेर्घिणुन् ।

[ संपृच्—संसृजादेः ( संसृज-आदि ) ५।, घिणुन्०१। ]

एभ्यः शीलादौ घिणुन् स्यात् । सम्पर्की, विवेकी, त्यागी, रागी, भागी, निपातनान्न—लोपः, संसर्गी सरितां नृपः । आदि शब्दात् युज योगी ; शमादेर्न जनवधमान्तानामिति (अ३।४।३) वृद्धिनिषेधः—शमी, तमी, दमी, श्रमी, भ्रमी, चमी, क्लमी, मादी ; द्विष, दुह, द्रुहाऽनुरुध, विरुध, संज्वराऽभ्याहनश्च ( संज्वर, अभि-आ-हनः, च ) । द्वेषी, दोही, द्रोही, अनुरोधी, विरोधी, संज्वरी, अभ्याघाती । आङो-यम, यस, मुष, क्रीड़ः । आयामी, आयासी, आमोषी, आक्रीड़ी । प्रे-यस, लप, सृ, द्रु, मथ, वद, वसः । प्रयासीत्यादि । परेः सृ, देवि, क्षिप, रट, दह, मुह, वदः । परिसारी, परिदेवीत्यादि । वौ—सृ, कष, लष, वद, नम, कत्थ, स्रम्भः । विसारी, विकाषी,

विकत्थी, विस्रम्भीत्यादि । अपलषश्च । अपलाषी । समत्वपा-
श्चरः । सञ्चारी, अतिचारी, अपचारी ।

६२ । इन, जि, दृङ्, विस्रयतीन् ( वि+स्रि, अति+
इन् ), वमाऽव्यथाभ्यम ( अव्यथ, वम, अभि+अम ),
परिभू, प्रजन, प्रसुभ्यः ।

[ इन्०१।, जि—प्रसूभ्यः ५।।। ]

एभ्यः शीलादौ इन् स्यात् । जरी, आदरी, क्षयी, विस्रयी,
अत्ययी, वमी, अव्यथी, अभ्यमी, परिभवी, जु सौत्रः प्रजवी,
प्रसवी ।

६३ । इष्णुः, सह, चर, वृत, वृधु, रुचि, भ्राज, निरा-
कृञ्, अलंकृञ्, प्र-जनाऽपत्रप, भूत्पचोत्पतोन्मदः ।

[ इष्णुः १।, सह-चर—भूत्पचोत्पदीन्मदः ( भू, उत्पच, उत्पत, उन्मद ) ५। ]

एभ्यश्चतुर्दशभ्यः शीलादौ इष्णुः स्यात् । सहिष्णु, चरिष्णुः,
वर्त्तिष्णुः, वर्द्धिष्णुः, रोचिष्णुः, भ्राजिष्णुः, निराकरिष्णुः, अल-
ङ्करिष्णुः, अपत्रपिष्णुः, भविष्णुः, उत्पतिष्णुः, उन्मादिष्णुः । णौ
रिष्णुश्छन्दसीति नोच्यते, भावयिष्णुरिति ।

६४ । भूजिग्लः क्स्नुः । [ भू, जि, ग्ला, ५।, क्स्नुः १। ]

एभ्यः क्स्नुः स्यात् । भूष्णुः, जिष्णुः, ग्लास्नुः, स्थास्नुः—
अनौत्वं ( ११८।२।२ ) निपात्यते ।

६५ । त्रसि, गृधि, धृषि, क्षिपेः क्नुः ।
[ त्रसि—क्षिपेः ५।, क्नुः १। ]

एभ्यः क्नुः स्यात् । त्रस्नुः, गृध्नुः, धृष्णुः, क्षिप्नुः ।

६६ । उकण् स्था, भ्रू, भू, वृष, हन, कम, गम, लष, पत, पदः ।
[ उकण्०१।, स्था-भ्रू—पदः ५। ]

एभ्यः उकण् स्यात् । स्थायुकः, भ्रावुकः, भावुकः, वर्षुकः, कामुकः, गङ्गां गामुकः, परस्त्रीमभिलाषुकः, पातुकः, पादुकः ।

६७ । जल्प, भिक्ष, कुट्ट, लुण्ट, वृङ आकट् ।
[ जल्प,—वृङः ५।, आकट्०१। ]

एभ्य आकट् स्यात् । जल्पाकी, जल्पाकः ।

६८ । शीङ्, स्पृहि, गृहि, पतेरालुः ।
[ शीङ्—पतेः ५।, आलुः १। ]

एभ्यः आलुः स्यात् । शयालुः, स्पृहयालुः, गृहयालुः, पतयालुः ।

६९ । दा, धे, सि, सद, शदो रुः ।
[ दा—शदः ५।, रु १। ]

एभ्यो रुः स्यात् । दारुर्दानशीलः, धारुः, सेरुः, सद्रुः, शद्रुः ।

७० । सृ, घस्यदोमरक् । [ सृ-घसि अदः ५।, मरक्०१। ]

एभ्योमरक् स्यात् । सृमरः, घस्मरः, अद्मरः ।

७१। भञ्ज भास मिदोघुरः।

[ भञ्ज, भास,, मिदः ५।, घुरः १। ]

एभ्यो घुरः स्यात्। अनज्यमानभङ्गुरं, कर्म्मकर्त्तरि च भङ्गुरं काष्ठं, भासुरं, मेदुरं।

७२। विदि, भिदि, छिदेः, कुरः।

[ विदि, भिदि, छिदेः ५।, कुरः १। ]

एभ्यः कुरः स्यात्। विदुरोज्ञाता, दोषान्धकारभिदुरः, करीन्द्रदर्पच्छिदुरोमृगेन्द्रः, भिदि छिदेः कर्म्म कर्त्तरि च। भिदुरं, काष्ठं, छिदुरा रज्जुः।

७३। इन् जि सर्त्ति नशः क्वरप्।

[ इन्०१।, जि, सर्त्ति, नशः ५।, क्वरप् ०१। ]

एभ्यः क्वरप् स्यात्। इत्वरः, जित्वरः, विसृत्वरः, नश्वरः। गत्वरः। अकल-परत्वान्मलोपो निपात्यते।

७४। जागृ, यायजि, जंजपि, दंदशि, वावदेरूकः।

[ जागृ,—वावदेः ५।, ऊकः १। ]

एभ्यः ऊकः स्यात्। जागृ—जागरूकः, यङ्लुगन्तात् या—यज्यादे, यायजूकः, जंजपूकः, दंदशूकः, वावदूकः।

७५। किन्, सहि, वहि, चले, यङः।

[ किन्०१।, सहि, वहि, चलेः ५।, यङः ५। ]

सह्यादेर्यङ्लुगन्तात् किन् स्यात्। त्रैलोक्यभारं सासहिः, वावहिः, चाचलिः।

७६ । पापति, सस्नि, चक्रि, दधि, जघ्नि, नेमयः ।
[ पापति—नेमयः १।॥ ]

षड़मो शीलादौ किनन्ता निपात्यन्ते ।

७७ । स्मेरजसि, कमि, कम्पि, नमि, हिंस, दीपोरः ।
[ स्म्यजसि (स्मि,-न-जस ७।,)—दीपः ५।, रः ०१ ]

एभ्योरः स्यात् । स्मेरः, नञो जसः—अजस्रा शब्दप्रवृत्तिः, कम्रः, कम्प्रः, नम्रः, हिंस्रः, दीप्रः ।

७८ । सनाशंस भिक्षउः ।
[ सनाशंस भिक्षः (सन् सनन्त, आशंस, भिक्ष,) ५।, उः १। ]

सनन्तादेः शीलादौ उः स्यात् । कटं चिकीर्षुः, वेममाशंसुः, भिक्षुः ।

७९ । विन्दु, इच्छुः । [ विन्दुः १।, इच्छुः १। ]

द्वौ निपात्येते ।

८० । स्वपि तृषि धृषेर्नजिङ् ।
[ स्वपि तृषि धृषेः ५।, नजिङ् ०१। ]

एभ्योनजिङ् स्यात् । स्वप्नक्, तृष्णक्, धृष्णक् ।

८१ । शृवन्द्योरारुः । [ शृ, वन्देः ५।, आरुः १। ]

आभ्यामारुः स्यात् । शरारुः, वन्दारुः ।

८२ । भियः क्रुः । [भियः ५।, क्रुः १। ]

भीलादौ भियः क्रुः स्यात्। भीरुः, स्वार्थे कः भीरुकः, लत्वे भीलुकः।

८३। स्थेश भासपिषकषोवरः।

[ स्थेश (स्था, ईश,) भास, पिष, कषः ५।, वरः १। ]

एभ्योवरः स्यात्। स्थावरः, ईश्वरः, भास्वरः, पेष्वरः, विकश्वरः।

८४। यो यङः। [ यः ५।, यङः ५।, ]

यातेर्यङन्तात् वरः स्यात्। ययावरः अनिलयः।

८५। क्विब्विच् मन् वन् कनिपः प्रायेण।

[ क्विब्विच् मन् वन् कनिपः १॥, प्रायेण ७॥ ]

क्विबादयः प्रत्ययाः धातोः प्रायेण भवन्ति। प्रायग्रहणात् क्वचिद्भावकारकयोश्च। क्विब्विचोः पञ्चापहारो लोपः। क्विप् विभ्राजते विभ्राट्, भाः, भासौ, धुर्व्वी—धूः, धुरौ, विद्युत्, ऊर्ज्ज ऊर्क् ऊर्जौ, पृ—पूः, पुरौ, सुपश्च—ग्रावस्तुत्। आदेः दीर्घश्च। श्रीः, जूः, कटप्रूः, भ्रूः, स्रूः। ह्वोर्द्वित्वञ्च। ह्वयतेऽनया जुहूः, ध्यायतेर्द्धातेर्वा धीः। गमादेर्द्वित्वञ्च। जगत्, दिद्युत्, दद्रत्, उखास्रत्, पर्ण-ध्वत्, मांसपिपक्, शोकच्छित्, भूः, पुनर्भूः प्रतिभूरन्तरस्थः, दिदिषत्, प्रसूः, प्राविट्, गोधुक्, मित्राय द्रुह्यति मित्रध्रुक्, प्रयुक्, अश्वयुक्, वेदवित्, शत्रुजित्, प्रणीः, सेनानीः, राजते राट्, सम्राट, सस्यमत्ति, सस्यात्, क्रव्यात्, वाहु-ल्यात्—अन्नादः, कणादः, क्रव्यादोऽपि, कर्म्मणोऽण् (८१।१।४)।

दीर्घानुनासिकलोपादवजाद्याः अप्सु जायते, अब्जाः, अग्रेगाः, उदधिक्राः । सम्पदादेः स्त्रियां भावे । सम्पत्, विपत्, संवित्, परियत्, चित्, वित्, छित्, भित्, शुक्, रुक्, लुक् । ब्रह्मादिषु हनादेर्भूते । ब्रह्माणं हतवान्, ब्रह्महा, भ्रूणहा, पुण्यकृत्, कर्म्मकृत्, पापकृत्, सोमसुत्, अग्निं चितवान्, अग्निचित् । श्येनादेरन्याख्यायां । श्येनचित्, रथचक्रचित्, उक्तं शौलादौ । विच्,—वेट, शुभं याः, मन्—सुशर्म्मा, देवशर्म्मा, सुदामा, दीर्घः स्त्रामा ; सस्त, अश्वत्यामा ; वन्—यज्वा, घृतपावा, भूरिदावा । क्वणिप् सूञ सूत्वा, धीवा, पीवा । भूते दृशः कर्म्मणः । मेरुं दृष्टवान्, मेरुदृश्वा, पारदृश्वा । युधिकृञो राज्ञः सहाच्च । राजयुध्वा, राजकृत्वा, सहयुध्वा, सहकृत्वा ।

८६ । वचादेर्णिः । [ वचादेः (वच्-आदि) ५।, णिः १। ]

एभ्योणिः स्यात् । वाक्, प्रछ—प्राट् शब्दप्राट्, व्रज—परिव्राट् । भज, सह, वहेः कर्म्मणः । अर्द्धं भजते अर्द्धभाक्, पादभाक्, सहवहेः छन्दसि तुराषाट्, जनाषाट् ।

८७ । युजादेः क्विन् । [ युजादेः (युज-आदि) ५।, क्विन् ०१। ]

एभ्यः क्विन् स्यात् । युङ्, युञ्जौ, समासे प्रयुक्, अश्वयुक् । क्रुञ्चेर्नोपधात् । क्रुङ्, क्रुञ्चौ ; वाहुल्यात् कर्म्मादौ च । दृश्यतेऽसौ दृक्, दृश्यतेऽनया दृक् । अञ्चेः सुपः । प्राङ्, विश्वद्रुङ् । स्पृशोऽनुदकात् । घृतस्पृक्, मन्त्रेण स्पृशति, मन्त्रस्पृक् ; अनुदकादिति किम् ? उदकस्पर्शी विप्रः ।

## ८८। ऋत्विग् दधृक् स्रगुष्णिक्। 

[ ऋत्विक्—उष्णिहः (ऋत्विक्, दधृक्, स्रक्, उष्णिह्) १।।। ]

एते क्विनन्ता निपात्यन्ते। ऋतौ यजतीति ऋत्विक्, धृषि-द्वित्वञ्च दधृक्, सृज्यतेऽसौ स्रक्। उतः स्निहेस्सलोपश्च। षत्वञ्च उष्णिक्।

## ८९। समानान्यतदादेः कर्म्मण्युपमानात् दृशष्टक् सक्कौ च।

[ समानान्यतदादेः (समान-अन्य-तद्-आदि) ५।, कर्म्मणि ७।, उपमानात् ५।, दृशः ५।, टक् सक्कौ १।।, च०१। ]

समानादेरुपमानात् परस्मात् दृशः कर्म्मणि क्विन्, टक्, सक्ाः स्युः। समान इव दृश्यतेऽसौ सदृक्, सदृशः, सदृक्षः। अन्यतदादेष्टेरात्। अन्यादृक्, यादृक्, तादृक्, यादृशो।

## ९०। विसंप्रभ्यो भुवोड्ः।*

[ वि, सं, प्र, भ्यः ५।।।, भुवः ५।, ड्ः १। ]

एभ्योभुवो डुः स्यात्। विभवतीति विभुः, संभुः, प्रभुः, शतद्वादयश्च। शतद्रुरित्याद्याः साधवः स्युः। शतद्रुः, शितद्रुः, शं भवते प्राप्नोति शम्भुः शिवः, भू प्राप्तावात्मनेपदी।

## ९१। कर्म्मणोऽण्। [ कर्म्मणः ५।, अण्०१। ]

कर्म्मोपपदाद्धातोरण् बहुलं स्यात्। कुम्भं करोति कुम्भ-कारः, क्रतधारः, द्वारपालः, वेदाध्यायः, चर्चाभिप्रायः। आत-

सोपसर्गात् । गोसन्दायः । ह्वावामोऽमाङ्गे च । स्वर्गह्वायः, तन्तुवायः, मा—धान्यमायः ; नेह-गोदः क एवास्य पूर्व्वविप्रतिषेधेन बाहुल्यात् तुमर्थे सर्व्वतः गोदायो व्रजति गोसन्दायो व्रजति । क्वचिन्न भवति आदित्यं पश्यति, ग्रामं गच्छति, क्वचिदच्प्रभृतयः पयोधरः, मधुसूदनः, कथं मांसशीला मांसे शीलमस्या इति समासेन अच्प्रत्ययेन वा तेन ङीर्न भवति । एवं मांसकामा, मांसभक्षा, कल्याणाचारा, सुखप्रतीक्षा, दुःखकामा ।

९२ । दुहः कोदुघश्च । [दुहः ५।, कः०१।, दुघः १।, च०१ । ]

दुहः कर्म्मणः कः स्यात् । दुघादेशश्च । कामदुघा, क्विप्—कामधुक् । सुपः । अधिकारोऽयं । प्राक् जीर्य्यतेः ।

९३ । चरेष्टः । [चरेः ५।, टः १। ]

सुवन्ताच्चरेष्टः स्यात् ? कुरुषु चरतीति कुरुचरः, खेचरी, नक्तञ्चरी, भिक्षाचरः । आदाय, सह्याच्च । आदायचरी, सह्यचरी ।

९४ । पुरोऽग्रतोऽग्रेभ्यः सर्त्तेः ।
[ पुरो—अग्रेभ्यः (पुरस्, अग्रतः, अग्रे) ५॥, सर्त्तेः ५। ]

एभ्यः सर्त्तेष्टः स्यात् । पुरःसरतीति पुरःसरः, अग्रतःसरः, अग्रेसरी ; बाहुल्यात्—पुरःसरा वाचः ।

९५ । पूर्व्वात् कर्त्तुः । [ पूर्व्वात् ५।, कर्त्तुः ५। ]

पूर्व्वात् सर्त्तेष्टः स्यात् । पूर्व्वःसरतीति पूर्व्वसरः, कर्त्तुरिति किम् ? पूर्व्वं सरतीति पूर्व्वसारः ।

९६ । कृञो हेतुशीलानुकूल्येष्वशब्दादेः ।

[ कृञः ५।, हेतु; शीलानुकूल्येषु, (शील-आनुकूल्य) ७।।।, च (अ) शब्दादेः ५। ]

हेत्वादौ गम्ये सुपः करोतेष्टः स्यात् । यशस्करी विद्या, शीलं स्वभावः श्राद्धकरः, आनुकूल्ये—वचनकरः, एवं—शीलादौ दिवाकरः, निशाकरः, रजनीकरः, एवं विभा, प्रभा, भास, कार, अन्त, अनन्त, आदि, वहुल, नान्दी, किं, लिपि, लिबि, वलि, भक्ति, कर्त्तृ, चित्र, क्षेत्र, एकादिसंख्या, जंघा, वाहु, अहन्, यत, तत्, धनुष्, अरुष् इत्यादि । कर्म्मकरी भृत्ये । कर्म्मकारोऽन्यत्र । हेत्वादाविति किम् ? कुम्भकारः, अशब्दादेरिति किम् ? शब्दकारः, श्लोककारः, शब्द, श्लोक, कलह, गाथा, वैर, चाटु, सूत्र, मन्त्र, पद ।

९७ । स्तम्बकरि, सकृत्करौ व्रीहि वत्सयोः ।

[ स्तम्बकरि, सकृतकरौ १।।, व्रीहि, वत्सयोः ७।। ]

इदन्तौ निपात्येते । स्तम्बकरिर्व्रीहिः, सकृत्करिः वत्सः ।

९८ । हृतिदृरिनाथहरौ पशौ ।

[ हृतिहरि, नाथहरौ १।।, पशौ ७। ]

एतौ पशौ कर्त्तरि स्यातां । हृतिहरिः श्वा, नाथहरिरश्वः ।

९९ । आत्मोदरकुक्षिभ्यो भृञ इख् ।

[ आत्मोदर (आत्मन्-उदर) कुक्षिभ्यः ५।।।, भृञः ५।, इख् ०१। ]

एभ्यो भृञ इख् स्यात् । आत्मानं विभर्त्ति आत्मम्भरिः, उद-

रम्भरयस्वकोराः, कुक्षिम्भरिः । फलेग्रहिः । फलानि गृह्णातीति फलेग्रहिः ।

१०० । एजेः खश् । [एजेः ५।, खश् १।]

सुप एजयतेः खश् स्यात् । अङ्गमेजयः, जनमेजयः ।

१०१ । धेटोमुष्ट्यादेः । [धेटः ५।, मुष्ट्यादेः ५।]

खश् स्यात् । मुष्टिन्धयोबालः, स्तनन्धयी वाला, धातोष्टित्वात् ङी । शुनिन्धयः पापः ; मुष्टि, स्तन, शुनी, घटी, खारी, वातः । नासिकादेर्ध्मः । नासिकान्धमति, नासिकान्धमः ; नासिका, नाड़ी, श्रेणी, पाणि,कर, घटी, खारी, वातः । वातन्धमः । वातादजः । वातमजोमृगः । शर्द्धाज्जहातेः । शर्द्धं जहा माषाः । तिलविधरुषन्तुदः । तिलन्तुदः काकः, विधुन्तुदो राहुः, अरुन्तुदोमर्म्मस्पृक् । अल्पमितनखपरिमाणात् पचः । अल्पम्पचः, मितम्पचः, नखम्पचा यवाऽगूः, परिमाणात् प्रस्थम्पचः । वहाल्लिहः । वहं लिहा गौः, अभ्रंलिहो वायुः । कूलादुद्रुजोद्वहेः । कूलमुद्रुजो गजः, कूलमुद्वहा नदी । दृशेरुग्राऽसूर्य्यात् । उग्रंपश्यः, सूर्य्यं न पश्यतीति असूर्य्यंपश्या देवी । ललाटात्तपः । ललाटंतपः सूर्य्यः । भद्राद्दित्येके भद्रङ्करो, भद्रकारः । प्रियवशाद्वदः । प्रियम्वदः, वशम्वदः अनुकूलः । सर्व्वकूलाभ्रकरीषात् कषः । सर्व्वंकषः खलः, कूलंकषा नदी, अभ्रङ्कषी गिरिः । करीषं कषा वात्या । वाचंयमो व्रती । वाचं यमः । अन्यत्र वागयामः । सर्व्वं सहेरस्मद्,

(सर्व्वंसह, इरम्मद) परन्तप, द्विषन्तप, भगन्दर, पुरन्दराः। सर्व्वंसहः साधुः, असंज्ञार्थग्रहणं—इरया माद्यति इरम्मदो मेघज्योतिः। परान्तापयतीति परन्तपः, भगं दारयतीति भगन्दरो रोगः, पुरन्दरः शक्रः।

१०२। मेघर्त्ति भयात् कृञः खः।

[ मेघर्त्ति (मेघ ऋति), भयात् ५।, कृञः ५।, खः १। ]

एभ्यः कृञः खः स्यात्। मेघङ्करोवातः, ऋतिङ्करः, भयङ्करः।

१०३। क्षेम, प्रिय, मद्रादण् च।

[ क्षेम, प्रिय, मद्रात् ५।, अण् ०१।, च ०१। ]

एभ्यः कृञः खोऽण् च स्यात्। क्षेमङ्करः, क्षेमकारः, प्रियङ्करः, प्रियकारः। मद्रङ्करो, मद्रकारः। क्वचिदुत्सर्गापवादयोः समावेशः तेन क्षेमकरस्य हितस्य प्रजानामिति भट्टिः।

१०४। आशिताद्भुवः करणभावयोः।

[ आशितात् ५।, भुवः ५।, करणभावयोः ७।। ]

आङोऽश्नातेः क्तान्तादाशिताद्भुवः खः स्यात्। आशितेन, तृप्तेन भूयतेऽनेन, आशितम्भवः ओदनः, भावे—फलैर्य्यत्वाशितम्भवं तृप्तिरित्यर्थः।

१०५। भृ, तृ, वृजि, धारि, सहि, तपि, दमो नाम्नि ह्रस्वस्य।

[ भृ—दमः ५।, नाम्नि ७।, ह्रस्वः १।, च ०१। ]

एभ्यः संज्ञायां सुपः खः स्यात्। विश्वम्भरो विष्णुः, विश्व-

म्भरा भूः, रथन्तरं साम, पतिम्बरा, धनञ्जयः, धारेऽङ्गं रूच वसुन्धरा, सर्व्वं सहा भूः, मनुन्तपः, बलिन्दमः कृष्णः ।

१०६ । गमः । [गमः, ५।]

गमेः खः स्यात् । प्लवङ्गमः, भुजङ्गमः, शुभङ्गमः, पूर्व्वङ्गमो-ऽयं पन्थाः । हृदयङ्गमा वाचः ।

१०७ । प्लवङ्ग, तुरङ्ग, विहङ्ग, विहङ्गम, विहग भुजंगाश्च ।

[ प्लवङ्ग—भुजङ्गाः १।।।, च०१। ]

अत्र मलोपो विहायसो विहश्च निपात्यते । खत्वे प्लवङ्गश्च ।

१०८ । प्रियाढ्य, सुभग, स्थूल, पलित नग्नान्धादच्वेर्भुवः खिष्णुखुकणौ ।

[ प्रियाढ्य (प्रिय-आढ्य),—नग्नान्ध (नग्न, अन्ध) ५।, अच्वेः ५।, भुवः ५।, खिष्णु, खुकणौ १।। ]

प्रियादिभ्योऽच्व्यन्तेभ्यः च्वि—साद्दश्याच्व्यर्थे वर्त्तमानेभ्यः परा-द्भुवः खिष्णु खुकणौ स्यातां । अप्रियः प्रियोभवति प्रियम्भविष्णुः, प्रियम्भावुकः ; सुभगम्भविष्णुः, सुभगम्भावुकः ; अच्वेरिति किम् ? आढ्यीभविता ।

१०९ । करणे कृञः खनट् ।

[ करणे ७।, कृञः ५।, खनट् ०१। ]

प्रियादिभ्यः करोतेः करणे खनट् स्यात् । अप्रियं प्रियं

कुर्व्वंस्तनेन प्रियङ्करणं दानं, आढ्यङ्करणी वनिज्या, सुभगङ्करणं दानं, स्थूलङ्करणमौषधं, नग्नङ्करणं द्यूतं अन्धङ्करणं शोकः, धृष्टेन भवितव्यं आढ्यीकरणो रसविधिः ।

११० । गमादेर्डः । [गमादेः (गम-आदि) ५।, डः १।]

सुप इत्येव । सुपो गमादेर्डः स्यात् कर्त्तरि । भुजगः, तुरगः, पद्भ्यां न गच्छतीति पन्नगः सर्पः, खगः, प्लवगः, पूर्व्वंगः, अत्यन्तगः, अध्वगः, दूरगः, पारगः, सर्व्वगः, सर्व्वत्रगः, स्वरगारगः, उरसः सलोपश्च—उरगः । सुदुर्भ्यामधिकरणे । सुगः, दुर्गः । निर्गोदेशे । गिरौ शेते । गिरिशः, कङ्कः, आखन्यते आखा, परिखा । उदस्तलोपश्च उखा । आशिषि हनः । शत्रुं वध्यात् । शत्रुहः । क्वचिदनाशिषि वराहः, कटाहः, अपाज्वरक्लेशतमसः, ज्वरापहः, क्लेशापहः, तमोऽपहः । राजघः ; पाणिघ, ताड़घौ शिल्पिनि । एते निपात्यन्ते । राजघस्तोचणः, पाणिना, हन्तीति पाणिघः ।

१११ । भूते जनः । [भूते ७।, जनः १।]

भूते जनो डः स्यात् । उपसरे जातः, उपसरजः । मन्दुराया, क्रस्वश्च । मन्दुरजः, तज्ञः, क्षतजः, ब्राह्मणाज्जातो, ब्राह्मणजोऽधर्मः । वृजिजः, कौशल्याजो रामः, न जातोऽजः, द्विर्जातो द्विजः, अग्रजः, आत्मजः, रामानुजः, स्वानुजः, प्रजाताः, प्रजाः, पश्चिजः, प्रथमे जातः, प्रथमजः, केन जातः, किञ्जः,

क्वचिद्भजातेः, अश्वाज्जातः, दार्व्वी, घाटादयः। पृषोदरादौ ज्ञेयाः। सुप इति निवृत्तम्।

११२। जीर्य्यतेरतृः [ जीर्य्यतेः ५।, अतृः १।]

अस्माद्भूतेऽतृः स्यात्। जरन्, जरतो।

११३। निष्ठा। [निष्ठा १।, ]

पृथक्त्वाद्धातुमात्राद्भूते क्त, क्तवतू स्यातां। कृतः, कृतवान्।

११४। ज्ञानेच्छा पूजार्थ ञीतः क्तो वर्त्तमाने च।
[ ज्ञानेच्छा (ज्ञान, इच्छा) पूजार्थ (पूजा-अर्थ) ञीतः ५।, क्तः १।, वर्त्तमाने ७।, च०१। ]

एभ्यः क्तो वर्त्तमाने च भवति। ज्ञानार्थात् राज्ञां ज्ञातः, मतो बुद्धोऽवगतः, राजभिर्ज्ञायत इत्यर्थः। इच्छार्थात् इष्टः वाञ्छितः, पूजार्थात् सतां पूजितः, अर्च्चितः, ञीतः, खल्वपि, ञिमिदा, मिन्नः, क्ष्विण्णः, बाहुल्यात्, अन्येभ्योऽपि, दान्तः, शान्तः, कान्तः, क्षान्तः, रुष्टः, तुष्टः, हृष्टः, क्लिष्टः, उद्यतः।

११५। कृत्य, क्त, खलार्था भावकर्म्मणोः।
[ कृत्य, क्त, खलार्थाः (खल्-अर्थ) १॥, भाव कर्म्मणोः ७॥ ]

कृत्यादयो भावे, कर्म्मणि च स्युः। भवितव्यं, सकर्म्मकेभ्यस्तु भावे विवक्ष्यते, सभां वा न प्रवेष्टव्यं, भूतं, ज्ञातं. तव, ईषदाढ्यम्भवं तेन, कर्म्मणि—कर्त्तव्यः त्वया कटो भवता, सुकरः कटो भवता।

११६। गेयादयोबहुलं।

[ गेयादयः (गेय-आदि) १।।।, बहुलं ०२। ]

स्युः। कर्त्तरि—गेयोऽयं साम्नां; कर्म्मणि गेयान्यनेन सामानि। एवं भव्योऽयं, भावे—भव्यमनेन, प्रवक्तीति प्रवचनीयो गुरुर्धर्म्मस्य, समावर्त्तनीयो गुरुः उपनीतस्य, उपस्थानीयः शिष्यो गुरोः, उपासक इत्यर्थः। लोचनं लोभयतीति लोचनलोभनीया अस्य पङ्क्तिः, जायते वा जन्यः, आप्लवते, आप्लाव्यः, आपतति आपत्यः; पुनर्ब्बहुलग्रहणं स्पष्टार्थं, करणाद्यर्थञ्च, करणेस्नानीयं चूर्णं, सम्प्रदाने—दानीयो भिक्षुः, अपादाने—भेतव्या रजनी, आधारे—शयनीयं वस्त्रं, रमनीया वापी, रम्यमुद्यानं, तिष्ठन्त्यस्मिन्निति स्थेयः।

११७। आरम्भे क्तः कर्त्तरि च।

[ आरम्भे ७।, क्तः १।, कर्त्तरि ७।, च०१। ]

आदि कर्म्मणि क्तः कर्त्तरि च स्यात्। प्रकृतः कटं चैत्रः, अन्यत्र यथाप्राप्तञ्च प्रकृतः कटोऽनेन।

११८। गत्यर्थ्याऽकर्म्मक श्लिष शीङ स्थास वस जन रुहजीर्य्यतिभ्यश्च।

[ गत्यार्थाकर्म्मक (गति-अर्थ-अकर्म्मक) श्लिष, शीङ, स्थास (स्था-आस) वस, जन, रुह, जीर्य्यतिभ्यः (जॄ) ५।।।, च०१। ]

एभ्यः क्तः कर्त्तरि च स्यात्। ग्रामं गतोऽसौ, पक्षे यथाप्राप्तञ्च ग्रामोगतस्तेन, ग्रामे गतममुना। देशमहिः सृप्तः, शयमहिना

सप्तः, इहाहिना सुप्तं, अकर्म्मकात्—भूतोऽयं, भूतमनेन ; श्लिषादेः—अयमाश्लिष्टः कन्यां, अनेनाश्लिष्टोऽसौ, शीङादेः पृथगुपादानं उपसर्गात् सकर्म्मकार्थं—अधिशयितः खट्वां पतिः, खट्वाऽधिशयिताऽनेन ; अधिशयितमस्यां, एवं उपस्थितो गुरुः, उपासितो गुरुं, अध्युषितस्तरुं, उपजातः पुत्रं, आरूढस्तरुं, अनुजीर्णोऽयं वृषलीं, क्तवतुः कर्त्तर्य्येव व्यवस्थितः ।

## ११९ । अधिकरणे च गत्याहारार्थाऽकर्म्मकेभ्यश्च ।

[ अधिकरणे ७।, च०१।, गत्याहारार्थाऽकर्म्मकेभ्यः (गति-आहार-अर्थ-अकर्म्मक) ५।॥, च०१। ]

एभ्यः क्तोऽधिकरणे च भवति । पक्षे यथाप्राप्तञ्च—इदमहेर्गतं, इदमहेः सुप्तं, इदमस्य भुक्तं, इदमस्य पीतं, इदमस्यासितं, शयितं, कथं पीता गावः, विभक्ता भ्रातरः ? पीतं विभक्तञ्चाऽस्त्यस्तीति मत्वर्थीयोऽत् ।

इति श्रीपद्मनाभदत्तकृते। सुपद्मे व्याकरणे क्तप्रकरणं नाम
चतुर्थस्याध्यायस्य प्रथमः पादः ।

# अथ चतुर्थाध्यायस्य द्वितीयः पादः ।

## उणादिप्रकरणम् ।

१ । **उणादयो बहुलं** । [ उणादयः (उण्-आदि) १।॥, बहुलं ०१। ]

उणादयः प्रत्ययाः धातोर्बहुलं स्युः । यदाहुः । उणादयोऽव्युत्पन्नानि प्रातिपदिकानीति । वर्त्तमान इत्यनुवर्त्तते ।

२ । **कृादिभ्य उण्** । [ कृादिभ्यः (कृ-आदि) ५।॥, उण् ०१। ]

एभ्य उण् स्यात् । कार्य्यं कारुः, वायुः, जायुः, पायुः, स्वादुः, मायुः । मङ्गेरलच् । मङ्गलं ; केचित् भूते च इष्टं तर्द्दिनि वर्त्म, भसितं भस्म ; भीमादयोऽपादाने बिभेत्यस्मात् भीमः ; भीष्मः, पुनर्बहुलग्रहणं स्पष्टार्थं ।

३ । **न्यादेः करणे त्रट्** ।
[ न्यादेः (नी-आदि) ५।, करणे ७।, त्रट् ०१। ]

नीआदेः करणे त्रट् स्यात् । नयत्यनेन नेत्रं, दाम्यनेन दात्रं ; नी, दाप, शस, यु, युज, स्तु, तुद, सि, सिच, मिह, पत, नह । शस्त्रं, योत्रं, योक्त्रं, स्तोत्रं, तोत्रं, सेत्रं, सेक्त्रं, मेढ्रं, पत्रं, नद्ध्री, पोत्रं हलशूकरयोर्मुखे । बाहुल्यात् धः कर्म्मणि च । धीयतेऽसौ धात्री ।

४ । **दंष्ट्रादशने** । [ दंष्ट्रा ०१।, दशने ७। ]

आवन्ता निपात्यते ।

५। अर्त्यादेरित्रः। [अर्त्यादेः (अर्त्ति-आदि) ५।, इत्र. १।]

एभ्यः इत्रः स्यात्। अर्य्यतेऽनेनेति अरित्रं नौवाहनं, करणी—रिपुलवित्रोवाणः, धवित्रं, धुवित्रञ्च, व्यजनं, सवित्रं, खनित्रं, सहित्रं, चरित्रं, वहित्रं। बाहुल्यात् कर्त्तरि च। पुनातीति पवित्रोऽग्निः, पवित्र ऋषिः।

६। घञ भावकारकयोरकर्त्तरि।

[घञ् ०१।, भावकारकयोः ७॥, अ (न) कर्त्तरि ७।]

अनयोर्धातोरुत्तरे घञ् स्यात्। भावे—पाकः, त्यागः, रागः, कारके संज्ञायामसंज्ञायाञ्च लिख्यतेऽसौ लेखः, वेदः, प्रास्यते—प्रासः, रज्यतेऽनेन रागं कुङ्कुमं; दास्यते ऽस्मै दासो विप्रः, आहरन्त्यस्मादित्याहारः—आध्रियतेऽस्मिन्नित्याधारः। बहुलाधिकारात् पदादेः—कर्त्तरि च। पद्यते पादः, रुजति रोगः, सरति कालान्तरंमिति सारः स्थिरांशः, अतिसारो व्याधिः, विसारो मत्स्यः। वहतीति वाहोऽश्वः, कलते कालः, विध्यतीति व्याधः, सरन्त्यनेन सारोवलमित्यादि।

७। शृणोतेर्वायुवर्णनिवृत्तेषु।

[शृणोतेः (श्रु) ५।, वायु, वर्ण, निवृत्तेष ७॥।]

घञ् स्यात्। शारो वायुः, वर्णश्च; नीशारः, प्रावरणं। अतो भावेऽकर्त्तरि कारके विधिः।

८। परिमाणार्थे सर्व्वेभ्यः।

[परिमाणाय (परिमाण-अर्थे) ७।, सर्व्वेभ्यः ५॥।]

अत्र सर्व्वेभ्यो धातुभ्यो घञ् स्यात्। सर्व्वग्रहणादपवाद-विषये च। एकस्तण्डुलनिश्चायः, द्वौ शूर्पनिष्पावौ। बाहुल्या-न्नैकोऽपि तत्र निश्चयः इत्यपि।

६। इङादेश्च। [इङादेः (इङ्,-आदि) ५।, च०१।]

अपोऽपवादार्थोऽयमारम्भः। इङादेर्घञ् स्यात्। अध्यायः, उपेत्याधीयते अस्मादित्युपाध्यायः, दीर्य्यतेऽमीभिर्दाराः, जीर्य्यते-ऽनेन जारः। समीद्रुवः। स्तुवश्च यज्ञे। सन्दावः, संस्तावः छन्दोगानां, अयज्ञे तु संस्तवः। निरुद्धः पुवः। निष्पावः, उत्पावः। समुदीयुद्रुवः। संयावः, उद्यावः, संद्रावः, यावश्च। प्रे द्रु, स्तु, स्रुवः। प्रद्रावः, प्रस्तावः, प्रस्रावः, स्रावश्च। वे शुस्रुवः। विश्रावो, विस्रावः। प्रस्तोऽयज्ञे। प्रस्तारः, यज्ञे तु वर्हिः प्रस्तरः। प्रथने वेरशब्दे। वारि विस्तारः, शब्दे तु वाग्-विस्तरः। छन्दसि च। विष्टारः पङ्क्तिनाम छन्दः। रुवः प्रादेः। संरावः, विरावः। आङो वा केवलाच्च। आरावः, आरवः, रावो, रवः। श्रिभुवोऽप्रादेः। श्रायः, भावः, प्रादेस्तु प्रश्रयः, प्रभवः। प्रभावादिस्तु समासेन। उदः श्रियो वा। उच्छ्रायः, उच्छ्रयः। अवान्नियः। अवनायः। उदो वा केवलाच्च। उन्नायः, उन्नयः; नायो, नयः; जालमानायः, परिणायः, शारीणां सर्व्वतोनयने। अभेर्लुवः। अभिलावः। न्युदोग्रः, किरश्च धान्ये। निगार, उद्गारः, निकारः, उत्कारः, एतौ धान्योत्क्षेपणार्थौ। अन्यत्र निकरः, पुष्पोत्करः। अवात्तृस्त्रः। अवतारः, अवस्तारः।

न्यायोनये। नीवारस्तृणधान्ये । पर्य्यायोऽनुक्रमे। उपशाय, विशायौ पर्य्यायशयने। अद्य ममोपशायः, तवाद्य विशायः। हस्तादाने चेरस्तेये। हस्तेन पुष्पप्रचायः, फलोच्चायः, हस्तादान इति किम्? वृक्षाग्रे पुष्पप्रचयोऽयं। अस्तेय इति किम्? चौर्य्येण पुष्पप्रचयं करोति हस्तेन। गृह, देह, राशिकरणेष्वादेश्च कः। निकायो गृहं, कायो देहः, काष्ठनिकायः। सङ्घे सधर्म्मिणाञ्च। एकधर्म्मानुसारिणां समूहे—भिक्षुनिकायः, सधर्म्मिणामिति किम्? शूकरनिचयः। उदि ग्रहः। उद्ग्राहः। न्यवादाक्रोशे। निग्राहस्ते भूयात्, अवग्राहस्ते भूयात्। समि मुष्टौ। अङ्गोमल्लस्य संग्राहः, मुष्टिरित्यर्थः। परेर्यज्ञे। उत्तरपरिग्राहः, अयज्ञे तु परिग्रहः। प्राल्लिप्सायां। पात्रप्रग्राहेण चरति भिक्षुः। वा वणिजां। वणिक् सम्बन्धिन्यभिधेये प्राद्वा। तुलाप्रग्राहः, तुलाप्रग्रहो वा। रश्मौ च। रश्मिरश्वादिधारणरज्जुः, तत्र प्रग्राहः, प्रग्रहः। अवाहृष्टिविबन्धे। अवग्राहोऽवग्रहश्च मेघस्य। खनः। वेत्येव—आखानः, आखनः। वृञ आच्छादने। प्रावारः, प्रवरः। आङिप्लवः। आप्लावः, आप्लवः। परेर्भुवोऽवज्ञाने। परिभावः, परिभवः। उदङ्कोऽनुदके। अन्नतोदङ्कः, नेह—जलोदञ्चनं।

१०। ऋदिण् गमादेरप्।

[ ऋदिण् गमादेः (ऋत्, इण् गम्, आदि) ५।, अप् ०१। ]

ऋदन्तादिणन्ताच्च गमादेश्च घणोऽपवादोऽप्स्यात्। ऋतः, करः, निकरः, आतरः, गरः, सङ्करः, इणन्तात्—चयः, जयः, भयं क्लीवे, लोकाश्रयत्वाल्लिङ्गस्य; जरः। पवः, द्रवः, विद्रवः, उत्प्लवः,

गमादेः खल्वपि—गमः, निगमः, ग्रहः, विग्रहः, लब्धे, अक्षेषु ग्लहः, परिसरः, अवसरः, उपसरो गर्भग्रहः, छदः, प्रच्छदः, अपि ह्रस्वः। सञ्चरः, वहः, व्रजः, व्यजः, पणः, आपणः, मदः । प्रमद, सम्मदो हर्षे ; अन्यत्र प्रमादः, वृ-वरः, दृञ् आदरः, वशः, रणोभणः । प्रादेरदः । विघसः, प्रघसः, अप्रादेस्तु घासः । नेर्वा । निघसः, न्याद । व्यध, जपोऽप्रादेः । व्यधः, जपः, प्रादेस्तु – प्रव्याधः, उपजापः । स्वनहसो वा । स्वनः, स्वानः. हसः, हासः, अप्रादेरित्येव—प्रहासः । यमो नि, वि, समुपाच्च । अप्रादेश्च । यमो, यामः, नियमो, नियामः, वियमो, वियामः, संयमः संयामः । नेर्गद, नद, पठ, स्वनः । वेत्येव—निगदो, निगादः, निनदो, निनादः, निपठो, निपाठः ; निस्वनो, निस्वानः । क्वणोऽप्रदादेश्च । नेश्च क्वणः, क्वाणः, निक्वणः, निक्वाणः । प्रादेश्च वाणायाः—प्रक्वणः, प्रक्वाणः इत्यादि । नित्यं समुदोरजः, पशोः । पशुसम्बन्धिन्यभिधेये समजः पशूनां संघः, उदजः पशुप्रेरणं, अन्यत्र विप्रसमाजः । क्रोहुश्च । हवो, हुतिः । विन्यत्युपाच्च । हुश्च विह्वो, निहवः, अतिहवः, उपहवः । आहवो निपाने । आहवो युद्धे । हनो वधः, घातश्च । मूर्त्तौ घनः । मूर्त्तौ हनो घनः स्यात् । अन्तर्घणो देशे । अयमन्तर्देशे स्यात् । गृहैकदेशे प्रघणः, प्रघाणो । उद्घनोऽत्याधाने । यत्राधाय काष्ठं तक्षति । स उद्घनः । अपघनोऽङ्गे । स्तम्बायो विद्रुभ्यः करणे । एभ्यो हनोऽप्घनादेशश्च, स्तम्बघनः, के स्तम्बघ्नोऽपि ; अयोघनः, विघनः, द्रुघणः कुठारः । संज्ञायां णत्वं । परेर्घः । परेर्हनोऽप् घमादेशश्च । परिघः । संघो गणे । उद्घः,

प्रशंसायां। निघो निमिते। निघाः वृक्षाः, परितः, समा इत्यर्थः।

११। गोचराङ्कयौ। [ गोचराङ्कयौ (गोचर आङ्कय) १॥ ]

एतौ निपात्येते। शुक, वकाद्या औणादिकाः।

१२। यज, याच, स्वप, यत, रक्षोनः।
[ यज—रक्षः ५।, नः १। ]

एभ्यो यथायोगं भावेऽकर्त्तरि कारकेऽच नः स्यात्। यजन्त्व-स्मिन्निति यज्ञः, याच्ञाः, स्त्रियां स्वप्नः, यत्नः रक्ष्णः। विश्न, प्रश्नौ। विश्न, प्रश्ने निपात्येते।

१३। घोरुपसर्गात् किः।
[ घोः ५।, उपसर्गात् ५।, किः १। ]

उपसर्गाद्दादन्तात् किः स्यात्। आदिः, आधिः, निधिः, विधिः, प्रणिधिः, अन्तर्द्धिः ; वाहुल्यात्—कर्त्तर्य्यपि विधिः।

१४। कर्म्मणोऽधिकरणे। [ कर्म्मणः ५।, अधिकरणे ७। ]

कर्म्मोपपदाद् घोः किः स्यात्। जलं धीयतेऽस्मिन्निति जलधिः, इषुधिः, ओषधिः स्त्रियां।

१५। ट्वितोऽथुच्। [ ट्वितः (टु-इत्) ५।, अथुच् ०१। ]

टुकारेत् संज्ञकादथुच् स्यात्। वेपथुः, वमथुः, श्वयथुः।

१६। ड्वितस्त्रिमक् तद्भाव निर्वृत्ते।
[ ड्वितः (डु-इत्) ५।, त्रिमक् ०१।, तद्भावनिर्वृत्ते ७। ]

तद्भावनिवृत्तेऽर्थे डुकारेत् संज्ञकात् त्रिमक् स्यात्। पाकेन निवृत्तं पक्त्रिमं, लब्ध्रिमं, कृत्रिमं।

१७। दुःस्वीषद्भ्यः कृच्छ्राकृच्छ्रार्थेभ्यः खल्।

[दुःस्वीषद्भ्यः (दुः-सु-ईषत्) ५।॥, कृच्छ्राकृच्छ्रार्थेभ्यः (कृच्छ्र-अकृच्छ्र-अर्थ) ५।॥, खल् १।१।]

दुरादिभ्योधातुभ्यः खल् स्यात्। कृच्छ्रेण क्रियते दुष्करः, अकृच्छ्रेण क्रियते सुकरः कटो भवता, सुलभा विद्या, ईषत्-करः, ईषल्लभः,, ईषल्लभ्यमिति लभ्यसिद्धौ पश्चात् समासेन।

१८। कर्त्तृकर्म्मभ्याञ्च भूकृभ्यां।

कर्त्तृ, कर्म्मभ्यां ३॥, च०१।, भू, कृभ्यां ५॥।

दुरादिपूर्व्वात् कर्त्तुर्भुवः, कर्म्मणः कृञः खल् स्यात्। अकृच्छ्रेणाढ्येन भूयतेऽनेन दुराढ्यम्भवं, तेन स्वाढ्यंभवं, अकृच्छ्रेणाढ्योऽयं क्रियते दुराढ्यंकरस्त्वया पुत्रः, स्वाढ्यङ्करा कन्या। एवं ईषदाढ्यम्भवं, ईषदाढ्यङ्करा इत्यपि।

१९। आदृषि, पृषि, मृषि, युधि, शासुभ्योऽनः।

[आत्—शासुभ्यः ५।॥, अनः १।]

आकारान्तात् दृश्यादेश्च दुरादिभ्योऽनः स्यात्। दुष्पानं, सुपानं, ईषत्पानं, दुर्दानो गौः, दुर्द्दर्शनः, दुर्द्धर्षणः, दुर्म्मर्षणः, दुर्योधनः, दुःशासनः।

२०। इकि श्तिपौ धातुकथने।

[ इ, कि, श्तिपः १॥, धातुकथने ७। ]

एते एव प्रत्यया धातुनिर्द्देशे स्युः। इ—इन्धिः, यजिः; कि—रुधिः, युधिः; श्तिप्—भरतिः, करोतिः। दृष्ट्यर्त्ति सर्त्ती (दृष्टि, अर्त्ति, सर्त्ति) निपातनात्। आकाराद्या-स्तद्धिताः कारशब्देन समासेन च एवंकारः, वषट्कारादाः। इक् कृष्यादिभ्यः। कृषिः, गिरिः, किरिः। इणजादिभ्यः। आजिः, आटिः, आतिः। पदादेस्तिः। पत्तिः, यष्टिः, शक्तिः-आयुधं, ज्ञातिः, औणादिकास्त्वेते।

## २१। टनः कर्त्तरि च। [टनः १।, कर्त्तरि ७।, च०१।]

धातोर्भाव, कारकयोष्टनः स्यात्। गमनं, दानं, पयः पानं, गुड़भोजनं; कर्त्तरि उपशमयतीति उपशमनः, द्विषदुपशमनी विद्या, गुणमुक्तवान् गुणवचनः। कर्म्मणि—राजभोजनाः शालयः, अवसेचनो वृक्षः, करणे प्रमाणं, उपमानं, छेदनः परशुः, इध्मव्रश्चनः कुठारः, पलाशशातनः; सम्प्रदाने—सम्प्रदीयतेऽस्मै सम्प्रदानः, अपादाने—प्रपतनो भृगुः। आधारे—गोदोहनी, मत्स्यधानी, राजधानी, ओदनपचनः कटाहः, व्रीहिहरणः कुशलः।

## २२। पुंसि घणप् किनाऽथुचः।

[पुंसि ७।, घणप् (घण्-अप्) किनाथुचः (किन् अथुच) १॥।]

घण् अप् किन् अथुच् एते प्रत्ययाः पुंसि स्युः। तथैवोदाहृताः। कथं सारमिदं, सारेयं; कि—ओषधिरियं, अप्—धनं, वनं, न—याचञा? वाहुल्यात्, आहुश्च—लिङ्गमशिष्यं

लोकाश्रयत्वाल्लिङ्गस्येति ; भावे टन, क्लौ क्लीवे । हसनं, हसितं तव ।

## २३ । इनणभिविधौ वृद्धिरादेश्चोपसर्गस्य ।

[ इनण् ०१।, अभिविधौ ७।, वृद्धिः १।, आदेः ६।, च०१।, उपसर्गस्य ६। ]

अभिव्याप्तौ धातोर्भावे क्लीवे इनण् स्यात् । उपसर्गस्यादेर्वृद्धिश्च । सांराविणं, सांकोटिनं ।

## २४ । स्त्रियामिकन् क्तिनौ ।

[ स्त्रियां ७।, इकन्, क्तिनौ १॥ ]

स्त्रीलिङ्गे भावे कारके च कर्त्तरि इकण् क्तिनौ स्यातां । भवतः शायिका, आसिका ; संज्ञायां—प्रवाहिका, प्रच्छर्द्दिका, विचर्च्चिका, प्रस्कन्दिका, दमनकपुष्पभञ्जिका । पर्य्याये—अद्य तव शायिका । अर्हे—अर्हसि त्वमिक्षुभक्षिकां । धारे—धारयसि मे पयः पायिकाः । उत्पत्तौ—उत्पन्ना मे पयःपायिका—क्तिन्—कृतिः, स्थितिः, दृष्टिः, गीतिः, भूतिः, कीर्णिः । प्रश्नाख्यानयोरिण् च । इकणादयश्च । प्रश्ने—काङ्कारिमकार्षीः, काङ्कारिकां, काङ्कृत्यां कांक्रियां वा ? आख्याने—सर्व्वाङ्कारिमकार्षं, सर्व्वांकारिकां, सर्व्वां कृतिमित्यादि ।

## २५ । ऊति, यूति, जूति, साति, हेति, कीर्त्तयश्च ।

[ ऊति—कीर्त्तयः १॥।, च ०१। ]

निपात्यन्ते। अवतेर्व्वेञो वा ऊतिः, स्यतेः सिञो वा सातिः, हि गतौ, हेतिः।

२६। ग्ला, म्ला, ज्या, हा—भ्यो निः।

[ ग्ला—हाभ्यः ५।।।, निः १। ]

एभ्यो स्त्रियां निः स्यात्। ग्लानिः, म्लानिः, ज्यानिः, हानिः।

२७। क्तिजाशिषि नाम्नि।

[ क्तिच् ०१।, आशिषि ७।, नाम्नि ७। ]

आशिषि धातोः, क्तिच् स्यात्। कर्त्तरि। तनुतात् तन्तिः, वन्तिः, भूतिः।

२८। व्याङि व्यतीहारे णट्।

[ व्याङि (वि-आङ्) ७।, व्यतीहारे ७।, णट् ०१। ]

क्रिया—व्यतिहारे व्याङ् संघातोपपदेऽन्यतश्च धातोः, स्त्रियां णट् स्यात्। व्याक्रोशी, व्यवहासी, व्यात्युक्षी।

२९। व्रजादेर्भावे क्यप्।

[ व्रजादेः (व्रज—आदि) ५।, भावे ७।, क्यप् ०१। ]

व्रजादेः स्त्रियां भावे क्यप् स्यात्। व्रज्या, इज्या, परिचर्य्या, जागर्य्या, गुणविधानाच्च तुक् कृत्या। संज्ञायां समजादेः। समज्या, समस्या, निगद्या, निपत्या, मन्या, विद्या, सुञ्-सुत्या, शय्या, इण् इत्या।

३०। क्रियाटाट्या मृगया परिश्र(स)र्य्येङ्काः।

[क्रिया—परिसर्य्येङ्काः (क्रिया, अटाट्या, मृगया, परिस(श्र)र्य्या, इङ्का, १।।। ]

पञ्चैते स्त्रियां भावे निपात्यन्ते।

३१। सनादिषिद्भिदादिभ्योऽङाप्।

[ सनादि (सन्-आदि), षिद्भिदादिभ्यः (षित् भिद आदि) ५।।।, ङाप् ०१। ]

एभ्योभावे स्त्रियां अकर्त्तरि कारके च ङाप् स्यात्। सनाद्यन्तात्—जिगीषा, पुत्रीया, पुत्रकाम्या, लोलूया, चंक्रमा, कण्डूया. षितः-पचा, त्रपा, त्वि, त्विया, घटादेः-षितः, घटा, व्यथा, प्रथा, वाहुल्यान्नेह, उपलब्धिः. भिदादेर्य्यथादर्शनं, भिदा, विदा, छिदा, पृच्छा, चिपा. गुहा, रुजा, णन्तात्—चिन्ता, पूजा, कथा, अर्चा, कुम्बा। गुर्व्वादिहलोऽदोपादेः-शिचा, भिचा, चूड़ा, पीड़ा, मेधा, ईहा, ऊहा, वाधा, वाहुल्यात्—ऊहः, वाधः, अदोपादेरिति किम्? दोप्तिः, आप्तिः। सोपसर्गादादन्तात्। प्रमा, प्रतिमा, प्रभा, आख्या, आज्ञा, प्रपिवन्त्यस्यां प्रपा, आस्था, व्यवस्था, उपधा, विधा, अन्तर्द्धा, अत्-श्रद्धा, निपातनात्।

३२। जराधारादयश्च।

गुणवृद्धिभ्यां ङावन्ता, निपात्यन्ते। जरा, धारा, गोधा, जागरा, अप् प्रत्यये जागरश्चः—लेखा, रले, रेखा, द्वारा, कारा, भावा, आरा, ज्वाला, क्रपेः—कृपा निपातनात्।

३३। ण्यासश्रन्थादेरनः।

[ ण्यासश्रन्थादेः (णि-अन्त, आस, श्रन्थ आदि) ५।, अनः १। ]

ण्यन्तादेः स्त्रियामनः स्यात् । कारणा, भावना, वासना, उपासना, अन्यना, आदिशब्दात् मन्थना, घटना, वन्दना, गवेषणा, इषेरनिच्छार्थात्—अन्वेषणा, पर्य्येषणा, बाहुल्यात्, क्वचित् सामान्य, विशेषयोश्च समावेशः । परिष्टिः, पाचयतेः—पाक्तिः ।

३४ । आक्रोशे नञ्यनिः । [आक्रोशे ७।, नञि ७।, अनिः १। ]

शापे नञ्युपपदाद्धातोरनिः स्यात् । तस्याजननिरेवाऽस्तु जननीक्लेशकारिणः. अकरणिस्ते भूयात् ।

३५ । तुम् तादर्थ्ये भावस्य ।
[ तुम् ०१।, तादर्थ्ये ७।, भावस्य ६। ]

धात्वर्थस्य तादर्थ्ये गम्ये धातोस्तुम् स्यात् । क्वामान्त त्वद-व्ययं । पक्तुं, भोक्तुं, व्रजति, पाकाय भोजनाय इत्यर्थः । एवं शक्नोति भोक्तुं. मल्लोभोक्तुं, कालोभोक्तुं, समयो भोक्तुं, वेला भोक्तुं, गन्तुमनाः, भोक्तुकामः, श्रोतुं श्रवणं, द्रष्टुं चक्षुः, योद्धुं धनुः, वक्तुं जड़ः. पातुं पयः, तुमर्थे णकः, प्रागुक्तः ओदनं भोजको व्रजति ।

३६ । क्त्वाऽलं खल्वोः प्रतिषेधयोः ।
[ क्त्वा १।, अलं, खल्वोः ७॥, प्रतिषेधयोः ७॥ ]

प्रतिषेधार्थयोरलं खल्वोर्योगे क्त्वा स्यात् । अलंकृत्वा, खलु-कृत्वा, खलूक्त्वा, खलु वाचिकं न वक्तव्यमित्यर्थः बाहुल्यात् अलं रोदनेन, अलं भोजनेन ।

३७। मयतव्यतीहारे वा मिश्च यपि।

[ मयतेः ५।, व्यतीहारे ७।, वा०१।, मिः १।, च०१।, यपि ७। ]

मेङः, कर्म्मव्यतीहारे क्त्वा वा स्यात्। यपि तस्य मिश्च वा। अपमित्य याचते अपमातुं याचते, विनिमयं कर्त्तुमित्यर्थः, यपि अपमाय।

३८। एककर्त्तृकयोः पूर्व्वकाले।

[ एककर्त्तृकयोः ६।।, पूर्व्वकाले ७। ]

एककर्त्तृकयोर्धात्वोर्यः पूर्व्वकाले वर्त्तते तस्मात् क्त्वा स्यात्। भुक्त्वा व्रजति, काटं कृत्वा शेते, छिन्नमतन्त्रं, तेन स्नात्वा भुक्त्वा, पीत्वा, व्रजति। परापेक्षया वा। एककर्त्तृकयोरिति किम्? त्वयि गते जल्पत्यसौ। पूर्व्वकाल इति किम्? भुङ्क्ते, जल्पति।

३९। परावरयोगे च।

[ परावरयोगे (पर-अवर-योग) ७।, च ०१। ]

स्यात्। बाल्यमतिक्रम्य यौवनं वाल्यात् परमित्यर्थः। अप्राप्य नदीं पर्व्वतः, अत्रापि पूर्व्वकालता एक कर्त्तृकता च गम्यते, भवत्यस्तीति पदमध्याहारात्। तथा झनत्कृत्य पतति, मुखमुन्मील्य हसति, इत्यत्र वाक्यादेव पूर्व्वकालता गम्यते यदि समकालं विवक्षते तदैवं स्यात्। झनत् कुर्व्वन् पतति, झन्-झनायमानो वा पततीति। इह स्नात्वा सुखं भवति, पापं कृत्वा अनुतापः स्यादित्यादौ स्थितस्येति पदमध्याहार्य्यम्।

४०। आभीक्ष्ण्ये णम् वा। [आभीक्ष्ण्ये ७।, णम् १।, वा ०१।]

पूर्व्वार्थे पौनःपुन्ये च धातोर्णम् स्यात्। क्त्वा च भोजं भोजं व्रजति। भुक्त्वा भुक्त्वा व्रजति।

४१। अग्रे प्रथम पूर्व्वेषु।
[अग्रे, प्रथम, पूर्व्वेषु ७।।]

एषु प्रयुज्यमानेषु णम्, क्त्वा च स्यात्। अग्रे भोजं, अग्रे भुक्त्वा, व्रजति; प्रथमं भोजं; प्रथमं भुक्त्वा व्रजति; पूर्व्वं भुक्त्वा वा व्रजति।

४२। कर्म्मण्याक्रोशे कृञः खमुन्।
[कर्म्मणि ७।, आक्रोशे ७।, कृञ: ५।, खमुन् ०१।]

कर्म्मण्युपपदे कृञः, खमुन् स्यात्, आक्रोशश्चेत्। आक्रोशे—तं चौरं कारमाक्षिपति।

४३। स्वादुवचने च। [स्वादुवचने ७।, च ०१।]

स्वाद्वर्थे च कृञः खमुन् स्यात्। स्वादुङ्कारं भुङ्क्ते, लवणं कारं न क्त्वा स्वादूकृत्य।

४४। अन्यथैवमित्थं कथमोणमसिद्धार्था प्रयोगे।
[अन्यथैवमित्थं कथमः (अन्यथा, एवं, इत्थं कथं) ५।, णम्—सिद्धार्थाप्रयोगे (सिद्ध-अर्थअप्रयोग) ७। ]

एभ्यः कृञो णम् स्यात्। सिद्धार्थाप्रयोगश्चेत्। अन्यथा व्यक्तीति अन्यथा कारं भक्ति, एवं कारं, इत्थं कारं, कथं कारम्।

४५ । यथातथाभ्यामसूयोत्तरे ।

[ यथा, तथा भ्यां ५।।, असूयोत्तरे (असूया-उत्तर) ७। ]

कृञोणम् स्यात्। यथाकारं, तथाकारं भुङ्क्ते, किन्तवानेन ?

४६ । कर्म्मणोदृशि विदः साकल्ये ।

[ कर्म्मणः ५।, दृशि, विदः ५।, साकल्ये ७। ]

कर्म्मण आभ्यां णम् स्यात् । ब्राह्मणदर्शं प्रणमति सर्व्वान् ब्राह्मणानित्यर्थः । भिक्षुवेदं भोजयति । अतः कर्म्मणो विधिः ।

४७ । यावतोविन्दजीवेः ।

[ यावतः ५।, विन्द, जीवेः ५। ]

णम् स्यात् । यावद्वेदं भुङ्क्ते, यावज्जीवमधीते ।

४८ । चर्म्मोदराभ्यां पूरः ।

[ चर्म्मोदराभ्यां (चर्म्म-उदर) ५।।, पूरः ५। ]

णम् स्यात् । चर्म्मपूरं तिलान् ददाति, उदरपूरं भुङ्क्ते ।

४९ । वृष्टिप्रमाणेऊलोपो वा ।

[ वृष्टिप्रमाणे ७।, ऊलोपः १।, वा ०१। ]

वृष्टिप्रमाणे पूरेर्णम् स्यात् । ऊलोपश्च वा । गोष्पदपूरं वृष्टोदेवः, गोष्पदप्रं वा ।

५० । चेलार्थात् क्नोपेः ।

[ चेलार्थात् (चेल—अर्थ) ५।, क्नोपेः ५। ]

णम् स्यात्, वृष्टिप्रमाणे । चेलक्नोपं वृष्टोदेवः, वस्त्रक्नोपम् । प्रागुपदं ग्रोयथाविध्यनुप्रयोगः । इतोयस्मात् धातोर्णम् विहित-

स्तस्यैवाऽनुप्रयोगः कार्य्यः । मण्डूकगत्या सिद्धार्थाप्रयोगः । प्रागुपदंशः (६।४।२।४) ।

५१ । निमूल, समूलात् कषः ।
[ निमूल, समूलात् ५।, कषः ५। ]

णम् स्यात् । निमूलकाषं कषति, समूलकाषं कषति—समूलं कषतीत्यर्थः ।

५२ । अकृतात् कृञः । [ अ(न)कृतात् ५।, कृञः ५। ]
अकृतकारं कुरुते ।

५३ । जीवाद्ग्रहः । [ जीवात् ५।, ग्रहः ५। ]

णम् स्यात् । जीवग्राहं गृह्णाति ।

५४ । शुष्क चूर्ण रूक्षात् पिषः ।
[ शुष्क, चूर्ण, रूक्षात् ५।; पिषः ५। ]

एभ्यो णम् स्यात् । शुष्कपेषं पिनष्टि, चूर्णपेषं पिनष्टि, रूक्षपेषं पिनष्टि ।

५५ । हनः समूलात् । [ हनः ५।, समूलात् ५। ]

णम् स्यात् । समूलघातं न्यवधीदरीन् ।

५६ । करणाच्च । [ करणात् ५।, च०१। ]

कर्म्मण इति निवृत्तम् । हनः करणोपपदाणम् स्यात् । पाणिना हन्तीति पाणिघातं हन्ति, शरघातमरीन् हन्ति ।

५७। स्नेहोदकात् पिषः।

[स्नेहोदकात् (स्नेह-उदक) ५।, पिषः ५।]

स्नेहोदकात् करणात् पिषेर्णम् स्यात्। घृतपेषं पिनष्टि, तैलपेषं, पिनष्टि, उदकपेषं पिनष्टि।

५८। हस्तार्थाद्वर्त्तिग्रहेः।

[हस्तार्थात् (हस्त-अर्थ) ५।, वर्त्ति, ग्रहेः ५।]

आभ्यां णम् स्यात् हस्तार्थात् करणात्। हस्तवर्त्तं वर्त्तयति, हस्तग्राहं गृह्णाति, पाणिग्राहं।

५९। स्वार्थात् पुषः। [स्वार्थात् (स्व-अर्थ) ५।, पुषः ५।]

आत्म-आत्मीय धन-ज्ञाति-करणात् पुषेर्णम् स्यात्। स्वेन पुष्णाति, पुष्यति, पोषयति वा स्वपोषं एवं, आत्मपोषं, आत्मीयपोषं, रैपोषं, गोपोषं, पितृपोषं पुष्णातीत्यादि।

६०। बन्धोऽधिकरणात्। [बन्धः ५।, अधिकरणात् ५।]

बध्नातेर्णम् स्यात्। चक्रे बद्धः—चक्रबन्धं बद्धः ; गुप्तिबन्धं बध्नाति।

६१। कर्त्तुरूर्द्धाच्छुषि पूरेः।

[कर्त्तुः ५।, ऊर्द्धात् ५।, शुषि, पूरेः ५।]

आभ्यां ऊर्द्धात् कर्त्तुर्णम् स्यात्। ऊर्द्धः शुष्यति—ऊर्द्धशोषं शुष्यति, ऊर्द्धं पूरं पूर्य्यते।

६२। पुरुषाद्वहः जीवान्नशः।

[ पुरुषात ५।, वहः ५।, जीवात् ५।, नशः ५। ]

पुरुषात् कर्त्तुर्वहेः, जीवान्नशेश्च णम् स्यात्। पुरुषः सन् वहति—पुरुषवाहं वा वहति ; जीव एव नष्टः—जीवनाशं नष्टः।

६३। उपमानात् कर्म्मणश्च।

[ उपमानात् ५।, कर्म्मणः ५।, च ०१। ]

उपमानात् कर्त्तुः कर्म्मणश्च धातोर्णम् स्यात्। मृग इव नष्टः—मृगनाशं नष्टः ; घृतं विलायं विलीनः ; कर्म्मणश्च रत्न-मिव निहितः—रत्नधायं निहितः ; मयूरिकाबन्धं बद्धः।

६४। उपदंश स्तृतीयायाः।

[ उपदंशः ५। तृतीयायाः ५। ]

यथाविध्यनुनिवृत्तम्। तृतीयान्तादुपदंशेर्णम् स्यात्। मूलकेनोपदंश्य मूलकोपदंशं भुङ्क्ते, अतो विकल्पेन समासः। मूलकेनोपदंशं वा।

६५। हिंसार्थादभिन्नकर्म्मकात्।

[ हिंसार्थात् (हिंस-अर्थ) ५।, अभिन्न कर्म्मकात् ५। ]

तृतीयान्तोपपदात् हिंसार्थाद्धातोर्णम् स्यात्। दण्डोपघातं गाः कालयति, दण्डेनोपघातं वा ; दण्डताडं ; दण्डेन ताडं ; अभिन्नकर्म्मकादिति किम्? दण्डेनाहत्य वृषं गाः कालयति, अत्रार्थान्तरप्रयोगाद् भिन्नकर्म्मता।

६६ । सप्तम्याञ्चोपपीड़रुधकर्षः ।

[ सप्तम्याः ५।, च०१।, उप पीड़, रुध, कर्षः ५। ]

सप्तम्यन्तात् तृतीयान्ताच्च उपपीड़ादेर्णम् स्यात् । 'उपादेव पीड़ोऽन्यतोऽनियमात्; पार्श्वोपपीड़ं शेते, पार्श्वे उपपीड़ं— पार्श्वेनोपपीड़ं वा; हस्तोपरोधं, हस्त उपरोधं, हस्तेनोपरोधं वा धनुर्ददाति; पाणिकर्षं वट्कमानयति पाण्युपकर्षं, पाणौ कर्षं, पाणिनाकर्षं वा ।

६७ । समासत्ति प्रमाणयोः । [ समासत्ति प्रमाणयोः ७। ]

सन्निधानगतौ, प्रमाणे च सप्तम्यन्तात्, तृतीयान्ताच्च धातोर्णम् स्यात् । केशग्राहं युध्यते, केशेषु ग्राहं, केशैर्ग्राहं वा; द्व्यङ्गुलोत्कर्षं दण्डिकां छिनत्ति—द्व्यङ्गुल उत्कर्षं, द्व्यङ्गुलेनोत्कर्षं वा ।

६८ । अपादानात् त्वरायां ।

[ अपादानात् ५।, त्वरायां ७। ]

अपादानात् धातोर्णम् स्यात् । त्वरा चेत् । शय्योत्थायं व्रजति, शय्याया उत्थायं वा ।

६९ । द्वितीयायाश्च । [ द्वितीयाः ५।, च०१। ]

द्वितीयान्तात् त्वरायां धातोर्णम् स्यात् । लोष्ट्रग्राहं, युध्यन्ते, लोष्टं ग्राहं वा ।

आगुर ओराद्दा । अस्त्यपगारं युध्यन्ते, अस्त्यपगोरं, असि-मपगोरं । अत्वरायाञ्च । एकरज्जं ।

७० । स्वाङ्गादध्रुवात् । क्लिश्यमानाच्च ।

[ स्वाङ्गात् (स्व-अङ्ग) ५।, अ (न) ध्रुवात् ५।, क्लिश्यमानात् "', च०१। ]

द्वितीयान्तात् स्वाङ्गाच्च धातोर्णम् स्यात् । भ्रूविक्षेपं, वक्ति भ्रुवं विक्षेपं, वा ; अध्रुवादिति किम् ? शिर उत्क्षिप्य कथयति । क्लिश्यमानाच्च । उरप्रतिपेषं युध्यन्ते । ध्रुवार्थमिदं—यत्राहते प्राणी म्रियते तद्ध्रुवं ।

७१ । विशि, पति, पदि, स्कन्दो, व्याप्यमानासेव्य-मानाभ्यां ।

[ विशि—व्याप्यमानासेव्यमानाभ्यां (व्याप्यमान, आसेव्यमान) ५॥ ]

आभ्यां कर्मभ्यां विश्यादेर्णम् स्यात् । व्याप्यमानात् वीप्स्यमानद्रव्यात्, समासे—द्विरुक्तेरप्रयोगः, गेहानुप्रवेशमास्ते, गेहं गेहमनु प्रवेशं वा ; लतानुपातं पुष्पं गृह्णाति, लतां लता-मनुपातं वा ; गेहानुप्रपादमास्ते, गेहं गेहमनु प्रपादं वा ; नद्यवस्कन्दमाचामति, नदीं नदीमवस्कन्दं वा ; आसेव्य-मानादाभीक्ष्ण्ये क्रियायाः गेहानुप्रवेशमास्ते, गेहमनु-प्रवेशमनुप्रवेशं वा ; एवंनद्यवस्कन्दं नदीमवस्कन्द मव-स्कन्दं वा ।

७२। कालाद्स्तुत्पोऽन्तरे।

[ कालात् ५।, अस्तु, तृष ५।, अन्तरे।

अन्तरे वर्त्तमानात् कालात् कर्म्मणोऽस्यति, तृषिभ्यां णम् स्यात्। द्व्यहाभ्यासं गाः पालयति, द्व्यहमभ्यासं वा। द्व्यहतर्ष द्व्यहं तर्षं वा। अन्तर इति किम्? द्व्यहमभ्यस्य ग्रामान् गतः।

७३। नाम्न आदिशि ग्रहेः।

[ नाम्नः ५।, आ-दिशि, ग्रहेः ५। ]

नाम्नः कर्म्मण आभ्यां णम् स्यात्। नामादेशमाचष्टे, नामग्राहं।

७४। अयथायुक्ताख्यानेऽव्ययात् कृञः क्त्वा वा।

[ अयथा युक्ताख्याने (न-यथायुक्त-आख्यान) ७।, अव्ययात् ५।, कृञः ५।, क्त्वा १।, वा०१। ]

अव्ययात् कृञः क्त्वा स्यात्। पक्षे णम्; अयथायुक्ताख्यानञ्चेत्। ब्राह्मण पुत्रस्ते जातः इति नीचैः कृत्य, नीचैः कृत्वा वा वदति। उच्चैरिहाख्यानं युक्तं। आवेदयन्तः क्षितिपालमुच्चैःकारं मृतं रामवियोगशोकात्। नीचैरिहाख्यानं युक्तं।

७५। तिर्य्यकोऽपवर्गे।

[ तिर्य्यकः ५।, अपवर्गे ७। ]

तिर्य्यक् शब्दात् कृञः क्त्वा, णमौ स्यातां। समापनञ्चेत्। तिर्य्यक्कृत्य, तिर्य्यक्कृत्वा, वा तिर्य्यक्कारं गतः समाप्येत्यर्थः।

७६। तस्यन्तस्वाङ्गनाधार्थप्रत्ययेभ्यो भुवश्च।

[ तस्यन्तस्वाङ्ग (तसि—अन्त—स्व-अङ्ग) नाधार्थ, प्रत्ययेभ्यः (ना, धा, अर्थप्रत्यय) ५।।।, भुवः ५।, च ०१। ]

एभ्योभुवश्च क्त्वा, णमौ स्यातां। तस्यन्तस्वाङ्गात् मुखतः कृत्य, मुखतः कृत्वा, वा मुखतः कारं। पृष्ठतोभूय, पृष्ठतोभूत्वा, पृष्ठतोभावं। ना,धार्थप्रत्ययेभ्यश्चार्थेऽभिधानं। नानाकृत्य, नानाकृत्वा, वा नानाकारं, नानाभूय, नानाभूत्वा, नानाभावं। एवं विना च; द्विधाकृत्य द्विधाकृत्वा, द्विधाकारं, द्विधाभूय, द्विधाभूत्वा, द्विधाभावं। एवं द्वैधं, त्रैधं, द्वेधा, त्रेधादेश्च।

७७। तूष्णीमः। अन्वक् आनुकूल्ये।

[ तूष्णीमः ५।, अन्वक् ०५।, आनुकूल्ये ७। ]

चानुकृष्टं न सर्व्वत्रेति कृत्वो निवृत्तिः। आभ्यां भुवः क्त्वा णमौ स्यातां। तूष्णींभूय, तूष्णींभूत्वा, तूष्णीं भावः। अन्वग्भूय, अन्वग्भूत्वा, अन्वग्भावं रघु वृषभयोर्व्वानवेन्द्रोविरावान्।

७८। अव्ययकृतो भावे। [ अव्यय कृतः १।।।, भावे ७। ]

अव्यय कृतो भावे च भवन्ति। तत्कथं ओदनं भोक्तुं व्रजति, कटं कृत्वा शेते तत्राहुः, भावेऽपि हि प्रत्यये सकर्म्मकाद्धातोः कर्म्मसम्बन्धो भवत्येव। यथा ओदनस्य पाकः कर्म्मणि षष्ठीः। उक्ताः, कृत्प्रत्ययाः।

७९। क्त्वो यप् समासेऽनञ् पूर्व्वे।

[ क्त्वः ६।, यप् ०१।, समासे ७।, अ(न) नञ्पूर्व्वे ७। ]

समासे नञोऽन्यस्मिन् पूर्व्वे क्तोयप् स्यात्। प्रकृत्य, विनीय, संज्ञाय, संधाय, शुक्लीकृत्य, उररीकृत्य, नानाकृत्य, उच्चैः कृत्य, कथयति। यदृच्छादयश्चेति निपातनात् नेह—परमकृत्वा, अनञ्-पूर्व्वे इति किम्? अकृत्वा, समासे इति किम्? उच्चैःकृत्वा, क्वचित् केवलस्यापि—दृश्यते स्वधनं त्यज्य गच्छति, सन्ध्यावधूं गृह्य करेण गाढ़मिति।

८०। अमदोदान्निष्ठातोनोदश्च।

[ अ(न) मदः ५।, दात् ५।, निष्ठातः ६।, नः १।, दः ६।, च ०१। ]

दकारात् परस्य निष्ठा-तकारस्य नः स्यात्। दकारस्य च नकारः। भिन्नं, भिन्नवान्; अमद इति किम्? मत्तः, मत्तवान्।

८१। रल्वादि ल्वयत्याद्योदितोऽपृ मूर्च्छः।

[ रल्वादि—(र-लु-आदि) ल्वयत्याद्योदितः (ल्वयति (सू) आदि, ओत् इत्) ५।, अ (न) पृ, मूर्च्छः ५। ]

रेफादेर्निष्ठातकारस्य नः स्यात्। कीर्णं, पूरी—पूर्णं, कथं चरितं? इट्—व्यवधानात्, कथं कृतस्यापत्यं, कार्त्तिः, ऋतः—आर्त्तिः, बृद्धेर्वहिरङ्गत्वात्, ल्वादेः—खल्वपि लूनः, लूनवान्; जीनं, लीनं ल्वयत्यादेः; ल्वनः,—दूनः, दीनः, उड्डीनः इत्यादि; ओदितः—लग्नः, मग्नः, मसजेर्मोनो वा मन्नोदिगस्वरः, अपृमूर्च्छ इति किम्? पूर्त्तः, मूर्त्तः, मूर्त्तवान्। दुस्वोदीर्घश्च। निष्ठानत्वञ्च। दूनः, गूनः।

८२। आतोयण्संयोगपूर्व्वादध्याख्यः।

[ आतः ५।, यण् संयोगपूर्व्वात् ५।, अ (न) ध्याख्यः ५।, ]

यण्संयोग पूर्व्वादादन्ताद्धातोर्निष्ठातोनः स्यात्। संस्त्यानः, श्राणः, प्राणः, निद्राणः, ग्लानः, ग्लानवान् इत्यादि। अध्याख्य इति किम्? ध्यातः, ख्यातः, ख्यातवान्, यण्संयोगपूर्व्वा-दितिकिम्? स्नातः, धातोरित्येव—निर्य्यातः।

८३। क्षियोदीर्घश्च कर्त्रधिकरणयोः।

[ क्षियः ५।, दीर्घः १।, च०१।, कर्त्रधिकरणयोः (कर्तृ-अधिकरण) ७॥ ]

क्षियोऽत्र निष्ठातोनः स्यात्। दीर्घश्च। कर्त्तरि—क्षीणो-धर्म्मः, अधिकरणे—इदमस्य प्रक्षीणं, अनयोरिति किम्? भावे क्षितमस्य जातं।

८४। वाक्रोशदैन्ययोः।

[ वा०१।, आक्रोश, दैन्ययोः ७॥ ]

क्षियोऽत्र निष्ठा णत्वं दीर्घो वा स्यात्। आक्रोशे—क्षीणा-युस्त्वं, क्षितायुस्त्वं, दैन्ये क्षीणो विप्रः।

८५। श्योऽस्पर्शे। [ श्यः ५।, अ (न) स्पर्शे ७। ]

श्यैङोऽत्र निष्ठातोमः स्यात्। शीनं, घृतं, अस्पर्श इति किम्? शीतोवायुः।

८६। अञ्चोऽनपादाने।

[ अञ्चः ५।, अन (न) अपादाने ७। ]

निष्ठातोनः स्यात् । समक्नः शकुनेः पाशो । समक्तः पङ्क, अनपादान इति किम् ? उदक्तमुदकं कूपात् ।

८७ । पूञोविनाशे । [ पूञः ५।, विनाशे ७। ]

निष्ठातोनः स्यात् । पूना यवाः ; विनाश इति किम् ? पूतं धान्यं ।

८८ । सिञोग्रासकर्म्मकर्त्तृकस्य ।

[ सिञः ५।, ग्रासकर्म्मकर्त्तृकस्य ६। ]

निष्ठानत्वं स्यात् । सि—सिनो ग्रासः स्वयमेव ; अन्यत्र सितोग्रासोऽनेन ।

८९ । दिवोऽविजिगीषायां ।

[ दिवः ५।, अ (न) वि-जिगीषायां ७। ]

निष्ठानत्वं स्यात् । आद्यून औदरिकः, परिद्यूनवान्, अविजिगीषायामिति किम् ? द्यूतं ।

९० । निर्व्वाणोऽवाते । [ निर्व्वाणः १।, अवाते ७। ]

निपात्यते । निर्व्वाणोमुनिः । अवात इति किम् ? निर्व्वातो वातः गत इत्यर्थः ।

९१ । शुषः कः । [ शुषः ५।, कः १। ]

शुषो निष्ठातः कः स्यात् । शुष्कः, शुष्कवान् । पचोवः । पक्ववान् ।

९२ । घायोमः । [घायः ५।, मः १। ]

घायो मः स्यात् । घै—घामः, घामंवान् ।

९३ । प्रस्त्यो वा । [प्रस्त्यः (प्रस्त्यै) ५।, वा ०१। ]

प्रस्त्यायतेः निष्ठातो मो वा स्यात् । प्रस्तीमः, प्रस्तीतः ।

९४ । अप्रादेः फुल्ल चीव कृशोत्फुल्ल संफुल्लोल्लाघाः ।

[ अप्रादेः ५।, फुल्ल—चीव, कृशोत्फुल्ल (कृश-उत्फुल्ल), संफुल्लोल्लाघाः (संफुल्ल-उल्लाघ) १।।। ]

एते निष्ठातकारेण सह निपात्यन्ते । फुल्लः, निष्ठाधिकारे निपातनात् फुल्लवान्, अप्रादेरिति किम् ? ञि फला विशरणे आदित्वान्नेट् प्रफुल्तं पद्मं, चीव्र-प्रचीवितः, कृशः-कृशितः, लाघृ-प्रोल्लाघितः कथं प्रफुल्लं, पुण्डरीकाक्षं यः पश्यति हरेर्मुखं, पश्चात् समासेन ; उत्फुल्लादयो निपातिता एवं क्तवतोनेच्छन्ति तेषां चिवितवानित्यादि ; अथ मन्यते पाणिनीये चेति निष्ठाधिकारे निपातनात् अन्यथा ग्रंथे क्ताधिकारे एव उक्तं स्यात् । भव इति अप् प्रत्ययान्तः केचित् क्तान्तो निपात्यते ।

९५ । नुदोन्द विन्द त्राघ्राह्रीभ्यो वा ।

[ नुदोन्द, नुद-उन्द विन्द, त्रा, घ्रा, ह्रीभ्य, ५।।।, वा ०१। ]

एभ्यो निष्ठातो नो वा स्यात् । नुन्नं, नुत्तं वा ; नुत्तवान्, नुन्नवान् ; उन्नं, उत्तं वा ; विदि विचारणे विन्नं, वित्तं वा ; त्राणं, त्रातं, दैवत्रात इति नित्यं, घ्राणं, घ्रातं ; ह्रीणं, ह्रीतं ।

९६। ऋणं धारे। [ऋणं १।, धारे ७। ]

स्यात्। ऋतमन्यत्र।

९७। वित्तं धनाख्यातयोः।

[ वित्तं १।, धनाख्यातयोः (धन आख्यात) ७।। ]

विन्देर्निपात्यते। वित्तं, धनं, वित्तः पाण्डित्येन, विन्न-मन्यत्र।

९८। भित्तं सकले। [भित्तं १।, सकले ७। ]

भित्तं खण्डे स्यात्। भिन्नमन्यत्र।

९९। धूर्त्तः कितवे। [ धूर्त्तः १।, कितवे ७। ]

स्यात्।

१००। ऋ ल्वादेः क्तिनस्तोनोऽपिपर्त्तेः।

[ ऋ, ल्वादेः (लू-आदि) ५।, क्तिनः ६।, तः ६।, नः १।, अ(न) पिपर्त्तेः (पृ) ६। ]

ऋकारान्ता ल्वादेश्च क्तिनस्तो नो भवति। कीर्णिः, गीर्णिः, लूनिः, धूनि, लीनि, पिपर्त्तेस्तु पूर्त्तिः।

१०१। द्रादो ह्रस्वः क्तिनिष्ठयोः।

[ द्रादः ५।, ह्रस्वः, क्तिन्, निष्ठयोः ७।। ]

द्रादोऽत्र ह्रस्वः स्यात्। प्रद्रुतः, प्रद्रुतवान्।

१०२। क्रादेरद्र्युपसर्गस्यापि।

[ क्रादेः ५।, अ(न) द्व्युपसर्गस्य (न-द्वि उपसर्ग) ६।, अपि ७। ]

छादेरपप्रत्यये ह्रस्वः स्यात् । छदः, प्रछदः, उच्छदः, अद्व्युप सर्गस्येति किं समुपच्छादः ।

१०३ । इस्मनत्र क्विपु । [इस्-मन्-त्र-क्विपु ७।।। ]

एषु छादेः ह्रस्वः स्यात् । छदिरियं, मन्-छद्म, त्र छत्रं, क्विप् प्रच्छत् ।

१०४ । च्वियो दीर्घो यपि । [ च्वियः ६।, दीर्घ, १।, यपि ७। ]

यपि च्वियो दीर्घः स्यात् । प्रच्वीय ।

१०५ । आनेऽतोऽम् । [ आने ७।, अतः ६।, अम् ०१। ]

आने परेऽतोऽम् स्यात् । पचमानः, करिष्यमान, अत इति किम् ? ददानः । आस आदीत् । आसः परस्यानस्यादीद्भवति । आसीनः, उदासीनः ।

१०६ । ह्रस्वात्तुक् पिति कृति ।
[ ह्रस्वात् ५।, तुक् ०१।, पिति ७।, कृति ७। ]

ह्रस्वान्ताद्धातोः पिति कृति च परे तुगागमः स्यात् । प्रकृत्य, जित्वरः, अग्निचित् । ह्रस्वान्तादिति किम् ? ग्रामणीः, पितीति किम् ? चितं, कथं ग्रामणि कुलं, ह्रस्वस्य वहिरङ्गत्वात् ।

१०७ । खिति नाजन्तद्विषदरुषोऽनव्ययस्य मुम् ह्रस्वश्च ।
[ खिति (ख-इत्) ७।, नाजन्त (न-अच्-अन्त) द्विषदरुषो (द्विषत् अरुष्) ५।, अनव्ययस्य (न-अव्यय) ६।, मुम् ०१।, ह्रस्वः १।, च०१। ]

खिदन्ते परे नाजन्तादेर्मुमागमः स्यात्। राजमेजयः, राजम्मन्यः, गुंग्गिम्मन्यः, गुरुम्मन्यः, जनमेजयः। दीर्घस्य च ह्रस्वः स्यात। कामिनिमेजयः, महिलम्मन्या, शुभ्रंमन्या, शक्रंमन्यः, खलपुम्मन्यः, रिपुम्मन्यः, द्विषदरुषोरन्तलोपश्च। द्विषमेजयः, अरुन्तुदः, अनव्ययस्येति किम्? दिवामन्या रात्रिः दोषामन्यमहः, नान्तादेरिति किम्? विद्दम्मन्यः।

१०८। इच एकाचोऽम् द्वितीयावच्च।

[इचः ५।, एकाचः ५।, अम् ०१।, द्वितीयावत् ०१।, च०१।]

इजन्तादेकाचः खिदन्ते परेऽमागमः स्यात्। सचाम् द्वितीयैकवचनवत। नाम्मन्या, स्त्रियम्मन्या स्त्रीमन्या, भ्रुवम्मन्या, नावंमन्या, नृ—नरंमन्याः। काराऽगदसत्यास्तुभ्यः। अगदंकारः, सत्यंकारः, अस्तुङ्कारः।

१०९। श्येनतिलात् पातेने।

[श्येनतिलात् ५।, पाते ७।, ने ७।]

आभ्यां नान्ते पाते परेऽम् भवति। श्यैनम्पाता मृगया, तैलं पाता स्वधा।

११०। रात्रेः कृति वा। [रात्रेः ५।, कृति ७।, वा०१।]

कृति परे रात्रेरम्वा स्यात्। रात्रिञ्चरो, रात्रिचरः; रात्रिमटो रात्राटः खिदन्ते तु मुम् नित्यं रात्रिमन्यमहः।

१११। तिमिङ्गिलादिषु च।

[ तिमिङ्गिलादिषु (तिमिङ्गिल-आदि) ७॥ च०१। ]

तिमिङ्गिलादिषु अम् द्वितीयैकवचनवन्निपात्यते। तिमिङ्गिलः, दीपङ्करः सर्व्वन्दमः। धेनुर्भव्यायां। धेनुंभव्या गौः। अग्निभ्राष्टादिन्धे। अग्निमिन्धो, भ्राष्ट्रमिन्धः। उष्णा भद्रात् करणे। उष्णाङ्करणं, भद्रङ्करणं।

इति श्रीपद्मनाभदत्तकृतौ सुपद्मे व्याकरणे चतुर्थस्याध्यायस्य

द्वितीयः पादः।

# अथ चतुर्थाध्यायस्य तृतीयः पादः ।

## समासप्रकरणम् ।

### १ । समर्थानां समासः ।

[ समर्थानां ६।॥, समासः १।, ]

परस्परसम्बद्धार्थानां पदानां समासो वेदितव्यः। अधिकारोऽयम् । अनेकपदस्यैकपदत्वं समास इति, यथा राज्ञः पुरुषो राजपुरुषः, समर्थानामिति किम् ? भार्य्या राज्ञः पुरुषो देवदत्तस्य । (१)

---

(१) समास इत्यस्याधिकारः । परस्परेण सम्बद्धो अर्थो येषां तानि परस्परसम्बद्धार्थानि पदानि । इह बहुवचनमतन्त्रं पदद्वयस्यापि समस्यमानत्वात् ततः समर्थं च समर्थानि च. समर्थानीति वा । सामर्थ्यञ्चाकाङ्क्षा—योग्यता-सत्ति-मतां भवति । अभिधानापर्य्यवसानमाकाङ्क्षा, बाधविरहो योग्यता, अन्वयविरोधिपदाजन्यपदजन्योपस्थितिरासत्तिः, एतेनाकाङ्क्षायोग्यतासत्तिमत्पदकदम्बकं वाक्यमेव समासो भवतीति मतः स्वीकृत एव, समसनं समासः संक्षेप इत्यर्थः । समासत्वं बहूनां पदानामेकपदायमानत्वं इत्याह अनेकस्येति । ननु सम्बद्धार्थानामिति वक्तव्ये यत परस्परेत्युक्तं तत् यस्य येन सह सम्बन्धस्तस्य तेन समास इति प्रतिपादनार्थं ; तेन भार्य्या राज्ञः पुरुषो देवदत्तस्येत्यत्र वाक्यान्तरावयवयोराज्ञ, पुरुष इति पदयोर्नास्ति सम्बद्धार्थता । ननु परस्परसम्बन्धार्थत्वं समर्थत्वमिति लक्षितं, तत्तु द्वन्द्वे नास्ति, तस्य सर्वपदप्रधानत्वात् परस्परसम्बन्धार्थताऽनुपपत्तेः इति चेत् सत्यं धव-खदिर-

पवाग्राञ्छिन्धि इति वाक्ये साहित्येन छेदनं प्रतीयते, न तु प्रत्येकं, ततः परस्परसम्बद्धार्थता विद्यत एव, अर्थक्रियासम्बन्धात् प्राक् समासे क्रियमाणे कथं साहित्यमिति चेन्मैवं समासे बुद्धिविषयीकृते कस्मिंश्चित् क्रियान्विते बुद्धाविव साहित्यविवक्षेति शब्दे सम्बन्धस्तु पश्चात् कार्य्यः। एवं हि उत्तमस्य राजपुरुष इत्यत्र उत्तम विशेषितषष्ठ्यन्ते राजपदेनापि समासः स्यात्। इति चेन्न जहत्स्वार्थवादिमते समस्तैकदेशस्य अप्रतियोगिना कारकेतरेण च पदेन सम्बन्धो नेष्यते, तदुक्तं प्रतियोगिपदादन्यत् यदन्यत् कारकादपि वृत्तिशब्दैकदेशस्य सम्बन्धस्तेन नेष्यते। कारकप्रतियोगिभ्यां यद्यदन्यदपेक्षते, अपेवैकुलवाचित्वादृत्तिस्तत्र तु इष्यत इति। यथा तरुण्योरबलीभाव्ये इति, कमले: समकेशान्ते इत्यादयः पुनरिष्यन्त एव ; प्राञ्चस्तु समस्तस्यासमस्तेन नित्यापेक्षेण सङ्गतिरित्याहुः, नन्वेवमपि कथमनर्थकस्य प्रादेरपदैः कृदन्तैः सह परस्परसम्बद्धार्थताऽभावादपदत्वाच्च समासः स्यात्, इति चेत् ? सत्यं, विशेषवचनात् वाहुलकाच्च तथाचोक्तं प्रादेरनर्थकस्यापि कृदन्तैरपदैः सह अपि वाहुलकादेव समासो न विरुध्यते। वोपदेवेन समासस्य लक्षणमेवं कृतं "ऐक्यं मोऽन्वये। द्योः (पदयोः) दानां (पदानां) यदैक्यं एकता तत् सः." समासः तत्रैक्यं अन्वये सति कार्य्यं, अन्वयश्च अभिप्रेतसम्बन्धः स च क्वचित् विशेष्यरूपेण, क्वचित् विशेषणरूपेण, द्वन्द्वे तु सर्व्वेषां विशेष्याणां साहित्यरूपेण अन्वयः। नित्योऽनित्यो विकल्पश्च समासः कर्त्तृरिच्छया। वोपदेवमते समासश्चतुर्व्विधः सर्व्वपदप्रधानः, सर्व्वपदार्थाप्रधानः, पूर्व्वपदार्थप्रधानः, उत्तरपदार्थप्रधानश्चेति। समर्थः पदविधिरिति पाणिनिसूत्रम्। ( २।१।१। ) पदसम्बन्धीयो विधिः (कार्य्यं) स समर्थाश्रितः। सामर्थ्यञ्च द्विविधं अपेक्षावत्त्वमेकार्थीभावश्च। अपेक्षा च स्वार्थपर्य्यवसायि पदानामाकाङ्क्षादिवशात् यः परस्परं सम्बन्धः सा।

একার্থী ভাবস্য বিশেষ্যবিশেষণভাবাদ্যবগাহ্যবোধোপস্থিতিজনকত্বং রাজ্ঞঃ পুরুষ ইত্যাদৌ বাক্যে সত্যামাকাঙ্ক্ষায়াং যো যো যস্মিন্ সন্নিহিতো যোগ্যশ্চ স তেন তেন সম্বন্ধ্যতে। যথা রাজ্ঞঃ পুরুষোঽশ্বশ্চ, রাজ্ঞো দেবদত্তস্য চ পুরুষঃ, ঋদ্ধস্য রাজ্ঞোঽশ্বোধনঞ্চেত্যাদি ; বৃত্তৌ তু নৈবং বৃত্তৌ একার্থী ভাবাৎ রাজপুরুষাদিশব্দেন বিশিষ্টৈকার্থবোধকতয়া ন তদেকদেশে ঋদ্ধাদেরন্বয়ঃ, পুরুষাংশে বিশেষণতয়োপস্থিতাভাবাচ্চ নাশ্বাদিসম্বন্ধিতা রাজাদীনাম্, জনিতান্বয়াচ্চ নিরাকাঙ্ক্ষতয়া ন দেবদত্তাদেঃ স্বামিতয়া পুরুষাদাবন্বয়ঃ। ইতি সংক্ষেপঃ। সমাসবিভাগো যথা বৈয়াকরণ-ভূষণসারে সুপাং—সুপা, তিঙা, নাম্না, ধাতুনাঽথ তিঙাং—তিঙা, সুবন্তেনেতি চ জ্ঞেয়ঃ সমাসঃ ষড়্বিধো বুধৈঃ।

(১) সুপাং সুপা পদদ্বয়মপি সুবন্তং রাজপুরুষ ইত্যাদি। (২) সুপাং তিঙা পূর্ব্বপদং সুবন্তং, উত্তরং তিঙন্তং যথাপর্য্যভূষয়ৎ অত্র গতি ভনোদাত্তবতা তিঙাঽপি সমাস ইতি বার্ত্তিকাৎ সমাসঃ। (৩) সুপাং নাম্না কুম্ভকার ইত্যাদৌ উপপদমতিঙিতি সমাসঃ স চ ‘গতিকারকোপপদানাং কৃদ্ভিঃ সমাসবচনং প্রাক্ সুবুৎপত্তেরিতি’ পরিভাষয়া ভবতি (উত্তরপদে সুবুৎপত্তেঃ প্রাক্) সমাসঃ। অন্যথা চর্ম্মক্রীতীত্যাদৌ নলোপানাপত্তিঃ। (৪) সুপাং ধাতুনা উত্তরপদং ধাতুমাত্রং ন তিঙন্তং কটপ্রূঃ, ইত্যাদৌ। (৫) তিঙাং তিঙা পিবত খাদতেত্যাদৌ—আখ্যাতমাখ্যাতেন, ক্রিয়াসাতত্যে ইতি সমাসঃ। (৬) তিঙাং সুবন্তেন পূর্ব্বপদং তিঙন্তমুত্তরং সুবন্তং জহি স্তম্ব ইত্যাদৌ ; সমাসে পরপদমুত্তরপদম্।

তত্র কেচিৎ সমাসঃ খলু অব্যয়ীভাব, তৎপুরুষ, দ্বন্দ্ব, বহুব্রীহি-ভেদাচ্চতুর্দ্ধেত্যাহুঃ, তত্র পূর্ব্বপদার্থপ্রধানোঽব্যয়ীভাবঃ, উত্তরপদার্থ-প্রধানস্তৎপুরুষঃ, উভয়পদার্থপ্রধানো দ্বন্দ্বঃ, অন্যপদার্থপ্রধানো বহু-ব্রীহিরিত্যাদি লক্ষণমপি প্রায়িকমেব, তথাহি উন্মত্তগঙ্গং ইত্যব্যয়ীভাবে

पूर्व्वपदार्थप्राधान्याभावादव्याप्तिः, अन्यपदार्थप्राधान्याद्बहुव्रीहिलक्षणाति व्याप्तिश्च, तिष्ठद्ग्वादीनिचेति (१२ ३।४) समासात्। सूपप्रति इत्यव्ययीभावे उत्तरपदार्थ-प्राधान्यात् तत्पुरुषलक्षणातिव्याप्तिरव्ययीभावाव्याप्तिश्च प्रतिना मात्रार्थे इति समासः (७।३।४)। अर्द्धपिप्पलीति तत्पुरुषे पूर्व्वपदार्थप्राधान्यत्वादव्ययीभावातिव्याप्तिस्तत्पुरुषाव्याप्तिश्च, अर्द्धार्च्चादयः क्लीबेचेति (८८।३।४) समासात्; एवं पूर्व्वकाय इत्यादौ द्रष्टव्यम्। द्वित्रा इति बहुव्रीहावुभयपदार्थ प्राधान्यात् द्वन्द्वातिव्याप्तिः, बहुव्रीह्य-व्याप्तिश्च; प्रश्नकुशपलाशमित्यादि द्वन्द्वे समाहारान्यपदार्थप्रधान्याद् बहुव्रीह्यतिव्याप्तिर्द्वन्द्वाऽव्याप्तिश्च स्यादिति भावः। सिद्धान्ते त्वव्ययी-भावाधिकारपठितत्वमव्ययीभावत्वमित्यादि द्रष्टव्यं। वस्तुतस्तु चिन्तितग-वयादिनिष्ठलाङ्गूलादेर्वास्तवपश्वलक्षणत्ववदेतेषामपि (पूर्व्वपदार्थ प्राधान्या-दीनां) न समासलक्षणत्वम्।

ननु पूर्व्वपदार्थप्रधान्यादि समासे सुवचम्, तथाहि समर्थः पदविधि-रिति सूत्रे भाष्यकारैरनेकधोक्तेष्वपि पक्षेषु एकार्थीभाव, व्यपेक्षा रूपयोः जहत्स्वार्थाऽजहत्स्वार्थपक्षयोः पर्य्यवसानं लभ्यते, तत्राऽजहत्-स्वार्थपक्षे पूर्व्वपदार्थप्राधान्यादिव्यवस्था नाऽसम्भविनीत्याशङ्कां मनसि कृत्याह,—"जहत्स्वार्थाऽजहत्स्वार्थे द्वे वृत्ती, तेन पुनस्त्रिधा; भेदः, संसर्ग, उभयं वेति वाच्यं व्यवस्थितम्। अस्यार्थः—जहति पदानि स्वार्थं यस्यां सा जहत्स्वार्था; पदे यथा वर्णानां आनर्थक्यं, तथा वृत्तावपि पदानां आनर्थक्यं, अयं भावः समासशक्त्येव राजविशिष्टपुरुषभा-नसम्भवे, न राजपुरुषपदयोरपि पुनस्तद्बोधकत्वं कल्प्यं, वृषभयावकादि-पदेषु वृषादिपदानामिव, अन्यथा राजपदेन विग्रहवाक्य इव राज्ञः स्वातन्त्र्येणोपस्थितिसत्त्वात् ऋद्धस्य राज्ञः पुरुष इत्यत्रेव ऋद्धस्य राज-पुरुष इत्यस्यापत्तेः। अजहत् इति—न जहति पदानि स्वार्थं यस्यां

सा अजहत्स्वार्था अयमभिप्रायः राजपुरुषादिसमासादौ नातिरिक्ता शक्तिः, कल्पकाभावात् लुप्तराजादिपदादेवार्थोपस्थितिसम्भवे तत्कल्पनस्य गौरवपराहतत्वाच्च, लुप्तशक्तित्यागेऽप्यप्रामाणिकः कल्प इति, तथा चाकाङ्क्षादिवशात् लुप्तशक्त्यैव विशिष्टार्थबोधः, अयमेव व्यपेक्षापक्षो मतान्तरत्वेन भाष्यकारैरुक्तः। न चाऽत्र मते समासस्येति विशेषणान्वयापत्तिः, सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणयोगो नेति वार्त्तिकात्, तथा चैतन्मते वादिनां पूर्वोत्तरपदार्थसत्त्वात् (१) पूर्वपदार्थप्रधान इत्यादिव्यवस्थाऽभ्युपगता इति भावः। इति वैयाकरणभूषणसारः। पूर्वपदार्थप्राधान्यादीनां न समासलक्षणतेति सिद्धान्तं प्रति कश्चिदाशङ्कते नन्विति वृत्तिशब्देनाऽत्र समासः तत्र मतद्वैधं वर्त्तते एकत्र मते यथा पदे वर्णानां न अर्थवत्त्वं तथा समासेऽपि पदानां अर्थवत्त्वं नास्ति, वृषभ इति पदान्तर्गतस्य वृष इत्यस्य यथा नार्थवत्त्वं, तथा राजपुरुष इत्यस्यान्तर्गतस्य राज इत्यस्य पुरुष इत्यस्य च नार्थवत्त्वं अयमेव जहत्स्वार्थपक्षः। अन्य मते समासान्तर्गतपदानामर्थवत्त्वमेवास्ति अयमजहत्स्वार्थपक्ष, अत्र पक्षे पूर्वपदार्थप्राधान्यादीनां सम्भव एव। इति शङ्काकर्त्तुरभिप्रायः। अजहत्स्वार्थपक्षस्तु भाष्यविरुद्धत्वादयुक्त एव। तथाहि व्यपेक्षायां सामर्थ्यं योऽसावेकार्थीभावकृतो विशेषः स वक्तव्य इति भाष्यवचनात्।

प्रसङ्गाद्वृत्तिभेदमपि निरूपयति ते पुनरिति—द्वे अपि वृत्ती त्रिविधे वाक्यवैविध्यात् वाक्यमेवाह भेद इत्यादि भेदः अन्योऽन्याभावः, तथाच राजपुरुष इत्यादावराजकीयभिन्न इति बोधः भेदस्तूत्तरकालमुपतिष्ठत इत्याशयेनाह संसर्ग इति, विनिगमनाविरहादन्यस्वामिकोऽपि राज-

---

(१) वृत्तयः खलु पञ्चधा तद्धितसमासैकशेषसनाद्यन्तधातुरूपा तत्र विशेषणयुक्तानां कापि वृत्तिर्न जायते, न वा वृत्तौ स्थितस्य विशेषणयोगः।

पुरुष इत्यादिप्रयोगापत्तिश्च मनसि कृत्वोभयं वाच्यमित्याह उभयं चेति—तथाचाऽराजकीयभिन्नो राजसम्बन्धवांश्चायमिति बोधः। सिद्धान्ते तु समासे विशिष्टशक्तिं स्वीकुर्व्वन्ति, ततश्च राज्ञः पुरुष इति विग्रहवाक्यात् राजपुरुष इति समस्तस्य भिन्न एव शाब्दबोधप्रकारः, विग्रह-वाक्य-एव व्यपेक्षा, समासे तु एकार्थीभावात् विशिष्टार्थे बोधः।

जगदीशमते समासस्त महावाक्यमेव यदुत्तरवर्त्तीत्वतलादिकृत्-समुदयार्थावच्छिन्नं स्वार्थं बोधयति यथा राजपुरुषत्वमित्यत्र राजपुरुषस्य भाव इत्येर्थोलभ्यते। राज्ञः पुरुषत्वमित्यत्र तु राजनि पुरुषभावः प्रतीयत इति समस्तासमस्तयोर्भेदः। स च समासः सप्तविध एव, तथाहि "सचायं षड्विधः कर्म्मधारयादि प्रभेदतः। यश्चोपपदसंज्ञोऽन्यस्तेनाऽसौ सप्तधा मतः।" सचायं समासः कर्म्मधारय, द्विगु, तत्पुरुषाऽव्ययीभावबहुव्रीहिद्वन्द्व-भेदात् षड्विध एव, यस्तु कुम्भकारादिरुपपदसंज्ञकः समासोऽस्ति तेन सह समासः सप्तविधः। वा भट्टादिभिस्तु पूर्व्वैः पण्डितैः पूर्व्वमध्यान्तसर्व्वपदप्राधान्यात् समासस्य पञ्चविधत्व मुक्तम्। कश्चित् समासः पूर्व्वपदार्थ धर्म्मिकान्वयबोधजनकतया पूर्व्वपदप्रधानः, यथा प्राप्तजायार्द्धपिप्पलीपूर्व्वकायादिस्तत्पुरुषः, यथा वा उपकुम्भाद्यव्ययीभावः, पुरुषसिंहादिकर्म्मधारयश्च। कश्चिन्मध्यपदार्थ-धर्म्मिधीजनकतयैव मध्यपदप्रधानः, यथा घटानधिकरणप्रतियोगिता नवच्छेदकेत्यादिस्तत्पुरुषः। कश्चिदन्त्यपदार्थधर्म्मिकधीहेतुत्वादन्त्यपद-प्रधानः राजपुरुषादिकस्तत्पुरुषः, नीलोत्पलादिकः कर्म्मधारयः, द्विगवाद्यव्ययीभावश्च, कश्चित्सर्व्वपदार्थधर्म्मिकबुद्धिहेतुत्वात् सर्व्वपद-प्रधानः यथेतरेतरद्वन्द्वं, द्वन्द्वमात्रं वा, कश्चित् खवटकान्य पदार्थधर्म्मिकज्ञानजनकत्वादन्यपदार्थ प्रधानः यथा, बहुव्रीहिः खलेयवाद्यव्ययीभावश्च। तदेवं पञ्च भेदानादायैव यत् पञ्चविधत्वं पूर्व्वैरुक्तं न तत्र विरोधः।

२। सुप्सुपा। [सुप्०१।, सुपा ३।]

सुबन्तेन सह सुबन्तं समस्यते इत्यधिकृतं वेदितव्यं, विधिश्चायं; भूतः पूर्व्वं, भूतपूर्व्वः, विस्पष्टपटुः, पुनर्नवः, अध्वगन्तव्यः इति। (२)

---

समासः पुनर्नित्यानित्यभेदेन द्विविधः, नित्यसमासस्थले हि स्वान्तर्गतनामसु विभक्तिमात्रप्रक्षेपेण स्वलभ्यार्थस्याबोधः यथा कृष्णसर्पः-निर्मक्षिकमित्यादि, कृष्णः सर्पः, मक्षिकाया निः, न सुरः इत्यादिलक्षणस्य वैजात्यादेरग्रहात्। अनित्यसमासस्थले तु स्वान्तर्गतनामसु विभक्तिप्रक्षेपेण स्वलभ्यार्थस्य बोधो विद्यते, नित्यसमासानां स्वपदैर्विग्रहो नास्ति अनित्यानामस्तीति निष्कर्षः।

(२) विधिश्चायमिति यत्र समासस्य लक्षणान्तरं नास्ति तस्य शिष्टेः प्रयोगस्य सिद्ध्यर्थमयं विधिश्च भूतः पूर्व्वं भूतपूर्व्वः, इत्यादौ अनेनैव समासः, नैकशब्द इत्यत्र सुप्सुपेति समास इति वामनः। सह सुपेति पाणिनीयसूत्रं।२।१।४। सहेति योगो विभज्यते इति सिद्धान्तकौमुदी तस्यार्थस्तु सुबन्तं समर्थेन सह समस्यते इति प्रथमयोगार्थः, तेन समर्थेन सुबन्तेन, तिङन्तेन, नाम्ना, धातुना, सुपा च समास इत्यर्थः तत्राद्यं भूतपूर्व्वं, द्वितीयमनुव्यचलत्, तृतीयं पत्रहती, उपसर्गकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेरिति कर्मणैवाटच समासः। चतुर्थं कटप्रूरित्यादि। समर्थः समर्थेन समस्यते इति द्वितीययोगार्थः, तेन तिङन्तेन समर्थेन समर्थस्य तिङन्तस्य समासः यथा पिवत च खादत, अश्नीत पिवतेत्यादि। तिङन्तस्य सुबन्तेन समर्थेन च समासो यथा एहीड़ादयः। इत्येतन्मनसि निधायाह सहेति योग विभज्यत इति योगोयोजनमन्वयबोधोपयोग्यासत्तिपरिकल्पनमिति भावः विभज्यते,

## ३। अव्ययीभावः। [अव्ययीभावः १।]

तत्पुरुषात् प्रागव्ययीभावोनाम समासो वाच्यः। अन्वर्थ-संज्ञेयम्। तेनायमव्ययवद्बोद्धव्यः। (३)

---

विशेष्यते, भेद्यते, अवान्तरानुपूर्व्वीविशेषेण भिन्नतया कल्प्यत इत्यर्थः। एतं सर्व्वत्रयोगविभागार्थः।

(३) तत्पुरुषात्प्रागिति—तत्पुरुषो वक्ष्यते (१५।३१४) तस्मात् प्राक् पूर्व्वं अव्ययीभावनामकसमासस्याधिकार इत्यर्थः। अनव्ययस्य अव्ययभवनं अव्ययीभावः च्विप्रत्ययान्तः। अन्वर्थसंज्ञा, अर्थेनान्विता अन्वर्था अन्वर्था चाऽसौ संज्ञा चेति कर्म्मधारयः। विग्रहस्तु अनुगतोऽर्थो यस्याः सा अन्वर्था ततः, कर्म्मधारये पुम्वत्। तथाहि अन व्ययं अव्ययं भवत्यनेनेत्यव्ययी भावः, पूर्व्वपदमव्ययं परपदमनव्ययं यद्योगेन सर्व्वं अव्ययत्वं प्रतिपद्यते सोऽव्ययीभावः। अव्ययवदिति निर्द्देशात् पूर्व्व-पदाव्ययत्वं प्राथमिकमेव, तिष्ठद्गु प्रभृतेस्तु प्रकरणादेवाव्ययत्वं, अव्ययी-भावस्य लक्षणं शब्दशक्तिप्रकाशिकायामेवं कृतम्—'उत्तरार्थान्वित-स्वार्थाव्ययपूर्व्वस्तु योभवेत्। समासे सोऽव्ययीभावः स्त्रीपुंलिङ्ग विव-र्ज्जितः।' यः समासः उत्तरार्थान्वितस्वार्थाव्ययपूर्व्वो भवेत् स स्त्रीपुं-लिङ्गविवर्ज्जितः समासः अव्ययीभाव इत्यन्वयः, उत्तरं परपदं तस्य योऽर्थः तेन अन्वितः स्वार्थो यस्य एवम्भूतं अव्ययं पूर्व्वं यस्य सः यत्र समासे अव्ययरूपस्य पूर्व्वपदस्यार्थ, उत्तरपदस्यार्थेनान्वित एव भासते सोऽव्ययी भावः समास इति निष्कर्षः। ततश्च निर्मक्षिकं, उपकुम्भं, इत्यादौ मक्षि-कायां अभावः कुम्भस्य सामीप्यादिर्मक्षिकादिपदप्रागुक्तिमा निराद्यव्यये नानुभाव्यते, तथाहि—निर्मक्षिकमित्यत्र पदद्वयं निः, मक्षिकेति, पूर्व्वपदं निः अव्ययं, तस्यार्थः अभावः, उत्तरपदं मक्षिकेति प्रसिद्धार्थकमेव, ततश्च

४। अव्ययं सप्तम्यनुक्रमसमीपपश्चाद्यथात्ययाऽभाव शब्दप्रकाशयौगपद्यसम्पद्सम्प्रतिसाकल्यान्तार्थेषु ।

| अव्ययं १।, सप्तम्यनुक्रम (सप्तमी-अनुक्रम) समीप, पश्चाद्यथात्ययाऽभाव (पश्चात्-यथा-अत्यय-अभाव) शब्दप्रकाश, यौगपद्य, सम्पद्-सम्प्रति (सम्पद्,-असम्प्रति,) साकल्यान्तार्थेषु (साकल्य,-अन्त-अर्थ) ७॥ |

सप्तम्याद्यर्थेष्वव्ययं सुबन्तेन सह समस्यते । सप्तम्याद्यर्थे—स्त्रीष्वधिकृत्य या कथा प्रवर्त्तते सा अधिस्त्रि कथा, अनुक्रमेऽनुज्येष्ठं, यथावृद्धं प्रविशन्तु ; समीपार्थे उपकुम्भं, पश्चादर्थेऽनुरथं पादाताः, यथार्थो बहवः—योग्यता, वीप्सा, पदार्थानतिवृत्तिः, सादृश्यं—योग्यतायां अनुरूपमस्य दानं, वीप्सायां प्रतिदिनं

---

पूर्व्वपदार्थः (अभाव.) उत्तरपदार्थान्वित एवानुभूयते ; एवं उपकुम्भमित्यत्र उप, कुम्भेति पदद्वयं पूर्व्वपदस्याव्ययत्वेपित्यस्य सामीप्यमर्थः कुम्भस्य प्रसिद्धार्थक एव, ततस्तत्र कुम्भस्य सामीप्यमित्युत्तरपदार्थान्वितः पूर्व्वपदार्थः प्रकाश्यते इत्यव्ययीभावः । एवं सर्व्वत्राव्ययीभावस्थले पूर्व्वपदप्राधान्यं । अर्द्धशरीरमित्यादौ शरीरस्यार्द्धमिति उत्तरपदार्थान्वितस्वार्थबोधकमप्यर्द्धपदं नाव्ययं ; एतल्लक्षणन्तु प्रायिकत्वाभिप्रायेण, सन्ति चाव्ययीभावस्योदाहरणान्तराणि यत्राव्ययस्य पूर्व्वपदत्वं नास्ति, न वा अव्ययगर्भत्वमपि यथा अस्तपरि, खलेयवं, तिष्ठद्गु इत्यादीनि, न तेष्वेतल्लक्षणस्य गतिरिति लक्षणान्तरमाह—"अमादेशं विना प्रथमाया षष्ठी न बोधिका । स्वार्थे तदर्थस्य तदा सोऽव्ययीभाव इष्यते ।" अमादेशं विना प्रथमाषष्ठी स्वार्थे यत्समासार्थस्यान्वयबोधं प्रत्यसमर्था स एवाऽव्ययीभावः यत्समासोत्तरं षष्ठीविभक्तेर्लोपः; अमादेशो वा भवति न कदाचिदपि स्वरूपेण विद्यमानत्वं सोऽव्ययीभाव इति निष्कर्षः ।

ददाति । पदार्थानतिक्रमे यथाशक्ति करोति, सादृश्ये सदृशः शिख्या साकस्ति, मलक्ष्मि, सवीणं ध्वनति, अत्ययार्थे—निःशीतं, अतियौवनं, अभावः सम्बन्धिभेदादनेकविधः । तत्र ऋद्ध्यभावे विगता ऋद्धि र्यवनानां दुर्यवनं, दुर्भिक्षं, अर्थाभावे अभावो मक्षिकाणां निर्मक्षिकं, शब्द प्रकाशने पाणिनेः शब्दस्य प्रकाश इतिपाणिनि, उत्पाणिनि, यौगपद्ये सचक्रं निधेहि वाणं । सम्पद् द्विविधा, आत्मतासम्पत्तिः, समृद्धिश्च ; सम्पन्नं ब्रह्म वाभ्रवाणां सब्रह्म ; समृद्धिर्मद्राणां सुमद्रं, सुभिक्षं, असम्प्रत्यर्थे—नायमस्य भोगकालोऽतितैसृकं हिमं, तिसृकाग्रामे भवं तैसृकं वस्त्रं, साकल्ये—सतृणमभ्यवहरति, अन्तार्थे सतद्धितमधीते । (४)

## ५ । यथा न तुल्ये । [यथा ०१, न ०१, तुल्ये ७।]

---

(४) सुविन्वेव, अर्थशब्दः प्रत्येकमभिसम्बध्यते, तेन सप्तम्यर्थानतिक्रमार्थयथार्थादिष्विति, एष्वर्थेषु वर्तमानमव्ययं सुवन्तेन सह समसनीयमित्यर्थः । अयञ्चाविन्नियसमासः, विभाषाऽधिकारस्याभावात्, (८।३।४) सप्तम्यर्थोऽत्राधिकरणः, तत्र वर्तमानोऽधिः सामानाधिकरण्यात् स्त्रीशब्देन सप्तम्यन्तेन समस्यते इति विवृणोति स्त्रीष्विति नित्यसमासत्वात् वाक्यान्तरेणेयं विवृतिः, अधि स्त्रि इति समासे सति, अव्ययीभावश्चेति नपुंसकत्वे (१०३।३।४) ह्रस्वो नपुंसकः (५६।८।२) इति ह्रस्वत्वं, ततः अव्ययीभावादनत इति (१५।३।२) सुपोलुक् एवमन्यत्र । पदकाभस्तु अधिशब्दोऽव्ययं प्रथमान्तत्वेन प्रथमा पूर्व्वं समासे (६८।३।४) इत्यधि—शब्दस्य पूर्व्वनिपात इत्याह, एतच्चिन्त्यं प्रथमापूर्व्वं समासे इत्यस्य समाससूत्रे यत्

प्रथमानिर्द्दिष्टं तस्यैव पूर्व्वनिपातोविहितः, समाससूत्रे 'अव्ययं' इत्यस्य प्रथमानिर्द्दिष्टत्वात् अव्ययस्यैव पूर्व्वनिपातः सङ्गच्छते, अन्यथा समासवाक्ये प्रथमा निर्द्दिष्टस्य पूर्व्व निपाते राजपुरुष इत्यत्र पुरुषस्य पूर्व्वनिपाता-पत्तिः। किञ्च अधिस्त्रीति लिङ्कृत्तद्धित समासैरेवोक्त प्रथमेति नियमा-दधिना द्योतितेऽपि वैषयिकसप्तम्यर्थे न प्रथमेति सप्तम्यन्तस्यैव समासः। एवं गोपायतीति गाः पातीति वा गोपाः तस्मिन् अधिगोपं। अनुक्रमः आनुपूर्व्वं, तच्च क्रियाकृतं यथाशब्दोऽप्यनुक्रमार्थः यथावृद्धमिति च। कुम्भस्य समीपमुपकुम्भं अतोऽम् पञ्चम्या इति (२।४।३।८) सुपोऽम् एवं अनुरथं रथस्य पश्चादित्यर्थः। समया ग्रामं; निकषा लङ्कां, आरादनादित्यत्र तु नाव्ययीभावः अभितः परित इति, अन्यारादिति द्वितीया. पञ्चम्योर्विधानसामर्थ्यादिति सिद्धान्तकौमुदी, समयादिशब्दा अधिकरणशक्तिप्रधाना इति तेषां सामीप्यमात्रवाचित्वाभावान्न तैः समास इति तट्टीका। गृहस्योपरि तिष्ठति, उपरि शिरसोघट इति सामीप्यस्य अविवक्षितत्वात् यथा द्विरुक्तिर्नभवति, तथा सामीप्यार्थेऽव्ययीभावोऽपि न; शरभङ्गः प्रविश्याराात् सुतीक्ष्ण मुनिकेतन मित्यत्राराच्छब्दस्य सामीप्यागमकत्वान्न समासः, दण्डकान् दक्षिणेनेत्यत्रापि समीपद्वत्यगमकत्वान्न समासः। इति गोयीचन्द्रः, उपदशादौ तूपशब्दस्य समीपवर्त्तिपदार्थबोधकतया सामीप्यमात्रवाचित्वाभावा-न्नाव्ययीभावः। पश्चाच्छब्दस्य नायं समासः ततः पश्चात् स्रंस्यत इति भाष्यप्रयोगादिति सिद्धान्तकौमुदी। कथं तदनु इति। षष्ठीसमासः कर्त्तव्य इति गोयीचन्द्रः। योग्यता, वीप्सा. पदार्थानतिवृत्तिसादृश्या-नीति चत्वारोयथार्थाः। दिनं, दिनं प्रति इति प्रतिदिनं, एवं अर्थं अर्थं प्रतीति प्रत्यर्थं प्रति शब्दस्य वीप्सायां कर्म्म प्रवचनीयसंज्ञाविधान—सामर्थ्यात् तद्योगे द्वितीयागर्भं वाक्यमिति सिद्धान्तकौमुदी। नित्यसमासे

**यथाशब्दः सादृश्यार्थे न समस्यते। यथाशक्रस्तथार्ज्जुनः। (५)**

---

स्वपदविग्रहो नास्तीत्युक्तं तत्कथमर्थमर्थं प्रतीति वाक्यं इत्याह वीप्सायां यदि नित्यसमासस्तदा तत्र (वीप्सायां) द्वितीयाविधानमनर्थकं स्यादतोऽत्र द्वितीयागर्भं वाक्यं प्रदर्शितं वस्तुतः समासेनैवात्र वीप्साद्योत्यते नातोद्विरुक्तिः। पदार्थानतिवृत्तिः पदार्थानतिक्रमः। अत्ययशब्देन ध्वंसाभावो ग्राह्यः। अन्यत्रार्थाभाव ऋद्ध्यभावयोः पृथङ्निर्देशः कृतः, नन्वर्थाभाव इत्यनेनैवाऽत्रापि समासः सिद्धस्तथाहि अर्थाभावोऽपि वस्त्वभावः ऋद्ध्यभावोऽपि वस्त्वभावः किमर्थं पृथक्लक्षणमित्याशङ्क्य गोयीचन्द्रेणोक्तं अस्ति विशेषः उत्तरपदार्थाऽभावः अर्थाभावः तथाहि निर्मक्षिकमिति मक्षिकाया एव अभाव उच्यते, दुर्यवनमित्यत्र न यवनाना मभावः किन्तु तदीयाया ऋद्धेः। एवं दुर्भिक्षमित्यत्र न भिक्षाभावः किन्तु भिक्षाया ऋद्धेः। इति गोयीचन्द्रः। यस्त्वभावार्थे समासः स उत्तर-पदार्थाभावद्योतकः नञ्-अनञ् साधारणावयवेन भवति। नञ्-तत्-पुरुषस्तु नञेव सदान्योन्याभावद्योतकः सर्व्वत्र क्वचिदत्यन्ताभावबोध-कोऽपीत्यनयोर्भेदः। अतएव निर्मक्षिकमित्यादिवत् अनुपलम्भ इत्यादी नामभावबोधकत्वेऽपि नाऽव्ययीभावः। प्रागभावनिवारणार्थं विद्यमान-पदार्थप्रतियोगिताद्योतनार्थञ्च अत्राभावग्रहणं तेन कपालेऽघटं, निःश्मश्रु-शृङ्गमित्यादिप्रयोगो न स्यात्। साकल्यं अशेषं सतद्धितमधीते तद्धितान्त-मधीते तद्धितमधीत्वाऽन्यत् किञ्चिन्नाधीते इत्यर्थः।

(५) पूर्व्वेण सादृश्यार्थे प्राप्ते निषेध आरभ्यते। नन्वत्र शक्र उप-मानं उपमेयमपेक्षते ततश्च सापेक्षत्वात् समासो न भवितेति किमनेन सूत्रेण इति चेत् मैवं अत्र समुदायस्य सापेक्षत्वं नैकदेशस्य ; समुदायस्य सापेक्षत्वे समासोऽविद्यते, समसनीयाऽवयवस्य पदस्य सापेक्षत्वे समासो

६ । यावदियत्तायां । [ यावत् ०१।, इयत्तायां ७। ]

अवधारणे यावत् समस्यते । यावदमत्रं विप्रानामन्त्रयस्व । (६)

७ । प्रतिना मात्रार्थे । [ प्रतिना ३। मात्रार्थे (मात्रा अर्थे) ७। ]

सुपित्येव—अल्पार्थे प्रतिना सह सुबन्तं समस्यते । शाकप्रति, सूपप्रति । (७)

---

नाभिधीयते । यथाऽसादृश्ये इति पाणिनिसूत्रम् (२।१।७) । यथात्र सादृश्ये इति संक्षिप्तसारसूत्रं । सादृश्यप्रतिषेधादवगम्यते गुणभूतेऽपि सादृश्ये समासो भवतीति गोयीचन्द्रः । (१)

(६) अनव्ययं यावच्छब्दोऽसौ समस्यते अवधारणार्थे । यावदमत्रमिति, यावन्ति अमात्राणि पात्राणि सन्ति पञ्च षड् वा तावतो विप्रानामन्त्रयस्व इत्यवधारणं अमात्रेयत्तया विप्रेयत्ता विवक्षिता. इयत्तायामितिकिम् ? यावद्दत्तं तावद्भुक्तं, कियद्दत्तं कियद्भुक्तं, इति इह यावत्तावच्छब्दाभ्यामेककालोच्यते न तु दत्तमवधार्य्यते । संख्यादिनेयत्तापरिच्छेदोऽवधारणं । तद्बोधकं यावदित्यव्ययं सुबन्ते न समस्यते इति सिद्धान्तकौमुदी टीका । (२)

(७) सुपित्येव-अल्पार्थवाचकोऽत्र मात्राशब्दः । मात्रार्थवृत्तिना प्रतिना सहेत्यर्थः । शाकप्रतीति-अनयोरल्पत्वं गम्यते । अल्पत्वेऽनव्ययस्य

---

(१) व्याख्यानुसारिणस्तु यथाशब्दः सुबन्तेन समस्यते न सादृश्यद्योते इति सूत्रार्थं कुर्व्वन्ति । यथाशक्रस्तथाऽर्ज्जुन इत्यत्र यत् सादृश्यवान् शक्रस्तत्सादृश्यवान् अर्ज्जुनः न तु शक्रसादृश्यवानिति सिद्धान्तकौमुदी टीका । (२) यावदित्यव्ययस्यावधारणे नित्यमव्ययीभावः इति गोयीचन्द्र ।

## ८। परिणाऽक्षशलाकासंख्याद्यूतेऽन्यथावृत्तौ।

[ परिणा ३।, अक्ष, शलका, संख्याः, १।।।, द्यूते ७।, अन्यथावृत्तौ ७। ]

अक्षादयः परिणा सह समस्यन्ते। द्यूतेऽन्यथावृत्तिश्चेत्। अक्षाभ्यां द्यूते अक्षेनेदं न तथा वृत्तं यथा पूर्वं जये अक्षपरि, पञ्चभिः शलाकाभिर्द्यूते एकया, शलकया न तथा वृत्तं शलाकापरि तथा संख्या—एकया न तथा वृत्तं एकपरि, द्विपरि, त्रिपरि। (८)

---

च प्रतिनेति संक्षिप्तसारसूत्रम् अल्पार्थे वर्त्तमानेन प्रतिना सह अव्ययस्यानव्ययस्य च नित्यमव्ययीभावः इति गोयीचन्द्रः। सुप् प्रतिनामात्रार्थे इति पाणिनीय सूत्रं (२।१।९) पुनः सुप्ग्रहणमव्ययनिवृत्त्यर्थमिति तट्टीका। वस्तुतः सायं प्रति, श्वःप्रतीत्यव्ययस्यापि समासोदृश्यते ततस्तात्र पुनः सुप्ग्रहणं प्रतेः पूर्व्वनिपातनिषेधार्थमिति दिक्। एतेन प्रतिना नाम मात्रार्थे। इत्यत्र नामग्रहणमव्ययव्यावर्त्तकमिति वर्द्धमानोक्तिः रपि प्रत्युक्ता।

(८) द्यूतविषयेऽन्यथावृत्तौ वर्त्तमानेन परिणा सह अक्षशलाकासंख्याः समस्यन्ते। अक्षादीनां क्रीड़नद्रव्याणां पातयितुः पराजयसाधनक्रियान्यथावृत्तिः। अक्षाद्यादयस्तृतीयान्ता एव समस्यन्ते। तथाचोक्तं अक्षादयस्तृतीयान्ताः पूर्व्वोक्तस्य यथा न तत् कितवव्यवहारे च एकत्वेऽक्षशलाकयोरिति। श्रीपतिस्तु षष्ठ्यन्तानामित्याह। इहाक्षशलाकयोरेकत्ववर्त्तमानयोरेव समासः संख्या च त्रिचतुः पर्य्यन्ता। तथा च अक्षशलाकद्वित्रिचतुरां परिणा कितवपराजये इति संक्षिप्तसारसूत्रम्। एवं त्रिपरिः, चतुःपरिः इत्यादि किञ्च पञ्चकानामद्यूतं पञ्चभि-

## ९ । विभाषा । [ विभाषा १।१ ]

अतोविभाषाधिकारः । (९)

## १० । आङ्परिवहिरञ्चः पञ्चम्या ।

[ आङ् अप, परि, वहिरञ्चः (वहिस्, अञ्च) १।।।, पञ्चम्या ३। ]

एते पञ्चम्यन्तेन वा सह समस्यन्ते । आपाटलिपुत्रं, वृष्टो-देवः, अपाटलिपुत्राद्वा अपत्रिगर्त्तं, अपत्रिगर्त्तेभ्यः, परित्रिगर्त्तं, परित्रिगर्त्तेभ्यः, वहिर्ग्रामं, वहिर्ग्रामाद्वा अञ्चत्यन्तः, प्राग्ग्रामं प्राग्ग्रामात् । (१०)

---

रक्षेण शलाकाभिर्वा भवति, यदा पञ्च उत्ताना अवाञ्चो वा पतन्ति तदा पातयिता जयति, अन्यथा पातयिता हारयतीति, द्यूत इति किम् ? अक्षेण शलाकेण न तथा वृत्तं यथा पूर्वं युद्धम् । अन्यथावृत्ताविति किम् ? अक्षेण तथा वृत्तं यथापूर्वं जयति ।

(९) अतः समासोविभाष्यत इत्यर्थः । विभाषा इति पाणिनिसूत्रम् (२।१।११) एतत् सामर्थ्यादेव पूर्ववर्त्तिनां नित्यसमासत्वं । सह सुपेति । नित्यसमासः ।

(१०) अप, परि, वहिस्, अञ्च, आङ् इत्येतेषां पञ्चम्या सहाव्ययीभावः । आपाटलिपुत्रमिति सीमाभिविध्योराङ् योग इति पञ्चमी ततः समासे सुपीटम् । इह पर्य्यादिसामार्थ्यादुपपदविभक्त्या पञ्चम्या समासः । ईषदर्थेन आङ्शब्देन समासो न । ईषदर्थस्य आङ्शब्दस्य पञ्चम्या सह समासो न सम्भवति, सापेक्षत्वादित्यन्ये । अपत्रिगर्त्तमित्यादौ अप-परिभ्यां वर्ज्जन इति पञ्चमी वहिर्ग्रामं प्रत्यग्ग्राममित्यादौ अन्यारादि-

## ११। लक्षणेनाभिप्रती आभिमुख्ये।

[ लक्षणेन ३।, अभि, प्रती १।। आभिमुख्ये ७। ]

आभिमुख्यार्थे अभि, प्रती लक्षणवाचिना सुबन्तेन, सह समस्येते। अभ्यग्नि शलभाः पतन्ति, प्रत्यग्नि, लक्षणेनेति किम्? स्रुघ्नं प्रतिगतः, स्रुघ्नं गत इत्यर्थः। (११)

दित्यादिना पञ्चमी। यदा तु वहिर्वृत्तित्वादिना उत्तरपदप्रधानत्वं विवक्ष्यते तदा वहिर्ग्रामः, प्राग्ग्राम इत्यादौ कर्म्मधारयः स्यादिति पञ्चम्येत्युक्तम्। ग्रान्ताद्यर्थ व्यतिरिक्तोऽस्य विषय इति गोयीचन्द्रः। अप परि वहिरञ्चवः पञ्चम्याः (२।१।१२) आङ् मर्य्यादाभिविध्योः (२।१।१४) पाणिनीय सूत्रे।

(११) आभिमुख्यार्थे वर्त्तमानावभि, प्रती लक्षणीभूतेन समस्यैते भवतः। अत्राग्निर्लक्षणं तेन शलभानां पातो लक्ष्यते, तयोर्लक्ष्यलक्षणसम्बन्धोऽभिना द्योत्यते अभिना चिघु लक्षणादिष्विति लक्षणा वीप्सेति द्वितीया। एतौ शब्दशक्तिवैचित्र्याद् यथा लक्षण सम्बन्धं द्योतयतस्तथाभिमुख्यमपि, अतएवाग्नेरभिमुखमेव शलभाः पतन्ति न पार्श्वतो न पृष्ठत इत्यर्थो लभ्यते। स्रुघ्नं प्रतिगत इति, स्रुघ्नान्मथुरां चलितो दिङ्मोहात् स्रुघ्नमेव निवर्त्तते, नात्र लक्षणं किन्त्वाभिमुख्यं वर्त्तत एव। आभिमुख्य इति किम्? वृक्षमभि विद्योतते विद्युत्। अभिप्रती अभिमुखस्याग्न्यादेर्ज्ञापकत्वसम्बन्धे नान्वयस्य च द्योतकौ उदाहरणेऽस्मिन् अग्निज्ञाप्यशलभकर्त्तृक मदभिमुखं पतनमिति बोधः। वाक्ये तु कर्म्मप्रवचनीयद्योतकसम्बन्धेन अन्वयिनी द्वितीयेत्युदाहरति। अग्निमभीति। ग्रामं प्रतिगत इत्यस्य यस्मादागत स्तमेव प्रतिनिवृत्त इत्यर्थकतया कर्म्मत्वा-

## ১২। অনুর্দৈর্ঘ্যে সামীপ্যয়োঃ।

[অনু ১।, দৈর্ঘ্যে, সামীপ্যয়োঃ ৭।॥]

অনুরত্র সমস্যতে। অনুগঙ্গং বারাণসী গঙ্গাবৎ আয়তা, অনুবনং বাপী তৎসমীপে ইত্যর্থঃ, অনুক্রমাদ্যর্থং পূর্ব্বমুক্তং। (১২)

---

লক্ষণা ইতি সিদ্ধান্তকৌমুদী টীকা; সূত্রমিদং পাণিনীয়সূত্রেণ সর্ব্বত্রৈক্যং ভজতে। অভিপ্রত্যোরাভিমুখ্যে লক্ষণাদ্বিতীয়য়েতি সংক্ষিপ্তসারসূত্রং। লক্ষ্যলক্ষণসম্বন্ধে বিহিতা যা দ্বিতীয়া, সা চ লক্ষণাদেব ভবতি। অভি, প্রতি ইত্যেতয়োরাভিমুখ্যে বর্ত্তমানয়োর্লক্ষণবিহিতয়া দ্বিতীয়য়া সহাব্যয়ীভাবো বা ভবতি। অগ্নিমিত্যত্রাগ্নির্লক্ষণং, তেন পতঙ্গানাং পাতো লক্ষ্যতে তয়োর্লক্ষ্যলক্ষণসম্বন্ধোঽভিনা দ্যোত্যতে। ইতি গোয়ীচন্দ্রঃ।

(১২) অনুর্দৈর্ঘ্যসামীপ্যয়োর্বর্ত্তমানস্তদ্ধর্ম্মিণা লক্ষণীভূতেন সমস্যতে। অনুগঙ্গং বারাণসীতি দীর্ঘয়া গঙ্গয়া সহ দীর্ঘা বারাণসীতি লক্ষ্যতে, তেন গঙ্গাবদ্দীর্ঘা বারাণসীতি প্রতীতিঃ; গঙ্গাদৈর্ঘ্যসদৃশদৈর্ঘ্যোপলক্ষিতেঽর্থঃ এবমনুবিন্ধ্যং দণ্ডকা, অনুসিপ্রং বিশালা অতএব ভেদাভাবাৎ প্রথমৈব, ভেদে তু ষষ্ঠী স্যাৎ—যথা অনুগঙ্গং বারাণস্যা ইতি বর্দ্ধমানঃ। অনুবনং বাপীতি, অত্র সমীপশব্দো ধর্ম্মিবচনস্তেন তৎ সমীপেতি ব্যাখ্যাতবান্। পূর্ব্বেণ নিত্যে প্রাপ্তে বিকল্পার্থমিদং সামীপ্যগ্রহণং। অনুক্রমাদ্যর্থং কথং নোদাহ্রিয়তে ইত্যত আহ অনুক্রমাদ্যর্থং পূর্ব্বমুক্তমিতি। অনুর্যৎ সময়া (২।১।১৫)। যস্য চায়ামঃ (২।১।১৬) ইতি পাণিনীয়সূত্রে সময়া সামীপ্যং, আয়ামো দৈর্ঘ্যম্। তৎসমীপে তদ্দৈর্ঘ্যে চানোঃ। ইতি সংক্ষিপ্তসারসূত্রম্। তস্য সমীপং তৎসমীপং তদিত্যনেনোত্তরপদার্থঃ পরামৃশ্যতে, তদ্দৈর্ঘ্যমিব দৈর্ঘ্যমস্য তদ্দৈর্ঘ্যং অত্রাপি তদিত্যনেনোত্তরপদার্থঃ পরামৃশ্যতে। তৎসমীপে, তদ্দৈর্ঘ্যে চ বর্ত্তমানস্যাব্যয়স্যানোঃ সুবন্তেন

**१३। तिष्ठद्ग्वादीनि च।** [तिष्ठद्ग्वादीनि १।।।, च ०।१।]

तिष्ठद्गु प्रभृतीनि निपात्यन्ते। तिष्ठन्ति गावोऽस्मिन् काले तिष्ठद्गुकालः, आयतीगवं, खलेयवं लूनयवं, संक्रियमाणयवं, उन्मत्तगङ्गं नाम देशः, लोहितगङ्गं, समभूमि, समं पदाति, सुषमं, विषमं, निःषमं, दुःषमं, अपरसमं, आयतीसमं, प्राह्णं, प्ररथं, प्रमृगं, प्रदक्षिणं, सम्प्रति, असम्प्रति, पापसमं, पुण्यसममित्यादि। (१३)

---

सहाव्ययीभावो भवति। अस्ति समीपशब्दो धर्म्मिवचनो यथा ग्रामस्य समीपो वृक्षः, अस्ति च धर्म्मवचनः यथा ग्रामस्य समीपमिति; इह तु धर्म्मिवचनस्यानेनानेन समासः धर्म्मवचनस्य तु अव्ययं समसमीत्यनेन समासो यथा अनुवृक्षं वृक्षस्य समीपमित्यर्थः।

(१३) अव्ययीभावसञ्ज्ञकस्तिष्ठद्ग्वादिसमुदयो निपात्यते, तिष्ठन्ति गावोऽस्मिन् काले दोहाय वाहाय वा स तिष्ठद्गुः कालः निपातनाच्चृटः प्रथमासमानाधिकरणा इत्यनेन प्रतिनियत एव शतृप्रत्ययविधानादत्र निपातनाच्छतृः क्रस्वो नपुंसके (५।१।३।७) इति ह्रस्वः, एवं वहद्गु, आयन्ति गावोऽस्मिन् काले इति आयतीगव इग गतावित्यस्मान्निपातनाच्छतृः, पुम्वद्भावाभावः, अत् समासान्तश्च। खले यवं यत्र यथा यस्मिन् काले इति निपातनात् सप्तम्या अलुक एवं लूनयवं, लूयमानयवं, संहृतयवं, संक्रियमाणयवं, पूतयवं, पूयमानयवं, खलेबुसं, संहृतबुसं, संक्रियमाणबुसं, संस्कृतबुसं स्वभावादेते तिष्ठद्ग्वादयः कालवाचिनः। विभाषाधिकारेऽपि नित्यसमासः, तेन न वाक्यात् कालविशेषे संज्ञा प्रतीयते, कालेऽन्यपदार्थेऽपि प्रथमान्ता एवेति श्रीपतिः। वर्द्धमानमिश्रादयस्तु तिष्ठद्गु, वहद्गु, आयतीगवानां

## १४ । पारे मध्ये षष्ठ्या वा ।

[ पारे, मध्ये १।१, षष्ठ्या ३।१, वा ०।१ ]

एते षष्ठ्यन्तेन वा समस्येते । निपातनादेत्वं पारे गङ्गं,

प्रथमान्तमात्रत्वं नेच्छन्ति तथाहि तिष्ठद्गु, वहद्गु, आयतीगवानि आसनिर्योगेण चान्येन समासः । खन लूयमानपूतपूयमानयवान्यन्य पदार्थे च व्यतिरेकविभक्तिः । खलेसंहृतसंक्रियमाणा वुसेन च इति तेषां सूत्राणि तिष्ठद्गु भाता इव कान्तिभाजा, वहद्गु, पश्चिन्य इव इति प्रयोगः । अत्र सूत्रे चकारोऽवधारणे तेन एभिः सह समासान्तरं न भवति । परमं तिष्ठद्गु इति न कर्म्मधारयः केचित्तु सजातीयः समासो भवत्येवेत्याहुः आतिष्ठद्गु जपन् सन्ध्यामिति भट्टिः, अन्ये तु वाक्यमेवेत दित्याहुः । (१) उन्मत्तगङ्गादिदेशविशेषाभिधानार्थं अत्रापि नित्य-समासः बहुब्रीहेर्बाधकः । समं भूमि, समं पदातीति समत्वं भूमेः समत्वं पदातेरिति विग्रहः समत्वे सममव्ययं ; वर्द्धमानस्तु निपातनात् पूर्व्वपदस्या-मन्तत्वमाह । उन्मत्ते भूमि पदातिभ्यामेवैष समासः नान्यत्र । तेन समा-भूमिर्यस्मिन् ग्रामे स समभूमिर्ग्रामः उत्तरपदार्थ प्राधान्ये तु समभूमि रिति कर्म्मधारयः । सुषमित्यादौ शोभनत्वं, विगतत्वं निन्दितत्वं समस्येति दुर्गादिसम्मतं वाक्यं ; श्रीपतिस्तु आयतीत्वं समस्य आयती समं एवं अपरसमं, पापसमं, एषु त्रिषु भावप्रत्ययस्य लुग्निपात्यते, सुषमं प्रदक्षिणं इमानि भावपराणि अव्ययानि । वर्द्धमानस्तु शोभना समा-अस्मिन्निति सुषमं उत्तरपदप्राधान्ये तु कर्म्मधारयः शोभना समा सुषमे-त्याह । गोयीचन्द्रस्तु—समत्वं भूमेरिति वाक्योपदर्शनेन पूर्व्वपदार्थ-

(१) किञ्च सम्पूतीत्येतस्य नञा समासे असम्पूतीति पदस्य सिद्धत्वेऽपि तस्य शङ्कितैषां समासान्तरादेतानि व्यावर्त्तयतीति वेदितव्यम् ।

गङ्गायाः पारं, मध्ये गङ्गं, गङ्गायाः मध्यं, वानुवृत्तौ पुनर्व्वा ग्रहणात्—गङ्गापारं, गङ्गामध्यं । (१४)

प्राधान्यविवक्षायामव्ययीभाव इति दर्शितं उत्तरपदार्थप्राधान्यविवक्षायान्तु समभूमिः, समपदातिरिति कर्म्मधारय एव, समाः पदातयो यस्मिन् देशे काले वा समं पदातीति धातु परायणं शोभनत्वं समस्येति वाक्येनापि पूर्व्वपदार्थं प्रधानता दर्शिता एवं विषममित्यादावपि विस-दृशत्वं समस्येति वाक्यं । उत्तरपदप्राधान्ये तु प्रादेः क्तयादेरिति समासः, आयतो आयत्या वा इत्यनेन प्रथमान्तेन तृतीयान्तेन वा आयतो शब्देन प्रकारवाचिनः समशब्दस्य समासोदर्शित, एवमेव पापसमं पुण्यसममित्यादि । उत्तरपदप्राधान्येऽपि आदिशब्दात् अपसव्यं, एकान्त अपदिशमित्यादीन्यूह्यानि इति ।

तिष्ठद्ग्वादीनां गणना यथा—

तिष्ठद्गु, वहद्गु, आयतीगवं, खलेयव, लूनयवं, लूयमानयवं, पूतयवं, पूयमानयवं, संहृतयवं, संह्रियमाणयवं, संहृतबुसं, संह्रियमाणबुसं, समंभूमि, समंपदाति, सुषमं, विषमं, दुःसमं निःषमं, अपसमं, आयती-समं प्रोढ़ं, पापसमं, पुण्यसमं, प्राह्णं, प्ररथं, प्रमृगं, प्रदक्षिणं, अपर-दक्षिणं, सम्प्रति, असम्प्रति एते तिष्ठद्गु प्रभृतयः ।

(१४) पारे मध्ये इति लुप्त प्रथमाद्विवचनं अत्राव्ययीभावसमासे सूत्र-निर्द्देशादनयोरेत्वं स्यादित्याह निपातनादेत्वमिति । इति विभाषा-ऽधिकारे पुनर्वावचनं किमर्थमित्याह वानुवृत्ताविति तेन रूपत्रयं— पारे गङ्गं, गङ्गापारं, गङ्गायाः पारमिति कार्य्यार्पितेन्दीवरखण्डमेकं मध्ये कपोलप्रतिबिम्बसक्तं । श्रीमतिनाप्यनयोरपि समासोविहितः । पारे मध्ये इति सौत्रत्वात् प्रथमाद्विभक्तिकोनिर्द्देश इति गोयीचन्द्रः ।

१५ । संख्या वंश्य नदीभिः ।

[ संख्या १।।।, वंश्य, नदीभिः ७।।। ]

संख्याशब्दाः वंश्यभवैर्नदीवाचिभिश्च समस्यन्ते । द्वौ मुनी-व्याकरणस्य वंश्यौ द्विमुनि व्याकरणं, त्रिमुनि शाखा; द्विगङ्गं, पञ्चनदं, समाहारे । (१५)

१६ । तत्पुरुषः । [ तत्पुरुषः १। ]

अयमधिकारः । तत्पुरुषोनाम समासो वाच्यः । प्राक् कर्म्मधारयात् । (१६)

(१५) संख्यापदेनाऽत्र द्वि प्रभृतिरिष्टः विद्यया जन्मना वा एक जातीयः सन्तानो वंशः तत्र भवो वंश्यः दिगादेर्यः । द्वौ मुनी सम्प्रदाय प्रवर्त्तकाविति कृत्वा भाष्यते, विद्यया पाणिनिकात्यायनयोरैकयोगः, व्याकरणस्येति सम्बन्धे षष्ठी, जयादित्यस्तु विद्यया सह विद्यावतोरभेद विवक्षया सामान्याधिकरण्यमित्युक्तवान् तम्मतमाविष्करोति द्विमुनि व्याकरण मिति । द्विमुनि व्याकरणं त्रिमुनिरागम इत्यादावन्यपदार्थं प्रधानत्वादब्रीहिरपि । (१) द्वि—प्रभृतेरिष्टत्वात् एकमुनिर्भार्ग्वस्य, एकभरद्वाजः इत्यत्र कर्म्मधारय एव । द्विगङ्गमित्यादौ द्वयोर्गङ्गयोः पञ्चानां नदीनां समाहार इति वाक्यं समासान्त ट प्रत्ययः । वयं पुरै-च्छिष्यहि सप्तसिन्धु प्रभो यथा पञ्चनदं तथाद्यः । द्विगोरपवादोऽयमव्ययी-भावः ।

(१६) वाच्य इति । तत् पुरुष इत्ययं शब्दः संज्ञात्वेनाधिक्रियत इत्यर्थः, गुणसंज्ञाश्रयणादुत्तरपदार्थप्राधान्यं तत् पुरुषस्य स्वभावादिति

(१) बहुव्रीहौ त्रिमुनि व्याकरणं, अव्ययीभावे त्रिमुनि व्याकरणस्येति भेदः

१७। नञ् । [नञः १।]

नञ् सुबन्तेन सह समस्यते । न ब्राह्मणो ऽब्राह्मणः । (१७)

---

विष्णुमिश्रः, । स च स्वभावादुत्तरपदार्थप्रधान इति सङ्क्षेपसारः पदानामर्थाभिधानव्यवस्थाहेतुः स्वभाव एव । उत्तरपदार्थप्रधानता च तत्पुरुषस्य प्रायेणोक्ता कुत्रापि व्यभिचार दर्शनात् पूर्व्वकाय इत्यादेः पूर्व्वपदार्थप्रधानतैवाधिगम्यते । इति गोयीचन्द्रः । शब्दशक्तिप्रकाशिकायां तत्पुरुषस्य लक्षणं यथा—"यदीयेन सुवर्थेन यत्र यद्बोधनक्षमः यः समासस्तस्य तत्र तत्पुरुष उच्यते" यः समासः यदर्थगतेन सुवर्थेनोपलक्षितस्य यदर्थस्य अन्वयबोधं प्रति समर्थयोग्यः स समासः तदर्थस्य तदर्थे तत्पुरुषः । तथाच यादृशानुपूर्व्वीं प्रकारक ज्ञानं यदर्थ विशेषिता ऽवच्छिन्नयदर्थविशेषकाऽन्वयबोधजनकं (यदर्थ विषयतानिरूपित यदर्थ विषयताशालिबोधजनकं इति यावत्) तादृशानुपूर्व्वीमत्, समासत्वं तदर्थस्य तदर्थे तत्पुरुषत्वं ।

(१७) नञ् इत्यव्ययस्य सुबन्तेन सह समासः । स च प्रथमान्त पद पूर्व्वक एव । ननु "सतां न च निषेधोऽस्ति सोऽसत्सु च न विद्यते । जगत्यनेन न्यायेन नञर्थः प्रलयं गतः" इत्यनेन नञर्थस्य प्रवृत्त्यसम्भवात् कुत्र नञ् प्रवर्त्ततामिति चेदाह सर्वोहि जनो ज्ञातमर्थं ज्ञापयितुं शब्दान् प्रयुनक्ति । तच्च ज्ञानमुभयं प्रमा भ्रमश्च । तत्र पूर्व्वस्मिन् (प्रमाज्ञाने) न नञ् व्यापारः, उत्तरस्मिन् (भ्रमज्ञाने) तु नञ् व्यापारोऽस्ति इति ; स च नञ् द्विविधः पर्य्युदासरूपः प्रसज्यप्रतिषेधरूपश्च । आद्ये अब्राह्मण इत्यत्र ब्राह्मणादन्यो ब्राह्मणत्वेनाध्यासितो राजन्यादिः ब्राह्मणसदृश इति प्रतीयते, द्वितीये तु मिथ्यानिवृत्तिरब्राह्मणोऽयं, न भवति ब्राह्मणत्वस्य निषेधः किन्त्वत्र न सतो निषेधः ; न वाप्यसतः किन्तु भ्रमात् ब्राह्मणा-

दन्यस्मिन् प्रयुक्तस्य ब्राह्मण शब्दस्यार्थो निषिध्यते अब्राह्मण इत्यस्योत्तर पदार्थप्रधानत्वेऽपि ब्राह्मणो नाभिधेयः किन्तु सादृश्यजनितभ्रमनिबन्धनात् क्षत्रियादौ ब्राह्मणशब्दप्रवृत्तिरत्र नञा ख्याप्यते। एवं अभक्ष्या गौः अपेया सुरा इत्यादौ इतराभ्यवहार्य्यसादृश्यारोपितमभ्यवहार्य्यत्वं नञा निषिध्यते। असितं, अधर्म्मः, अनित्य इत्यादौ रूढ़ि विषयतया च तदन्यदाख्यायते इति गोयीचन्द्रः। नञार्थाः षड़ेव तथाचोक्तम्—तत् सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राधान्यं विरोधश्च नञार्थाः षट् प्रकीर्त्तिता इति क्रमशो यथा अब्राह्मणः, अपापं, अघटः, अनुदरी, अकेशी, कन्या, असुर इत्यादि तत्पुरुषस्योत्तरपदार्थप्रधानत्वात् अवर्षा-हेमनः, असर्व्वस्मै इत्यादौ तु लिङ्गवचनसर्व्वनामत्वादिकं न व्याहन्यते। ब्राह्मणस्याभाव इत्यर्थे अब्राह्मणमिति पूर्व्वपदार्थप्राधान्यादव्ययीभाव एव (२) ननु पर्य्युदासस्थले—"प्राधान्यं हि विधेर्यत्र प्रतिषेधेऽप्रधानता पर्य्युदास स विज्ञेयो यत्रोत्तर पदेन नञ्" इति उत्तर पदेन नञः सम्बन्धात् परस्पर सम्बन्धार्थतया समासो भवतु, प्रसह्य प्रतिषेधस्थले तु अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता प्रसह्य प्रतिषेधोऽयं क्रियया सह यत्र नञ् इति क्रियया सह नञः सम्बन्धात् अकिञ्चित् कुर्व्वाण इत्यादौ कथं समास इत्याशङ्क्याह श्रीपतिः क्वचिदसाक्षात् सम्बन्धेऽपि समासः यथा सूर्य्यं न पश्यन्तीत्यसूर्य्यम्पश्याः, किञ्चित कुर्व्वाणः अकिञ्चित् कुर्व्वाणः माषं न हरमाणाः अमाषं हरमाणः, न पुनर्दीयन्ते अपुनर्देया श्राद्धं न भुङ्क्ते अश्राद्धभोजी. लवणोभ्यो न हितः अवतसीयः, वधं नार्हति अवध्यः इत्यादिषु पूर्व्वं प्रयुक्तेष्वेव समासो भवति नान्यत्रेति। केचित् अलुगधिकारादित्यादौ प्रसह्यप्रतिषेध स्थले सूत्रकृता समास करणात् प्रसह्य प्रतिषेधेऽपि समासो भवतीति गम्यते। अनेकमित्यत्रैक-वचनमुत्तरपदार्थप्रधानत्वे सिध्यति तथाह्यत्र भ्रमवशात् द्वित्वादावर्थे

एकत्वादारोपितस्याभिधाता एकशब्द उपात्तसंख्य एव द्वित्वादीनाभिदधातीति एकवचन सुपपद्यते, अनेकशब्दस्य सामान्याधिकरण्यादप्येकवचन मेव नियतं यथा अनेकः प्राक्तः क्रमः, कारणः प्रस्थितानेका इति। अनेके अनेकेषामिति बहुवचनमपि कैश्चित् समाधीयते किन्तु तद्धर्त्तृहरिणा न व्यवस्थित मिति वृत्तिकृता निराकृतमेव "यतो भवन्त्यनेके जलधेरिवोर्म्मय" इत्यपपाठ इति वृत्तिकृता व्युक्तम्। यदा तु विजातीयानामर्थानां प्रत्येकमनेकत्वं विवक्ष्यते तदा अनेकस्यैवानेकत्वे द्विवचन बहुवचनेऽपि भवतः। धवश्च, खदिरश्च उभावनेकौ धवश्च खदिरश्च, पलाशश्च प्रत्येकतया इमे अनेके धव खदिर पलाशाः। अनेकैराचार्य्यैः खण्डशः प्रणीतं शास्त्रमित्यत्र न विद्यते एकत्वम् येष्विति वाक्ये बहुव्रीहिः कार्य्यः इति गोयीचन्द्रः। नञ् समासं कालापाः कर्म्मधारयसमासेऽन्तर्भावयन्ति तदसत् उभयगतविशेषणविशेष्यभावस्य प्रसिद्धत्वात्, नञ् इति (२।८।६) पाणिनीय सूत्रम् सुपा सह नञ् समस्यते इति सिद्धान्त कौमुदी उत्तरपदार्थप्रधानोऽयं समासः। आरोपितत्वं नञाद्योत्यते तथा आब्राह्मणशब्दादारोपितब्राह्मण इति बोधे अर्थात् ब्राह्मणभिन्न इति पर्य्यवस्यति। उत्तरपदप्राधान्यादेव अतस्मिन्नित्यादौ सर्व्वनामकार्य्यं सिध्यति। तथाचोक्तं हरिणा नञ् समासे अपरस्य प्राधान्यात् सर्व्वनामता। आरोपितत्वं नञ् द्योत्यं नह्यसोऽप्यतिसर्व्ववदिति। (१८) ईषदिति गणमुक्ता यो गुणिनि वर्त्तते सगुण वचनः। गुणवचनेनेति किम्? ईषद्गार्ग्यः अयं जातिशब्दो द्रव्यवचनः गार्ग्यं द्रव्याश्रित गुणक्रिययोः स्तोकतां गमयितुमीषत् शब्दः प्रयुज्यते, यथा गोतर इत्यत्र आतायुतुकर्षा भावात् तदाश्रितस्य द्रव्यस्य गुणस्य प्रकारं प्रकर्षं गमयितुं प्रकर्ष प्रत्ययः। (१९) पूर्व्वापराधरोत्तर मिति समाहारे द्वन्द्वः एकदेशः प्रदेशः अवयव इति यावत् तदो मत्वर्थीयः।

१८। ईषद् गुणेन। [ ईषत् ०।१, गुणेन ३। ]

ईषच्छब्दो गुणवाचिना सुबन्तेन सह समस्यते। ईषद्रक्तः, ईषत्पिङ्गलः। (१८)

१९। पूर्व्वाऽपरावरोत्तरमेकदेशिनैकाधिकरणे। अर्द्धं नपुंसकं। (१९)

[ पूर्व्वाऽपराधरोत्तरं (पूर्व्व-[illegible]) [illegible] एकदेशिना [illegible] एकाधिकरणे ७।१ ]

पूर्व्वादयोऽवयवा अतोऽवयवावयविसम्बन्धे षष्ठी। अथानर्थविना षष्ठ्यन्तेन पूर्व्वादिः प्रथमान्तस्य समासो भवति षष्ठीसमासापवादत्व-त्वात्। अधुनैतस्तु षष्ठ्येकवचनान्तेन समासमीहते नांशिनोऽनेकत्वे। इति सङ्क्षिप्तसारसूत्रं। अंशिनोऽनेकत्वे सति अंशिषष्ठ्या समासो न भवति पूर्व्वश्छात्राणामिति गोयीचन्द्रः। अत्र व्यापकवचनेनेति वक्तव्यं, अन्यथा पूर्व्वं वर्षाणां इत्यादौ पूर्व्ववर्षा न स्यादिति व्यापकत्वमुक्तं। वर्षाख्यस्यांशिन एकत्वात्, एवं पूर्व्वरात्रिरित्यादि, ननु विभाषाधि-कारात् पाक्षिकोऽयं समासः तद्विहितपक्षे षष्ठी समासः कथं न स्यात्। तत्रापि पक्षे वाक्यं स्यादिति सत्यं, उत्तरसूत्रे वा ग्रहणमेवं ज्ञापयति महता वाऽधिकारेण वाक्यमेव व्यवस्थापयति, न तु समासान्तर-प्रवृत्तिरिति। अथ एकदेशे समुदायोपचारात् पूर्व्वकाय इति विशेषण-समासेनैव सिध्यति किमनेनेति नचोद्यमेवं तर्हि षष्ठी समासोऽपि प्रस-ज्येत इत्यत आह षष्ठीत्यादि। अंशिषष्ठ्या पूर्व्वादिः प्रथमायाः इति सङ्क्षिप्तसारसूत्रं। अंशोऽवयवः यस्यास्तीति सोऽंशी तस्य षष्ठ्या सह तत्पुरुषोभवति षष्ठी च सम्बन्धे विहिता अंशिना च सह सम्बन्धोऽ-प्यांशिस्वरूप एव सम्भवति, अतोऽर्थवशादेव पूर्व्वादयोऽंशवचनाः। यद्यपि पूर्व्वादिः प्रथमायाः अंशिषष्ठ्या सह समास उक्तः तथापि षष्ठ्यन्तेन

पूर्व्वादयो ऽवयविना षष्ठ्यन्तेन समस्यन्ते । पूर्व्वं कायस्य पूर्व्वकायः अपरकायः, अधरकायः, उत्तरकायः, अर्द्धपिप्पली अर्द्धं समभागे क्लीवं (२०) । नेह ग्रामार्द्धः । षष्ठीऽसमासापवादोऽयं, तेन कायपूर्व्वमिति न भवति । मध्याह्नादयो विशेषण समासेनैव सिध्यन्ति ।

२० । द्वितीया, तृतीय, तुरीय, चतुर्थ, तूर्य्यां, वा । (२०)

[ द्वितीय—तूर्य्यां ३।।, वा ०१। ]

सह प्रथमान्तस्य समासोभवति यतो विभक्तयोनित्यमेव नाम गुणीभूताः पूर्व्वादिपदस्य पूर्व्वनिपातार्थाः, कायस्य पूर्व्वमिति षष्ठीसमासे सति कायपूर्व्वमित्येवं स्यात् तत्प्राप्तौ अपवादरूपोऽयं प्रथमासमासः । इति गोयीचन्द्रः एवं अपरकायः, अधरकायः, उत्तरकायः, पूर्व्वाह्णः, मध्याह्नः, अपराह्णः, सायाह्नः, पश्चिमरात्र इति पूर्व्वादेराकृतिगणः । पूर्व्वापराधरोत्तरमेकदेशिनैकाधिकरणे (२।२।१) इति पाणिनीयसूत्रं । अवयविना सह पूर्व्वादयः समस्यन्ते एकत्वसंख्या विशिष्टश्चेदवयवी षष्ठी समासाऽपवादः एकदेशिना किम् ? पूर्व्वं नाभेः कायस्य ; * एकाधिकरणे किम् ? पूर्व्वश्छात्राणाम । इति सिद्धान्तकौमुदी सर्व्वोऽप्येकदेशोऽह्ना समस्यते, संख्याविसायेति ज्ञापकत्वात् । केचित्तु सर्व्व एकदेशः कालेन समस्यते नत्वह्नैव ज्ञापकस्य सामान्यापेक्षत्वात् । तेन मध्यरात्र इति च सिद्धान्तकौमुदी ।

* पूर्व्वं नाभेः कायस्येति नाभेर्यः पूर्व्वभागः सः कायस्यावयव इत्यर्थस्तेन नाभेरवयविलाभावात् पूर्व्वशब्दयोगे पञ्चमी, तथाच पूर्व्वस्य भागस्य नाभिरवधिनत्वेकदेशीति नाभ्या न समास इति भावः ।अंशोति किम् ? राज्ञः पूर्व्वोदेशः ।

एतेऽवयविना षष्ठ्यन्तेन सह वा समस्यन्ते। द्वितीयं भिक्षायाः, द्वितीयभिक्षा, तृतीयकथा, तुरीयवापी, चतुर्थगाथा, तूर्य्यश्लोकः। पक्षे विभाषाधिकारे पुनर्व्वाग्रहणात् पूरणप्रत्ययान्तेनापि षष्ठीसमासः। भिक्षाद्वितीयं, वापीतुरीयमित्यादि।

(२०) अर्द्धं नपुंसकमिति समभागवृत्त्यर्द्धमेकदेशिना षष्ठ्यन्तेन समसनीयं स्यात्। नन्वर्द्धमित्युक्तेऽपि समांशवृत्त्यर्द्धशब्दो लभ्यते इति चेत् लक्षणपार्थक्यादन्यथा एकमेव लक्षणं विदध्यात्। समविभागेऽर्द्ध शब्दः नपुंसकलिङ्गः। ननु एकदेशे समुदायोपचारात् विशेषणसमासेनैवार्द्धं काय इति भविष्यति, एवं सति पुंलिङ्गेनाप्यर्द्ध शब्देनार्द्धग्राम इति स्यात् नाऽयं विरोधः तस्यापीष्टत्वात् यतोभाष्यकारेणार्द्धं नपुंसकमिति प्रागनिलक्षणमेव निरस्तं। इति गोयीचन्द्रः। नपुंसकमिति किम्? ग्रामार्द्धः इहासमांशवृत्तिना अर्द्धशब्देन सह प्रथमा तत्पुरुषोनाऽपि तु—कर्म्मधारयः। कथं तर्हि मासार्द्धं, वर्षार्द्धं, पणार्द्धं भक्षितं मया, निशार्द्धमतीतमिति भाष्यादौ प्रयुक्तं सत्यं पृथग्योगत्वात् पक्षे षष्ठीसमासः, कर्म्मधारयोवा भविष्यति। अर्द्धजरती चार्द्धवैशसमिति केनाप्युक्तं तदपि बाहुल्यादेवेति विष्णुमिश्रः। श्रीपतिस्तु अर्द्धस्नातोऽर्द्धवृद्धोऽर्द्धजरतीत्यसाकल्यवृत्तेरर्द्धस्य तृतीयासमासः एवं गोयीचन्द्रोऽपि अनयोरर्द्धेन वैशसं भवति सा खल्वर्द्धेन पुमानिति वाक्येऽपि तत् प्रयोगो दृश्यते इत्याह। द्रव्यैक्य एव तेनार्द्धं पिप्पलीनामित्यत्र न समास इति सिद्धान्तकौमुदी। अर्द्धपिप्पल्य इति तु चार्द्धपिप्पली, चार्द्धपिप्पली, चार्द्धपिप्पली चेत्येकशेषात्। इति जुमरः। ननु यद्यंशिनोऽनेकत्वेऽपि एकशेषेणार्द्धपिप्पल्य इति प्रयोगोभवत्येव, किमर्थं तर्हि नांशिनोऽनेकत्व इति निषेधः। अत्रोच्यते। अर्थभेदोहि महान् विद्यते। अर्द्धपिप्पल्य

## २१। कालाः परिमाणिना। (२१)

[ कालाः १।।।, परिमाणिना ७। ]

**परिमाणिना षष्ठ्यन्तेन कालशब्दाः समस्यन्ते। मासो जातस्य मासजातः, वर्षजातः।**

---

इत्यनेन खण्डरूपाणामेव पिप्पलीनां वक्लत्वमुच्यते। यदा तु अखण्डताना- मेव पिप्पलीनामर्द्धं वाच्यं भवति तदार्द्ध पिप्पल्य इति प्रयोगो माभूदिति निषेधात्। अर्द्धपिप्पली इत्यत्र अर्द्धपिप्पल्यादिषु चेति प्रतिषेधात् न क्लस इति च गोयीचन्द्रः। अग्र भोजनं, भोजनाग्रमिति सिद्ध्यर्थमग्र- शब्दोऽन्योऽत्र पठ्यते।

(२१) द्वितीयेति—एते द्वितीयादयः पञ्च षष्ठ्यन्तेनाऽवयविना वा समस्यन्ते। ननु कथं भिक्षाद्वितीयमित्यादौ षष्ठीसमासः? कायस्य पूर्वमिति वदाक्यमेव भवितुमर्हति इत्याह पद्मे इत्यादि; अत्र सूत्रे तुरीयशब्दः पाणिनिना प्रत्याख्यातः किन्तु मुन्यन्तरेणोक्तः, तथा च बोधः वियत्तुरीयं सविता विशुध्यति। ननु पूरणार्थस्य षष्ठीसमासनिषेधा- द्भिक्षाद्वितीय *मित्यादौ कथं षष्ठीसमासः इति चेदुच्यते अनेन द्वितीयादेर्विकल्पेन समासविधानं पूरणे षष्ठीसमासनिषेधस्य प्रायिकत्वं सूचयति तेन षष्ठीसमासोऽप्यत्र भवति वर्गपञ्चम्यादिप्रयोगसिद्धिरप्य तस्येति गोयीचन्द्रः; अन्यतरस्यां † इत्यस्य ग्रहणसामर्थ्यात् पूरणगुणेति निषेधं वाधित्वा षष्ठी समास इति सिद्धान्तकौमुदी; कथं हस्ताग्रमग्र- हस्तं, पादतलं तलपादं, अभिधानात् समासोभयत्वमिष्यते तथा च वामनः हस्ताग्राग्रहस्तयोर्गुणगुणिनोर्भेदाभेदादिति।

---

* ... पूरणार्थ योग सत्यर्थेन द्वितीय इति सिद्धं।

† द्वितीय ...थ चतुर्थात्यन्यतरस्यामिति पाणिनीय सूत्रम्।

## २२। प्राप्तापन्ने द्वितीयया। (२२)

[ प्राप्तापन्ने १।१, द्वितीयया ३। ]

**एतौ द्वितीयान्तेन वा समस्येते। प्राप्तोजीविकां प्राप्तजीविकः, आपन्नजीविकः, पक्षे जीविका प्राप्तः।**

---

(२२) कालाः—परिमाणमस्यास्तीति परिमाणी, परिच्छेद्येन षष्ठ्यन्तेन परिमाणवाचिनः कालशब्दाः समस्यन्ते, यद्यपि द्रोणाढकादीनां परिमाणत्वं, प्रसिद्धं तथा व्यवच्छेदहेतुत्वात् कालस्याऽत्रगौणत्वं। अत्र सूत्रे काला इति बहुवचनात् कालपरिच्छेदिका संख्याऽपि कालाइत्युच्यन्ते, तेन द्वेऽहनीति द्वे पदे परिमाणिना समस्येते पश्चादनयोरेवोत्तरपदे द्विगुर्भवति। यथा द्वेऽहनी जातस्य द्व्यह्नजातः (१) राजाह सखिभ्यष्ट इति ट प्रत्यये टऽह्नोटह्न इत्यादिनाऽह्नादेशः। एवमन्यत्रापि तदह्नजात मित्यादि सिध्यति। दुर्गस्तु मासोजातः सम्पन्नोऽस्येति बहुव्रीहिना सिद्ध मित्याह। श्रीपतिस्तु मासस्य जातः मासजातः कुमारः एवं पक्षजाता कन्या, परिमाणं हि कालपरिमाणिनं प्रति षष्ठ्यन्ततामासादयति, यथा त्र्यहस्य दधीदं, पञ्चाहस्याङ्कुरः वर्षशतस्याऽयं ब्राह्मण इति; जातस्य मासः परिमाणमिति विग्रहे समासोऽयमिति।

काला इति बहुवचनात् कालविशेषवाचका गृह्यन्ते तथा च कालाः परिमाणिना समस्यन्ते न तु परिमाणाः कालैरिति। कालस्य परिच्छेदकत्वं क्रियाद्वारैव मासजातादिव्यवहारे जननक्षणकालान्तराल भावी मासादिर्जातादिकं पुरुषमपि परिच्छिनत्ति तेन द्व्यहादि जाते न

---

(१) द्व्यौरह्नोः समाहारो द्व्यहः, द्व्यहो जातस्येति विग्रहे द्व्यह्नजातः, उत्तरपदेन परिमाणिना द्विगोः सिद्धये बहूनान्तपुरुषस्योपसंख्यानमिति सिद्धान्त कौमुदी।

२३। द्वितीयाश्रितातीत पतित गतात्यस्तप्राप्तापन्नारूढ़ गम्याद्यैः। (२३)

[ द्वितीया १।, श्रिता—गम्याद्यैः श्रित-अतीत-पतित-गत-अत्यस्त-प्राप्त-आपन्न-आरूढ़ गाम्यादि (गामि आदि) ३।।। ]

श्रिताद्यैर्द्वितीयान्ताः समस्यन्ते। कष्टं श्रितः, कष्टश्रितः, लोकातीतः, श्वभ्रपतितः, तरङ्गात्यस्तः, सुखप्राप्तः, दुःखापन्नः,

---

मासजातादि व्यवहारः, इदञ्च सूत्रं जातस्य मास इति विग्रहे जातमास इत्यनिष्टप्रयोगनिवारणार्थमिति बहुव्रीहिणा गतार्थता तु न शङ्क्या मासजातोऽस्येत्यादितोमासस्येव जननप्रतीतेर्नत्वन्यपदार्थस्य। वृत्ति विग्रहयोस्तुल्यार्थत्वेऽपि सूत्रभाष्यप्रामाण्यादत्र न तथा कल्पनमतएव न मासस्य प्रधानता, अपि तु जातस्येति च सिद्धान्तकौमुदी टीका।

(२३) प्राप्तापन्नेति 'वा' शब्दं त्रिष्णोति स्पष्टार्थं विभाषाया अधिकृतत्वात्। पक्षे जीविकाप्राप्त इति द्वितीयाश्रितेत्यनेन समासः (२५।३।४) उभयोर्विभाषितत्वाद्वाक्यमेव पक्षे तिष्ठति ततुरुषद्वन्द्वावन्तस्यपदलिङ्काविन्यन्तस्यपदलिङ्कत्वे प्राप्ते प्राप्तापन्नालमुपसर्गपूर्व्वत्वे चेति प्रतिषेधस्तेन प्राप्तापन्नयोर्यल्लिङ्गं, तत् समुदायस्य भवति। इति गोयीचन्द्रः। ङ्यापोर्नाम्नि बहुलं (७१।४।४) इति सूत्रे बहुलग्रहणात् असंज्ञायामपि क्वचित् ह्रस्वः इति विद्यामिश्रः। यदातु प्राप्ता जीविका मिति वाक्यं तदा प्राप्तजीविकेत्यत्र पूर्व्वपदे क्वचिदन्यत्रापीति पुम्बद्भाव, एवं द्वितीया भिक्षाया द्वितीयभिक्षेत्यत्राप्येवमेव पुम्बद्भावः *। इति

* इह सूत्रे द्वितीयया अ इति छित्वा अकारोऽपि विधीयते, तेन प्राप्ता जीविकां प्राप्तजीविका, एवं आपन्नजीविका। इति सिद्धान्तकौमुदी। अ इति छिन्नेति आ इति छेदोऽपि इष्टव्यस्तेन आ अ स्यादिति सूत्रार्थ इति तट्टीका।

वृक्षारूढ़ः, ग्रामगमी, ग्रामगामी, ओदनबुभुक्षुः, द्विषद्वीर्य्य-निराकरिष्णुः, विप्राय वेदविदुषे ।

२४ । क्तेन खट्वाक्षेपे । [क्तेन ३।, खट्वा १।, आक्षेपे ७।]

क्तान्तेन द्वितीयान्ता खट्वा समस्यते । खट्वारूढ़ोजाल्मः । (२४)

---

च गोयीचन्द्रः । स्वरभेदात् न बहुव्रीहौ गतार्थता । किञ्च प्राप्त सुखादि तत्पुरुषादौ बहुव्रीहिस्वीकारे निष्ठान्तस्य जातिकालसुखादिभ्यश्चेति परनिपातविधानात् परनिपातापत्तिरतस्तन्निरासायेदं सूत्रं द्रष्टव्यमिति सिद्धान्तकौमुदी टीका । किन्तु (बहुव्रीहौ), प्राप्तनन्दी रित्यत्र ऋदादित्वात् कः स्यात् प्राप्तगव इत्यत्र राजादित्वाभावात् टोन स्यादिति गोयीचन्द्रः । प्राप्तापन्ने च द्वितीयया इति पाणिनि सूत्रम् (२।२।४) ।

(२४) तत्पुरुषोहि द्वितीयादि सुबर्थस्य भेदात् षड्विधः । ग्रामगतः, चैत्रनीतः, ब्राह्मणदत्तः, वृक्षपतितः, चैत्रधनं, मैत्रगतिः, गृहस्थित इत्यादौ द्वितीयादिसुबर्थस्य कर्म्मत्वकर्त्तृत्वादेर्बोधभेदादेतस्य (तत्पुरुषस्य) षड्भेदः । इयांस्तु विशेषो यदेतेषु धात्वर्थान्वय्येव द्वितीयादेरर्थः प्रायोघटकः । पीठं परितः, पुण्येन सुखं, प्रमाय विद्या, दण्डाहूटः, गवां कृष्णा सम्पन्नक्षीरा, तिलेषु तैलमित्यादिविग्रहे तत्पुरुषस्यासाधुत्वात् । वर्षसुखी, लोष्ट्रकाणः, कुण्डलहिरण्यं, घटान्यः, कुबेरबलिः, कर्म्मकुशल इत्यादौ धात्वर्थान्वयाभावेऽपि तत्तद्विशेषविधे द्वितीयादि तत्पुरुषः । तत्र द्वितीया तत्पुरुषमाह द्वितीयाश्रितेति कष्टश्रित इत्यादौ गत्यर्थाकर्म्मकेत्यत्र चकारात् कर्त्तरि क्तः (१२३।१।४) ग्रामं गमी ग्रामगमी इत्यत्र गमीत्यादि र्भविष्यति गमि गाम्यादय इति इणन्तणिनन्तः साधुः, अकेनोर्भविष्यदधमर्णयोरिति षष्ठी निषेधः (५९।२।२)

२५। स्वयं स्वामि। [स्वयं स्वामि ०१॥]

एतौ क्तेन समस्येते। स्वयं कृतं, स्वामि भुक्तं, सामीत्यर्थ-ग्रहणान्नेमिभिन्नं, अर्द्ध कृतं च। (२५)

ओदनं बुभुक्षुः, द्विषदीर्यं निराकरिष्णुः, वेदं विद्वान् इति वाक्यं, न लोकिनव्ययमिति षष्ठीनिषेधः (५०।२ २) तथा ग्रोचेषुः, सुखेप्सुरिति। क्रियाविशेषणमपि समस्यते—नितान्तक्षामः निकामसुखी, नित्यभीरुः, नित्यस्नायी, शीघ्रभोजीत्यादि तदुक्तं समासविधिषु लक्षणमुपलक्षण मिति * हंसमण्डलद्युतिजिष्णुरित्यत्राप्यनेनैवसमासः; षष्ठ्यां समास इति नैयायिकाः। आपतिस्तु निष्ठादिषु स्त्रैष्यते यथा सत्यानुरक्ता न वक्तस्य जिष्णव इति। द्वितीयाश्रितातीतपतितगतात्यस्त प्राप्तापन्नैः। इति पाणिनि सूत्रं (२।१।२४) तत्र गम्यादीनामुपसंख्यानं कृतं। द्वितीयाया गतायैरिति संक्षिप्तसार सूत्रं। गतादिस्तु—गत, विद्वस्, श्रितः अतीत, पतित, अत्यस्त, प्राप्त, आपन्न, गमिन्, गामिन्, बभूवस्, बुभुक्षु इत्यादीति जुमरनन्दी, गतादेराकृतिगणनात् सुखमिप्सुः सुखेप्सुः, सुखमिच्छुः सुखेच्छुः, हंसमण्डल द्युतिजिष्णु रित्यपि सम्बन्धनीय मिति गोयीचन्द्रः।

(२५) नित्यसमासोऽयं नह्वि वाक्येन निन्दा गम्यते। इति सिद्धान्त-कौमुदी। खट्वामारूढ़ इति वाक्ये आरोहणमात्रमवगम्यते न तु क्षेपः, (निन्दा)। खट्वारूढ़ इत्यनेन न केवलं खट्वारोहण मात्रेण यस्य निन्द्यता, सोऽभिधीयते किन्तु येन केनाप्यनुचिताचरणेन अतएवाह उत्पथप्रस्थित इति गोयीचन्द्रः। आक्षेपादन्यत्र तु खट्वामारूढ़ इति पद्मनाभ-पञ्जिका।

---

* क्रियाविशेषण समासएकाऽव्युत्पन्न इति तु न देश्यं लोकनयर खनाभ्या मित्यादौ कालिदासाद्यैः प्रयुक्तत्वात् इति शब्दशक्तिप्रकाशिका।

२६ । काला अत्यन्तसंयोगे च ।

कालाः १।।।, अत्यन्त संयोगे ७।, च०१। ]

द्वितीयान्ताः कालशब्दाः क्तान्तेन अत्यन्त संयोगे च सुबन्तेन सह समस्यन्ते अहरतिसृता, रात्रारूढ़ाः, वर्षं भोग्यो वर्षभोग्यः, मुहूर्त्तसुखम् । (२७)

( २६) स्वयंसामीति लुप्तप्रथमा द्विवचनान्तं पदमित्याह एते इति । स्वयमात्मनेत्यर्थेऽव्ययं सामीत्यर्द्धे, सामिशब्दोऽत्रार्थपर इत्याह सामी-त्यर्थग्रहणादिति। सामिभुक्तविषयाः समागमा इति कालिदासः । अर्द्धापभुक्तेन * विषेण जायामिति च ; त्रिपदोऽप्ययमिति वर्द्धमान स्तथाहि स्वयं धौतौ पादौ स्वयंधौतपादस्तस्यापत्यं स्वयंधौतपादिः। ननु स्वयमात्मनेति तृतीयार्थेऽव्ययशब्दोऽयं कर्त्तृकरणे क्ता बहुल मित्य-नेन भवितव्यं, कथमस्य द्वितीया तत्पुरुषप्रकरणे निवेशनमिति चेन्न दोषः, अव्ययत्वादविभक्तिकत्वाच्च 'क्त'• प्रस्तावादागतोऽयं आह्वयाह्नाने भिक्षुका अप्यागच्छन्तीति न्यायात् । इति पद्मनाभपञ्जिका । स्वयं क्तेन (२।१।२५) सामीति (२।१।२७) इति द्वे पाणिनीये सूत्रे स्वयमित्यत्र द्वितीया न सम्बध्यते अयोग्यत्वादिति सिद्धान्तकौमुदी स्वयमित्यात्मनार्थकं कर्त्तृशक्ति प्रधानं तेन न द्वितीयासम्बन्धयोग्यत्व मिति तट्टीका । विशेषणसमासे-नैव सिद्धे सामिशब्दस्यैव पूर्व्वं निपातार्थं सामिग्रहणमिति गोयीचन्द्रः ।

---

* सर्व्वत्र क्तदुपादाने कारकोपसर्गपूर्व्वस्य च क्तोपहणमिति स्वयं चिर-विलीनः, स्वयंधर्मा इति अमरः । क्तेन केवलेन समासासम्भवात् तद्ग्रहणं तावद्भवतु सोपसर्गेण कथं समासः इत्यत आह सर्व्वत्रेति क्तदुपादाने क्तदवत्तमिति कारकपूर्वस्य उपसर्गपूर्वस्य च क्तोग्रहणं अतएव स्वयं चिरविलीन इत्यादावेष्टव्य मिति गोयीचन्द्रः ।

२७। तृतीयातत्कृतगुणवचनसमोणार्थार्थ पूर्व्वनिपुण कलहावरमिश्रश्लक्ष्णैः।

[ तृतीया ०१।, तत-कृत-गुणवचनः समोणार्थार्थ (सम-ऊण-अर्थ-अर्थ)-पूर्व्वनिपुण कलह-अवर्-मिश्र-श्लक्ष्णैः ३।। ]

गुणवचनेन समार्थ-ऊणार्थ-अर्थादिभिस्तृतीयान्तं समस्यते। शलाकया काणः शलाकाकाणः, शष्कुलयाखण्डः शष्कुलाखण्डः इह कस्मान्न भवति घृतेन पाटवं ? नेदं तत्कृतगुणमुक्तवत् किन्तु तद्गुणपरिणामोपाधिरिति। समार्थाद्यैः पितृसमः, गुरुतुल्यः, एकोणः, द्व्यङ्गविकलः, धान्यार्थः, मासपूर्व्वः, वाङ्निपुणः, वाक्कलहः, मासावरः, गुड़मिश्रः, वाक्श्लक्ष्णः (२८)।

(२७) कालाः इति अत्र सूत्रे वाक्यद्वयमवगन्तव्यं यथा द्वितीयान्ताः कालवाचिनः शब्दाः क्तान्तेन समस्यन्ते इत्येकं वाक्यं, अत्यन्तसंयोगेऽभिविधौ क्तान्तादन्येन च सुबन्तेन समस्यन्त इत्यपरं। अत्र चकारः समुच्चयार्थकः। कालाः परिमाणिनेति प्रथमा ततपुरुषः, अयन्तु द्वितीया ततपुरुषइत्युभयोर्मेदन्तरं। वर्षभोग्यं कृत्यादौ कालाध्वभ्यामिति (६।२।२) द्वितीया, एवं मुहूर्त्तसुखं, कालाः (२।१।२८), अत्यन्त संयोगे चेति (२।१।२९) पाणिनीय सूत्रद्वयं। कालार्थस्य च, अविच्छेदेऽव्ययेनेति च सङ्क्षिप्तसारेऽपि सूत्रद्वयं। न क्तवतेति वर्द्धमानसूत्रं तेन वर्षं ओदनं भुक्तवानित्यत्र न समासः, क्तान्तेन समासस्थले तु नात्यन्तसंयोगोऽर्थ इति सिद्धान्तकौमुदी।

(२८) तृतीयेति गुणमुक्तवान्, गुणवचनः वाच्यलिङ्गः टनः कर्त्तरि चेति कर्त्तरि टनः, यः पूर्व्वं गुणे वर्त्तित्वा पश्चाद्द्रव्ये वर्त्तते, स गुणवचनः, यदि गुणमात्राभिधायकः शब्दः गुणवचनेनापेक्षितः स्यात्तदा गुणेनेति

विद्ध्यात् एवं सति घृतेन पाटवमित्यादावपि समासः प्रसज्येत। तेन तृतीयान्तेन, कृतः तत्कृतस्तत्कृतस्तथा गुणवचनस्येति कर्म्मधारयः। तृतीयेत्यनेन तृतीयान्तं गृह्यते तृतीयान्तेन गुणवचनस्य करणं न सम्भवीति तृतीयाकृतेनेति सामर्थ्यादुभयोरप्यर्थद्वारा सम्बन्धः। इति गोयीचन्द्रः। समोणार्थेति द्वन्द्वात्परं बहुव्रीहिः, समार्थं ऊनार्थं इति। ततोद्वन्द्वः। शलाकाकाणः इत्यादि अत्र काणखड्ड्शब्दौ निमीलने खड्ड्ने च वर्त्तित्वा पश्चादर्श आदित्वादभेदोपचाराद्वा, तद्वति पुरुषे वर्त्तते, इति गुणवचनौ भवतः, तौ च यथाक्रमं शलाकावाच्येन शङ्कुलावाच्येन कृतौ।

एवं गिरिकाणः, प्रमादकाणः, प्रमादमूर्खः, तृतीयाकृतेनेति किम्? अक्ष्णाकाणः, अक्षिकाण इति तु भागवृत्तिः, अगुणवचनेन तु धनेन धनवान् गोभिर्वपावान्, परभृतध्वनिमुखरः, शरदन्तुरादयस्तु षष्ठीसमासेन। प्रतीतिर्विषयमपहरतीति न्यायादर्थव्यवस्था। अस्यार्थः गिरिः शिशुक्रीडनद्रव्यं, मूर्खशब्दोऽपि जड़पर्य्यायो जाड्ये गुणे वर्त्तित्वा द्रव्ये वर्त्तते, अक्षिकाण इति भागवृत्तिरित्यत्रापि, तृतीयान्तेनाक्ष्णा यस्य काणत्वमित्यस्ति तस्य तृतीयाकृतत्वमिति समासो भवति अक्ष्णा काणा इति तृतीयाकृतेनेत्यस्य प्रत्युदाहरणं नहि तृतीयान्तेनाक्ष्णा देवदत्तस्य काणत्वं कृतं किन्त्वन्येन केनापि द्रव्येण अक्ष्णौ पुनः केवलः काणयुक्तो देवदत्तोलक्ष्यते इति न्यासकृताऽपि व्याख्यातम्। धनेन धनवान् इति द्रव्यवचनोऽयं न गुणवचनः। नहि मुखर दन्तुरशब्दौ गुणवचनौ तत् कथं परभृतध्वनि मुखर इत्यादौ समास इत्याशङ्कयाह षष्ठी समासेनेति। ननु षष्ठीसमासेन पद निष्पत्तिर्भवतु अर्थस्तु तृतीयासमासेन घटते इत्यत आह प्रतीतिर्विषयमपहरतीति प्रतीतिर्विशेषावगतिः विषयं अर्थाऽवगतिनिमित्तं शब्दसिद्धौ कृतमन्वयनियममपहरत्यतिक्रामति तथाहि मण्डपशब्दादुत्पन्नार्थविशेषाऽवगतिः मण्डं पिबतीति शब्दसिद्धौ कृतमन्वयमतिक्रामतीति।

घृतेन पाठवमित्यत्र तु शुद्धगुणवचनं न तु गुणयुक्ता गुणिनि

## २८। कर्त्तृ, करणे, कृता बहुलं।

[ कर्त्तृ, करणे १।।, कृता ३।, बहुलं ०२। ]

तृतीयान्ते कर्त्तृकरणे कृदन्तेन सह समस्येते। चौरहतः, शरभिन्नः, दध्युपसिक्तः, अश्वयानं, बाहुल्यान्नेह—दात्रेण लूनवान्। (२९)

वर्त्तते इति, पितृसम इत्यत्र तुल्यार्थैरतुलोपमाभ्यामिति तृतीया, एकोण, एकेन ऊणा इति विग्रहः तथा वन्धुविधुरः, रूपशून्य इति, मिश्र शब्दो त्र सोपसर्गानिरुपसर्गश्च गृह्यते। एभिरिति किम्? मासेन परः मासेन कनीयानिति विष्णुमिश्रः। तृतीया तत्कृतार्थेन गुणवचनेन (२।१।३०) पूर्व्व सदृशसमोणार्थ, कलह, निपुण, मिश्रश्लक्ष्णैः (२।१।३१) इति पाणिनि सूत्रद्वयं अवरस्योपसंख्यानमिति वार्त्तिकं—मासावरः मासेनावर इति।

(२९) इह बहुलग्रहणं सर्व्वोपाधिव्यभिचारार्थं तेनात्मना तृतीयः, आत्मना पञ्चमः, 'आत्मनः पूरणे' इत्यलुक्; तथा कायस्थूरः, द्रुमशकटः, मदमलीमसः, प्रकृतिकृपणः, प्रकृतिसुभगः, मत्त्वसङ्कुलः, अर्थपरिहृतः, वणिक्धनाढ्यः, अश्वीयराजन्यकहास्तिकाढ्यः, विरहदुर्व्वलः, स्नेहार्द्रः, त्रासविह्वलः, विद्यावृद्धः, गुणाधिकः, वयोऽधिकः, वयोज्येष्ठः, तपोज्येष्ठः। तथा एकोणविंशतिः, एकोणत्रिंशत्, एकोणशतं, अर्द्धेन चतस्रः, अर्द्धचतस्रोमात्राः शिष्टप्रयोगतः सर्व्वमन्यदनुसन्धेयमिति विष्णुमिश्रः। इह न स्यात् दात्रेण लूनवान्, परशुना छिन्नवानिति सङ्क्षिप्तसारम्। तत्र कृता कर्त्तृकरणयोरिति सूत्रं, कर्त्तृकरणे कृता बहुलम् (२।१।३२) इति पाणिनीयसूत्रं, कृद्ग्रहणे गतिकारकपूर्व्वस्यापि ग्रहणमिति सिद्धान्तकौमुदी। एतावित्ति किम्? भिक्षाभिरुषितः हेतावेषा तृतीया, कृतेति किम्? काष्ठैः पचतितराम्।

२९। कृत्यैरधिकार्थोक्तौ।

[कृत्यैः ३।।।, अधिकार्थोक्तौ (अधिक-अर्थ-उक्ति) ७।]

कृत्यैस्तृतीयान्तं समस्यते, अधिकार्थोक्तिश्चेत्। खलेह्यः कूपः, काकपेया नदी, वाष्पक्षेयानि तृणानि। (३०)

३०। चतुर्थी प्रकृत्यर्थे बलिहित सुख रक्षित देयैः।

[चतुर्थी १।, प्रकृत्यर्थ-(प्रकृति-अर्थ) बलि,-हित,-सुख, रक्षित, देयैः ३।।।]

प्रकृतिवाचिना सुबन्तेन, सह अर्थादिभिश्च चतुर्थ्यन्तं समस्यते। यूपाय दारुः यूपदारुः; कुण्डलाय हिरण्यं कुण्डलहिरण्यं,

दध्योदनादीनि चेत्येके एतान्यन्तर्भूतक्रियान्तराणि तृतीयासमासरूपाणि निपात्यन्ते दध्ना मिश्रितमोदनं दध्योदनं एवं दधिशक्तवः, वसोदनं, सूपोदनं, शाकौदनम् इत्यादि, इह व्यञ्जनविशेषाणामर्थविशेषैः सह समासः, गुडेन मिश्रा धानाः गुडधानाः, मधुलाजाः, उदकशक्तव इत्यादि पिण्डितद्रव्येण पिण्डीकरणयोग्यस्य गुडादेः समासः, अश्वेन युक्तो रथः अश्वरथः, वड़वारथः, वाहीकरथः इत्यादि इह यानेन रथादिना सह वाहीकस्य समासः। दध्ना पूर्णो घटः दधिघटः एवं धान्यकुशुलं, माषपेटकः, पादाभ्यां ह्रियते पादहारकः अयं नित्यसमासः।

(३०) कृत्यपदेनाऽत्र यकार एवेष्यते, प्रयुक्तत्वात् कृत्यैः सह कर्तृकरणे विहितायास्तृतीयायास्तत्पुरुषो भवति अधिकार्थोक्तौ गम्यमानायां स्तुतिनिन्दा निमित्तमध्यारोपितार्थवचनमधिकार्थोक्तिः, अतएव कृत्यैः स्तुतिनिन्दयोरिति सङ्क्षिप्तसारसूत्रं, श्वलेह्यः शुना लेह्यः अत्र पूर्णतोद्भावनात् स्तुतिः, निन्दार्थमारोप्यते अमात्रलेह्य इति। एवं काकपेया नदी, वाष्पक्षेयानि तृणानि मृदुतोद्भावनात् स्तुतिः, अयत्नक्षेयत्वे निन्दा। अन्ये तु क्वचित् स्तुतिं क्वचिन्निन्दामामनन्ति, तथाहि दन्तच्छेद्यं दधि, पाणिच्छेद्यं

प्रकृतीति किम्? रन्धनाय स्थाली ; अर्थेन सह नित्यसमासः सर्व्वलिङ्गता च वहुलानुवृत्त्या—विप्राय इदं, विप्रार्थं पयः, विप्रार्था याटी, विप्रार्थः पटः ; यक्षवलिः, गोहितं, गोरक्षितं, देवदेयं पुष्पं, वरप्रदेया कन्या। (३१)

३१। पञ्चमीभयाद्यैः।

[ पञ्चमी ०।१।, भयाद्यैः (भय-आद्य) ३।।। ]

भयादिभिः पञ्चम्यन्तं समस्यते। राज्ञोभयं राजभयं, वृकभीः, अश्वभीः, सितेतरः, ग्रामनिर्गतः, अधर्म्मजुगुप्सुः। अपेतापोढ़मुक्तपतितापत्रस्तैरल्पशः। सुखापेतः, कल्पनापोढ़ः, रोगमुक्तः, मञ्चपतितः, रणापत्रस्तः। अल्पशः इति किम्? प्रासादात् पतितः। स्तोकाऽन्तिक, दूरार्थ, कृच्छ्राणि क्तेन। पञ्चम्या

पयः सूचिभेद्यं तम इत्यादौ घनतायां स्तुतिरेव तथा दारुच्छेद्यः प्रस्तर इति निन्दा कठिनत्वं हि प्रस्तरस्य गुण इति श्रीपतिः, अधिकार्थोक्ताविति किम्? काकेन पेया, वडूलग्रहणात् वुभोपेन्द्यं, कृच्छ्रसाध्यं, घनघात्य-मित्यादावपि समास इति वर्द्धमानः। कर्त्तृरधिकार्थवचने (२।१।३३) इति पाणिनीयसूत्रं स्तुतिनिन्दाफलकमर्थवादवचनमधिकार्थवचनमिति सिद्धान्तकौमुदी। अतःपरं पाणिनिये "अन्नेन व्यञ्जनम्" (२।१।३४) दध्योदनः "भक्ष्येण" मिश्रीकरणं (२।१।३५) गुड़धाना इति सूत्रद्वय-मस्ति, सङ्क्षिप्तसारेऽपि भक्ष्येण संस्कारस्येति सूत्रान्तरमस्ति, पद्मनाभस्य दध्योदनादीनि चेत्येके इति वार्त्तिकवलादेव तेषां सिद्धिः।

(३१) यूपादेरुपादानकारणमिह प्रकृतिरुच्यते तथाच मीमांसा वार्त्तिककारः प्रकृत्या विकृतिर्यस्मात् चतुर्थ्यन्तात् समस्यते। तादर्थ्ये यूप-दार्व्वादि यथा कुण्डलकाञ्चनमिति। प्रकृत्या विकृतेस्तादर्थ्ये इति सङ्क्षिप्त-

अलुक्—स्तोकान्मुक्तः, अन्तिकादागतः, निकटादुपेतः, दूरादागतः, विप्रकृष्टादुपेतः, कृच्छ्रादवाप्तः। (३२)

---

सारसूत्रम्। रन्धनाय स्थालीत्यत्र तदर्थता विद्यत एव किन्तु न प्रकृतिविकृती। रन्धनस्थाली इति तु षष्ठीसमासः।

अर्थेनेति विभाषाधिकारेऽपि वाक्यमिह न सम्भवति नित्यत्वात्, परं लिङ्गं द्वन्द्वतत्पुरुषकर्मधारये इति नियमेऽपि वाच्यलिङ्गता, तत्रोपपत्तिमाह बाहुलकानुवृत्त्येति। अश्वघासः, रन्धनगृहं, माल्यशाला, क्रीड़ातड़ागः, शयनपर्य्यङ्कः, परिश्रमस्थली, * विश्रामगृहमित्यादौ षष्ठीसमास एव भाष्ये विहितः। हितसुखयोर्योगे चतुर्थ्यपि विषये षष्ठी च भवति तत् षष्ठीसमासेनैव सिद्धे हितसुखयोः पाठः स्पष्टार्थः, अथवा लोपविवक्षायामाशीरर्थे समासार्थमिदं प्रमादार्थं चाण्डाल सुखन्ते भूयादिति षष्ठीसमासविधाने तु तन्न सिध्यति लोपे षष्ठ्यां अलुग्विधानात्। वरप्रदेया कन्या, गुरुप्रदेयाधिकनिस्पृहोऽर्थी पितृदानमित्यादि प्रयोगदर्शनादेतदप्यादिपदेन संग्रहणीयम्। पद्मनाभेन देयशब्दोऽत्र सूत्रे गणितस्तस्य बलिरक्षितदेयेनेति च तादर्थ्ये विकारार्थे सम्प्रदानार्थे च वचनं देयेति किम्? विप्राय प्रदातव्यमित्यत्र नेति विष्णुमिश्रः। चतुर्थी तदर्थार्थबलिहितसुखरक्षितैरिति पाणिनीयसूत्रम्। ततश्च वार्त्तिकं अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्। इति अर्थशब्दस्य नित्यपुंस्त्वेन, परवल्लिङ्ग-

* क्वचित् प्रकृतिविकृत्यविवक्षायाञ्च इति सङ्क्षिप्तसारसूत्रम्। प्रकृतिविकृत्यविवक्षायाञ्च कुत्रापि तादर्थ्यमात्रे विहिताया चतुर्थ्याः पदान्तरेण समासो भवति। अश्वाय घासः अश्वघासः श्वश्र्वै श्वशुरः श्वश्रूश्वशुरः, केलये गृहं केलिगृहं। अश्वघासादयः षष्ठीसमास इति भाष्ये स्थितेऽपि वृत्तिकृताऽत्र चतुर्थीसमासो दर्शितः।

३२। षष्ठी। [षष्ठी १।]

षष्ठ्यन्तं सुपा सह समस्यते। राज्ञः पुरुषो राजपुरुषः। (३३)

मित्यस्य बाधायाश्च विशेष्यलिङ्गता चेति। एतदेवाऽन्यविधेयं ननु नित्यत्वं चतुर्थ्यव तदर्थस्योक्तत्वादिति तट्टीका।

३२। भय आदिभिः कतिपयैः शब्दैः पञ्चमी पञ्चम्यन्तं पदं समस्यते। सितेतरमन्तरेणोक्तोदाहरणेष्ववधिरपायादिष्वपादानं, सितेतरमित्यत्र तु अन्यार्थेति (१४।२।२) पञ्चमी, एवं च्यिष्यमाणमसितेतरभासा शुम्भुनेव कश्चिन्मं चकाशे 'इति भारविः।' भयाद्यैरित्याद्यशब्दात् परलोकभीतः, अपवादभीतः। द्वीपान्तरानीतलवङ्गपथ्यैरिति, सुखभ्रष्टः, शाखाच्युतः, वेदवहिष्कृतः, पापनिरतः, तज्ज्ञ्यः, तत्प्राप्तः, तदन्यः, तदन्तरं, त्वदन्य इत्यादि कामचारेणानुसर्त्तव्यम्। भयाद्यैरिति किम्? गुरोरध्येता, ग्रामाद् दूर मुक्ताद्यैः पञ्चम्या इति सङ्क्षिप्तसारसूत्रं तत्र मुक्ताद्या यथा मुक्त, इतर, अपेत, अपोढ़, पतित, अपत्रस्त, भीति, भीत, भी, निर्गत, जुगुप्सा इत्यादि, आदिपदेन अधर्म्मजुगुप्सुः, तदन्यः, स्वच्युतः, भास्वद्ग्रावोद्गत, वेदवहिष्कृत इत्यादयः समसनीया इति गोयीचन्द्रः। पञ्चमी भयेनेति (२।१।३७) पाणिनीयसूत्रं भय, भीत, भीति, भीति वाच्यम् इति वार्त्तिकम्, निर्गत जुगुप्सोपरतादीनामुपलक्षणं इति तट्टीका। अथेत अल्पश इति उक्तकर्म्मणः शस् एभिः सहाल्पविषया पञ्चमी समस्यते। तथा च वर्द्धमानः अल्पश इति समासस्याल्प विषयतामाचष्टे, तेन प्रासादात् पतितः महावेगात् मुक्तः इत्यादिषु वाक्यमेव, 'क्वचिन्न स्यात्' महाप्रसादात् पतितः, महाभोजनादपत्रस्त इति सङ्क्षिप्तसारम्। अपेतापोढ़मुक्तपतितापत्रस्तैरल्पश इति पाणिनीयसूत्रं (२।१।३८) अल्पमिति कानिचिदेव पञ्चम्यन्तानि समस्यन्ते न सर्व्वाणीति तट्टीका। स्तोकेति। अर्थशब्दस्य प्रत्येकसम्बन्धात् स्तोकार्थान्तिकार्थदूरार्थकृच्छ्रशब्दाः पञ्चम्यन्ताः

३३ । क्रीड़ा, जीविकयोर्नित्यं ।

[ क्रीड़ा, जीविकयोः ७।।, नित्यं ०२। ]

समस्यते । दमनकपुष्पभञ्जिका नाम क्रीड़ा, उद्यानपुष्प-भञ्जिका क्रीड़ा, जीविकायां—दन्तस्य लेखको दन्तलेखकः ।(३४)

३४ । न निर्द्धार्य्ये, पूरण, गुण, सुहितार्थाऽव्ययतव्य देशैः ।

[ न ०१।, निर्द्धार्य्ये, पूरण, गुण, सुहितार्थाव्ययतव्यादेशैः (सुहित-अर्थ, अव्यय, तव्य—आदेश) ३।।। ]

निर्द्धार्य्यार्थेन पूरणादिभिश्च षष्ठी न समस्यते । गवां कृष्णा सम्पन्ना क्षीरतमा, छात्राणां पञ्चमः, गुणेन प्रतिषेधो बहुलं पटस्य शुक्लत्वं, बलाकायाः शौक्ल्यं ; बाहुल्यात् तत्सामीप्यं ;

---

समस्यन्ते । पञ्चम्यास्तोकादिभ्यः तौ इत्यनेन पञ्चम्या अलुक् । यत्तु कृच्छ्रलब्ध-मपि लब्धवर्णभागिति, अत्र तु तृतीया समासः । स्तोकान्तिकदूरार्थ-कृच्छ्राणि क्तेन (२।१।३९) इति पाणिनीयसूत्रं । अत्र स्तोकार्थः अल्प-शब्द एव न तु लेशादय इति तट्टीका ।

(३३) षष्ठी तत्पुरुषोऽयं राजपुरुष इत्यत्र अन्तर्वर्त्तिनीं विभक्ति-माश्रित्य पदत्वान्नलोपः । अकरणादावशत्रादेः षष्ठ्याः इति सङ्क्षिप्त-सारसूत्रं तदर्थस्तु शत्रादान्तैः (शतृ आदि अन्तैः) शब्दैः करणाद्यन्यस्मि-न्नर्थे विहितायाः षष्ठ्यास्तत्पुरुषोभवति । पूर्व्वानुभूतस्मरणं, गुरुचरण-ध्यानमित्यादिषु तु सम्बन्धषष्ठ्याः समासः । एवमन्यत्रापि सम्बन्धविवक्षायां षष्ठीसमासोभवत्येव ।

(३४) क्रीड़ायां जीविकायाञ्च षष्ठ्यन्तं सुपा सह नित्यं समस्यते नित्यसमासत्वात् स्वपदे वाक्यं नास्ति । क्रीड़ायां जीविकायाञ्च गम्यमानायां

अधिकरणैतावत्त्वे च। वस्त्रपीतिमा, उदरगौरवं; द्रवकाठिण्यं, मुनिचापलं, चन्दनगन्धः, अङ्गस्पर्शः, नान्दीघोषः, फलरसः, कन्यारूपमित्यादि; फलानां सुहितः, फलानां तृप्तः, फलानामाशितः, अव्ययेन—कटस्य कृत्वा, लादेशेन—कटस्य कुर्व्वाणः कारकषष्ठी च न समस्यते। सर्पिषोज्ञानं, राज्ञां मतं, इदमेषामासितं, आश्चर्य्यो गवां दोहो ऽगोपालकेन, भवतः शायिका, भवत आसिका, तस्य कर्त्ता, ओदनस्य भोजकः। एषां सम्बन्धे षष्ठीसमासेन तु भवितव्यं सर्पिर्ज्ञानं, राजसम्मतः, इदमेतदासितं, गोदोहः, भवदासिका, तत्कर्त्ता, ओदनभोजकः, याजकादिभिः सह कारकषष्ठी च समस्यते। ब्राह्मणयाजकः, गुरुपूजकः, इहाऽपि भवति ब्राह्मणकर्त्तव्यं। इह कस्मान्न भवति राज्ञः श्रीमन्त्य धनं, सामानाधिकरण्ये, सम्बन्धाभावात्। ब्राह्मणस्योच्चै र्गृहमित्यत्र सापेक्षत्वान्न भवति। (२५)

---

णकान्तस्तृजन्तस्य याजकादिर्नित्यं भवति, यदि णकादित्वं प्रक्रान्तत्वाद्विधेयं स्यात् तदा लक्षणमनर्थकं स्यात् पूर्व्वयोगेनैव सिद्धत्वात्। नित्यग्रहणं वानुवृत्त्या प्राप्तस्य वाक्यस्य निरासार्थम्। पुष्पभञ्जिका, शालभञ्जिकेति कर्त्तरि णकः, चित्रलेखक इत्यत्रापि पूर्व्ववत्णकः। रमणीयकर्त्तेति नित्यं क्रीड़ा जीविकयोरिति समासः, इति वामनेनोक्तम् नित्यं क्रीड़ा जीविकयोरिति (२।२।१७) पाणिनीयसूत्रम्। तत्र क्रीड़ायां विकल्पे जीविकायां तृजकाभ्यां कर्त्तरीति च निषेधे च प्राप्ते वचनम्। इति सिद्धान्तकौमुदी।

(२५) समुदायादेकदेशस्य पृथक् करणं निर्द्धारणमित्यवधेयम्। गवां कृष्णेति वाक्ये निर्द्धारणमिति। (६४।२।२) षष्ठी, सम्पन्नक्षीरतमेति

न समासप्रयोजकं ; छात्राणां पञ्चम इति पञ्चानां पूरणः पञ्चमः इत्यत्र पूरणपदं पूरणप्रत्ययान्तपरं गुणेन प्रतिषेधोबहुलमिति गुणशब्दोऽत्र भावप्रत्ययपरः अतएव भावप्रत्ययान्तेनापि शौक्लादीनां प्रतिषेध इति वाच्यम्। पटस्य शुक्लत्वं बलाकायाः शौक्ल्यं इति दर्शयता वृत्तिकृतापि तदेवाविष्कृतम्। तन्स्थैर्गुणैः षष्ठी समस्यते, न तु तद्विशेषणैरिति भट्टवार्त्तिकं, अस्यार्थः केवलगुणवाचकैः शब्दैरेव षष्ठी समस्यते न तु तद्विशेषणैः। यथा चन्दनगन्धः गन्धादयो हि केवले गुणे वर्त्तन्ते न कदाचिद्गुणिनि। तथा च भट्टः न कदाचित् प्रयोगोऽस्ति चन्दनं गन्ध इत्ययं चन्दनस्यैव गन्धोहि, अप्रधानं प्रतीयते इति। ततः शौक्लादिशब्दोऽपि केवलंगुणवृत्तित्वात् समस्यते। यदाह भट्टः।—यदा गन्धादिभिस्तुल्यातेषामपि गुणस्थता। पटशौक्लादिवृत्तेन समासोऽपि तदेष्यते। तद्विशेषणैस्तु गुणिनि स्थितैः समासो न भवति। पटस्य शुक्लो गुण इत्यादौ यदाह भट्टः—कदाचित्तु प्रयोगोऽस्ति गोः शुक्लोगुण इत्ययम्। तैर्नैवमादिषु प्राप्तः समासो न विहन्यते। इति तत्र स्पर्शादिसापेक्षत्वात् समास इति वार्त्तिककारः, तत्र विशेष्यसापेक्षत्वे षष्ठी समासस्येष्टत्वात् यथा राजमन्त्रिणो ब्राह्मणाः, तपस्विशिष्यो मुनिरित्यादौ। बाहुल्यात् बुद्धिनैपुण्यं, बुद्धिवैशद्यं, पुरुषसामान्यं, अङ्गमार्दवं, शब्दलाघवं, करणपाटवम्, अर्थगौरवं, उदाहरणभूयस्त्वं, गगनमलिनिमा, शङ्खपाण्डुता, वदनसौरभं, शिलाश्यामलता, दन्तच्छदोऽरुणिमा, अन्यदपि शिष्टव्यवहारतोऽनुसरणीमम्। गुणविशेषणम्। अगन्धादिगुण इति संक्षिप्तसारसत्रद्वयं, न गुणैर्गुणिवृत्तेरसंख्ययेति श्रीपतिः अस्यार्थः गुणिवृत्तिगुणे वर्त्तमानैः सङ्ख्यावर्ज्जितैः समासो न भवति। पटस्य शुक्लः जलस्य शीतः असङ्ख्येति किम् ? गोविंशतिः। तथा निर्द्धार्य्येण गुणिनातिशये। अस्यार्थः अतिशये विवक्षिते निर्द्धारणीयेन गुणवचनेन सह निर्द्धारणविहिता षष्ठी समस्यते। सर्व्वेषामतिशयेन शुक्लं सर्व्वशुक्लं गवामतिशयेन कृष्णा 'गोकृष्णा', पुरुषाणामति-

प्रायेन उत्तमः पुरुषोत्तमः। किन्तु तद्धिताभिधेये अतिशये न स्यात् वस्त्रयोः श्वेततरं वस्त्राणां श्वेततरम्। न निर्द्धारणे, (२।२।१०) पूरणगुण सुहितार्थ-सदव्यय तव्य समानाधिकरणेनेति च (२।२।११) पाणिनीयसूत्रम्। प्रति-पदविधाना षष्ठी न समस्यते इति सिद्धान्तकौमुदी पदं पदं प्रति पदं सर्व्वेषु पदविशेषेषु न तु कृद्योगमात्रे विधानं यस्यास्तादृशी षष्ठी न समस्यते। इति तदर्थः यथा सर्पिषो ज्ञानम्। यस्मान्निर्द्धार्य्यते, यश्च निर्द्धार्य्यते, यश्च निर्द्धारणहेतुरेतत्त्रितय सन्निधाने सत्येव षष्ठी, तत्रैवाऽयं प्रतिषेधः। ततश्च पुरुषोत्तम इत्यादौ त्रितय सन्निधानाभावात् न निर्द्धा-रणविभक्तिः किन्तु सम्बन्धसामान्ये षष्ठीति समासः। कृलादिः शेष इति सूत्रे कृलामादिरिति षष्ठी समास इति मध्ये उक्तम्। गुणशब्देनेह न केवलगुणवाची, यश्च गुणवाची सन् गुणोपसर्ज्जनद्रव्यवाची, यश्च गुण-बोधकप्रकृतिकभावप्रत्ययान्तः तत् त्रितयमपि गृह्यते, व्याख्यानादिति सिद्धान्तकौमुदीटीका अधिकरणैतावत्व इति एतत् परिमाणमस्य एतावान् एतावतो भावः एतावत्वं अधिकरणस्य एतावत्वं तस्मिन्। सुहितस्तृप्त्यर्थः, तृतीयासमासः शब्दे च, स्वरे तु विशेषः। अव्ययेनेति अव्ययकृतेत्यर्थः। तथा च अव्ययकृदिति क्रमदीश्वरः सूचितवान् कटस्य कृत्वेति कर्म्मण एव विवक्षायां षष्ठी, । सा लक्ष्मीरुपकुरुते यया परेषामिति वत् सर्व्वपश्चात् प्रभृतिष्वव्ययनेति सूत्रयतोनेदं मतं सर्व्वेषां पश्चात् सर्व्वपश्चात् सर्व्वं पश्चात् कृते, कृते इति निमित्त-भावाऽव्ययं, यत्कृते विन्ध्यं गच्छामः समुद्रमतराम च। इह न स्यात् ब्रतेन तूष्णीं प्रजानां दिष्ट्या, ग्रीष्मस्य नक्तं, ग्रीष्मस्य दिवा, वृक्षस्याधः गिरेरुपरिष्टात् छात्रस्य पुरः, छात्रस्य पुरस्तात् छात्रोपकुम्भमित्या-दिष्वव्ययीभावस्यानव्ययत्वात् व्यावृत्त्यभावः अव्ययविशेषणत्वस्य सम मीहते न पूर्व्वात्तरसाहचर्य्यात् कृदव्ययमेव गृह्यते तेन तदुपरीत्यादि सिद्धमिति रक्षित इति सिद्धान्तकौमुदी। कारकषष्ठी च न समस्यते

इति सर्पिषोज्ञानमित्यत्र ज्ञातः कर्त्तृकर्म्मणोरिति कर्म्मणि षष्ठी (४६।२।२।) राज्ञां मतं · इदमेषामासितमित्यादौ क्तस्य वर्त्तमानाधारयोरिति षष्ठी, आश्चर्य्यं गवां दोहोऽगोपालकेनेत्यत्र पूर्व्वेण षष्ठी । कारकषष्ठीत्यस्याप-वादमाह याजकादिभिः सहेति आदिशब्दात् याजक, पूजक, परिचारक, परिषेचक, वेधक, स्नापक, अध्यापक, उत्साहक, उत्पादक, उद्वर्त्तक, होतृ, भर्त्तृ, रथगणक, पत्तिगणक इति याजकादयः । संक्षिप्तसारे वाचक, प्रयोजक, इन्त्परिवेष्टकशब्दा याजकादौ गणिताः । ननु कारक-षष्ठीसमासे निषिद्धेऽपि यदि सम्बन्धषष्ठीसमासो भविष्यति ततः कोवि-शेषः । शिष्टप्रयोगा बहवो दृश्यन्ते । यथा पुष्पेषु दारेषु यथेष्टं चेष्टतां जनः । वैदिकेषु च मार्गेषु विशेषोक्तिः प्रवर्त्तताम् । इति पाणिनिसूत्राणामन्वेष्टव्यमसौ यतः । जनिकर्त्तुरिति भूते तत्प्रयोजक इत्यपि कथं तर्हि जनिकर्त्तुरिति समासः वेदाङ्गं वेदवत् मन्त्रं कर्त्तव्यमिति पाणिनिः । ननु पूरण गुणेति सूत्रे तव्येन षष्ठी समासो निषिद्धो मुनिना तत्कथं पद्मनाभेन सूत्रे तव्यग्रहणं न कृतमिति न वाच्यम् वाक्यसमासयो-रिह स्वरविशेषाभावादिति इति कटाक्षयन्नाह, इहापि भवतीति । अत्र निषेध वैयर्थ्यात् ननु पाणिनीय सूत्रे समानाधिकरणेनेति यन्निषिद्धं तन् कथं नोच्यत इत्यत आह इह कस्मान्न भवति राज्ञः श्रीमन्तस्य धनमिति सिद्धान्तयति सामानाधिकरण्ये सम्बन्धाभावादिति धनसम्बन्धे समानाधि-करणयोः परस्पर मेकार्थत्वं नास्तीति निषेधवैयर्थ्यमिति भावः । याज-कादिभिश्चेति (२।२।६) इति पाणिनीय सूत्रं तदर्थस्तु एभिः षष्ठ्यन्तं सम-स्यते । तृजकाभ्यां कर्त्तरीत्यस्य (२।२।१५) इति निषेधसूत्रस्य प्रति प्रसवोऽयं, ब्राह्मणयाजकः, देवपूजकः, याजकादयः पूर्व्वमुक्ताः । गुणात्तरेण तरलोप-श्चेति वार्त्तिकं तरवत् यद्गुण वाचि तेन सह समासस्तरलोपश्च पूरणगुणे-त्यस्य प्रतिप्रसवोऽयं सर्व्वेषां श्वेततरः । कृद्योगा षष्ठी न समस्यते इति वाच्यमिति वार्त्तिकम् । तेन च पजार्थ (२।२।१२) गति बुद्धीति सूत्रेण

## ३५ । सप्तमी शौण्डादिभिः ।

[ सप्तमी ०१।, शौण्डादिभिः (शौण्ड-आदि) ३॥। ]

शौण्डादिभिः सप्तम्यन्तं समस्यते। अक्षेषु शौण्डः अक्षशौण्डः, अक्षधूर्त्तः, अक्षकितवः, रणपण्डितः, कार्य्यनिपुणः, काम्पिल्यसिद्धः, छायाशुष्कः, कुम्भीपाकः, चारकबन्धः, संज्ञायां वने किं शुलुक। सप्तम्या अलुक। (३६)

विहितो यः क्त-क्तदन्तेन षष्ठी न समस्यते। राजपूजित इत्यादौ तु भूते क्तान्तेन सह तृतीयान्तस्य समासः। अधिकरणवाचिना च (२।२।१३) क्तेन षष्ठी न समस्यते। तृजकाभ्यां कर्त्तरि (२।२।१५) कर्त्तर्यतृजकाभ्यां षष्ठ्या न समासः कर्त्तरि किम्? इक्षूणां भक्षमिक्षुभक्षिका पत्यर्थे भर्तृशब्दस्य याजकादित्वात् समासः भूभर्त्ता। कथन्तर्हि घटानां निर्म्मातुस्त्रिभुवनविधातुश्च कलह इति शेष षष्ठ्या समास इति कैयटः। कर्त्तरि च(२।२।१६) कर्त्तरि षष्ठ्याश्च क्तेन समासः। एतानि पाणिनीय सूत्राणि।

(३६) ननु कस्मिन्विहितायाः सप्तम्याः समासः उच्यते अधिकरण इति। ननु अधिकरण संज्ञेव कथं। सा हि संज्ञा क्रियापेक्षा च भवति, अत्र तु वाक्ये क्रिया न श्रूयते। उच्यते अस्त्येव प्रसक्तिक्रिया सातु समासान्तर्भूतेति न प्रयुज्यते। तस्मात् यत् साधनं तदधिकरणं तत्र सप्तमीति न दोषः। शौण्डादयो यथा सङ्क्षिप्तसारे शौण्ड, धूर्त्त, कितव, व्याड़, प्रवीण, संवीत, मध्यार्थान्तर्, अधि, पटु, पण्डित, कुशल, चपल, निपुण, सिद्ध, शुष्क, पक्क, बन्ध इत्यादि। शौण्डशब्दः सुरापवाची, उपचारादिहान्यत्रापि वर्त्तते। मध्यार्थान्तर् इति मध्यवाचकान्तर् इत्यर्थ। स च स्वभावादधिकरणार्थप्रधानः तत् सामान्याधिकरण्यमेव सप्तम्याः कारणम्। वने अन्तर् वनान्तर् वनमध्ये वसतीत्यर्थः। पूर्व्वपदार्थ-

৩৬। কৃত্যযতা নিয়মে। [কৃত্য—যতা ৩।, নিয়মে ৭।]

নিয়মার্থে কৃত্যযতা সহ সপ্তম্যন্তং সমস্যতে। মাসদেয়ং ঋণং, পূর্ব্বাহ্ণগেয়ং সাম। (৩৭)

প্রাধান্যে তু অব্যয়ীভাবসমাস এব অন্তর্বণং বনমধ্যবর্ত্তী বনব্যতিরিক্তো মধ্যভাগ উচ্যতে। তত্পুরুষে তু বনমেব মধ্যভূতমিত্যর্থঃ। অধিশব্দোঽত্র পঠ্যতে তস্যাপ্যধিকরণ প্রাধান্যেঽপ্যব্যয়ীভাবঃ অধিস্ত্রি আধেয়প্রাধান্যে তু তত্পুরুষঃ ব্রাহ্মণে অধি ব্রাহ্মণাধীন ইতি ব্রাহ্মণাধিশব্দঃ কেবলো ন প্রযুজ্যতে। গোয়ীচন্দ্রমতে দক্ষ, চতুর, সাহসিকা অপি শৌণ্ডাদিগণান্তর্ভূতাঃ সংজ্ঞায়াং অন্যেঽপি শব্দা শৌণ্ডাদ্যন্তর্ভূতাঃ যথা বনে কিংশুলুক ইতি হস্তিকর্ণ পলাশোঽত্র বনে কিংশুলুক ইয়োরিতি শব্দার্থঃ। এবং অরণ্যে তিলকাঃ, গবিষ্ঠিরঃ, যুধিষ্ঠির ইত্যাদি। শৌণ্ডাদিভিরিতি কিম্? বনে তিষ্ঠন্, রণে যুধ্যমানঃ। সপ্তমী শৌণ্ডৈরিতি (২।১।৪০) পাণিনীয় সূত্রং।

(৩৭) অবশ্যং করণং নিয়মঃ। মাস এব দেয় মিতি বিগ্রহঃ মাস ইত্যৌপশ্লেষিক মধিকরণং মাসেঽতীতে যোঽনন্তর দিবসঃ সমাসং প্রত্যুপশ্লিষ্টো ভবতি। অথবা ক্রিয়য়া তত্কাল লক্ষণাদিতি সপ্তমী। মাস সমাপ্তি দেয় ক্রিয়া কালোলক্ষ্যতে। কৃত্যেতিকিম্? অশ্বিন্যাং জাগর্ত্তা, যতেতিকিম্? পর্ব্বণি শ্রাব্যং, নিয়মঃ কিং নিশি হার্য্যং বিত্তং। ক্বচিদন্যত্রাপীতি সংক্ষিপ্তসার সূত্রং তদুদাহরণন্তু জন্মকৃতং, মাসকরণীয়ং দিবসকরণীয়ং। কৃত্যৈ-র্ঋণে (২।১।৪৩) ইতি পাণিনীয়সূত্রং *।

---

* কৃত্যৈরিতি যত্প্রত্যয়মাত্রং গৃহ্যতে ব্যাখ্যানত্বাত্ ঋণপদঞ্চাবশ্যকপরম্ ইতি টীকা।

३७। तत्राहोरात्रावयवाः क्तेन।

[ तत्राहोरात्रावयवाः (तत्र-अहोरात्र अवयव) १॥, क्तेन ३। ]

एते सप्तम्यन्ताः समस्यन्ते। तत्रेति ग्रहणसामर्थ्यात् सप्तम्या अलुक्। तत्रकृतं तस्येदं मित्यण् तात्रकृतं, अहोरात्रावयवाः पूर्व्वाह्णकृतं, मध्याह्नगीतं, पररात्रकृतं, अवयव इति किम्? अह्नि कृतं। (३८)

३८। पात्रे समितादयः। [पात्रे समित-(आदि) १॥, क्षेपे ७। ]

अमी शब्दाः क्षेपे समस्यन्ते। पात्रे समितः, पिण्डीशूरः, गेहे नर्दी, मातरि पुरुषः, तीर्थध्वांक्षः, तीर्थकाकः, उडुम्बर मशकः, प्रवाहे मूत्रितं, वने रुदित, भस्मनि हुतं। (३९)

(३८) अह्निकृतं रात्रौकृत मिति नात्राहोवायवाः रात्रावयवाश्च सन्ति किन्तर्हि कृत्स्नमहः कृत्स्ना रात्रिः। कथं तर्हि रात्रिकृतं रात्रिवृत्त मित्यादि अत्र कृता कर्त्तृकरणयोर्बहुलमिति तृतीयासमासः रात्र्या (करणेन) कृतमिति वाक्यं न तु सप्तमी समासः। दिनपक्वं दिनशुष्कं रात्रिसिद्धमित्यादौ शौण्डादित्वात् समासः। तत्रेत्यस्य सप्तम्यन्तस्य क्तेन सह समासो भवति। तत्र भुक्तं। सङ्क्षिप्तसारे, पाणिनौ च तत्रेत्यस्य पृथक् सूत्रे निर्द्दिष्टः।

(३९) क्षेपे निन्दायां पात्रे समितादयः समुदाया निपात्यन्ते। पात्र एव समिताः सङ्गता न पुनः * क्वचित् कार्य्ये, पात्रे बहुलाः उडुम्बरे मशका इव एकस्था अदृष्टविस्तारा उडुम्बर कृमिः, कूपे मण्डूक इव

* यथा उडुम्बर मध्ये मशका एकस्था एव नान्यत् किञ्चित् पश्यन्ति तथा यः पुरुषो-ऽदृष्टदेशान्तरः स उडुम्बर मशकादिपदैरुच्यते। प्रतिषिद्धसेवी यः प्रतिषिद्ध

## ३९ ।. कुगतिप्रादयोनित्यं अलं भूषणे ।

[ कुप्रादयः (कु-प्र—आदि) १।।।, नित्यं ०२।. अलं ०१।. भूषणे ७। ]

कुशब्दः, प्रादयश्च नित्यं समस्यन्ते । भूषणे अलं शब्दश्च ; नित्यसमासानां स्वपदविग्रहो नास्ति, पदान्तरेणार्थप्रदर्शनं । कुत्सितोनृपः कुनृपः, कोष्णं, प्रणतः, प्रणायकः, प्रकृत्य,

कूपमण्डूकः, कूपकच्छपः, प्रतिषिद्धसेवी मातरि पुरुषः, पिण्डीशूर गेहेनर्द्दी गेहेनर्त्ती, गेहेक्ष्वेड़ी गेहेविजितो, गेहेव्याड़ः, गेहेदृप्तः, गर्भेदृप्तः, गोष्ठे प्रगल्भः, गोष्ठे पटुः, गोष्ठेपण्डितः, गोष्ठेशूरः, गोष्ठेप्रवीणः, आखनिकवकः, गेहेमेहि, गेहेदाही, गेहेप्रगल्भः, कर्णेचिरिचिराः, कर्णेचुरचुराः । पात्रे समितादीनां समासान्तरं न भवति, परमाः पात्रे समिताः ; बहुब्रीहिस्तु भवत्येव बहुपात्रेसमिताः । इति संक्षिप्तसारसूत्रं । ध्वाङ्क्षेण क्षेपे (२।२। ४२) इति पाणिनीय सूत्रं ध्वाङ्क्षार्थेनेति संक्षिप्तसारसूत्रं पद्म-नाभेन तु, पात्रे समितादिषु गणितमेतत् तदर्थस्तु यथा ध्वाङ्क्षस्तीर्थे चिर मेकत्र न तिष्ठति तीर्थे कर्त्तव्ये तद्वदनवस्थित इत्यर्थः । अन्येतु तीर्थे ध्वाङ्क्षा यथा परप्रत्याशया कालं हरन्ति तथेत्याहुः ।

(४०) ननु परस्पर सम्बन्धार्थः पदसमूहो वाक्यं तस्यैव समासश्चेत्तदा न विकल्पापत्तिः अथ चेन्नास्ति वाक्यं परस्परसम्बद्धं तथापि न ज्ञायत इत्याह नित्येति नित्यसमासे स्वपदविग्रहो नास्ति पदान्तरेणार्थकथनं

---

भाययति स मातरि पुरुष उच्यते, मातरि पुरुषत्वं निषिद्धं तद्वदन्यस्य निषिद्धाचरणेण क्षेपोगम्यते । पिण्ड्यां एव शूरः अन्यत् किञ्चित् कर्त्तुमक्षमः । आखनिक वकः आख-निके खाते वक इव यथा वकः खात गतमेव भक्षयति नान्यत्र गच्छति तद्वदन्योऽपि यो गृहान्तिकमेव भक्षयति नान्यत्र गच्छति स उच्यते । एवं सर्व्वैरेव क्षेपो गम्यते गणपाठसामर्थ्यात् यथा पाठवशादलुगत्र द्रष्टव्यः बहुवचनान्तता च । तथा च हतस्तु पात्रे समितैरिति भट्टी । निष्फलं या क्रियते तदेव प्रकाशे सुचिन सुच्यते ।

विजित्य, दुष्कुलं, सुकृतं, सुमानुषी, अभिषुतं, आपिङ्गलं, अलंकृतः कुमार्य्या अलं कुमारिः, अलंकृत्य । प्रादयोगताद्यर्थे प्रथमया । प्रगतः प्रकृष्टो वा आचार्य्यः, प्राचार्य्यः प्रान्ते वासी प्रवासी । अत्यादयः क्रान्ताद्यर्थे द्वितीयया । अतिक्रान्तः खट्वां

प्रादीनामव्ययानां साहचर्य्यात् कुशब्दोऽप्यव्ययं गृह्यते न तु पृथ्वीवचनः । वाऽधिकारप्राप्तस्य विकल्पस्य बाधनार्थं नित्यग्रहणम् । कुत्सित इत्यर्थ-प्रदर्शनं न तु नियमः तेनेषदर्थे कोष्णमित्यादावपि नित्यसमासो भवति । तेन कुः पापषदर्थयोः समस्यते इति भावः । कुदेश इति विदूरदेश इति श्रीपतिः । प्रगत इत्यादौ क्रियाप्रकर्षः । दुष्कुलमिति दुर्निन्दायां कृच्छ्रे च । सुकृतमिति सुष्ठु कृतं सुकृतं एवं सुराजा, अतिराजा, सुपन्था, अति-पन्थाः, इति पूजायां अभिषुत मिति समन्तादर्थे, आपिङ्गल इति आङीषद-दर्थे, आङीषदर्थेऽभिव्याप्ताविति वर्द्धमानः प्राह । तथा अपशब्दः, दुष्पु-रुषः, दुर्ज्जनः, विपथं, दुष्पथं विमतस्यः, विवर्ण इति कुत्सायां, विदि-गिति रूढौ, अधिपतिः, अधीश्वरः, इत्याधिक्ये, उपमाता, उपबन्धुः, उपपतिरित्यसाचाद्भावे, उत्पथं, विहीनं, विप्रियं निराकुलं, निरुत्सुक-मिति नञर्थे, अभिनवं प्रतिनवं, व्याकुलं, समाकुलं विपाण्डु, विलीनं, समुत्सुकं, परिकृशं, परिपाण्डु, परिधूसरं, पर्य्याकुलमित्यतिशये, एव मन्यदपि शिष्टप्रयोगतो ज्ञातव्यम् । अलं कुमारि इत्यत्र गोस्त्रियोऽन्य-पदार्थे इति ह्रस्वः । कुगतिप्रादय इति पाणिनीयसूत्रम् (२।२।१८)

(४१) प्रादय इति—विरुद्धः पक्षः विपक्षः प्रतिपक्ष वचः प्रति-वचः, उपश्लिष्टः पतिः उपपतिः उपगतो नायकः उपनायकः, प्रतिवलो नायकः प्रतिनायकः, प्रादयो गताद्यर्थे प्रथमयेति वार्त्तिकम् प्रादेः क्तस्यादौ प्रथमयेति संक्षिप्तसारसूत्रम् । प्रगतः, प्रपतितः, प्रकृष्टो वा पुरुषः प्रपुरुषः ।

अति खट्वः । अवादयः क्रुष्टाद्यर्थे तृतीयया । अवक्रुष्टं कोकिलया अवकोकिलः, अवमयूरम् । पर्यादयोग्लानाद्यर्थे चतुर्थ्या । परिग्लानोऽध्ययनाय पर्य्यध्ययनः । निरादयः क्रान्ताद्यर्थे पञ्चम्या । निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः निर्व्वाराणसिः । सुब्विधिविषयाः प्रादयः प्रादौ नेष्यन्ते । (४०—४५)

(४२) अत्यादय इति अतिक्रान्तो नदीं अतिनदिः अतिकमण्डलुः, अतिभर्त्ता एष बहुव्रीहिश्चेत् कः स्यात्, अतिराजः अतिसमः, अतिगव इत्यत्र टीन स्यात्, अतिधर्म्म, अतिजाय इत्यत्र धर्म्मादश् जायायाजानिः स्यात् अधिरूढं ज्यां अधिज्यं, उद्गतोवेलां उद्वेलः, प्रतिगतः, अक्षं प्रत्यक्षः पटः अनुगतोलोमानि, अनुलोमः, अभिपन्नोमुखमभिमुखः। एषां क्रान्ताद्यर्थे वृत्तिः स्वाभाविकी । अत्यादयः क्रान्ताद्यर्थे द्वितीययेति वार्त्तिकम् । द्वितीयया अत्यादिः क्रान्तादौ इति संक्षिप्तसारसूत्रम् । ननु अतिवेलं इत्यादौ कथं ह्रस्वः अप्रधानस्यैव ह्रस्वोविहितः उत्तरपदप्रधानस्तत्पुरुष इति चेदुच्यते तस्य व्यभिचारोऽपि दृश्यते वस्तुतो योवेलामतिक्रान्तः स एवाऽत्र प्रधानम् । यद्येवं अतिवेल इत्यादौ बहुव्रीहिणाऽपि सिध्यति, अर्थभेदोऽपि नास्ति किमनेन लक्षणेन मैवं यदि बहुव्रीहिः स्यात् तदतिनदिरित्यादौ कादयः स्युरिति सर्व्वमवदातम् ।

(४३) अवादय इति आक्रुष्ट मिति सशब्दीकृतमित्यर्थः अवकोकिलं श्रूयते इति भावः सन्नद्धः वर्म्मणा संवर्म्मा सन्नत मशनेन समशनं अन्ये समशब्दस्य अशने परे अकारलोपं कृत्वा समशनमिति साधयति । परिणताः सम्वत्सरेण व्रीहयः, परिव्रीहि, अधिगतोऽक्षेण अध्यक्षोघटः, प्रतीतोऽक्षेण प्रत्यक्ष पदार्थः अक्षशब्दोऽकारान्तोऽस्तीति गोयीचन्द्र सुसङ्गतो वेलायां सुवेलः शैलः, अनुगत मर्थेन अन्वर्थं, सङ्गतमक्षेण समक्षं, वियुक्तमर्थेन व्यर्थमित्यादि एषां क्रुष्टाद्यर्थवृत्तिः स्वाभाविकी

## ४०। क्तना तदर्थोपपदं।

क्तना ३।, तदर्थोपदं (तत्-अर्थ-उपपद) ०१। ]

**कृदन्तेन तन्निमित्तोपदं नित्यं समस्यते। इदं समास**

---

अवादयः क्रुष्टाद्यर्थे तृतीयया इति पाणिनीयम् अवादिः क्रुष्टादौ। इति सङ्क्षिप्तसारसूत्रम्।

(४४) पर्य्यादय इति उद्युक्तः संत्रासाय उत्संत्रासः, परिग्लानो वचनाय परिवचनः, अलं कुमार्य्यै अलं कुमारिः अलं सुखः अलं गवे इत्यत्र नित्यत्वात् समासान्तो कृत्त्वं बाधते वक्रउदकवदिति श्रीपतिः एष्वर्थेषु तेषां स्वाभाविकीवृत्तिः,। पर्य्यादयो ग्लानाद्यर्थे चतुर्थ्या इति वार्त्तिकम्। चतुर्थ्या पर्य्यादिर्ग्लानादौ। इति सङ्क्षिप्तसारसूत्रम्। यद्यपि नित्यसमासोऽयं तथापि नमःस्वस्तीत्यादिना चतुर्थी विधान सूत्रे अलं पर्य्याप्तः, प्रभुरित्यलं शब्द पाठ सामर्थ्याच्चतुर्थ्यन्तवाक्यमपि पाक्षिकं भवति अलं कुमार्य्यै इति। अन्ये तु चतुर्थीसमास एव पाठफलं वर्णयन्ति।

(४५) निरादय इति एवं निर्व्वारितोऽपि उत्क्रान्ता, कुलात् उत्कुला, उद्गतो—वेलाया उद्वेलः समुद्रः, उत्क्रान्तं वचनं उत्सूत्रोन्यायः, उत्कृङ्कुलः, अपगतमर्यादपार्थं वचः, अपगतं शाखाया अपशाखं कर्म्म, विच्युतो यूथात् वियूथः। निरादयः क्रान्ताद्यर्थे पञ्चम्या। इति वार्त्तिकम्। पञ्चम्या निरादिः क्रान्तादौ इति सङ्क्षिप्तसारसूत्रम्। सर्व्वोऽयं बहुलप्रपञ्चः। इवेन सह सुवन्तं नित्यं समस्यते विभक्तिश्च न लुप्यते। इवेन समासे विभक्त्यलोपः पूर्व्वपदप्रकृतिस्वरत्वञ्चेति वार्त्तिकम्। समासमध्यपाति सुपोऽनेन लोपनिषेधः, समासान्तसुपस्तु अस्याव्ययत्वादेवलुगिति बोध्यम्। अग्निरिव वायुरिव केचिद्भाषायामिमं मन्यन्ते। निरादय

वचनं प्राक् सुबुत्पत्तेः । कुम्भं करोतीति कुम्भकारः, ग्रामणीः तदर्थेति किम्? कटं कुर्व्वाणः । (४६)

इत्यादिपदात् उत्क्रान्ताकूलादुत्कूला उदादिक्रान्ताद्यीत्यादिपदात् निर्गत-मङ्गुलिभ्यो निरङ्गुलमित्यादौ ग्राह्यम् ।

(४६) कृतेति कृदन्तेन धातुनेत्यर्थः तदर्थोपपदमिति तच्छब्दोऽत्र कृत् परामर्षकः । उपपदं समीपोच्चारित पदं । उपपदस्य पारिभाषिकं सूत्रं यथा तत्रोपपदं सप्तमीस्थम् (३।१।९२) इति पाणिनीयसूत्रं सप्तम्यन्ते पदे कर्म्मणीत्यादौ वाच्यत्वेन स्थितं कुम्भादितद्वाचकं पदमुपपद संज्ञं स्यात् । इति तदर्थः । तदर्थोपपदं तन्निमित्तोपपदमित्यर्थः । ननु माषकुम्भं वपता, माषकुम्भवापिणीत्यादौ प्रातिपदिकान्तनुमविभक्तीनामिति कथं णत्वं स्यात् अनाङ् पदव्यवाये चेति निषेधे प्राप्ते किञ्च प्रवापिणीत्यत्र प्रातिपदिकान्तत्वाभावात् कथं णत्वं स्यादित्यत आह—इदं समासवचनमिति इदं समासवचनं प्राक् सुबुत्पत्तेः प्रागिति कृदन्तात् चरमपदात् सुबुत्-पत्तेः पूर्व्वं समास इत्यर्थः । अत्र चरम पदादित्युक्तेः पूर्व्वपदे सुबुत्पत्ति रावश्यकीति ज्ञाप्यते, अन्यथा राजदर्शीत्यादौ नलोपाद्यनुपपत्तिः स्यादिति द्रष्टव्यम् । ततश्च सुबन्तमन्तरेण समासे पदत्वाभावान्नास्ति णत्वस्य निषेधः । परतस्तु सुपः प्राक् समासे प्रातिपदिकान्तत्वमस्त्येव, तथाहि शब्दोहि स्वार्थमभिधाय द्रव्यमभिधत्ते, ततो लिङ्गं ततः कर्म्मादीनि तदनु तद्गतां संख्यां, ततः सुबन्तोऽसाविति अभिधानक्रमे सुबपेक्षया लिङ्गाश्रितस्य ङी प्रत्ययस्यान्तरङ्गता, अविहिते तु सुपि कृते समासे प्रातिपदिकान्तत्वमस्त्येवेति कुतोणत्वाभाव इति । इदमपि प्रायिकं बहुल प्रपञ्चत्वात् । उपपदमतिङ् इति पाणिनीयसूत्रम् (२।२।१९) अतिङ्-ग्रहणं ज्ञापयति सुपेत्येतन्नेहानुवर्त्तत इति । तन्निमित्तोपपदस्य च । तन्नि-मित्तोपपदस्यासुबन्तस्य क्वचिदित्येके इति सङ्क्षिप्तसारसूत्रद्वयं । क्वचिदिति

## ४१ । अमैवाव्ययेन । [ अमा ३।, एव०१।, अव्ययेन ३। ]

अव्ययकृता यदुपपदं समस्यते तदमैव । स्वादुं कारं नान्येन अलंकृत्वा । (४७)

## ४२ । तृतीयादीनि वा क्त्वा च ।

[ तृतीयादीनि १।।।, वा ०१।, क्त्वा १०३।, च०१। ]

उपदंशस्तृतीयाया इत्यादीन्युपपदानि अमा क्त्वा च समस्यते । मूलकोपदंशं मूलकेनोपदंशं वा । उच्चैःकृत्य उच्चैःकृत्वा वा कथयति तृतीयादीनीति किम् ? खलुकृत्वा । (४८)

---

वचनात् शिष्टप्रयोगदर्शनेन व्यवस्था । पुनाराज इति राजादेष्टादेरिति टः समासविधानप्रयोजनम् । पुनर्गव इति गोरतद्धितलुकीति राजादित्वाट्टः । एवं पुनःशिल्पी अविनाभूतं, अविनाभावः, सह भावः । अन्यथोत्पत्तिः, सहाद्भुत; अध्वा गन्तव्योऽध्वगन्तव्य इत्यपि समसनीयम् इति गोयीचन्द्रः ।

(४७) अमैवेति पूर्व्वेण समासे सिद्धे पुनर्वचनं नियमार्थं अमैवाव्ययेन कृता उपपदं समस्यते नान्येन, क्त्वामान्तकृदव्ययं स्वादुं कारमिति स्वादु वचने चेति, यथा अलंकृत्वेति अलं खल्वोः प्रतिषेधयोरिति क्त्वा । अमैवाव्ययेनेति (२।२।२०) पाणिनीय सूत्रं तस्मिन्नुपपदे येन वाक्येन अम् विहितस्तदेवोपपदमव्ययेन सह समस्यते नान्यदित्यर्थः भूषणेऽलम् (१।४।६४) इति पाणिनीयसूत्रम् । भूषणे किम् अलङ्कृत्वौदनङ्कृतः पर्य्याप्त मित्यर्थः ।

(४८) तृतीयेति । उपदंशस्तृतीयायामित्यादीन्युपपदान्यमेनाऽव्ययेन वा सह समस्यन्ते ।

## ४२ । चिव्डाजूर्य्यादीनि च ।

[चिव्डाजूर्य्यादीनि (च्वि-डाच्-ऊरी-आदि) १।।।, च०१। ]

अतदर्थोपदार्थमिदं नित्यं कृतेति चानुवर्त्तते च्विडाच्प्रत्ययान्त ऊर्य्यादीनि च कृदन्तेन सह समस्यन्ते । च्वि शुक्लीकृत्य, डाच् पटपटाकृत्य, ऊर्य्यादि ऊरीकृत्य उररीकृत्य । ऊरी, उररी चाङ्गीकारे विस्तारे च । गुलु गुधा पीड़ार्थे, फुल फुलो विकारे च । ममसा हिंसार्थे । श्रौषट्, वौषट्, स्वाहा, स्वधा, प्रादुष्, आविष्, श्रत् पूजार्थे । सजुः सहार्थे कारिका शब्दश्च । कारिका कृत्येत्यादि । अनुकरणञ्चानिति परं । खट् कृत्य खटत्कृत्य अनिति परमिति किम् ? खड़िति कृत्वा निरष्ठीवत् । सदसती आदरानादरयोः । सत्कृत्य गुरुं असत् कृत्य खलान् गतः । अन्तर् ग्रहणे । अन्तर्हत्य स्थितश्चौरः । न ग्रहणे अन्तर्हत्वा वर्त्तिकां गतः श्येन गृहीत्वेत्यर्थः । कणेमनसी श्रद्धान्ते । कणेहत्य, मनोहत्य पिबति तृष्णान्तं यावदित्यर्थः । अस्तं पुरोऽव्ययौ । अस्तंगत्य, पुरोभूयः । अदोऽनुपदेशे । अदःकृत्य स्थितः, उपदेशे तु अदः कृत्वा गच्छतितिरोऽन्तर्द्धौ । तिरोभूयः स्थितश्चौरः । अन्तर्द्धौ किम् ? तिरोभूत्वा स्थितं

(४६) च्विडाजिति च्वि डाजिति नित्यं कृतेति चानुवर्त्तते । अधिकारस्येष्टविषयत्वात् पृथग्लक्षणकरणाद्वा च्वि डाचोः प्रत्ययत्वात् तदन्तौ गृह्येते इत्याह च्वि डाच् प्रत्ययाविति । शुक्लीकृत्येत्यत्र च्वि, पटपटाकृत्येत्र डाच् सर्व्वत्र एककर्त्तृकयोः पूर्व्वकाले इति क्त्वा, फुलफुलो ध्वस्तौ विस्तौ एते चत्वारो विकारे इति त्रिलोचनः फुलफुलीकृत्य विकारं प्राप्येत्यर्थः ।

काण्डं। कृञा वा ति स्कृत्य तिरस्कृत्वा वा साक्षादादीनि च। कृञा इत्येव साक्षात्कृत्य, साक्षात्कृत्वा वा। साक्षात्, मिथ्या, चिन्ता, भद्रा, लोचना, अमा, आस्था, नभम्, लवणं, उष्णं उदकं, आर्द्रं, लवणादेरमान्तोनिपातः। अग्नीवसे विकल्पने विहसने। एषां सप्तम्यन्तनिपातः। उपजेऽन्वाजे वलाधानार्थौ।, उरसि मनसि मध्ये पदे चानतिश्लेषे। उरसि कृत्य मन्त्रं शेते उरसि कृत्वा वा निवचने कृत्य निवचने कृत्वा वा तूष्णींकृत्वेत्यर्थः। अनतिश्लेष इति किम्? उरसि कृत्वा हस्तं शेते। नित्यंहस्ते पाणौ विवाहे। कृञा इत्येव हस्तेकृत्य कन्यां, पाणौ कृत्य। प्राध्वं वन्धे। वन्धार्थानुकूल्ये। प्राध्वंकृत्य कुटम्बं स्थितः, वन्ध इति किम्? प्राध्वं कृत्वा शकटं गतः। जीविकोपनिषद् वौपम्ये। जीविकाकृत्य, उपनिषत् कृत्य कथयति सदृशो कृत्वेत्यर्थः। अक्कगत्यर्थवदेः। अक्केत्यव्ययं आभीक्ष्णवृत्ति। गत्यर्थः वद्भिः कृदन्तैर्नित्यं समस्यते। अक्कगत्य, अक्कोद्य। (४८)

---

मसमसाहिंसार्थे इति मसमसा कृत्य हिंसित्वेत्यर्थः अत्र सकला, संसकला, ध्वंसकला, स्रंसकला, अलघ्वी, कोराली, पादाली, सेवाली मसमसा, कर्णमनसो एते दशहिंसायां अपरे तु सकलादयश्चत्वारः परिभवे, अलघ्यादयोऽपि चत्वारः प्राकाश्ये अन्तौ च द्वौ चर्णौ इत्याहुरिति त्रिलोचनः। अत्रैव पादाली स्थाने वादालीति क्रमदीश्वरः पठति। सजूः सहाय इति प्राद्व, आविस् प्राकाश्ये साक्षादादीनि गणे च पठ्यते कृञा सह विकल्पार्थं प्रादुष्कृत्य प्रादुष्कृत्वा वा प्रादुर्भूय, आविर्भूयेति नित्यम्। अनुकरणञ्चानिति परम् (१।४।६२) इति पाणिनीय सूत्रम्। आदरानादरयोः सदसतौ (१।६३) इति पाणिनीय सूत्रं आदरः प्रीतिः अनादरः

परिभव औदासीन्यम् अथादरे सदित्युक्तेऽपि तदनुरोधेनाऽसदित्यपि तद्विपरीतार्थं लभ्यते तत् किमनादरेऽसदित्यनेन कार्य्यं न च वक्तव्यं अब्राह्मणमानयेतिवत् प्रसक्तप्रतिषेधः स्यात् तदा असत्कृत्य गुरुमिति भवितु भव्यमसत्कृत्येति योग्यतयाऽसम्भवात् । आदरानादरयोरिति ' किम् ? सत्कृत्वा, असत्कृत्वा अत्रेमौ शोभनाशोभनार्थौ, विद्यमानाऽविद्यमानार्थौ वा । अन्तरपरिग्रहे इति (१।६५) ग्रहणार्थे तु अन्तर्हत्वा गतः, हतं परिगृह्य गत इत्यर्थः । कणे मनसी श्रद्धाप्रतिघाते ( १।४।६६) इति पाणिनेय सूत्रं कणे शब्दः सप्तमी प्रतिरूपकी निपातोऽभिलाषातिशये वर्त्तते । मनःशब्दोप्यत्रैव । कणेहत्य पयः पिवति, अतिशयेनाभिलष्ये तन्निवृत्तिपर्य्यन्तं पयः पिवतीत्यर्थः । आश्रद्धान्त इति किम् ? कणेहत्वा मनोहत्वा, अत्र कणे शब्दः सूक्ष्म तण्डुलावयवे अधिकरणे वर्त्तते । मनसि चेतसि । पुरोऽव्यय (१।४।६७) इति पाणिनीयसूत्रम् अस्तमिति (१।४।६८) अपि पाणिनीय सूत्रं पुरस्कृत्येति पुरोभूयः, पुरोगत्येत्याद्यप्युदाहरणं कृञ्योग एवेति नियमे मानाभावात् इति शब्देन्दुशेखरः । तुरासाहं पुरोधाय, पुरस्कृत्य शिखण्डिनमिति च ज्ञेयं, अव्ययादिति किम् ? अस्तं कृत्वा, क्षिप्तं कृत्वा, पुरं कृत्वा, प्रवाणि कृत्वा । अदोऽनुपदेशे (१।४।७०) इति पानिनीय सूत्रम् । अदः कृत्येति यदा स्वयमेव कृत्वा पर्य्यालोचयति तदेदमुदाहरणम् । परम्प्रत्युपदेशे अदः कृत्वाऽदःकुरु इति सिद्धान्तकौमुदी । तिरोऽन्तर्द्धौ । (१।४।७१) इति पाणिनीयसूत्रं अन्तर्द्धाविति किम् ? तिरोभूत्वा पार्श्वतोभूत्वेत्यर्थः । विभाषा कृञि (१।४।७२) इति पाणिनीय सूत्रं । माधवस्तु पराभवे तिरस्कारशब्दप्रयोगाद्धृति ग्रहणानुवृत्तिं नाङ्गीचकारेति मनोरमा । साक्षादादीनि चेति । च्व्यर्थे एवाभिधानं असाक्षात् साक्षात् कृत्वा साक्षात्कृत्वेति अर्थः । यदा तु साक्षाद्भूतस्य प्रत्यक्षगतस्य कश्चिदन्योविशेषः क्रियते तदा न स्यात्, एवं मिथ्यादीनामपि । तथाच । साक्षादादिरभूत तद्भाव इति माधवतं सूत्रं,

साक्षादित्यादि साक्षादपरोक्ष सादृश्ययोः। मिथ्यानृतत्वे। चिन्ता मानसव्यापारे। भद्रालोचनप्रशंसयोः। लोचनादौ, रेफादिपाठे प्रशंसायां, अमावद्धिः समवायः, सद्योग, सामर्थ्येषु। आस्था आदर प्रतिज्ञायांश्च। अच्छ निर्मलीकरणे। केचिदघस्तेति पठन्ति। तन्मते घस्लृ अदने इत्यस्य निष्ठान्तस्य नञ्समासे सत्वकारान्तनिपातः। तथा प्रजर्य्या, प्राजवह्ना, वीजर्य्या, वीजवन्नानामपि तथाहि सङ्गतार्थस्याजर्थ्य शब्दस्य प्रादिसमासे प्राजर्य्येति निपातः। नमसिति नत्यर्थे, अनन्तरं प्रादुस् आविस् शब्दो पठ्यते लवणमित्यादि लवणं कृत्यर्थे लवणं कृत्य, लवणं कृत्वा। उष्णमभिनवे उष्णं कृत्वा, उष्णं कृत्य ; शीतमनादरे शीतं कृत्य, शीतं कृत्वा, उदकं क्लेदे द्रवे च। उदकं कृत्य, उदकं कृत्वा। आर्द्रं सोदकाभिनवयोः आर्द्रं कृत्य आर्द्रं कृत्वा अमी तैक्ष्ण्ये वशे। स्वातन्त्र्ये। वशेकृत्य दशग्रीवमिति भट्टिः। विकल्पने प्रकल्पने च वैरूप्ये विहसने प्रहसने च उत्साहे सामर्थ्ये च तेन वृत्तावेतौ न क्तः। साक्षात् प्रभृतीनि चेति (१।४।७४) पाणिनीयसूत्रं। उपाजेऽन्वाजे (१।४।७४] इति पाणिनीय सूत्रं उपाजेकृत्य उपाजे कृत्वा, अन्वाजे कृत्य, अन्वाजे कृत्वा, दुर्बलस्य बलमाधायेत्यर्थः। अतिश्लेषः संयोगः। उरसिकृत्य, उरसिकृत्वा अभ्युपगम्येत्यर्थः। मनसिकृत्य, मनसिकृत्वा, निश्चित्येत्यर्थः। संयोगे-तु उरसिकृत्वा हस्तं शेते पदे कृत्वा शिरः शेते। अनत्याधाने उरसि मनसि (१।४।७५) मध्ये पदे निवचने च (१।४।७६) पाणिनीयसूत्रद्वयम्। नित्यं हस्ते पाणावुपयमने (१।४ ७७) स्वीकरणमुपलक्षणं तेन तां हस्ते कृत्य आश्वसीति भट्टिरिति विद्यामिश्रः। प्राध्वम्बन्धने (१।४।७८) इति पाणिनीय सूत्रं। प्राध्वं कृत्य बन्धनेनानुकूल्यं कृत्वेत्यर्थः। प्रार्थनादिनानुकूल्यकरणे प्राध्वं कृत्वा। प्राध्वं कृत्वा शकटं गत इति प्रगतोऽध्वानं प्राध्वं प्रादे रध्वन इति टः अध्वागमने गमनार्थमध्वाभिमुखं वा शकटं कृत्वा गत इत्यर्थः। जीविकोपनिषदा वौपम्ये (१।४।७९) जीविका जीवनोपायः

## ४२। विशेषणमेकार्थेन कर्म्मधारयो बहुलं।

[ विशेषणं ०१।, एकार्थेन (एक अर्थ) ३।, कर्म्मधारयः १।, बहुलं ०१। ]

विशेषणवाचि सुबन्तं विशिष्येनैकाधिकरणेन सह समस्यते। समासश्च कर्म्मधारयसंज्ञो भवति। नीलञ्च तत् उत्पलञ्चेति नीलोत्पलं, लसद्विषच्छेदः, इदं पुरुषः, इदं स्त्री, चतुर्व्वर्णाः, द्वीन्द्रिये, पूर्व्वाह्णः, अपराह्णः, प्रथमपुरुषः, चरम गिरिः, जघन्यनरः, समानदेशः, मध्यमपुरुषः, वीरपुरुषः, एकपत्नी, सर्व्वकालः, जरद्गवः, पुराणतरुः, नवान्नं, केवलान्नं, महापुरुषः, पापपुरुषः, श्रमणकभार्य्या। विशेषणेन च। शीतोष्णं, उष्णशीतं। सन्महत् परमोत्कृष्टाः पूज्यमानैः। सत्पुरुषः, महापुरुषः, परमपुरुषः, उत्कृष्टपुरुषः। पूज्यमानैरिति किम्? उत्कृष्टा गौः पङ्कात् बाहुल्यात् क्वचिन्नित्यं—कृष्णसर्पः, पञ्चाम्राः, सप्तर्षयः, क्वचित् वाक्यमेव—लोहितस्तक्षकः, विशेषण मिति किम्? तक्षकः सर्पः, वृक्षः शिंशपाः। शाकप्रधानादेः पार्थिवादौ मध्यपदलोपश्च। शाकप्रधानश्चासौ पार्थिवश्चेति शाकपार्थिवः, अजातौल्वलिः, दध्युपसिक्तश्चासौ ओदनश्चेति दध्योदनः गुड़मिश्रधानाः गुड़धानाः, तिलतण्डुलाः, विन्ध्यनामा गिरिः विन्ध्यगिरिः श्रीहर्षनृपतिः, करणकारकं, तर्कविद्या, व्याकरणशास्त्र-

---

उपनिषद्रहस्यं अनयोः स्वार्थपरित्यागात् सादृश्यमेवाऽर्थः पर्य्यवस्यतीत्याह। औपम्य इति किम्? नौविका कृत्वा तीर्थं गतः अच्छगत्यर्थवदेषु (१।४ ६८) इति पाणिनीय सूत्रम्। अदादेः कृत्वेति इति संक्षिप्तसार सूत्रम्।

मित्यादि। उपमानावधारणे। उपमानं विशेषणं। शङ्ख इव पाण्डरः शङ्खपाण्डरः, शस्त्रीश्यामाः, स्त्रियाः पुम्बत्वे-मृगचपला, काकवन्ध्या अवधारणे गुणएव, धनं गुणधनं सुहृद्वन्धुः। कृतादीन्यकृतादिभिः। कृतञ्च किञ्चिदकृतञ्च किञ्चित् कृताकृतं, अशितानशितं, हृतापहृतं, गतप्रत्यागतं, क्रयाक्रयिका, फलाफलिका, मानोन्मानिका। पूर्व्वकालप्रत्ययश्च। पूर्व्वं दग्धः पश्चात् प्ररूढ़ः दग्ध प्ररूढ़ः, स्नातानुलिप्तः, लिप्तवासितः। श्रेण्यादयः कृताद्यैश्च्व्यर्थे। अश्रेणयः श्रेणयः कृताः श्रेणीकृता, पूगकृताः, श्रेणि, पूग, भूत, कूट, पटु, मृदु, देव, श्रवण पण्डिताद्याः श्रेण्यादयः। कृत, भूत, मत, समाख्यात अवकल्पितादिः कृतादिः। कतरकतमौ जातिपरिप्रश्ने। कतरकठः, कतमकालापः। किं संज्ञाक्षेपयोः। किन्नरः, किंपुरुषः। आक्षेपे—किं राजा यो न रक्षति प्रजाः, किं पुत्री द्यौः शौल्यात्, किं गौरदोहवाह्यात्। वर्णो वर्णेन। श्वेतरक्तः, कृष्णलोहितः, स्पष्टार्थं बाहुल्येन विशेषणं प्रदर्शितं अथास्य परनिपातार्थं प्रपञ्चमाह(५०)।

---

(५०) द्विगु पर्य्यन्तं कर्म्मधारयाधिकारः। तत्पुरुषस्य विशेषोऽयं विशेष्यसमासाधिकरणं, तेन कर्म्मधारय इति संज्ञा कर्म्मणां धारय इति व्युत्पत्तिरिति पद्मनाभपञ्जिका। विशेषणं नाम सामान्याकारेण प्रवृत्त मनेकप्रकारवद्वस्तु प्रकारान्तरेभ्यो व्यवच्छिद्य एकस्मिन्नर्थे व्यवस्थापक मिति, विशेषणं (१) वक्तीति विशेषणवाचि सुबन्तं पदं विशेष्येण विशेष्य

(१) नीलोत्पलमित्यत्र यन्नीलमित्येतत् काककोकिलोत्पलादिगतत्वात् सामान्याकारेण सामान्यरूपतया प्रवृत्तं उत्पलमित्येतत् रक्तकषाय नीलाद्यनेकप्रकारवद् वस्तु नीलातिरिक्त प्रकारेभ्यो व्यवच्छिद्य एकत्र प्रकारे नीले व्यवस्थापयति इति भेदकं

वाचिना सुबन्तेनेत्यर्थः विशेष्यञ्च विशेषणभेद्यमिति परिशेषाल्लब्धं विशि-ष्यतेऽनेनेति विशेषणं विशिष्यते यत् तद्विशेष्यमित्युभयोर्व्युत्पत्तिः। सामानाधिकरण्यञ्च भिन्नप्रवृत्तिनिमित्तयोरेकस्मिन्नर्थे वृत्तिः अतएव नीलोत्पलमित्यत्र द्वयोर्गुणजात्योरुत्पलरूपद्रव्याश्रयत्वात् सामानाधि-करण्यम्। ननु नीलोत्पलमित्यत्र उत्पलमपि सामान्याकारेण प्रवृत्तं नीलमेतदनेकप्रकारवद्वस्तु प्रकारान्तरेभ्यो व्यवच्छिद्य एकत्र प्रकारे व्यव-स्थापयतीति विशेषणं स्यात् नीलन्तु विशेष्यं एवञ्च सति विशेषण विशेष्य-तानियमे नीलोत्पलमित्यत्र पूर्व्वनिपातानियमः स्यात्। अत्रोच्यते। लोके अप्रधानं विशेषणं प्रधानन्तु विशेष्यमिति व्यवहारः, नील शब्दो हि गुणवृत्त्या द्रव्ये वर्त्तमान इत्यप्रधानं उत्पल शब्दस्तु जातिवृत्त्या द्रव्ये वर्त्तमान इति प्रधानं यतो गुणः सत्येव द्रव्ये प्रवर्त्तते निवर्त्तते च अतो द्रव्यस्यानात्मभूतत्वादप्रधानं, जातिस्तु उत्पत्तेस्त्वाविनाशाद् द्रव्यं न त्यज-तीति द्रव्यस्यात्मभूतत्वात् प्रधानम्। एतच्च श्वेतं छागमालभेतेत्यत्र एवं व्यवस्थापितं तथाहि श्वेतगुणस्य छागस्याभावे वर्णान्तर युक्तोऽपि छाग आलभ्यते एव न तु श्वेतगुणयुक्तं द्रव्यान्तरं. वस्तुतस्तु अत्रेदं वोध्यं विशेष्यविशेषणभावे न यथेष्टता किन्तु शब्दस्वाभाव्यात् नियमानियमौ तथाहि गुणक्रिया जातिशब्द¹समभिव्याहारे जातेरेव विशेष्यता, यथा नीलोत्पलं, शुक्लवस्त्रं, पाचकब्राह्मण, इत्यादि नियमः, गुणशब्दयोः क्रियाशब्दयो गुणक्रियाशब्दयोश्च समभिव्याहारे तु न नियमः यथा खञ्ज कुब्जः, कुब्ज खञ्जः, पाचकपाठकः, पाठकपाचकः, खञ्जपाठकः, पाठ-कखञ्ज इत्यादि। एवं कुब्जकुष्ठः, कुष्ठकुब्ज इत्यादि। विशेषणं विशेष्येण

---

विशेषणं इतरेभ्यो व्यवच्छेदकत्वात् भेदकं एकत्र व्यवस्थापकत्वाद्विशेषणं। तेन विशे-षणेन भेद्यं प्रकारान्तरेभ्यो व्यवछिद्य एकत्र प्रकारे व्यवस्थापनीयं विशेष्यम्। सिद्धान्त-कौमुदीकारेण विशेषणविशेष्ययोर्यथाक्रमं भेदकभेद्ये इति संज्ञा कृता।

बहुलमिति (२।१।५७) पाणिनीय सूत्रम्। विशेषणञ्च विशेष्येः कर्म्मधारय इति संक्षिप्तसारसूत्रम्।

असंख्याश्चासौ विसच्छेदश्चेति, अथवा असञ्च तत् विसञ्चेति तस्य छेदः। अयञ्चासौ पुरुषश्चेति इदं पुरुषः एवं इयञ्चासौ स्त्री-चेति इदं स्त्री। संख्या च विशेषणं तत् समासः संज्ञायामसंज्ञायाञ्च पञ्चाम्रः सप्तर्षय इति संज्ञायां, चतुर्व्वर्णाः, द्वीन्द्रिये इत्यसंज्ञायां। एवं चतुर्द्दिगोष्यानवमन्ये ति। यत्तु चतुर्द्दिगिति समाहारे द्विगुरिति केनचित् समर्थितं तन्न सुन्दरम् समाहारानुपपत्तेः (१) बाहुल्यात् क्वचित् समासो न भवति रामो जामदग्न्यः, उत्तरा शाला दक्षिणः ब्राह्मण इत्यादि। पूर्व्वापर प्रथम चरम जघन्य समान मध्यम वीराश्चेति (२।१।५८) पाणि-नीय सुत्रं। पूर्व्वनिपात नियमार्थ मिदं। अपरास्यार्द्ध पश्चभावो वक्तव्यः अपरश्चासावर्द्धश्चेति पश्चार्द्धः कथमेकवीर इति बहुल ग्रहणादिति सिद्धान्त कौमुदी।

एकादीनाञ्चेति संक्षिप्तसारसूत्रम् एकादयश्च—एक, सर्व्व, जयत्, पूर्व्व, पुराण, नर, केवलाः। मध्य, मध्यम, वीराश्च समान, चरमापराः जघन्यः प्रथमश्चैकादयः पञ्चदश स्मृताः। पूर्व्वेनैव समासे सिद्धे वचनमेतत् एकशुक्लः, एकपण्डितः सर्व्वशुक्लः सर्व्वपण्डितः जयत्पाचक इत्यादौ पूर्व्व-निपातनियमार्थमिति गोयीचन्द्रः। सामान्यसूत्रेनेव सिद्धत्वात् पद्म-नाभेन न पृथक् सूत्रं कृतम्। किन्तु प्रथम पुरुष इत्यादुदाहरणेन सूचित इति। एकशब्दोऽत्र संख्याऽन्यासहाया द्वितीयेषु सर्व्वशब्दोऽत्र द्रव्यावयव प्रकार गुणकार्य्येषु एकपुरुषः, एकर्षभः, एकचौरः, एकधनुर्द्धरः, सर्व्व-शैलः, सर्व्वरात्रः, सर्व्वस्वं, सर्व्व श्वेत इति वर्द्धमानः।

(१) दिक् संख्ययोर्नाम्नीति संक्षिप्तसारसूत्रं दिग्वाचकानां संख्यावाचकानाञ्च सुबन्तेन सह संज्ञायां कर्म्मधारयो भवति संज्ञाप्रतीतेरत्र वाक्याभावः। विशेषणस्य विशेष्यैरित्यादिना सिद्धेऽपि नियमार्थं वचनं नियमस्य नाम्नि एव समासे न तु

## ४४ । उपमेयं व्याघ्रादिभिः श्रेष्ठार्थे । (५१)

[ उपमेयं १।, व्याघ्रादिभिः ३।।।, श्रेष्ठार्थे (श्रेष्ठ-अर्थे) ७। ]

श्रेष्ठार्थे व्याघ्रादिभिरुपमेयं समस्यते । पुरुषोऽयं व्याघ्र इव पुरुषव्याघ्रः, पुरुषसिंहः, बाहुलता, करपद्मं, स्त्रीविन्दारिका, मुनिकुञ्जरः, पुरुषनागः, श्रेष्ठार्थे इति किम् ? पुरुषोऽयं व्याघ्र इव शूरः । सामान्यप्रयोगोऽयं ।

(५१) वृन्दारक नागकुञ्जरैः पूज्यमानम् (२।१।६२) इति पाणिनीय-सूत्रम्· वृन्दारक शब्दो देवजाति वाची, नागशब्दो गजसर्पोभयवाची, कुञ्जर प्रसिद्ध स्तेषा मुपमानत्वेनैव पूर्ब्ववाचित्वाद्गतार्थत्वं तत् कथं सूत्र मिदं पृथक् कृतं इत्याशङ्क्याह सिद्धान्तकौमुदी व्याघ्रादेराकृति गणत्वादेव सिद्धे सामान्य प्रयोगार्थं वचनमिति पाणिनीये उपमिति व्याघ्रादिभिः सामान्यप्रयोगे । (२।१।५६) इति सूत्रान्तरमस्ति । साधारणधर्म्मस्या प्रयोगे उपमेयं व्याघ्रादिभिः सह समस्यते इति तदर्थः राजपुरुषः सुन्दर इति वत् विशेषण योग सम्भवात् । सामान्याप्रयोग इत्युक्तम् । अयञ्च समास उपमानोपमेययोः समान लिङ्गत्व एव भवति । विभिन्न लिङ्गत्वे मयूरव्यंसकादित्वात् समासः स च रूपकरूप इति शब्देन्दु । व्याघ्रादयो यथा—व्याघ्र, सिंह, ऋक्ष, ऋषभ, चन्दन, वृक, वृष, वराह, हस्तिन्, तरु, कुञ्जर, सर्प, पृषत्, पुण्डरीक, पलाश, कितव । इत्येते व्याघ्रादयः । सामान्यप्रयोगे किम् ? पुरुषो व्याघ्र इव शूरः । व्याघ्रादेस्तद्गुणस्तुल्यस्य ।

अनाम्नि । पूर्ब्बासु वर्षासुभवं पौर्ब्ववार्षिक मित्यादौ विशेषण समासो भवत्येव नहि पूर्ब्बपदस्य दिग्वाचित्वं किन्तु कालवाचित्वमेव । अनाम्नि नाऽयं समासः चतुर्दिगो-शानवमन्येत्यत्र चतुर्णां दिशां समाहारश्चतुर्दिशं तस्य ईश इति षष्ठीतत्पुरुषः । इति गोयीचन्द्रः तन्न सुन्दरं समाहारानुपपत्तेः किञ्च पञ्चपुरुष गामिन्य इति सिद्धार्थं क्कापि अनाम्नि अपि समासो भवतीति स्वयमुक्तत्वाच ।

४५। जातिः प्रशंसा वचनाद्यैः।

[ जातिः १।, प्रशंसावचनाद्यैः (प्रशंसा वचन-आद्य) ३।।। ]

एभिः सह जाति शब्दाः समस्यन्ते। गोमतल्लिका, गोमचर्चिका, अश्वप्रकाण्डं, विप्रोद्धः। आदिशब्दात् पोटा, युवति, स्तोक, कतिपय, गृष्टि, धेनु, वशा, वेहद्, वस्कयनी, प्रवक्तृ, श्रोत्रिय, अध्यापक, धूर्त्तः। गोपोटा, इभ्ययुवतिः, अग्निस्तोकः, घृतकतिपयः, गोगृष्टिः, गोधेनुः, गोवशा, गोवेहत्, गोवस्कयणी, कठप्रवक्ता, कठश्रोत्रियः, विप्राध्यापकः, वकधूर्त्तः, जातिरितिकिम् ? यज्ञदत्तोधूर्त्तः। (५२)

४६। निन्द्यं कितवादिभिः।

[ निन्द्यं ०१।, कितवादिभिः (कितव-आदि ३।।। ]

समस्यते। याज्ञिक कितवः, क्रातंदुर्दूढ़ः, वैयाकरणखसुचिः

सामान्यवाचिप्रयोगे न स्यात्। वृन्दारक नागकुञ्जरैः पूज्यमानस्येति सङ्क्षिप्तसारस्य सूत्रत्रयम्। पूज्यमानस्येति किम् ? चोनागो मूर्खत्वात्।

(५२) पोटा युवति स्तोक कतिपय गृष्टि धेनुवशा वेहद्वष्कयणी प्रवक्तृ श्रोत्रियाध्यापक धूर्त्तैर्जातिः (२।१।६५) प्रशंसा वचनैश्चेति पाणिनीय सूत्रद्वयम् प्रशंसावचनैश्चेति सूत्रे वचन ग्रहणं रूढ़िमात्रशब्दपरिग्रहार्थं तेन ये यौगिकाः प्रशस्त शोभन रमणीयादयः ये च विशेषवचनाः शुचि मृदादयः ये च गौण्या वृत्त्या प्रशंसां बोधयन्ति सिंहमाणवक इत्यादय स्ते सर्व्वं नुदस्यन्ते। प्रशंसावचनात्रूढ़िशब्दास्तु मतल्लिका, मचर्चिका, प्रकाण्डमुद्धतल्लजौ प्रशस्तवाचकान्य मून्युदाहरन्ति पञ्च वै।

মযূরব্যংসকঃ বিগতাবংসাবস্যেতি ব্যংসকঃ, ধূর্ত্তো বা। কাম্বোজমুণ্ডঃ, যবনমুণ্ডঃ। ৫৩

৪৭। চতুষ্পাদোগর্ভিণ্যা। [চতুষ্পাদঃ ১।।।, গর্ভিণ্যা ৩।]

চতুষ্পাদ্বাচিন এব গর্ভিণ্যা সমস্যন্তে। গোগর্ভিণী, অশ্বগর্ভিণী, জাতিরিত্যেব—কাণাক্ষী গর্ভিণী। (৫৪)

৪৮। যুবা, খলতি, পলিত, বলিন, জরতীভিঃ।

[যুবা ১।, খলতি—জরতীভিঃ ৩।।।]

খলত্যাদিভির্যুবা সমস্যতে। যুবখলতিঃ, যুবপলিতঃ

---

(৫৩) কুৎসিতানি কুৎসনৈঃ (২।১।৫৩) ইতি পাণিনীয় সূত্রম্। নিন্দাগর্ভস্তথানিন্দস্য ইতি সংক্ষিপ্তসারসূত্রম্। পাপাণকে কুৎসিতৈঃ। (২।১।৫৪) ইতি পাণিনীয়সূত্রান্তরম্। পাপাণকয়োঃ কুৎসিতৈরিতি মযূরব্যংসকাদয়শ্চেতি (২।১।৭২) ইতি নিপাত্যন্তে. মযূরীব্যংসকঃ মযূরব্যংসকঃ। ব্যংসকো ধূর্ত্তঃ, উদক্ চ অবাক্ চ উচ্চাবচম্। নিশ্চিতঞ্চ প্রচিতঞ্চ নিশ্চপ্রচম্, নাস্তি কিঞ্চন যস্য স অকিঞ্চনঃ। মযূরব্যংসকাদয়শ্চেতি সংক্ষিপ্তসারসূত্রম্। সমুদায়া এব নিপাত্যন্তে। মযূরব্যংসক ইত্যাদৌ ব্যংসকাদিপদানাং পূর্ব্বনিপাতে প্রাপ্তে পরনিপাতার্থপাঠঃ অংসসমাঘাতে চুরাদিঃ বিপূর্ব্বঃ, ব্যংসয়তি ছলয়তীতি বা ব্যংসকোধূর্ত্তঃ বিগতা বংসাবস্য ব্যংসক ইতি কশ্চিৎ, তত্রাক্ষরসো হশিক্ষতা সূচিতঃ। ইতি গোয়ীচন্দ্রঃ।

(৫৪) চতুষ্পাদো গর্ভিণ্যা (২।১।৭১) ইতি পাণিনীয়সূত্রম্। চতুষ্পাজ্জাতিরিতি বক্তব্যমিতি বার্ত্তিকম্। তেন নেহ-স্বস্তিমতী গর্ভিণী, স্বস্তিমতী, কাণাক্ষী, (কাণা) ইত্যাদয়োগবাদেঃ সংজ্ঞাবিশেষঃ ততশ্চ তে ন জাতিবাচকাঃ কিন্তু গুণবাচকা এব। গর্ভিণ্যা চতুষ্পাজ্জাতেরিতি

युववलिनः, इह सामानाधिकरण्यात् युवती जरती—पुम्बत्वे युवजरती । (५५)

## ४९ । कुमारः श्रमणादिभिः ।

[ कुमारः १।, श्रमणादिभिः (श्रमण-आदि) ३।।। ]

समस्यते । भिन्नलिङ्गत्वाल्लिङ्गविपरिणामः । कुमारी श्रमणा कुमारश्रमणा, कुमारभिक्षुकी, कुमारपण्डितः, श्रमणा, कुलटा, तापसी, भिक्षुकी, गर्भिणी, पण्डित, अध्यापक, पटु, मृदु, निपुणादि । (५६)

---

सङ्क्षिप्तसारसूत्रम् । चतुष्पादिति किम् ? ब्राह्मणी गर्भिणी यद्येवं तर्हि पशुपदं क्रियतां एवं सति शरभीगर्भिणीत्यत्रापि समासः स्यात् शरभी जातिरष्टपदी ।

(५५) युवा खलति पलित वलिन जरतीभिः (२।१।६७) इति पाणिनीयसूत्रम् पूर्वनिपातनियमार्थं सूत्रं लिङ्गविशिष्ट परिभाषया युवती शब्दोऽपि समस्यते इति सिद्धान्तकौमुदी । जरत् पलित खलति वलिनैर्युनः । इति सङ्क्षिप्तसारसूत्रम् । ननु जरच्छब्दः युवन् शब्दश्च सूत्रे पठितः । तत् कथं युवजरतीत्यत्र समासः । इत्यत आह प्रायोनामग्रहणे स्त्रीलिङ्गविशिष्टस्यापि ग्रहणम् । नाम्नो ग्रहणे उपादाने सति तस्यैव स्त्रीलिङ्गस्यापि ग्रहणं भवति । स्त्रीलिङ्गाते सूच्यते ऽनेनेति स्त्रीलिङ्गं स्त्रीप्रत्ययान्तं । प्रायो ग्रहणात् (क्वचित्) न भवत्यपि यथा अनडुह शब्दस्य स्त्रियां सौ नुम् न भवति । एवं सम्बोधने भवतीशब्दस्य भोः इति रूपं न भवति । तस्मात् प्रयोगदर्शनादर्शनाभ्यां प्रायिकत्वमूहनीयम् ।

(५६) श्रमणादिगणान्तर्भूतानां केषाञ्चित् स्त्रीत्वेन पाठः, केषाञ्चिच्च पुंस्त्वेन । ततश्च भिन्नलिङ्गतया कुमार शब्दस्य श्रमणादिभिः स्त्रीलिङ्गः

## ५० । कृत्यतुल्याख्या अजात्या ।

[ कृत्य, तुल्यार्थाः (तुल्य-अर्थ ) १ ।।।, अ (न) जात्या ३। ]

कृत्यान्तास्तुल्यसमानार्थाश्च अजातिवाचिना सुबन्तेन सह समस्यन्ते । भोज्यलवणं, पानीयोष्णं तुल्यश्वेतश्चन्द्रेन, सदृश महानिन्द्रेण अजात्येति किम् ? भोज्यओदनः विशेषण-समासोऽपि निषिद्धः । ( ५७ )

---

सह समासे लिङ्गविपरिवर्त्तनं कर्त्तव्यम् । इममेवार्थमाह भिन्नलिङ्गत्वा ल्लिङ्गविपरिणाम इति । कुमारः श्रमणादिभिः (२।१।७०) इति पाणिनीयसूत्रम् । सिद्धान्तकौमुदी टीकायां श्रमणादयो गणिता यथा श्रमणा, प्रव्रजिता, कुलटा, गर्भिणी, तापसी, दासी, बन्धकी, अध्यापक, अभिरूपक, पटु, मृदु, पण्डित, कुशल, चपल, निपुण इति । ततश्चात्रापि श्रमणादीनां भिन्नलिङ्गतया कुमारस्य लिङ्ग विपरिवर्त्तनस्यावश्यकत्व मस्ति । एतल्लिङ्गविवर्त्तन क्लेश परिजिहीर्षयैव सङ्क्षिप्तसार कृता सूत्रद्वयमवतारितम् । कुमार्य्याः श्रमणादिभिः । इत्येकं श्रमणादयश्च तन्मते श्रमणा, प्रव्रजिता, कुलटा, गर्भिणी, वन्धकी, दासी, तापसी । इति सप्त । द्वितीयञ्च । कुमारस्य मृद्वाद्यैः । मृद्वाद्याश्च मृदु, पटु, पण्डित, कुशलाध्यापक, निपुण, चपलाश्च अभिरूपश्चेत्यष्टौ कथिता मृद्वादयोनियताः ।

( ५७ ) कृत्यतुल्याख्या अजात्या (२।१।६८।) इति पाणिनीयसूत्रं कृत्यप्रत्ययान्तास्तुल्यवाचिनश्च जातिवाचकभिन्नेन समस्यन्ते इति तट्टिका । कृत्य उणादयः शब्दाः सर्वे गुणवचनाः तत्राऽसत्यप्यस्मिन् सूत्रे विशेषणं व्यादिना समासे कृते तेषां पूर्वनिपातः स्यात् अतोऽपूर्व्व निपातार्थोऽयमारम्भः । अतएवाह शीतपानीय उष्णपानीयादयोऽसाधव इति तुल्य महानित्यादौ सन्महदित्यादिना समासः प्राप्नोति, अपेक्षितविधित्वात्त-

५१ । यदृच्छादयश्च । [यदृच्छादयः १।।।, च०१ ।]

निपात्यन्ते । या इच्छा यदृच्छा, उच्चावचं, परमकृत्वा, उत्तम कृत्वा प्रोष्यपापीयान् । एहीहादयोऽन्यपदार्थे । इह एहीति यत्रोच्यते तत् एहीहं कर्म्म । अव्ययं कृता । प्रातर्दोहः, प्रातराशः, अवश्यकर्त्तव्यं । जहिजोडादयोऽभीक्ष्णं तद्वाक्यवादिनि । जहि-जोडमित्यभीक्ष्णमाह जहिजोडः, जहिस्तम्बः । आख्यातमा-ख्यातेन क्रियासात्यते । अश्नीत पिवतेति यत्रोच्यते सा क्रिया अश्नीतपिवता, पचतभृज्जता, खादतमोदतेत्यादि । ( ५८ )

५२ । द्विगुः संख्या तद्धितार्थे समाहारयोः ।

[ द्विगुः १।, संख्या, तद्धितार्थ ( तद्धित अर्थ ) समाहारयोः ७।। ]

तद्धितार्थविषये, समाहारे चाभिधेये एकार्थेन सुपा संख्यया सह समस्यते । समासश्च द्विगुसंज्ञोभवति । पञ्चसु कपालेषु संस्कृतः पञ्चकपालः सुपः । द्विगोरजादेर्लुगनपत्ये अणो-लुक् । पञ्चानां पुलानां समाहारः पञ्चपुली, पञ्चगवं । ( ५९ )

---

स्थानेन वाधः क्रियते इति सूचनार्थं तुल्यमहानित्युदाहृतम् । तस्य पुन-रतुल्यार्थेन समासः महापुरुष इति गोयीचन्द्रः ।

(५८) एहि वाणिज्येति यस्यां क्रियायां सा एहि वाणिज्या, अपेहि वाणिज्या, एहि स्वागता, भिन्द्धिलवणा, पचलवणा । आचितश्च पराचितश्च आचपराचं, आचितं उपचितश्च आचोपचं उच्चैश्च नीचैश्च उच्चनीचम् । अहमेव पुरुषोऽस्मीति सम्भावना अहोपुरुषिका निपातनाद्वृद्धिः । एवं अहं पूर्व्वं यस्यां क्रियायां सा अहंपूर्व्विका एवं अहंप्रथमिका, अह-महमिका ।

(५९) अर्थशब्दोऽत्र प्रयोजनवाची समाहारे इति तु वाच्ये सप्तमी ।

५२। अनेकमन्यार्थे बहुव्रीहिः।

[ अनेकं १', अन्यार्थे (अन्य-अर्थे) ७, बहुव्रीहिः १। ]

अनेकं सुबन्तमन्यपदार्थे समस्यते। समासश्च बहुव्रीहि-संज्ञः स्यात्। द्वितीयाद्यन्यपदार्थे इति विधानं आरूढ़ो वानरो

---

* एकाऽपीयं सप्तमी अर्थवशाद्विधा भिद्यते इति व्याचष्टे। तद्धितार्थविषये समाहारे चाभिधेये इति एकाऽनेन समानाधिकरणेन सामानाधिकरण्यं च भिन्नप्रवृत्तिनिमित्तयो रेकस्मिन्नर्थे वृत्तिः। पञ्चानां गवां समाहारः पञ्चगुरित्यनेन भाव्यं न तु पञ्चगवं इत्यनेन भाव्यं उच्यते समाहारो द्वन्द मेव तत्र तु तद्धितार्थे इत्यनेन सिद्धे यत् समाहार इति कृतं तद्द्वन्द्वे तद्धि-तार्थे समासनिराकरणार्थं अतोनाऽयं दोषः पञ्चगुरित्यतोनिरन्तरं तद्धितप्रत्ययो न स्यात्। एवमन्यत्रापि समाहारे तद्धितप्राप्तिः। मत्वर्थं तद्धितविषये द्विगुर्नेष्यते। भाष्यकारस्तु पञ्चानां राज्ञां समाहार इति पञ्चराजमिति भवति न तु पञ्चराजी। अतएवं पाचादौ पञ्चराजमिति वृत्तिकृदेव दर्शयिष्यति। ननु समाहारोऽनेकस्यैव भवति तत् कथं एका-पूपी इति द्विगुः। अर्थ एकस्यापि बहुत्वारोपात् समाहारः। ननु पञ्चपुलीमानयेत्यत्र कथं वाक्यसङ्कचः समाहारस्य धर्म्मस्य आनयना भावादिति चेदाह अत्रोपाचारवशाद्धर्म्मेण द्रव्याक्षेपः इति गोयीचन्द्रः।

तद्धितार्थे समाहारे द्विगुः संख्यायाः इति सङ्क्षिप्तसारसूत्रम्। तत्र उत्तरपदे चेति सूत्रान्तरमस्ति। तदर्थस्तु पृथग्योगकरणं पर सप्तमीय मिति विशेषार्थम्। उत्तरपदे च परे संख्यायाः सामान्याधिकरण्ये द्विगु र्भवति। समासे सर्व्वान्तपदमुत्तरपदमुच्यते यथा पञ्चगावो धनमस्येति प्रथमं त्रिभिः पदैर्बहुव्रीहिः पश्चाद्धन शब्दे उत्तर पदे परे पूर्व्वयोः पदयोर्द्विगुः तस्मिन् सति गोरतद्धितालुकीति राजादित्वाट्टः। अनेन

यं वृत्तं स आरूढ़वानरोवृक्षः, ऊढ़ोरथो येनाश्वेन स ऊढ़ोरथो-ऽश्वः, दत्तवलिर्दानवः, च्युतफलस्तरुः, सुसूक्ष्मजटकेशी व्रती, वहुमत्स्योदेशः। प्रथमार्थे तु न भवति। वृष्टे देवे गतोयः। समस्तस्याऽसमस्तेन नित्यापेक्षेण संहतिः। कमलेःसमकेश ते राज्ञा दत्तधनः स्वयं। (६०) अव्ययमस्तिनास्ति च समस्यते। अस्तिचीरा ब्राह्मणी, लेखको नास्ति, दीपकः। क्वचिदुक्तार्थ-त्वान्मध्यपदलोपश्च। कण्ठे स्थितः कालोयस्य कण्ठेकालः, उरसिलोमा, उष्ट्रमुखमिव मुखमस्य स उष्ट्रमुखः, काकजङ्घः केशसंघातश्चूड़ाऽस्येति केशचूड़ः, सूवर्णविकारोऽलङ्कारोऽस्य सुवर्णालङ्कारः। क्वचिद्वा। अपुत्रोऽविद्यमानपुत्रो वा, प्रपर्णः, प्रपतितपर्णः; क्वचित् समासो न स्यात्। पञ्चभिर्भुक्तमस्येति प्रपञ्चोऽयं वहुलानुवृत्तेः।

---

समासः व्यधिकारोऽपि नित्यएव यतो वाक्यश्रुतार्थमेव अधिकार उक्तः। तेन पञ्चगोधन मिति न भवतीति गोयाचन्द्रः। संख्यापूर्वोद्विगुरिति (२।१।५२) पाणिनीयसूत्रम्। अत्र संख्यापूर्वस्त्रिविधः तद्धितार्थ विषये उत्तरपदे च परतः समाहारे चेति वर्तिका।

(६०) अधिकृतत्वात् परस्परसम्बद्धार्थत्वे समासो भवत्येवेति स्थिते यदत्रानेकग्रहणं कृतं तेन खलु ज्ञाप्यते यदन्यत्राऽविशेषाद्द्विपद एव समास इह तु न तथानियमः। ननु चान्यार्थे पदे अन्यपदार्थे कथं वर्त्ततां न तावत् लक्षणया तस्याः पदमात्र वृत्तित्वात् इति चेत् सत्यं यानि पदानि वाच्ये विशेषणेन विशेष्यान्य पदार्थविषये वर्त्तन्ते तान्येव तथा च वृत्तिः तत्तद्विशेषणान्यन्यपदार्थस्य वाचकानि भवन्ति स्वभावात् अत एवा-र्थमर्थः सम्बध्यते सामर्थ्यात् समस्यमानाभ्यां समस्यमानेभ्यश्च पदेभ्योऽन्यस्

## ५४। अव्ययासन्नादूराधिक संख्याः संख्यया संख्येये।

[ अव्ययासन्नादूराधिक संख्याः (अव्यय आसन्न अदूर अधिक संख्या) १।।। ] संख्यया ३।, संख्येये ७। ]

संख्येयवाचिन्या संख्यया सह अव्ययादयः समस्यन्ते अतः प्रथमार्थे। दशानां समीपे ये ते उपदशाः, आसन्नविंशाः, अधिक दशाः द्वौ वा त्रयो वा द्वमे द्वित्राः, त्रिचतुराः, पञ्चषाः, ।

## ५५। दिगदिशा दिश्यन्तरस्यां।

[ दिग् ०१।, दिशा ३।, दिशि ७।, अन्तरस्यां ७। ]

सङ्ख्यायां दिशि वाच्यायां दिग्वाचिसुवन्तं दिग्वाचिना सुवन्तेन सह समस्यते। पूर्व्वस्याश्च दक्षिणस्याश्च दिशोमध्ये या दिक् सा पूर्व्वदक्षिणा, दक्षिणपश्चिमा।

---

पदस्यार्थे यो वर्त्तते स बहुब्रीहिरिति। ननु बहुब्रीहेरत्यन्तरङ्गत्वात् कथं न कर्म्मधारयेऽन्तर्भावः विशेषणविशेष्यभावस्य सत्त्वात् इत्याशङ्क्याह विशेषण विशेष्य भावे सत्यन्य पदार्थ प्राधान्ये बहुब्रीहिरुत्तरपदार्थप्राधान्ये कर्म्मधारय इति तथ चैकस्योभयप्राप्तौ बहुब्रीहिरेव स्यात् न कर्म्मधारयः यथा वीरपुरुषो ग्रामः बहुपयः सरः। शेषो बहुब्रीहिः। (२।२।२३) अनेकमन्यपदार्थे (२।२।२४) इति पाणिनीय सूत्रद्वयं। अर्थस्तु अनेकं प्रथमान्तमन्यपदार्थे वर्त्तमानं वा समस्यते, स बहुब्रीहिः। अप्रथमा विभक्त्यर्थे बहुब्रीहिरिति समानाधिकरणानामिति च फलितं। अस्य टीका फलितमाहाप्रथमाविभक्त्यर्थे इति प्रथमाभिन्नाया द्वितीयादि विभक्तेरर्थे इत्यर्थः। पदेन हि प्रत्ययार्थोपसर्ज्जनः क्रियाकारकभावादिरूपः सम्बन्धो विभक्त्यर्थो प्राधान्येन बोध्यतेऽतस्तस्यैव बहुब्रीह्यर्थत्वे बहुब्रीहिनिष्पन्नपदेन देवदत्तादि पदानां सामानाधिकरण्यानुपपत्तिरतस्तद्वारणाय

**५६। तेषु तैश्च युद्धमिति स्वरूपे।**

[ तेषु ७।, तैः ३।।।, च०।१।, युद्धं ०।१।, इति ०।१।, स्वरूपे ७। ]

सप्तम्यन्ते तृतीयान्ते च समानरूपे द्वे पदे समस्यते। इति शब्दो लौकिकविवक्षार्थः। केशेषु केशेषु गृहीत्वा युद्धमिदं वृत्तं केशाकेशि, दण्डैश्च दण्डैश्च प्रहृत्य युद्धमिदं वृत्तं दण्डादण्डि, युद्धमुपलक्षणं तेन जल्पाजल्पि प्रवादिनां, कर्णाकर्णि भूतं।

**५७। सह तेन वर्त्तते।** [ सह०।१।, तेन ३।, वर्त्तते तिङ्।

सहशब्दस्तृतीयान्तेन सह समस्यते। वर्त्तनश्चेत्। पुत्रेण सह वर्त्तते सपुत्रः, सविद्यः, सदर्पः।

तत्तद्विभक्त्यर्थाच्छिन्नसम्बन्धान्तर्भावेणैव शक्तिकल्पनमिति बोध्यम्। एवञ्च चित्रा गावो यस्येति विग्रहवाक्येन चित्राभिन्नानां गवां प्राधान्येन बोधनेऽपि समासे विशेषणविशेष्यभावस्यासत्त्वेनैव शिष्टानां व्यवहारात् यथोक्तं हरिणा समासतद्धितकृतां यत्किञ्चिदुपदर्शकम्। गुणप्रधानभावे च तत्र दृष्टं विपर्य्यय इति समासे शक्तिरक्तैव शक्तिस्तत्पद्यते यथोक्तं हरिणा समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवदिति समानाधिकरणप्रथमान्तपदघटितत्वे सति अन्यपदार्थबोधकत्वं बहुब्रीहित्वमितिमिति फलितम्। अन्यपदार्थो बहुब्रीहिः। द्वितीयाद्यन्यपदार्थो इत्याचर्य्याः। ननु राज्ञादत्तं धनमस्मै इति दत्तधन इत्यत्र गुणीभूतास्यान्यपदार्थे वर्त्तमानस्य दत्तशब्दस्य कथं राज्ञेत्यनेन सह सङ्गतिरितिहृदि निधाय सिद्धान्तमाह समस्तस्येत्यादिना नित्यापेक्षताच कारकाणां क्रियापेक्षया सम्बन्धिशब्दानाञ्च सम्बन्ध्यन्तरापेक्षया। एवं मुद्गरस्य प्रहारेण रथात् पतितसारथि रित्यादौ सङ्गतिर्द्रष्टव्या।

५८। चार्थे द्वन्द्वः। [चार्थे (च-अर्थे) ७।, द्वन्द्वः १।]

अनेकमित्येव, चार्थो बहवः तत्र समाहारेतरेतरयोगयोः सामर्थ्यादनेकं सुबन्तं समस्यते। समासश्च द्वन्द्वसंज्ञकः स्यात्। संहतिप्रधान्योहि समाहारः। वाक् च त्वक् च वाक्त्वचं पीठच्छत्रोपानहं। संहन्यमानप्राधान्य इतरेतरयोगः। कृष्णार्जुनौ, धवखदिरपलाशाः। समुच्चयान्वाचययोरसामर्थ्यान्नास्ति समासः। समुच्चये एकत्रानेकप्रचये—गामश्वं, पुरुषं, पशुमहरहर्नयमानो वैवस्वतस्तृप्तिं नोपयाति, यस्मिन् काले गामानयति तस्मिन् कालेऽश्वं न नयतीतिभिन्नकालत्वादसामर्थ्यं। अन्वाचये—मुख्यसिद्धावप्रधाननिष्पत्तौ—वटोभिक्षामट, यदि पश्यसि गाञ्चानयेति। (६३)

---

(६१) तेषु तेनेति तृतीयासप्तम्यन्तयोः सरूपयोर्युद्धे क्रियाव्यतिहारे। इति संक्षिप्तसारसूत्रम्। असरूपयोस्तु हस्तैश्च मुषलैश्च प्रहृत्य इदं युद्धं वृत्तमिति जूमरः। उक्तेतरक्रियाव्यतीहारे च न भवति रथैं च रथे च स्थित्वा इदं युद्धं वृत्तम्। युद्ध इति किम्? हस्ते च हस्ते च गृहीत्वा इदं संख्यम्। इति गोयीचन्द्रः।

(६२) सह तेनेति तृतीयान्तेन सहस्य तुल्ययोगे। इति संक्षिप्तसार सूत्रं। अतुल्ययोगे सहैव दशभिः पुत्रैर्भारं वहति गर्द्दभी, विद्यमानेषु दशसु पुत्रेष्वित्यर्थः, विद्यमानौ पक्षावस्य सपक्षः, सधर्म्मा, सलोमकः, सदर्पः, सकर्म्मक इत्यादौ त्वन्यपदार्थो बहुव्रीहिरिति समासः। इति जूमरः।

(६३) चार्थे इति समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः। परस्परनिरपेक्षस्यानेकस्य एकस्मिन् अन्वयः समुच्चयः। अन्यतरस्याप्यानु-

५९। प्रथमा पूर्व्वं समासे।

[ प्रथमा ०१।, पूर्व्वं ०१।, समासे ७।। ]

समाससूत्रे प्रथमानिर्द्दिष्टं यत् पदं, तत् पदं पूर्व्वं निपतति। अधिस्त्रि, राजपुरुषः। (६४)

६०। राजदन्तादिषु परं।

[ राजदन्तादिषु (राजदन्त-आदि) ७।।।, परं ०१। ]

एषु प्रथमान्तं पदं परं निपतति। दन्तानां राजा—राजदन्तः, अन्तर्वणं, अग्रेवणं, आदौ वासितं ततोलिप्तं—लिप्तवासितं, नग्नमुषितं, सपत्नीमाता। द्वन्द्वे—पुष्यापुनर्वसू, स्वातीचित्रे, भार्य्यापती।

जायाया जम्भावोदम्भावश्च। जम्पती, दम्पती, जायापती।

---

पङ्क्तिकत्वे चान्वाचयः। मिलितानामन्वय इतरेतरयोगः। समूहः समाहारः। परस्पर निरपेक्षस्येति एकस्य क्रियान्वयोत्तरमपरस्यान्वत्रा तदन्वय इति न तयोः परस्पराकाङ्क्षा। समुच्चयोदाहरणं यथा ईशं भजस्व गुरुञ्च, अन्वाचयस्योदाहरणं भिक्षामट यदि पश्यसि गाञ्चानयेति एतयोरसामर्थ्यात् एकार्थीभावाऽभावान्न समासः। नचेतरान्वये परस्पर निरपेक्षाणामेकार्थी भावसम्भाव्यते, येन समुच्चयान्वाचयावेकार्थीभावेऽनाभवति ततश्चेतरेतरयोगे समाहारे च साहित्यस्य सत्त्वादेकार्थीभावः। इयांस्तु विशेषः इतरेतरयोगे साहित्यं विशेषणं द्रव्यं विशेष्यं समाहारे तु साहित्यं प्रधानं द्रव्यं विशेषणमिति।

(६४) उपसर्ज्जनं पूर्व्वम्। ( २।२।३० ) इति पाणिनीयसूत्रं। समासे प्रथमानिर्द्दिष्टं उपसर्ज्जनं, उपसर्ज्जनं प्राक् प्रयोज्यमिति तदर्थः।

धर्म्मार्थादिषूभयम् । धर्म्मार्थौ, अर्थधर्मौ, शब्दार्थौ, अर्थशब्दौ, कामार्थौ, अर्थकामौ, चन्द्रार्कौ, अर्कचन्द्रौ, अन्तादी, आद्यन्तौ सर्पिर्मधुनी, मधुसर्पिषी, गुणवृद्धी, वृद्धिगुणौ, इन्द्राग्नी, अग्नीन्द्रौ । (६५)

६१ । द्वन्द्वे घ्यन्त मजाद्यजन्त मल्पाज्लघ्वक्षरमभ्यर्हितं यथोत्तरं ।

[ द्वन्द्वे ७।, घ्यन्त ( वि ध्यन्त) अजाद्यजन्तं (अच्-आदि, अच् अन्त) ०१।, अल्पाच् (अल्प-अच्) ०१।, लघ्वक्षरं (लघु-अक्षर) ०१।, अभ्यर्हितं ०१।, यथोत्तरं ०२। ]

द्वन्द्वे घ्यन्तादि यथोत्तरं पूर्व्वं निपतति । हरिहरौ, सिन्धुशैलौ, बहुष्वेकत्र नियमः पटुशुक्लमृदवः, अजाद्यजन्तं—इन्द्रवायू, अल्पाच्—धवाश्वकर्णं, कुशकाशं, अभ्यर्हितं—युधिष्ठिरार्ज्जुनौ, मातापितरौ ।

६२ । ऋतु, नक्षत्र, वर्ण, संख्याः क्रमेण ।

[ ऋतु, संख्याः १।।।, क्रमेण ३। ]

ऋत्वादयः क्रमेण पूर्व्वं निपतन्ति । हेमन्तशिशिरवसन्ताः, भरणीकृत्तिकारोहिण्यः, ब्राह्मणक्षत्रियविट्शूद्राः, पञ्चषट्, संख्याया अल्पीय—एकादश द्वादश ; प्रायिकं सर्व्वमेतत् व्यभि-

(६५) राजदन्तादिषु परिमिति पाणिनीयसंक्षिप्तसार सूत्रे । यत्र शिष्टप्रयोगे पूर्व्वनिपातव्यभिचारो दृश्यते तद्राजदन्तादिषु द्रष्टव्यम् । तेन वनस्याग्रे अग्रेवणं, राज्ञीणां गवाः गवराज्ञं कण्ठे श्रीर्यस्य स श्रीकण्ठः, अमुलोमः लोलापः, वायस्य वारः वारवायः, अन्तरं गृहं गृहान्तरं, अन्तर शब्दोऽन्यार्थः एवं तत्पुरुषान्तरं, श्रीभाविदिनं तस्मात् परं परश्च इत्यादि । गोयीचन्द्रः

चारदर्शनात्—उदूखलमुषले, चित्ररथबाह्लीकौ, अग्निभुवं, द्वारगवं, शरद्ग्रीष्मवसन्तेषु प्रायशोदधिगर्हितं, शूद्रविट्क्षत्रियविप्रगणां, काशकुशावलम्बनं, नरनारायणावित्यादिविपर्य्ययदर्शनं। (६६)

६३। बहुव्रीहौ सप्तमी, निष्ठा, विशेषणान्यदण्डहस्तादिषु।

[बहुव्रीहौ ७।, सप्तमी, निष्ठा, विशेषणानि १।।।, अदण्डहस्तादिषु (न-दण्डहस्त आदि) ७।।।]

बहुव्रीहौ सप्तम्यन्तादि पूर्व्वं निपतति। कण्ठेकालः, कण्ठेगडुः, गडुकण्ठः गडूपलक्षितः कण्ठोऽस्येति विग्रहे। निष्ठा—कृतकटः, प्राप्तोदकः, विशेषणं—चित्रगुः; सर्व्वनाम संख्या च विशेषणे—सर्व्वश्वेतः, त्रिगम्भीरः, सप्तरक्तः, अदण्डहस्तादिष्विति किम्? दण्डहस्तः, दण्डपाणिः, गदापाणिः। जाति, काल, सुखादिभ्यः, क्तः परः। जातेः—शारङ्गजग्धी, पलाण्डुभक्षितः, कृतजग्धः; कालात्—मासिजातोऽस्य मासजातः, वर्षप्रमितः, सुखादेः—सुखजातः, सुखहीनः, क्षतजातः। (६७)

६४। वाहिताग्न्यादिषु।

[वा ०।, आहिताग्न्यादिषु (आहित—अग्नि—आदि) ७।।।]

एषु निष्ठादिकं पूर्व्वं वा स्यात्। आहिताग्निः, अग्न्याहितः,

---

(६६) ऋतूनां अनुपूर्व्व्यं प्रादुर्भावकृतं, नक्षत्राणामुदयकृतमिति बोध्यम्।

(६७) सप्तम्यन्तस्यात्र कर्त्राद्यन्वयद्वारेण क्रियान्वयात् विशेषणमिति ज्ञापयति।

उद्यतासिः, असुद्यतः, जातपुत्रः, पुत्रजातः, जातदन्तः, दन्तजातः, जातश्मश्रुः, श्मश्रुजातः, पीतघृतः, घृतपीतः, ऊढ़भार्य्यः, भार्य्योढ़ः, गूढ़प्रियः, प्रियगूढ़ः । (क्वचिन्न विवृतासिः)

६५ । कड़ारादीनि कर्म्मधारये ।

[ कड़ारादीनि १।।।, कर्म्मधारये ७।।। ]

कड़ारादीनि शब्दरूपाणि कर्म्मधारये पूर्व्वं वा निपतन्ति । कड़ारजैमिनिः, जैमिनिकड़ारः, गड़ुलकाणः, काणगड़ुलः खञ्जकुब्जः, कुब्जखञ्जः, खलतिखोड़ः, खोड़खलतिः, गौरवृद्धः, वृद्धगौरः, श्वेतकृष्णः, कृष्णश्वेत इत्यादि । (६८)

६६ । सरूपाणामेकशेषो द्वन्द्वे ।

[ सरूपाणां ६।।।, एकशेषः १।, द्वन्द्वे ७। ]

द्वन्द्वे तुल्यरूपाणामेकोऽवशिष्यते । घटश्च घटश्च घटौ घटाः । सरूपग्रहणात् भिन्नार्थानाञ्च माषाः श्रीहिमानमूर्खाः, पादारश्मशृङ्गितुर्य्यांशाः । एकार्थानां भिन्नरूपानां क्वचिदेकशेषोवक्तव्यः—घटश्च कुम्भश्च घटौ, द्वन्द्व इति किम् ? केशाकेशि ।

६७ । वृद्धोयूना तल्लक्षणे स्त्रीपुम्वच्च ।

[ वृद्धः १।, यूना ३।, तल्लक्षणे (तत्-लक्षण) ७।, स्त्री ०१।, पुम्वत् ०१। च १। ]

यूना सहोक्तौ वृद्धः शिष्यते । स्त्री च पुम्वद्भवति । वृद्धयुवतद्धितप्रत्यये तल्लक्षणश्चेत् गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ गार्गी च—गार्ग्यायणश्च गार्ग्यौ, नेह गार्ग्यवात्स्यायनौ ।

---

(६८) कड़ार, गडुल, खञ्ज, घोड़, काण, कुण्ठ, खलति, गौर, वृद्ध, भिक्षुक, पिङ्ग, पिङ्गल, तनु, जठर, वधिर, मठर, कब्ज, वर्व्वर कड़ारादयः ।

६८। पुमान् स्त्रिया। [पुमान् १।, स्त्रिया ३। ]

स्त्रिया सहोक्तौ पुमान् शिष्यते। तल्लक्षणश्चेत्—देवश्च देवी च देवौ, ब्राह्मणौ, कुक्कुटौ, गौः स्त्री, गौर्नां गावौ शिवश्च शिवा च शिवौ।

६९। स्वसा भ्राता। पुत्रो दुहित्रा।

[ स्वसा ३।, भ्राता १। ; पुत्रः १।, दुहित्रा ३। ]

स्वसृदुहितृभ्यां सहोक्तौ भ्रातृपुत्रौ शिष्येते। भ्राताच स्वसाच भ्रातरौ, पुत्रश्च दुहिता च पुत्रौ।

७०। तदादिः सर्व्वैस्तत्र च परं।

[ तदादिः ( तद्-आदि ) १।, सर्व्वैः ३।, तत्र ७।, च०१।, परं ०१।]

सर्व्वैस्तदादिभिरन्यैश्च सहोक्तौ तदादिः शिष्यते। तत्र तदादौ च परं॥ स च विप्रश्च तौ, यश्च कश्च कौ, सच त्वञ्च युवां, स च त्वञ्च अहञ्च वयं।

७१। अनेक शफग्राम्य पशु संघेऽतरुणे स्त्री।

[ अनेक ( न-एक ) शफ-ग्राम्यपशु संघे ७।, अतरुणे ७।, स्त्री ०१।]

अतरुणानामनेकशफग्राम्यपशूनां संघे सहोक्तौ स्त्री शिष्यते गाव इमाः, अजा इमा, अनेक शफ इति किम्? अश्वा इमे, गर्द्दभा इमे अतरुण इति किम्? वत्सा इमे, वर्क्करा इमे। ग्राम्येति किम्? कुरङ्गा इमे।

७२। अक्लीवेन स्वरूपेण क्लीवमस्यैक वचनवच्च वा।

[अ (न) क्लीवेन ३।, स्वरूपेण ३।, क्लीवं ०१।, अस्य ६।, एकवचनवत् ०१। च ०१। वा०१। ]

समानरूपेणाऽक्लीवेन सहोक्तौ क्लीवं शिष्यते। अस्यैक

वचनं वा स्यात्। शुक्लः पटः, शुक्ला शाटी, शुक्लं वस्त्रं, तानि इमानि शुक्लानि, तदिदं शुक्लं वा। १

७३। मातृश्वश्रूभ्यां वा पितृश्वशुरौ।

[ मातृश्वश्रूभ्यां ३॥, वा ०१।, पितृश्वशुरौ १॥ ]

मातृश्वश्रूभ्यां सहोक्तौ पितृश्वशुरौ वा शिष्यते। मातापितरौ, पितरौ। श्वश्रूश्वशुरौ, श्वशुरौ वा।

७४। परं लिङ्गं द्वन्द्व, तत्पुरुष, कर्म्मधारये।

[ परं ०१।, लिङ्गं ०१।, द्वन्द्व—धारये ७। ]

द्वन्द्वादिषु परं लिङ्गं स्यात्। कुक्कुटमयूरौ, मयूरी कुक्कुटौ।

७५। पूर्व्वमश्ववड़वयोः।

[ पूर्व्वं ०१।, अश्व, वड़वयोः ६॥ ]

असमाहारे अश्ववड़वयोः पूर्व्वं लिङ्गं स्यात्। अश्ववड़वौ।

७६। अन्यवत् प्राप्तापन्नालं प्रादि पूर्व्वे तत्पुरुषे।

[ अन्यवत् ०१।, प्राप्तापन्ना (प्राप्त-आपन्न-अलं) १।, प्रादि (प्र-आदि) पूर्व्वे ७।, तत्पुरुषे ७। ]

प्राप्तादिपूर्व्वे तत्पुरुषे वाच्यलिङ्गं स्यात्। प्राप्तजीविकः, आपन्नसुखः, अलं कुमारिः, निष्कौशाम्बिः, प्रतिगतोऽक्षि प्रत्यक्षः पटः।

७७। पथः संख्याव्ययात् क्लीवे।

[ पथः १। संख्याव्ययात् (संख्या-अव्यय) ५।, क्लीवे ७। ]

कृतसमासान्तः पथः संख्याव्ययात् परः क्लीवे स्यात्।

तत्र संख्यापूर्व्वकोऽद्विगुः। त्रिपथं, अपथं, विपथं, कथं दुरध्वो विपथः कदध्वा कापथ इति। व्यवस्थितविभाषानुवृत्तेः नान्यपदार्थे अपथोदेशः।

७८। संज्ञायां षष्ठ्याः कन्थोशीनरेषु।

[ संज्ञायां ७।, षष्ठ्याः ५।, कन्था०१।, उशीनरेषु (उशीनर) ७।।। ]

उशीनराभिधाने षष्ठ्यन्तात् परा कन्था क्लीबे स्यात्। सौशमिकन्थं।

७९। उपज्ञोपक्रमौ तदादित्वकथने।

[ उपज्ञोपक्रमौ (उपज्ञ उपक्रम) १॥, तदादित्व-(तत्-आदित्व)—कथने ७। ]

षष्ठीतत्पुरुषेऽमू क्लीबे स्यातां। तयोरादित्वकथनञ्चेत्। पाणिनोपज्ञमकालकं व्याकरणं, चान्द्रोपज्ञमसंज्ञकं नन्दोपक्रमाणि नामानि।

८०। सभेश्वराऽमनुष्यार्थादराज्ञः।

[ सभेश्वरामनुष्यार्थात् (सभा-ईश्वर-अ (न) मनुष्यर्थात् (मनुष्य-अर्थ) ५।, अराज्ञः ५। ]

ईश्वरार्थादमनुष्यार्थाच्च षष्ठ्यन्तात् परा सभा क्लीवे स्यात्। ईश्वरसभं, इनसभं, राक्षससभं, पिशाचसभं अराज्ञ इति किम्? राजसभा कथं नृपतिसभामगमत् इति नृपत्युपलक्षित सभेति शाकपार्थिवादित्वात्। अमनुष्यार्थादिति किम्? नरसभा अमनुष्यरक्षः पिशाचादयः तेन देवसभेति।

८१। अशालाच। [ अ (न) शाला १।, च०१। ]

अशालार्था च सभा क्लीवे स्यात्। स्त्रीसभं, गोपीसभं तत्समूह इत्यर्थः अशाला किम्? धर्म्मसभा धर्म्मशालेत्यर्थः।

८२। छाया बहुत्वे वाऽन्यत्र ।

[ छाया० १।, बहुत्वे ७।, वा०११, अन्यत्र ७। ]

षष्ठीसमासे बहुत्वे छाया क्लीवं स्यात् । शलभानां छायाः शलभच्छायं, बहुत्वादन्यत्र वा—वृक्षच्छायं, वृक्षच्छाया वा । (६९)

८३। सेना, शाला, सुरा, निशाः ।

[ सेना—निशाः १।।। ]

एताः षष्ठ्यन्तात् पराः क्लीवे वा स्युः । शत्रुसेनं, शत्रुसेना वा ; गोशालं, गोशाला वा ; यवसुरं, यवसुरा वा ; श्वनिशं श्वनिशा वा ।

८४। पुंस्यह्नोरात्रश्चाऽगणात् ।

[ पुंसि ७।, अह्नः १।, रात्रः १।, च०११, अ (न) गणात् । ५। ]

अह्नः पुंसि स्यात् । पूर्व्वाह्णः, पराह्णः ; रात्रश्चाऽगणात्—अहो रात्राविमौ पुण्यौ, पश्चिमरात्रः, गणात् क्लीवे—गणरात्रं । (७०)

---

(६९) छाया बाहुल्ये इति पाणिनीयसूत्रम् (२।४।२२) छायान्तस्तत्पुरुषो नपुंसकं स्यात् पूर्व्वपदार्थबाहुल्ये । इक्षूणां छाया, इक्षुच्छायं । इक्षुच्छायानिषादिन्य इत्यत्र तु आसमन्तान्निषादिन्य इति आङ् प्रश्लेषो बोध्यः इति सिद्धान्तकौमुदी । मल्लिनाथस्तु इक्षुच्छायनिषादिन्य इति पठति, तेन हि इक्षुच्छायानिषादिन्य इति पाठस्य तु इक्षोः छाया इति विग्रहः, अन्यथा बहुत्वे नपुंसकत्वप्रसङ्गादिति स्त्रीत्वमेव समर्थितम् । अन्तस्थित एव छायाशब्दः क्लीवं भवति । अनन्तस्थितस्तु न, छायातरव इति गोयीचन्द्रः ।

(७०) अहरात्र इत्येतयोः कृतसमासान्तयोः ग्रहणं, 'संख्यापूर्व्वं रात्रं क्लीव' मिति वार्त्तिकम् । द्विरात्रं, त्रिरात्रं । संक्षिप्तसारमते द्विर'

८५ । अह्नोऽसुदिनपुण्यात् ।

[ अह्नः १', अ (न) सुदिन, पुण्यात् ५। ]

अह्नः पुंसि स्यात् । त्र्यहः, द्व्यहः, एकाहः ; सुदिन पुण्यात् क्लीवे —सुदिनाहं, पुण्याहं ।

८६ । अर्द्धर्चादयः क्लीवे च ।

[ अर्द्धर्चादयः (अर्द्ध-ऋच् आदि) १।।।, क्लीवे ७।, च०१। ]

क्लीवे, पुंसि च अर्द्धर्चादयः स्युः । अर्द्धर्चं, अर्द्धर्चः ; शतमानं, शतमानः ; अष्टापदं, अष्टापदः इत्यादि ; असमासे च—यूथं, यूथः ; कर्म्म, कर्म्मा इत्यादयः । (७१)

---

त्रिरात्रः इति पुंस्येव भवति । रात्राह्नादयः पुंसीति संक्षिप्तसारसूत्रं । अहोरात्रः, द्विरात्रः, त्रिरात्रः इत्यादीन्युदाहरणानि । द्वयोः रात्र्योः समाहार इति द्विगुः, ततोऽत्समासान्तः स्त्रीद्विगुरदन्त इत्यनेन स्त्रीत्वे प्राप्ते विधानमिति गोयीचन्द्रः । एतत्त वार्त्तिकविरुद्धं । रात्रेः पूर्व्वभागः पूर्व्वरात्रः ।

(७१) अर्द्धर्चादीनां गणना यथा—अर्द्धर्च, कार्षापण, गोमय, सरक, चषक, सौधू, सचक, शङ्ख, पद्म, गृह, दिवस, चक्रवाक, कर्म्म, धर्म्म, मोदक, मान, विमान, नलिन, मलिन, अलीन, खलीन, चरण, सुवर्ण, वर्ण, वक्र, वज्र, छत्र, पवित्र, मार, घृत, सैन्धव, औषध, आढ़क, द्रोण, वारवाण, कवच, वेण दिङ्मात्रमिदं लिङ्गन्तु लोकतएव ज्ञेयमिति अमरः । अर्द्धर्चाः पुंसि च (२।४।३१) इति पाणिनीयसूत्रं, गणपाठे अर्द्धर्चादिषु— कूतप, कपाट, यूथ, ध्वज, कबन्ध, कंस, यूप, अन्धकार, दण्ड, भूत, दीप, द्यूत, प्रभृतयोऽन्येऽपि बहवः शब्दाः सन्निवेशिताः । एषां केषाञ्चिदर्थभेदेन लिङ्गव्यवस्था शास्त्रकारैरादृता । यथा मधुशब्दस्य मकरन्दादिवाचकत्वे द्विलिङ्गता, चैत्रवाचित्वे पुंस्त्वमेव इति ।

८७। अव्ययीभावश्च। [ अव्ययीभावः १।, च०।। ]

क्लीवे स्यात्। अधिस्त्रि। क्रियाविशेषणं कर्म्म च, नपुंसकञ्च। साधु भवानास्तां।

८८। क्लीवमेकं समाहारे।

[ क्लीवं ०१।, एकं ०१।, समाहारे ७। ]

समाहारे द्विगुर्द्वन्द्वश्च क्लीवमेकवचनं स्यात्। त्रिखट्वं, त्रिपात्रं, द्विपात्रं, द्विनदं, पञ्चगोदावरं, अश्ववडवं, काष्ठशूद्रं, वाक्त्वचं; कथं विदिभिदिछिदेरिति पुंस्त्वं सूत्रे लिङ्गवचनमतन्त्रमिति। *

८९। द्वन्द्वोऽनुवादे चरणानां स्थेणोर्लुङि।

[ द्वन्द्वः १।, अनुवादे ७।, चरणानां ६।।।, स्थेणोः (स्था-इण्) ६।।, लुङि ७। ]

चरणानामनुवादविषये स्थेणोर्लुङि प्रयोगे द्वन्द्वः क्लीवमेकं स्यात्। उदगात् कठकालापं; प्रतष्ठात् कठकौथुमं; चरणः शाखा तद्वान् विप्रश्च। अनुवाद इति किम्? उदगुः कठकालापाः।

* परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः।२।४।२६ इति पाणिनीय सूत्रं एतयोः पर पदस्यैव लिङ्गं स्यात् इति सिद्धान्तकौमुदी। समाहारे नपुंसकविधानसूत्रे परत्वादेतस्य वाधात् परिशेषात् इतरेतरद्वन्द्वविषयकमेतत् तत्र चोद्भूतावयवभेदकसमुदायस्य इतरेतरद्वन्द्वार्थतया पूर्व्वस्य परस्य वा लिङ्गानुसारेण प्रयोग इत्याशङ्कायां नियमार्थमिदम्। इति तट्टीका।

९०। यजुः क्रतूनामनपुंसकानां।

[ यजुः क्रतूनां ६।।।, अ (न) नपुंसकानाम् ६।।। ]

यजुर्वेदविहितानां ससोमकयागानामक्लीवानां द्वन्द्वः क्लीवमेकं स्यात्। अर्काश्वमेधं अक्लीवानामिति किम्? राजसूयवाजपेये।

९१। समीपाऽध्ययनानां। [ समीपाऽध्ययनानाम् ६।।। ]

पाठे सन्निकृष्टानां द्वन्द्वं क्लीवमेकं स्यात्। पदकक्रमकं, क्रमकवार्त्तिकं, समीपेति किम्? याज्ञिकवैयाकरणौ।

९२। अप्राणिद्रव्यजातीनां।

[ अ (न) प्राणि—द्रव्य, जातीनां ६।।। ]

प्राणिभ्योऽन्येषां द्रव्यजातीनां द्वन्द्वः क्लीवमेकं स्यात्। आराशस्त्रि, द्रुमशैलं, अप्राणीति किम्? विट्शूद्रौ, द्रव्येति किम्? रूप रस शब्द गन्ध स्पर्शाः जातीनामितिकिम्? विन्ध्यहिमालयौ।

९३। नदी, देश, नगराणां भिन्नलिङ्गानां।

[ नदी, देश, नगराणां ६।।।, भिन्नलिङ्गानां ६।।। ]

एषां द्वन्द्वः क्लीवमेकं स्यात्। गङ्गाशोणं, कुरुकुरुक्षेत्रं, मथुरापाटलिपुत्रं, एषां किम्? ग्रामानां माभूत्—जाम्बवत् शालूकिन्यौ ग्रामौ, भिन्न लिङ्गानामिति किम्? गङ्गायमुने, मद्रकेकयौ।

९४। नित्यवैरिणां। [ नित्यवैरिणां ६।।। ]

नित्यविरोधिनां द्वन्द्वः क्लीवमेकं स्यात्। काकोलूकं,

अहिनकुलं, अश्वमहिषं, नित्येतिकिम् ? नैमित्तिकविरोधिनां माभूत्—देवासुराः, कौरवपाण्डवाः । (७२)

९५ । शूद्राणामनिरवसितानां ।

[ शूद्राणां ६।।।, अ (न) निरवसितानां ६।।। ]

शूद्राणां द्वन्द्वः क्लीवमेकं स्यात् । तक्षायस्कारं,रजक तन्तुवायं, अनिरवसितानामितिकिम् ? चण्डालमृतपाः । (७३)

९६ । गवाश्वादीनां । [ गवाश्वादीनां (गो-अश्व आदि) ६।।। ]

एषां द्वन्द्वः क्लीवमेकं स्यात् । गवाश्वं, अजैडकं, कुब्जवामनं, पुत्रपौत्रं, दर्भशरमित्यादि । (७४)

(७२) विरोधो विद्वेषो न तु सहानवस्थानं तेन छायातपाविति सिद्धम् 'देवासुरैरमृत मम्बुनिधिर्ममन्थे' इति भारविः ।

(७३) निरवसितः बहिष्कृतः पात्राद्बहिष्कृतः इति भावः अर्थात् येन भुक्ते कांस्यादि पात्रं संस्कारेण न शुध्यति किन्तु पुनर्घटनेन, स निरवसितः । तद्भिन्नः अनिरवसितः येन भुक्ते पात्रं संस्कारेण शुध्यतीत्यर्थः ।

(७४) गवाश्वादौ यथोच्चारिते एवाऽयं विधिः, तेन अदन्तादेशाभावपक्षे विकल्प एव भवति । गोऽश्वं गोऽश्वौ इति गोयीचन्द्रः । गवाश्वादीनां गणना यथा सिद्धान्तकौमुदी टीकायां गवाश्वं, गवाविकं, गवैडकं, अजाविकं, अजैडकं, कुब्जवामनं कुब्जकिरातम्, पुत्रपौत्रं, श्वचण्डालं, स्त्रीकुमारं, दासीमाणवकं, शाटीपटीरं, शाटीप्रच्छदं, शाटीपट्टिकं, उष्ट्रखरं, उष्ट्रशशम्, मूत्रशकृत्, मूत्रपुरीषं, यकृन्मेदः, मांसशोणितं, दर्भशरं, दर्भपूतीकम्, अर्जुन शिरीषं, अर्जुन पुरुषं, तृणोलपम्, दासीदासं, कुटीकुटम्, भागवतीभागवतम् ।

## ९७। प्राणितूर्य्याङ्गानां।

[ प्राणि, तूर्य्याङ्गानां (तूर्य्य अङ्ग) ६।।। ]

प्राण्यङ्गादीनां द्वन्द्वः क्लीवमेकं स्यात्। पाणिपादं, मार्द्दङ्गिक—पाणविकं। (७५)

## ९८।। सेनाङ्गक्षुद्रजन्तुफलानां बहुत्वे।

[ सेनाङ्ग (सेना-अङ्ग), क्षुद्रजन्तु, फलानां ६।।।, बहुत्वे ७। ]

सेनाङ्गादेर्बहुत्वे द्वन्द्वः क्लीवमेकं स्यात्। हस्तिनश्च अश्वाश्च हस्त्यश्वं, दंशमशकं, बदरामलकं बहुत्व इति किम्? हस्त्यश्वौ, दंशमशकौ, बदरामलके। (७६)

---

(७५) प्राणि च तत् अङ्गञ्चेति अथवा प्राणिनोऽङ्गं प्राण्यङ्गं उभयथाऽपि प्राणयोगात् अङ्गमपि प्राणि भवत्येव। ननु कथं मुखनासिकाभ्यां यो वायुर्निष्क्रामतीति प्रयोगः। मुखसहिते नासिके मुखनासिके इति समासः, पुटद्वयभेदान्नासिके इत्यत्र द्विवचनम्। मुखनासिकाभ्यामिति दधिपयसादिषु पाठादिति रचितः। अङ्गसहितश्चेति सङ्क्षिप्तसारसूत्रम् तदर्थन्तु अप्राण्यङ्गसहितश्च प्राण्यङ्गं द्वन्द्वे क्लीवमेकं भवति। यथा वाक्त्वचं तथाच वाक्त्वचेनाति सर्व्वमेति भट्टिः।

तूर्य्याङ्गपदेन वाद्यकारा अपीष्यन्ते तदेवोदाहरणेन ज्ञापयति मार्द्दङ्गिकपाणविकमिति। अतएव तूर्य्याङ्गतत्प्रवीणो। इति सङ्क्षिप्तसार सूत्रं तदर्थस्तु तूर्य्याङ्गं तत्प्रवीणश्च द्वन्द्वे क्लीवमेकं स्यात्। प्राण्यङ्गानाञ्च प्राण्यङ्गेन, तूर्य्याङ्गानाञ्च तूर्य्याङ्गेनैत्येव नियमः तेन शङ्खिशङ्खौ, मार्द्दङ्गिक रथिकौ इत्यादि स्यादेव।

(७६) हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयमित्यमरवचनात्, अश्वन्ति पृतनाङ्गानि हस्त्यश्वरथपादाय इति कात्यायनवचनाच्च। क्षुद्रोऽजन्त्वादि

९९ । वृक्ष, मृग, शकुनि, तृण, धान्य विशेषाणाम्वा ।
[ वृक्ष—विशेषाणां ६।।।, वा०१। ]

वृक्षादीनां बहुत्वे द्वन्द्वः क्लीवमेकं वा स्यात् । प्लक्षवटं, प्लक्षवटाः ; रुरुपृषतं, रुरुपृषताः ; मृगशब्दः कुरङ्गे, पशुमात्रे च वर्त्तते, तेन—सिंहाजोरभ्रं, सिंहाजोरभ्राः ; हंसकारण्डवं, हंसकारण्डवाः ; कुशकाशं, कुशकाशाः ; तिलमाषं, तिलमाषाः ; न द्वित्वे—प्लक्षवटौ ; अथ समाहारे एवैकत्वे सिद्धे प्रकरणमिदं नियमार्थं—चरणादीनां द्वन्द्वः समाहार एव, वृक्षमृगादीनामुभयत्रैव, दधिपय आदीनामितरेतरयोग एव । (७७)

१०० । व्यञ्जनानाञ्च । [ व्यञ्जनानां ६।।।, च०१। ]

अप्राणिद्रव्यजातित्वान्नित्ये प्राप्ते विकल्प आरभ्यते । दधिघृतं, दधिघृते, शाकसूपं, शाकसूपौ ।

---

शिरश्छेदनमत्राष्टग्रहणम् । इति गौर्यीचन्द्रः । आनकुलात् क्षुद्र जन्तव इति सिद्धान्तकौमुदी । क्षुद्र जन्तूनां पारिभाषिकलक्षणं यथा—क्षुद्रजन्तुरनस्थिः स्यादथवा क्षुद्रएव यः । शतं वा प्रसृतौ येषामथवा नकुलावधीति इति सिद्धान्तकौमुदी टीका क्षुद्रजन्तुरनस्थिरशोणितो यत् सहस्रमञ्जलिः (येषां सहस्रेणाञ्जलिः पूर्य्यते इत्यर्थः) यत् गोचर्म्म प्रमाणराशि हननात्म पातकं, नकुल पर्य्यन्त मिति पञ्चधेति सङ्क्षिप्तसारे ।

(७७) विभाषा वृक्ष मृग तृण धान्य व्यञ्जन पशु शकुन्यश्ववड़व पूर्व्वापराधरोत्तराणाम् । (२।४।१२) इति पाणिनीय सूत्रम् व्यञ्जन वृक्ष पक्षि मृग पशु धान्य तृणानि अश्वेनेव वड़वा । पूर्व्वापराधरोत्तरे च । इति सङ्क्षिप्तसारसूत्रत्रयम् एषा विभाषा तुल्यजातीयेष्वेवावतिष्ठते नतु परस्परव्यतिकरे । पश्वाद्युपादानन्तु पूर्व्ववत् विकल्पे प्राप्ते

१०१। विरोधिनामद्रव्याणां।
[ विरोधिनां ६।।।, अ (न) द्रव्याणां ६।।। ]

विरुद्धानामद्रव्यवाचिनां द्वन्द्वः क्लीवमेकं वा स्यात्। सुख-दुःखं, सुखदुःखे, शीतोष्णं, शीतोष्णे; हिमातपं, हिमातपौ, अद्रव्य इति किम्? सुखदुःखाविमौ ग्रामौ। (७८)

१०२। नैकं दधिपयआदीनाम्।
[ न०१।, एकं ०१।, दधिपय आदीनाम् ६।।। ]

एषां द्वन्द्वः एकं न स्यात्। दधिपयसी, सर्पिर्मधुनी, मधु-सर्पिषी, शुक्लकृष्णे, ऋक्सामे, वाङ्मनसे, शिववैश्रवणावित्यादि।

१०३। संख्याप्रयोगे च।
[ संख्याप्रयोगे ७।, च०१। ]

इह द्वन्द्वोनैकवत् स्यात्। दशमार्दङ्गिकपाणविकाः।

---

व्यतिकरनिरासार्थं। तेन पशूनां ततोऽन्यैः सह न समाहारद्वन्द्वो भवति नतु सर्व्वथा द्वन्द्वाभावः तथा च भट्टिः हनुमन् कीदृशं द्वन्द्वं नर वानररक्षसामिति। ननु पशुग्रहणेन मृगग्रहणे सिद्धे किमर्थं पृथगु-पादानम् अत आह मृगोपादानात् पश्वन्तरे न स्यादिति यदा मृगवाचकस्य पश्वन्तरवाचिना द्वन्द्वो भवति तदा क्लीवमेकं न स्यादित्यर्थः। पूर्व्वं अश्व-वड़वयो : (२।४ ७) इत्यनेन अश्ववड़वयोः पूर्व्वलिङ्गत्वे एव प्राप्ते पाणिनीय सङ्क्षिप्तसारयोः पाक्षिक नपुंसकार्थ मेतयोरत्र ग्रहणं। सुपद्ममते इतरे-तरयोगे अश्ववड़वयोः पूर्व्वलिङ्गतैव, समाहारे तु क्लीवत्वमिति रहस्यम्।

(७८) कामक्रोधावित्यत्र न विरोधः, क्रुद्धोऽपि काममाचरतीति दर्शनात्।

## १०४। वा समीपे। [वा० १।, समीपे ७]

समीपे संख्याप्रयोगे द्वन्द्व एकं वा न स्यात्। उपदशं वैणिकवैणविकं, उपदशा वैणिकवैणविकाः।

## १०५। अदन्तो द्विगुः स्त्री समाहारेऽपात्रादिभिः।

[अदन्तः १।, द्विगुः १।, स्त्री १।, समाहारे ७।, अ (न) पात्रादिभिः ३।।।]

अदन्तो द्विगुः स्त्रीलिङ्गं स्यात्। पञ्चपुली, दशशती अकारान्तप्रकृतेरेवाभिधानादिह—पञ्चगवं, (१) समाहार इति किम्? तद्धितार्थे—पञ्चकपालः सूपः; अपात्रादिभिरिति किम्? त्रिपात्रं, चतुर्युगं, त्रिभुवनं। आवन्तः क्लीवश्च, नश्च लुक्। पञ्चखट्वं, पञ्चखट्वी, पञ्चतक्षं, पञ्चतक्षी।

## १०६। ह्रस्वो नपुंसके प्रातिपदिकान्तस्य।

[ह्रस्वः १।, नपुंसके ७।, प्रातिपदिकान्तस्य (प्रातिपदिक-अन्त) ६।]

क्लीवे प्रातिपदिकान्तस्य ह्रस्वः स्यात्। सोमपं, कुलं, सहएनसं, बहुप्रेयसि कुलं। एच इग् ह्रस्वत्वे। अतिरि, बहुनु, उपगु। (२)

१) समासान्तस्य समस्तप्रकृतावयवत्वमते तु स्त्रीत्वप्रसङ्गात् समस्तावयवाभावत्वमतस्योदाहरणमिदं, सङ्क्षिप्तसारे तु पञ्चगवं, पञ्चराजमिति द्वे पात्रादौ पठिते।

(२) ह्रस्वोनपुंसके प्रातिपदिकस्येति पाणिनिसूत्रम् (२।२।४७) क्लीवे प्रातिपदिकस्याजन्तस्य ह्रस्वः स्यात्। इति सिद्धान्तकौमुदी।

## १०७। गो स्त्रियोरन्यार्थेऽश्र्यादीयसः।

[गो, स्त्रियोः ६॥, अन्यार्थे (अन्य-अर्थे) ७।, अश्र्यादीयसः (न श्री—आदि, ईयस्) ६।]

अन्य पदार्थे गोशब्दस्य स्त्रीप्रत्ययान्तस्य ह्रस्वः स्यात्। चित्रगुः, निष्कौशाम्बिः, अतिखट्वः, बहुवामोरुः; अन्यार्थ इति किम्? सुगौः, सुकुमारी, अश्र्यादीयस इति किम्? सुश्रीः, सुतन्त्रीः, सुधीः, सुलक्ष्मीः, सुतरीः, सुभ्रूः, बहुप्रेयसी, राजा; ईयसस्तत्पुरुषे न प्रतिषेधः—अतिप्रेयसिर्नृपः। (१)

## १०८। तद्धित लुकि लुक् स्त्रियाः अगोण्यादेः।

[तद्धित लुकि ७।, लुक् ०१।, स्त्रियाः ६।, अगोण्यादेः (न-गोणी-आदि) ६।]

तद्धित लुकि सति स्त्रीप्रत्ययस्य लुक् स्यात्। पञ्चशष्कुलः तेन क्रीत इत्यर्थे टिकण् द्विगोरध्यर्द्धपूर्व्वाच्च लुगसंज्ञायामिति (८५।३।५) टिकण् लुक्, अगोण्यादेरिति किम्? पञ्चगोणिः पटः, पञ्चसूचिः।

इति श्रीपद्मनाभदत्तकृतौ सुपद्मव्याकरणे
चतुर्थाध्यायस्य तृतीयः पादः।

---

(१) गोस्त्रियोरुपसर्ज्जनस्येति (१।२। ८) पाणिनीयसूत्रं, उपसर्ज्जनं यो गो शब्दः, स्त्रीप्रत्ययान्तश्च तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यादिति सिद्धान्तकौमुदी। उपसर्ज्जनमत्र समासशास्त्रीयं ग्राह्यं, तेन कुमारीवाचरति विप्र इति वाक्ये आचार क्विबन्ते कुमारीशब्दे न ह्रस्व प्रसङ्गः। अत्र स्त्रीशब्दस्य स्त्र्यधिकारोक्तटावादिप्रत्ययपरतया अतिलक्ष्मीरित्यादौ न। इति तट्टीकाः अतः श्र्यादीनां ह्रस्वत्वप्रसङ्गाभावात्

তন্নিষেধঃ ন কেবলং স্পষ্টার্থমেব, কিন্তু নিষেধস্য পর্য্যুদাসতয়া তদধি-কারবিহিতস্য আপ্ প্রত্যয়স্যাপি সংগ্রহার্থং ততশ্চ গতেহ ইতি সিদ্ধং। ভাষ্যে উত্তরপদভূতয়োঃ গোস্ত্রিয়োরিত্যভিধানাত্ সমাসস্যান্ত এবেদং বর্ত্ততে ন তু মধ্যে। ইয়সোবহুব্রীহের্নেতি বাচ্যমিতি বার্ত্তিকম্। বহ্ব্যঃ শ্রেয়স্যোঽস্য বহুশ্রেয়সী, বহুব্রীহেঃ কিম্? অতিশ্রেয়সিরিতি সিদ্ধান্তকৌমুদী। সংক্ষিপ্তসারে অর্দ্ধপিপ্পল্যাদিষ্বপি স্ত্রীপ্রত্যয়স্য হ্রস্বোনিষিদ্ধঃ, অর্দ্ধ-পিপ্পলী, অর্দ্ধনাবী, অর্দ্ধনগরী, পূর্ব্বনগরী, অর্দ্ধলাবুরিত্যাদি। অত্র সংক্ষিপ্তসারস্য—গৌরপ্রধানস্যান্তস্য, স্ত্রীপ্রত্যয়স্য চ ন হ্রদীতঃ ইয়সো-র্বহুব্রীহৌ—ইত্যেতানি সূত্রাণি দ্রষ্টব্যাণি।

---

## अथ चतुर्थाध्यायस्य चतुर्थः पादः ।

### अलुक् समासादि प्रकरणम् ।

१ । **अलुगविशिष्टादुत्तर पदे ।**

[ अ (न) लुक् १।, अविशिष्टात् ५।, उत्तरपदे ७। ]

अधिकारोऽयं । उत्तरपदे परतोऽलुग् वाच्यः ।

२ । **ओजः सहोऽम्भस्तमसस्तृतीयायाः ।**

[ ओज (स्), सह (स्), अम्भ (स्), तमसः ५।, तृतीयायाः ६। ]

एभ्यः तृतीयायाः अलुक् स्यात् । ओजसाकृतं, सहसाकृतं, अम्भसाव्याप्तं, तमसाव्याप्तं, अविशिष्टादित्येव—महौजःकृतं, नैशतमोवृतं । (१)

(१) ओजः सहोऽम्भस्तमसस्तृतीयाया (६।३।३) इति पाणिनीय-सूत्रं । अञ्जस उपसंख्यानं इति वार्त्तिकम् । अञ्जसाकृतमिति । ओजः सहोऽम्भस्तमोऽञ्जसा मनुत्तरपदभूतानामलुक्तृतीयाया इति संक्षिप्त-सारसूत्रम् । अलुग् विषयेष्वेकवचनस्यैव समास इति भाष्यम् । अन्ये पुनराचार्य्या वदन्ति अनभिधानात् द्विवचनबहुवचनयोः समास एव न भवति । वस्तुतस्तु प्रकरणादिभिरवगतयोस्तु द्विवचन बहुवचनयोरपि समासोभवत्येव, अलुक्पुनरेकवचनस्यैव भवति । ततश्च द्विवचनबहु-वचनयोस्तमोवृतमित्यादि भवत्येव ; ये तु बहुत्वाव्यभिचारिणस्तेषां बहु-वचनसामर्थ्यादप्सुयोनिरित्यादौ समासोऽलुक् । चान्द्रास्तु तमस इत्यत्र तपस इति पठन्ति तपसा कृतमिति तन्न सम्यक भाष्ये—तमोवृत-

**३। मनसः संज्ञायामाज्ञायिनि च।**

[ मनसः ५।, संज्ञायां ७।, आज्ञायिनि ७।, च० १। ]

नाम्नि मनसस्तृतीयाया अलुक् स्यात्। मनसादेवी, आज्ञायिनि च—मनसाज्ञायिनो योगिनः। (१)

**४। आत्मनः पूरणे।**

[ आत्मनः ५।, पूरणे ७। ]

तृतीयाया अलुक् स्यात्। आत्मना पञ्चमः। (२)

---

त्वादित्यत्रादर्शनात्, तपःक्लेशामभ्युपपत्तिमेच्छन, तपःक्लशतरैरङ्गैरित्यादि महाकविप्रयोगाच्च। महौजः कृतमित्यत्रौजःशब्दः नैशतम इत्यत्र तमःशब्दः उत्तरपदभूत इति लुगभवत्येव। उदन्नदम्भःपरिपीत मूर्त्तिरिति माघः। सततनैशतमोवृतमन्यत इति भारविः। अन्ये त्वेवं न समर्थयन्ते यतो येन विधिस्तदन्तस्येति अत्र भाष्ये उक्तं पदाङ्गाधिकारे तस्य तदुत्तरपदस्य चेति तन्मते महौजसाकृतमिति भवति। अस्मिन् मते सूत्रमन्यथा व्याख्येयं यथा यस्मिन् समासे अलुग् विधीयते तस्मिन्नेवानुत्तरपदभूतानामोजः प्रभृतीनां तृतीयाया अलुग्भवति। तस्मिन्मते सततनैशतमोवृतमिति सततनैशतमोवृतं वर्त्तमानं यस्मिन् इति बहुब्रीहिणा साध्यमिति रक्षितः अन्येतु तमोभिर्वृतं तमोवृतमिति सिद्धान्तयन्ति। इति गोयीचन्द्रः।

(१) मनसः संज्ञायां (६।३।४) आज्ञायिनि चेति (६।३।५) पाणिनीयसूत्रद्वयं। मनसोनाम्नि आज्ञायिनि चेति सङ्क्षिप्तसारसूत्रद्वयं नाम्नीति किम्? मनोदत्तकन्या।

(२) आत्मनश्चेति (६।४।३) इति पाणिनीयसूत्रम् पूरण इति वक्तव्यमिति वार्त्तिकम्। जनार्दनस्त्वात्मचतुर्थ एवेति बहुब्रीहिर्बोध्य इति

५ । पुंसोऽनुजे जनुषोऽन्धे ।

[ पुंसः ५, अनुजे ७।, जनुषः ५।, अन्धे ७ । ]

अलुक् स्यात् । पुंसाऽनुजः, जनुषाऽन्धः । (१)

६ । वैयाकरणाख्यायामात्मपराभ्यां चतुर्थ्याः ।

[ वैयाकरणाख्यायां ७।, आत्म-पराभ्यां ५।, चतुर्थ्याः ६ । ]

आभ्यां चतुर्थ्या अलुक् स्यात् । वैयाकरणी आख्या चेत् । आत्मनेपदं, परस्मैभाषा । (२)

---

सिद्धान्तकौमुदी । नन्वन्यपदार्थो बहुव्रीहिरित्युच्यते अन्यपदार्थश्च समस्यमानेभ्योऽतिरिक्तोभवति यथाचित्रगुरिति, नचात्र (आत्मा चतुर्थ्यन्तोऽत्र) व्यतिरिक्तो कश्चिदर्थोऽस्ति इति तु नाशङ्कनीयं अव्यतिरिक्तार्थेऽप्यन्य पदार्थत्वं भवति व्यपदेश्यव्यपदेशिवद्भावात् । यथा शिलापुत्र इति । आत्मनः पूरणे इति सङ्क्षिप्तसारसूत्रं पूरणशब्देनात्र पूरणार्थप्रत्ययान्तं ग्राह्यं । इति गोयीचन्द्रः ।

(१) पुंसानुजो जनुषान्ध इति च वार्त्तिकं । यदा तु पुमांस मनुजातस्तदा पुमनुज इति गोयीचन्द्रः ।

(२) आख्या संज्ञा, व्याकरणे व्यवह्रियमाणा आख्या वैयाकरणाख्या तस्यां गम्यमानायां । आत्मनेभाषः परस्मैभाष इत्यादौ तु आत्मनेपदे भाषा उक्तिर्यस्य इति पदशब्दलोपो निपातनात् । अतएव वचनबलात् प्रकृतिविकृत्यभावेऽपि समासः एतद्वचनं सामान्यज्ञापकं करणीयं तेन इन्धनस्थाणी, अश्वघास इत्यादावपि इति गोयीचन्द्रः । चतुर्थीति योगविभागात् समास इति सिद्धान्तकौमुदी । तथा च सामान्यतश्चतुर्थ्यन्तस्य समासः तादर्थ्यादिभिश्च चतुर्थ्यन्तस्य समास इति ।

## ७। पञ्चम्याः स्तोकादिभ्यः क्ते।

[ पञ्चम्याः ६।, स्तोकादिभ्यः ५।॥, क्ते ७। ]

स्तोकार्थ, अन्तिकार्थ, दूरार्थ, कृच्छ्रेभ्यः क्तान्ते परे पञ्चम्याः अलुक् स्यात्। स्तोकान्मुक्तः, अल्पान्मुक्तः, कृच्छ्रान्मुक्तः। (१)

## ८। सप्तम्या हलदन्तेभ्योनाम्नि।

[ सप्तम्याः ६।, हलदन्तेभ्यः ५।।।, नाम्नि ७। ]

हलन्तादन्ताच्च नाम्नि सप्तम्या अलुक् स्यात्। त्वचिसारः, वनेकिंशुलकाः। (२)

## ९। मध्यान्ताद्गुरौ।

[ मध्यान्तात् ( मध्य-अन्त ) ५।, गुरौ ७। ]

मध्येगुरुः, अन्तेगुरुः। (३)

---

(१) कृच्छ्रलब्ध इति तृतीया सिद्धं क्ते इति किं कृच्छ्रभयमिति गोयीचन्द्रः। ब्राह्मणाच्छंसिन उपसंख्यानं इति वार्त्तिकं, ब्राह्मणस्य शंसिनि इति संक्षिप्तसारसूत्रं ब्राह्मणाच्छंसी ऋत्विग्विशेषः।

(२) गोहलन्तादन्तानां संज्ञायां सप्तम्या इति संक्षिप्तसारसूत्रं तेन गविष्ठिरइति सिद्धं।

(३) मध्याद्गुरौ ( ६।३।११ ) इति पाणिनीयं सूत्रं अन्ताच्चेति वार्त्तिकं। मध्यान्तयोर्गुराविति संक्षिप्तसारसूत्रं। अस्मादेवालुग्विधानात् समासः। अथवा शौण्डादेराकृतिगणत्वात् तत्पुरुष एवाप्यमिष्यते। यदा तु मध्ये स्थितो गुरुरस्येति, अन्तेस्थितो गुरुरस्येति मध्यपद-

१० । अपोयोनिमतियेषु ।

[ अपः ५।, योनि, मति, येषु ७।। ]

अपः सप्तम्या अलुक् स्यात् । अप्सुयोनिरग्निः, अप्सुमतिः, डिगादेर्यः अप्सुभवो अप्सव्यः (१)

११ । स्वाङ्गादमूर्द्धमस्तकादकामे, वन्धे वा ।

[ स्वाङ्गात् (स्व-अङ्ग) ५।, अ (न) मूर्द्ध, मस्तकात् ५।, अ (न) कामे ७।, वन्धे ७।, वा० १। ]

स्वाङ्गात्, हलन्तात्, सप्तम्या अलुक् स्यात् । कण्ठेकालः, उरसिलोमाः, हस्तेवन्धो, हस्तवधो वा ; अमूर्द्धमस्तकादिति किम्? मूर्द्धशिखा, मस्तकचूड़ः. अकाम इति किम्? मुखकामः, हलन्तेभ्यः इत्येव—अङ्गुलिमुद्रः । (२)

लोपो वक्रश्रेहिस्तदा मध्यगुरुरन्तगुरुरित्येवं भवति यथा क्वापि न मध्यगुरुर्गणः एकःसोऽन्तगुरुरिति छन्दोलक्षणं । इति गोयीचन्द्रः ।

(१) अपोयोनि यन्मतुषु । इति वार्त्तिकं अप्सुयोनिरुत् पत्तिर्यस्य सोऽप्सुयोनिः. अप्सुभवोऽप्सव्यः, अप्सुमन्ता वाज्यभागौ इति सिद्धान्तकौमुदी । यद्योनि मतिष्वपाम् इति संक्षिप्तसार सूत्रम् अप्सुयोनि रप्सुमतिरिति शौण्डादेराकृति गणत्वात्, अलुग्विधानसामर्थ्याद्वा तत्पुरुषः बहुव्रीहौ तु अप्योनि, रम्मति रित्येव भवति । इति गोयीचन्द्रवचनं सिद्धान्तकौमुदीविरुद्धं । हृद्युभ्याञ्चेति वार्त्तिकं हृदिस्पृक् ; दिविस्पृक् इति नित्यत्वाभिप्रायेणेदं प्रतीयते ।

(२) अमूर्द्धमस्तकात् स्वाङ्गादकामे इति पाणिनीयसूत्रं । अमूर्द्धं मस्तकस्य हलन्तादन्ताङ्गस्याकामे । इति संक्षिप्तसारसूत्रम् ।

১২। তর, তম, তনেষু কালনাম্নঃ।

[তর—তনেষু ৭।।।, কালনাম্নঃ ৫।]

বেত্যেব—তরাদৌ কালনাম্নঃ, সপ্তম্যা অলুক্ স্যাত্। বিধিবলাত্ সপ্তম্যন্তাত্তরতমৌ। পূর্ব্বাহ্নেতরাং গায়তি, একারান্তাদাম্ পূর্ব্বাহ্নতরে বা; পূর্ব্বাহ্নেতমাং, পূর্ব্বাহ্নতমে বা; পূর্ব্বাহ্নেকালক্তং, পূর্ব্বাহ্নকালক্তং; পূর্ব্বাহ্নেতনং, পূর্ব্বাহ্নতনং; পূর্ব্বাহ্ন পরাহ্ণা ইতি (৩৬।৩।৫) তনট্; হলদন্তেভ্য ইত্যেব—রাত্রিতমাং জাগর্ত্তি।

১৩। তত্পুরুষে কৃতি বহুলম্।

[তত্পুরুষে ৭।, কৃতি, ৭।, বহুলং ০২।]

তত্পুরুষে কৃদন্তে পরতোবহুলং সপ্তম্যা অলুক্ স্যাত্। দিবিষদ্, বনেচরঃ, খম্বেরমঃ, হৃদিস্থঃ, হৃদিস্পৃক্। প্রাবৃট্-শরত্-কালদিবাং, জে। প্রাবৃষিজঃ, শরদিজঃ, কালেজঃ, দিবিজঃ। বর্ষশরবরমনসো বা। বর্ষেজঃ, বর্ষজঃ, শরেজঃ, শরজঃ, বরেজঃ, বরজঃ,

---

কায়স্থেনোদরস্থেন, নোদরস্থা হরীতকীত্যত্র উদরস্থেত্যসাধুঃ রক্ষিতেন পুনরস্য সাধুত্বমভ্যুপগতম্। হলন্তাদন্তাঙ্গস্য তু অঙ্গুলিশ্রাণঃ, অঙ্গুলিঃ। ইতি অমরঃ নাহ্ন্দিবসস্থস্য স্থে ইত্যনেন, তত্পুরুষে কৃতি বহুলমিত্যনেন প্রাপ্তস্যালুকোনিষেধঃ, ততশ্চ উদরস্থা ইত্যত্র অলুকা ভবিতব্যমিত্যভিপ্রায়ঃ। রক্ষিতেন পুনঃ স্থে পরে যোনিষেধঃ কৃতঃ স সামান্যেনবোক্তঃ। তেন উদরস্থেত্যত্র অলুক্ নিষেধ এব। তথাহি কণ্ঠে কালঃ কপালেন করস্থেনেন্দুশেখর ইতি দণ্ডীতি গোয়ীচন্দ্রঃ।

मनसिजो, मनोजः। सरसीरुहे च। सरसिजं, सरोजं, सरसिरुहं, सरोरुहं। अथवासवासिष्वकालात्। खेशयः, खशयो वा ; वनेवासः, वनवासो वा ; ग्रामेवासी, ग्रामवासी वा ; अकालादिति किम्? पूर्व्वाह्णशयः। बाहुल्यात् क्वचिन्नैव स्थण्डिलशायी, विषमस्थः, सांकाश्यसिद्धः। (११)

---

(११) तत्पुरुषे कृति बहुलं। ६।३।१४। इति पाणिनीयसूत्रं तत्पुरुषे इति सूत्रे हलदन्तादित्यस्यानुवर्त्तनेऽपि नैतस्य सार्व्वत्रिकत्वं, बहुलग्रहणादेकाचोऽन्यत्र न भविष्यतीति ध्वनयन्नाह क्वचिन्नेति तेन गोषु चर इति वाक्ये गोचर इत्यादि सिद्धिः। अनेनैव सिद्धेः हृद्युभ्याञ्चेति वार्त्तिकं निष्प्रयोजनम् इति ज्ञेयम्। तत्पुरुषे कृति बहुलं इति च संक्षिप्तसार सूत्रम्। शरत् प्रावृट्काल दिवां मिति किम्? मन्द्रजः। प्रसङ्गेऽस्मिन् नेण्सिद्ध बध्नातिषु च (६।३।१९) इति पाणिनीयसूत्रान्तरम्। इन्नन्तादिषु सप्तम्या अलुम। स्थण्डिलशायी, सांकाश्यसिद्धः, चक्रबद्धः। णिनन्त सिद्धबन्धेषु इति संक्षिप्तसारसूत्रम्। एतन्मते घञन्त बधधातौ परे विकल्प एव अलुक् भवति। स्थे च भाषायां। ६।३।२० इति पाणिनीयसूत्रं अलुक् निषेधकम्। नाहृद्दिव्सत्रस्य स्थे। इति संक्षिप्तसार सूत्रञ्चालुकप्रतिषेधकं द्रष्टव्यम्। बहुलवचनादेव सिद्धे लक्षणमेतन्नियमार्थं, हृद्दिव्सत्यव्यतिरिक्तस्य सप्तम्यां स्थे परेऽलुम भवत्येव। हृद्दिव्सत्यस्य तु तत्पुरुषे अलुक्। पर्य्यग्राक्षीत् दिविष्ठाऽसौ सन्दर्श्य भयदं वपुरिति भट्टिः, रक्षन् वनेवासकृताद्भयान्तानिति च भट्टिः। कारनाम्नि च प्राचां हलादौ। ६।३।१०। इति पाणिनि सूत्रं, प्राचां देशे यत् कारनाम तत्र हलादावनुत्तरपदे हलदन्तात् सप्तम्या अलुक्।

१४। षष्ठ्याः संज्ञाभर्त्सनयोः।

[ षष्ठ्याः ६।, संज्ञा, भर्त्सनयोः ७॥ ]

संज्ञायामाक्षेपे च षष्ठ्या अलुक् स्यात्। शुनःशेफोनाम मुनिः, दिवोदासः, आक्षेपे—चौरस्यकुलं, वृषल्याःपतिः, देवानांप्रियः॥ पुत्रे वा। दास्याः पुत्रः, दासीपुत्रोवा। (१२)

१५। वाग्दिक्पश्यद्भ्योयुक्तिदण्डहरेषु।

[ वाग्दिक् पश्यद्भ्यः (वाच्—दिश्—पश्यत्) ५।।।, युक्ति, दण्ड, हरेषु ७।॥ ]

युक्त्यादौ वागादेः षष्ठ्या अलुक् स्यात्। वाचोयुक्तिः, दिशोदण्डः, पश्यतोहरः।

---

मुकुटे कार्षापणं, दृषदि माषकः। पूर्व्वेण सिद्धे नियमार्थं कारनाम्नेव प्राचामेव हलादावेवेति। इति सिद्धान्तकौमुदी। हलादौ कारनाम्नि चेति संक्षिप्तसारसूत्रं। पूर्व्वेण नित्ये प्राप्ते विभाषा, वणिक् कर्षकपशु-पालादौ रक्षार्थं राज्ञे देयः करः, कर एव कारः स्वार्थेऽण् कारनाम्नि वाच्ये हलादौ परे हलन्तादन्तस्यच सप्तम्या अलुग्वा भवति। हलादौ प्राच्य-कारनाम्नि नित्यमिति वामनः। इति च संक्षिप्तसारसूत्रम्। तन्मते पूर्व्वेण प्राप्ते नियमार्थं वचनमिदं नियमस्तु उक्तएव सिद्धान्तकौमुद्याम्।

(१२) षष्ठ्या आक्रोशे (६।३।२१) इति पाणिनीय सूत्रं। क्षेपे षष्ठ्या इति संक्षिप्तसारसूत्रं। निन्दायां दास्याः पुत्र इति स्वरू-पाख्यानात् दासीपुत्र इति। देवानां प्रिय इति च मूर्खे इति वार्त्तिकं अन्यत्र देवप्रिय इति। नित्यमामोदेनस्य प्रिये। इति संक्षिप्तसार-सूत्रम्।

१६। अदसष्टायन् कुलिकादिषु।

[ अदसः ६।, टायन् ०१।, कुलिकादिषु ७॥ ]

एष्वदसः षष्ठ्या अलुक् स्यात्। अपत्ये—आमुष्यायनः; कुलिकेति भविष्यद्रूपग्रहणं—भावे-आमुष्यकुलिका, आमुष्यपुत्रिका, अमुष्यपुत्रता।

१७। ऋतो विद्यायोनिसम्बन्धे। वा च स्वसृपत्योः।

[ ऋतः ६।, विद्या, योनि, सम्बन्धे ७।, वा०१।, च०१।, स्वसृ, पत्योः ७॥ ]

ऋदन्तात् षष्ठ्या अलुक् स्यात्। विद्यायोनिसम्बन्धे—होतुरन्तेवासी, होतुःपुत्रः। वा च स्वसृ, पत्योः। मातुः स्वसा, मातृ-स्वसा ; दुहितुःपतिः, दुहितृपतिः ; उक्तोऽलुक्। (१३)

१८। ऋदन्तपुत्रयोराद्दृतोद्वन्द्वे।

[ ऋदन्त पुत्रयोः ७॥, आत् ०१। ऋतः ६।, द्वन्द्वे ७। ]

द्वन्द्वे ऋदन्तपुत्रयोः परयोर्ऋदन्तस्य ऋत स्थाने आद् भवति। होतापोतारौ, पितापुत्रौ। (१४)

---

(१३) पूर्वोत्तरपदयोर्विद्यासम्बन्धवाचित्वं योनिसम्बन्धवाचित्वं वेति तु न नियमः किन्तु पूर्वपदस्य विद्यासम्बन्धवाचित्वे उत्तरपदस्य योनिसम्बन्धवाचित्वे, पूर्वपदस्य योनिसम्बन्धवाचित्वे, उत्तरपदस्य विद्यासम्बन्धवाचित्वे चालुग्भवतीति गोयीचन्द्रः तेन नेष्ट होतृधनमिति।

क्वचिदन्यत्राऽपि इति संक्षिप्तसारसूत्रं वाचस्पतिः, दिवस्पतिरित्यादि। अत्र शिष्टप्रयोग ऊहनीयः।

(१४) आनङृतो द्वन्द्वे (६।३।२५) पाणिनीयसूत्रं। पुत्रेऽन्यतरस्या-

## १९ । इन्द्राद्रेरतोदैवते ।

[ इन्द्रादेः (इन्द्र-आदि) ६।, अतः ६।, दैवते ७। ]

देवताद्वन्द्वे इन्द्रादेरत आङ्भवति । इन्द्राबृहस्पती, मित्रा-

---

मित्यतो मण्डूकप्लुत्या पुत्र इत्यनुवृत्तेः पितापुत्राविति सिद्धान्तकौमुदी । अत्र च यथाक्रमसमन्वयाद् विद्यासम्बन्धेन योनिसम्बन्धवतः समासे न आनङ्, सम्बन्धस्य द्विष्ठत्वात् एकस्य तथात्वे परस्य तथात्वाऽभावात् तेन होतृपितरौ, पितृहोतारावित्यादौ न । इति तट्टिका । ऋत आद्-द्वन्तपुत्रयोः पूर्व्वोत्तरपदविद्यायोनिसम्बन्धवाचित्वे इति संक्षिप्तसार-सूत्रम् । ऋकारान्ते पुत्रशब्दे च परे द्वन्द्वे ऋतः स्थाने आङ्भवति । पूर्व्वोत्तरपदयोर्विद्यायोनिसम्बन्धवाचित्वे सति । होत्रादय ऋत्विग्विशेषा स्तेषां विद्यया सह सम्बन्धः, ते च कात्यायनसूत्रे दर्शिताः, तत्र ऋदन्ता उद्गातृ, होतृ, प्रस्तोतृ, श्रोतृ, प्रतिप्रस्थातृ, पोतृ, प्रतिहर्तृ, नेष्टृप्रभृतयः । ननु सर्व्वान्तपदमुत्तरपदमिति व्यवस्थितं, तत्कथं होतापोतानेष्टोद्गातारः ?, इति चेत् होतापोतारौ च नेष्टोद्गातारौ च इति समस्तयोरेव पदयोः पुनर्द्वन्द्वे पूर्व्वोत्तरपदव्यवस्था अविरुद्धैव । यत्र तु त्रिपदे द्वन्द्वः तत्र पूर्व्वोत्तरपदव्यवस्थाभावादात्त्वाभावः होतृपोतृनेष्टार इति । ननु पूर्व्व (१७) सूत्रे यथा होतुः पुत्र इत्युदाहृतं तथेहाऽपि होतापुत्राविति भवितव्यमिति चेदुच्यते यत्र पूर्व्वोत्तरपदयोः, पुनर्द्वन्द्वे एकस्य विद्यासम्बन्ध वाचित्वं अपरस्य योनिसम्बन्धवाचित्वं तत्रात्त्वं नेष्यते । वेदिशब्दो ज्ञातृवचनः, वक्तृशब्दोऽभिधातृवचनः तेनाध्येतृवेदित्राविति वक्तृ-श्रोत्रोरिति मीमांसायाञ्च पाठोऽप्यविरुद्ध एवेति गोयीचन्द्रः । संक्षिप्तसारे 'पुत्रार्थं द्वन्द्वे इति सूत्रान्तरमस्ति तन्मते पुत्रपदं तदर्थग्राहकं ततश्च पुत्रौ च दुहितात्मजाविति सिद्धम् ।

वरुणौ, सूर्य्याचन्द्रमसौ, लोके वेदे सहचरितयोरेवाभिधाना-न्नेह—शिववैश्रणौ। (१५)

२०। इतईदग्नेः सोमवरुणयोरवृद्धौ।

[इतः ६।, ईत् ०१।, अग्नेः ६।, सोम, वरुणयोः ७॥, अ (न) वृद्धौ ७।]

अनयोरग्नेरित ईद्भवति। अग्नीषोमौ, अग्नीवरुणौ; अवृद्धाविति किम्? आग्निसोमं, आग्निवारुणं कर्म्म।

२१। वृद्धावाद्विष्णौ।

[वृद्धौ ७।, आत् ०१।, विष्णौ ७।]

वृद्धिमति विष्णौ परे अग्नेरित आद्भवति। आग्नावैष्णवं; इन्द्रे च आग्नेन्द्रस्वरः। (१६)

---

(१५) देवता द्वन्द्वे चेति पाणिनीयसूत्रं (६।३।२६) वायुशब्दा-प्रयोगे इति वार्त्तिकम् पुनर्द्वन्द्वग्रहणं प्रसिद्धसाहचर्य्यस्य परिग्रहार्थं। तेन ब्रह्मप्रजापती इत्यादौ नानङ् एतद्धि नैकहविर्भागित्वेन अतन्नापि लोके प्रसिद्धं साहचर्य्यम्। इति सिद्धान्तकौमुदी। शिववैश्रवणावित्यत्रा-प्येवं व्याख्येयम्। एवं रविचन्द्रौ, स्कन्दविशाखावित्यत्रापि न, साहचर्य्याभावात्।

(१६) इन्द्रे चेति अवृद्धिमति इन्द्रे परे इत्यर्थः। संक्षिप्तसारमते अवृद्धिमति विष्णुशब्दे परे अग्नेरात्त्वं भवति अग्नाविष्णू इति। अत्रेदं रहस्यं पाणिनीयसंक्षिप्तसारयोःसामान्यतएव वायुभिन्न सहचरितदेवता द्वन्द्वे पूर्व्वपदस्य आत्त्वं विहितं अग्निशब्दस्य तु सोमवरुणयोरीत्वं किन्तु वैष्णवभिन्ने वृद्धिमत्युत्तरपदे परे अग्निशब्दात् इत्वं, आत्त्वञ्च निषिद्धमिति।

२२ । दिवोद्यावा । [ दिवः ६।, द्यावा ०१ । ]

दैवते द्वन्द्वे दिवो द्यावा स्यात् । द्यावापृथिव्यौ, द्यावाभूमी, द्यावाधरण्यौ ।

२३ । दिवस् च पृथिव्यां ।

[ दिवसस् ०१।, च०१।, पृथिव्यां ७। ]

पृथिव्यां दिवो दिवस्, द्यावा च स्यात् । दिवस्पृथिव्यौ, द्यावापृथिव्यौ स् चेति निर्देशात् न विसर्गः । (१७)

२४ । उषासोषसः । [ उषासा ०१।, उषसः ६। ]

दैवते द्वन्द्वे उषस उषासा स्यात् । उषासानक्तं, उषासासूर्य्यं ।

२५ । मातरपितरौ कुशीलवौ च ।

[ मातरपितरौ १ ॥, कुशीलवौ १॥, च० १ । ]

द्वौ निपात्येते । चकारात्—मातापितरौ, कुशलवौ च ।

२६ । स्त्रीपुम्वद्भाषितपुंस्कानूङ् तुल्यार्थे स्त्रियामपूरणीप्रियादिषु ।

[ स्त्रीं० १।, पुम्वत्० १।, भाषित पुंस्क ०१।, अनूङ् (न-ऊङ्) ०१।, तुल्यार्थे ७।, स्त्रियां ७।, अ (न) पूरणी प्रियादिषु ७ ।॥ ]

तुल्याधिकरणे वर्त्तमानायां स्त्रियां परतोभाषितपुंस्का-

---

(१७) वेदे "द्यावा चि यस्मै पृथिवी" इत्यसमासे 'द्यावा' देशो दृश्यते ।

नूङ् वर्ज्जितं स्त्रीलिङ्गं पुम्वद्भवति । कर्म्मधारये—शोभनभार्य्या, पटुभार्य्या, बहुव्रीहौ—युवभार्य्यः, पटुभार्य्यः । भाषितपुंस्कमिति किम् ? खट्वाभार्य्यः अनूङिति किम् ? धीबन्धुभार्य्यः तुल्यार्थ इति किम् ? कल्याण्या माता—कल्याणीमाता, स्त्रियामिति किम् ? मानिनीजनः, कल्याणीप्रधानः अपूरणीप्रियादिष्विति किम् ? श्रेष्ठापञ्चमी, कल्याणी पञ्चमी रात्रिर्यासां ताः कल्याणी-पञ्चमा रात्रयः । इह प्रधानपूरण्या एव निषेधोऽत्समासान्तश्च भवति, तेन संज्ञायां गौण्याः कप् कल्याणपञ्चमीकः पक्षः ; प्रियादौ—कल्याणीप्रिया, मनोज्ञादुहिता, कल्याणीप्रियः, विदुषीकान्तः ; मानिनीदुहितृकः ; प्रिया, कान्ता, सुभगा, दुर्भगा, वामना, दृढ़ा, विदुषी, भक्ति, क्षमा, समा, दुहिता चपलेत्यादि । (१८)

---

(१८) भाषितं पुमान् यया सा भाषितपुंस्का, योहि शब्दएकार्थ एव विशेषणतां प्राप्य स्त्रियां पुंसि च वर्त्तते यदा स्त्रीविशेषणतां प्राप्नोति तदा स्त्रीत्वं, यदा पुंविशेषणतां प्राप्नोति तदा पुंस्त्वं च भजते विशेष्यानुसारतो यस्य लिङ्गपरिवर्त्तनं भवति इति यावत् स शब्दो यदा स्त्रीलिङ्गे वर्त्तते तदा भाषितपुंस्केति उच्यते अत्रेदमपि ज्ञातव्यं यत् यस्य भिन्नार्थे लिङ्गभेदस्तस्य न भाषितपुंस्कता, यथा द्रोण-शब्दस्य परिमाणार्थे पुंस्त्वे, गोविधन्यर्थे स्त्रीत्वेऽपि न भाषितपुंस्कत्वं समानाधिकरणे स्त्रियां विशेष्यभूतायां परतः ऊङन्तभिन्ना सा भाषित-पुंस्का स्त्री पुम्वत् रूपं प्राप्नोतीत्यर्थः स्त्रियाः पुम्वद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु इति पाणिनीयसूत्रम् (६।३।३४)।

२७। स्त्रिष्टप्रियादिषु च।

[ स्त्रिष्ट प्रियादिषु ७।॥, च १ । ]

पुरणीप्रियाद्यपवादोऽयं एषु स्त्री पुम्वत्। स्त्रिष्टप्रियः, विमुक्तकान्तः, दृढ़भक्तिः, प्रियदुहिता, मृगचपला, महापञ्चमी, पुण्यषष्ठीत्यादि।

---

तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं ऊङन्तभिन्नस्य तथाभूतस्य शब्दस्य पुंवाचकस्येव रूपं स्यात्, समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे, न तु पूरण्यां प्रियादौ च परतः। चित्रा गावोयस्य स चित्रगुः। चित्रा जरती गौर्यस्य इति विग्रहे अनेकोक्तेर्बहूनामपि बहुब्रीहिः, अत्र केचित् चित्राजरतीगुः, जरतीचित्रागुर्वा। एवं दीर्घातन्वीजङ्घः, तन्वीदीर्घजङ्घः, त्रिपदे बहुब्रीहौ—प्रथमस्य पुम्वत् उत्तरपदस्य मध्यमेन व्यवधानात्, द्वितीयमपि न पुम्वत् पूर्व्वपदत्वाभावात्, उत्तरशब्दो हि समासस्य चरमावयवे रूढ़ः पूर्व्वपदशब्दस्तु प्रथमावयव इति वदन्ति। वस्तुतस्तु नेह पूर्व्वपदमाक्षिप्यते अनङ् ऋत इत्यत्र यथा। तेनोपान्त्यस्य पुम्वदेवचित्राजरद्गुरित्यादि। चित्रा जरत्यौ गावौ यस्येति द्वन्द्वगर्भेऽपि चित्राजरद्गुरिति भाष्यम्। कर्म्मधारय पूर्व्व पदे तु द्वयोरपि पुंवत् जरच्चित्रगः, कर्म्मधारयोत्तरपदे तु चित्रजरद्गवीकः। इति सिद्धान्तकौमुदी। उक्तपुंस्कादनूङ्स्त्रीपुम्वत् स्त्रियां। इति संक्षिप्तसारसूत्रम्। कोऽपि शब्दः क्वचित् प्रवृत्ति—निमित्ते पुंसमुक्त्वा प्रवृत्तिनिमित्तान्तरे स्त्रियमभिधत्ते, कोऽप्येकस्मिन्नेव प्रवृत्तिनिमित्ते पुंसं अभिधाय स्त्रियमभिधत्ते। भिन्नप्रवृत्तिनिमित्ते उभयार्थाभिधानं विप्रकृष्टं बुद्धिद्वयग्राह्यत्वात्। एकप्रवृत्तिनिमित्ते उभयाभिधानं सन्निकृष्टं एकबुद्धिग्राह्यत्वात् अतस्तद्-

## २८। कल्पादि—तद्धिते च।

[ कल्पादि (कल्प आदि)—तद्धिते ७।, च० १ । ]

कल्पादौ स्त्रीपुम्बद्भवति। अत्र परिगणनं। कल्प, देश्य, देशीय, तर, तम, चरट् जातीय, रूप, पाश, थमु, था, दा, र्हि, थ्य, । ब्रह्मकल्पा, रम्यतरा, पटुचरी, ब्रह्मपाशा, कया आकृत्या कथं, तया आकृत्या तथा, तस्यां वेलायां तदा, तर्हि, अज थ्या। थसि बह्वल्पार्थस्य । बह्वीभ्यो देहि बहुशोदेहि, अल्पशः। त्वतापोर्गुणवचनस्य। पट्व्याभावः पटुत्वं, पटुता; मृदुत्वं, मृदुता, गुणवचनस्येति किम्? कठीत्वं, दण्डनीत्वं, व्यभिचारित्व मित्यपीष्यते गुणे च तन्वीत्वमित्यपि। भस्याढेये तद्धिते। हस्तिनीनां संघः हास्तिकं, अढेय इति किम्? रौहिणेयः, ऐणेयः।

## २९। तसादौ च बह्वोः।

[ तसादौ (तस्-आदि) ७।, च ०।१।, बह्वोः ६। ]

अत्र बह्वोः स्त्रीपुम्वत्। बह्वीभ्यो—बहुतः, बह्वीषु—बहुत्र। (क)

---

यद्वाक्यमेव युज्यते वृद्धभार्य्येति कर्म्मधारयः, वृद्धत्व नाम सामान्यविशेषो वृद्धशब्दस्य प्रवृत्तिनिमित्तं त्वमेकमर्थमुपादाय असौ पुंसि, स्त्रियाञ्च वर्त्तते। वृद्धः पुमान् वृद्धा स्त्रीति तस्माद्भाषितपुंस्कोऽयं शब्दः।

(क) तसिलादिष्वाकृत्वसुचः। ६।३।३५ इति पाणिनीयसूत्रं। तसिलादिषु कृत्वसुजन्तेषु परेषु स्त्रियाः पुम्वत् स्यात्। तसिलादीनां परिगणनं कर्त्तव्यं प्रयोजनमित्याशिषयोर्हाराय। तत् तसौ; तरप,

३० । क्यङ्मानिनोः । [ क्यङ्, मानिनोः ७।। ]

क्यङि मानिनि च परे स्त्रीपुम्वद्भवति । एनी—एतायते, दर्शनीयां मन्यते दर्शनीयमानी भार्य्यायाः । (ख)

३१ । सर्व्वनाम्नोवृत्तिमात्रे तसादौ च ।

[ सर्व्वनाम्नः ६।, वृत्तिमात्रे ७।, तसादौ (तस्-आदि) ७।, च ०१। ]

एकार्थे वृत्तिमात्रे सर्व्वनाम्नः स्त्री पुम्वत् । सर्व्वासां प्रियः, सर्व्वप्रियः, अन्यतनयः, तस्यामुखं तन्मुखं, एकक्षीरं ; तद्धिते—एक-

---

तमपौ ; चरट्, जातीयरौ ; कल्पप्, देशीयरौ ; रूपप्, पाशपौ ; थाल्, तिल्, थ्यनौ । इत्येते तसिलादयः । वह्नीषु—बहुच्, बहुतः, दर्शनीयतरा, दर्शनीयतमा, पटुचरी, पटुजातीया, दर्शनीयकल्पा, दर्शनीयदेशीया, दर्शनीयरूपा, दर्शनीयपाशा, बहुधा, प्रशस्ता वृकी, वृकतिः, अजाभ्यो-हिता अजथ्या । इति सिद्धान्तकौमुदी ।

(ख) क्यङ् मानिनोश्चेति । ६।३।३६ पाणिनीयसूत्रं अनयोः परयोः पुम्वत् । श्येतीवाचरति श्येतायते, स्वभिन्नां काञ्चिद्दर्शनीयां मन्यते दर्श-नीयमानिनी । इति सिद्धान्तकौमुदी, या आत्मानमेव दर्शनीयां मन्यते तत्र स्त्रियाः पुम्वदित्यनेन (६।३।३४) सिद्धं ; एकस्या रूपभेदेन कर्म्मकर्तृ-त्वयोः सत्त्वेऽपि वास्तवाभेदेन सामान्याधिकरण्यादिति भावः । इति तत्त्वबोधिनी । क्वचिदन्यत्रापीति सङ्क्षिप्तसारसूत्रम् । कर्म्मधारये बहु-व्रीहौ च स्त्रीलिङ्गे उत्तरपदे परे पुम्वद्भाव उक्तः क्वचिदन्यत्रापि भवति, यथा प्राप्तोजीविकां प्राप्तजीविकः, द्वितीया भिक्षायाः द्वितीयभिक्षा, दर्शनीयां मन्यते भार्य्यां दर्शनीयमानीभार्य्यायाः, मानिन्युत्तरपदे परे सर्व्व-त्रैव पुम्वद्भावो द्रष्टव्यः । एवमुत्तमा श्रीते उत्तमश्रयः इति गोयीचन्द्रः ।

स्वागतं एकरूप्यं, एकमयं, एकत्वं, भवदीयं, तसादौ च—तस्या स्ततः, तस्यां तत्र, कस्यां क्व, भवतीप्रसादादित्यपीष्यते। (ग)

२२। कुक्कुट्यादीनामण्डादिषु।

[कुक्कुट्यादीनां (कुक्कुटी-आदि) ६।।।, अण्डादिषु ७।।।]

पुम्वत्। कुक्कुट्या अण्डं, कुक्कुटाण्डं, मृगपदं, मृगक्षीरं, काकशावः। (घ)

२३। न नाम पूरणीकोपधस्यापाकादेरकर्म्मधारय—जातीयदेशीये।

[न ०१।, नाम, पूरणी, कोपधस्य (क-उपध) ६।, अ (न) पाकादेः (पाक-आदि) ६।, अ (न) कर्म्मधारय, जातीय, देशीये ७।]

कर्म्मधारयादेरन्यत्र संज्ञादीनां भाषितपुंस्का स्त्री पुम्वन्न भवति। दत्ताभार्य्यः, दत्तामानिनी, दत्ताकल्पा, पञ्चमीभार्य्यः, द्वितीयाकल्पा, कोपधायाः—मद्रिकाभार्य्यः, पाचिकाभार्य्यः, पाचिकाकल्पा, पाचिकायते, पाचिकामात्मानं मन्यते पाचिका—

---

(ग) सर्व्वनाम्नोवृत्तिमात्रे इति भाष्यं। भवतोऽक् समासे पुम्वद्भावो हेत्वर्थः सर्व्वस्यादिश्चेति। एकात्तद्धितोत्तरपदयोः। पुम्वत् चादावित्यादीनि च सङ्क्षिप्तसारसूत्राण्यनेनैव गतार्थानि।

(घ) कुक्कुट्यादीनामण्डादिषु। इति वार्त्तिकं, कुक्कुट्यादिरण्डादौ। इति सङ्क्षिप्तसारसूत्रं। कर्म्मधारयबहुव्रीहिसमासादन्यत्वात्, अस्त्रीलिङ्गोत्तरपदत्वाच्चाप्राप्ते विधानमिति गोयीचन्द्रः।

मानिनी, अपाकादेरिति किम्? पाकभार्य्यः, एकभार्य्यः, शुष्कशाखः; कर्म्मधारयादौ तु—पुम्वदेव—दत्तवृन्दारिका, पञ्चमवृन्दारिका पाचकवृन्दारिका कारकजातीया, दत्तदेशीया । (ङ)

३४ । वृद्धिहेतोस्तद्धितस्यारक्तविकारयोः ।

[ वृद्धिहेतोः ६।, तद्धितस्य ६।, अ (न) रक्त, विकारयोः ७।। ]

वृद्धिनिमित्तस्य तद्धितस्य स्त्री पुम्वन्न भवति। औपगवीभार्य्यः, कल्पे—माथुरिकल्पा, माथुरीमानिनी, वृद्धिहेतोरिति किम्? मध्यमभार्य्यः अरक्त इति किम्? कषायीकन्था यस्य स कषाय—

(ङ) न कोपधायाः (६।३।३७) संज्ञापूरण्योश्च इति (६।३।३८) पाणिनीयसूत्रद्वयं । संज्ञापूरण्योः । तद्धितकोपान्तः । इति संक्षिप्तसार-सूत्रद्वयञ्च द्रष्टव्यं । नन्वेकद्रव्याभिनिवेशित्वात् संज्ञाशब्दानां भाषितपुंस्कत्वाभावात् पुम्वद्भावाऽप्राप्तौ कथं निषेधः । इति चेत् प्रोच्यते, न त्वयं नियमः एकद्रव्याभिनिवेशिभिः संज्ञाशब्दैर्भवितव्यमिति । तथाहि देवदत्तादिशब्दोऽनेकद्रव्यसंज्ञाभूतः प्रयुज्यमानो लोके उपपद्यते । यथा शास्त्रेऽपि घ्वादिशब्दः । या त्वेकद्रव्याभिनिवेशिनी संज्ञा तां प्रति नैष-निषेधः। भवन्तु संज्ञाशब्दा अनेकद्रव्यवृत्तयः उक्तपुंस्कास्त्वेकाश्रया-मात्रतो कथं? नहि तेषां किञ्चित् प्रवृत्तिनिमित्तमस्ति यदृच्छा शब्दत्वात् एतदप्यसारं यतस्तेषामपि केषां किञ्चित् प्रवृत्तिनिमित्तमस्त्येव यदृच्छा-शब्दत्वात् सप्तपर्णादिवत् किमत्रानुपपन्नं दत्तशब्दोऽयं दानक्रियास्वरूप एव प्रवृत्तिनिमित्ते उक्तपुंस्कः। अतएव दानक्रियानिमित्तः स्त्रियां पुंसि च संज्ञाभूतोऽयमिति भाषितपुंस्कत्वमस्तीति सिद्धान्तकौमुदी ।

वान्यः विकारे—लौही ईषा अस्य लौहेषोरथः। अकर्मधारया दावित्येव—माथुरवृन्दारिका, माथुरजातीया। (च)

## ३५। जातिस्वाङ्गादीदमानिनि।

[ जाति, स्वाङ्गात् ५।, ईत् ०१।, च (न) मानिनि ७। ]

जातेः, स्वाङ्गाच्च परा स्त्री ईत् पुम्वन्न भवति। कुम्भकारोभार्य्यः, कल्पे—ङ्यौङ्स्वः कठिकल्पा, सुकेशिभार्य्यः, सुकेशिकल्पा अमानिनीति किम्? कठमानिनी, सुकेशमानिनी, अकर्मधारयादावित्येव—कठवृन्दारिका, सुकेशदेशीया। (छ)

---

(च) वृद्धिहेतोरिति किम्? तावद्भार्य्यः, वैयाकरणभार्य्यः, नाऽत्र तद्धितोवृद्धिनिमित्तं। वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे (६।३।३९) इति पाणिनीयसूत्रं। वृद्ध्यर्थतद्धितान्तोऽरक्तविकारयोः। इति सङ्क्षिप्तसारसूत्रं।

(छ) स्वाङ्गाच्चेतः (६।३।४०) जातेश्च। (६।३।४१) इति पाणिनीयसूत्रद्वयं। अमानिनीति वक्तव्यमिति वार्त्तिकम्। अमानिनि स्वाङ्गादी। जातिश्चेति सङ्क्षिप्तसारसूत्रद्वयं। सङ्क्षिप्तसारे न सपत्न्यादिवैङ्क्ष्योऽहा चेति सूत्रेण वङ्क्ष्योहा कर्म्मधारये च सपत्न्यादीनां पुम्वद्भावो निषिद्धः। सपत्नीवृन्दारिका, सपत्नीभार्य्यः। सपत्नी, आग्रहायणी, अनडुही, अनड्वाही, रोहिणी, रेवती, पृथिवीत्यादयः। जातिलक्षणं यथा—आकृति ग्रहणा जातिर्लिङ्गानाञ्च न सर्व्वभाक्, सकृदाख्यातनिर्ग्राह्या गोत्रञ्च चरणैः सह। इति आकृतिरवयवसंस्थानं तया ग्रहणं यस्या, सा आकृतिग्रहणा, मयूरी, कुक्कुटी, शूकरीत्यादयः। या सर्व्वाणि

३६ । तर, तम, कल्प, रूप, चेलड्, ब्रुव, मत, हत, गोत्रे ङ्यनेकाचोह्रस्वः ।

[ तर——गोत्रे ७।, ङी ०६।, अनेकाच: ( न-एक-अच् ) ६।, ह्रस्वः १। ]

तरादौ परे अनेकाचो ङ्यन्तस्य ङीह्रस्वः स्यात् । ब्राह्मणितरा, भुजङ्गिकल्पा, पट्वितमा, गौरिरूपा, वृषलिचेली, ब्राह्मणिब्रुवा, तरुणिमता, गौरिहता, पट्विगोत्रा, भाषितपुंस्के—त्येव—बदरीतरा ।

३७ । उगितः श्रेषनदी च वा पुम्बच्चोगितः ।

[ उगितः ६।, शेषनदी १।, च ०१।, वा ०१।, पुम्वत् ०१।, च ०१।, उगितः ६। ]

उगितोङी, शेषनदी च तरादौ ह्रस्वो वा स्यात् । कासौ शेषनदी—एकाचङी, ऊङन्ता च, ऋदन्ता च, उगितः पुम्वच्च वा स्यात्, पुम्वत्वं तद्धित एवेष्यते । श्रेयसितरा, श्रेयस्तरा, श्रेयसीतरा विदुषिकल्पा, विद्वत्कल्पा, विदुषीकल्पा* । एकाच्ङी—स्त्रितरा, स्त्रीतरा ; ऊङ—धीवन्धुतमा ; धीवन्धूतमा ; ऋतः—लक्ष्मीकल्पा लक्ष्मिकल्पा ; स्त्रियामित्येव—स्त्रीकल्पः । ऋन्नद्याः प्रतिषेध इत्येके । (ज)

---

न तु भजते सा जातिः । या च सकृत् एकवारं आख्याता सती निश्चयेन ग्राह्या भवति । तथा चरणैः सह गोत्रञ्च जातिः कठी, गार्गीत्यादयः ।

(ज) ऋन्नद्या न इति वार्त्तिकम् । लक्ष्मीतरा ।

---

* ह्रस्वाभावपक्षे तसिलादिष्विति पुम्वत् इत्यादिषु विदुषीतरा इत्युदाहृतं तन्निर्मूलम् इति सिद्धान्तकौमुदी ।

३८। वले दीर्घोऽणः।

[ वले ७।, दीर्घः १।, अणः ६। ]

वलप्रत्ययेऽणन्तस्य दीर्घः स्यात्। दन्तावलः, कृषीवलः। (झ)

३९। नहि, वृति, वृषि, व्यधि, रुचि, तनिषु क्वान्तेषु।

[ नहि—तनिषु ७।।।, क्वान्तेषु (क्वि-अन्त) ७।।। ]

एषु क्विवन्तेषु पूर्व्वस्याणोदीर्घः स्यात्। उपानत्, नीवृत्, परीतत्, प्रावृट्, मर्म्माविध्, नीरुक्; प्रादेः क्विन्निमित्तोपपदस्य चाभिधानान्नेह—तिग्मरुक्। (ञ)

४०। कर्णे लक्षणस्याश्रुवादेः।

[ कर्णे ७।, लक्षणस्य ६, अ (न) श्रुवादेः (श्रुव आदि) ६। ]

कर्णे परे लक्षणवाचिनो दीर्घः स्यात्। दात्राकर्णः, स्थूलाकर्णः; अश्रुवादेरिति किम्? श्रुवकर्णः। श्रुव, स्वस्तिक, छिन्न, भिन्न, मति, छिद्र, रिष्ट, अष्ट, पञ्च। लक्षणस्येति किम्? शोभनकर्णः।

---

(झ) अपेक्षितविषयत्वात्, बहुलाधिकाराद्वा वलप्रत्ययस्यैव ग्रहणं न नाम्नः। इति गोयीचन्द्रः। वले (६।३।११८) इति पाणिनीयसूत्रं। वले प्रत्यये परे दीर्घः स्यात् संज्ञायामिति सिद्धान्तकौमुदी। ततश्च कृषीवल इत्यादयः। संज्ञाशब्दा एव गृह्यन्ते नतु भ्रातृवल इत्यादय इति गोयीचन्द्रः। भ्रातृवलः, उत्साहवलः, उत्सङ्गवल इत्यादौ न चासंज्ञत्वात्।

(ञ) गत्यकारकग्रहणात्? विभक्तिरनुवर्त्तते, सा च व्यवस्थिता। तेन गतिकारकयोरेव, नेह कटरुक् तिग्मरुक् इति सिद्धान्तकौमुदीमतं। क्विव्वचादावुपसर्गकारकपूर्व्वस्येति सङ्क्षिप्तसारसूत्रम्।

४१ । इकोवहेऽपीलोः ।

[ इकः ६।, वहे ७।, अ (न)- पीलोः ६।। ]

वहे इगन्तस्य दीर्घः स्यात् । ऋषीवहः, कपीवहः ; पीलोस्तु—पीलुवहः । (ट)

४२ । प्राद्घञि बहुलं ।

[ प्रादेः ६।, घञि ७।, बहुलं ०१। ]

घञि प्रादेर्बहुलं दीर्घः स्यात् । वीमार्गः, अपामार्गः, बाहुल्यात्—सादकारयोः क्वचिमे । प्रासादः, प्राकारः ; अन्यत्र—प्रसादः, प्रकारः । निषादः, निकारः ; क्वचिद्वा—प्रतिवेशः, प्रतीवेशः, प्रतिहारः, प्रतीहारः ; क्वचिन्न स्यात्—प्रहारः, प्रवाहः, इहापि नियमः । इकः काशे । नीकाशोऽनूकाशः । नेह—प्रकाशः । (ठ)

---

(ट) इको वहेऽपीलोः (६।३।१२१) इति पाणिनीयसूत्रं । कपीत्वादीनां वाच्यमिति वार्त्तिकम् । अतएव अपीत्वादेरिगन्तस्य वहे । इति सङ्क्षिप्तसारसूत्रम् । पीलुवहं, रुचिवहं, दारुवहमित्यादि ।

(ठ) उपसर्गस्य घञ्यमनुष्ये बहुलम् (६।३।१२२) इति पाणिनीयसूत्रं । अमनुष्ये किम् ? निषाद इति सिद्धान्तकौमुदी । प्राद्घञि बहुलम् । इति संक्षिप्तसारसूत्रम् । नीक्लेदः, वीमार्गः, अपामार्गः, नीहारः, नीशारः, नीवारः, प्राकारोवृत्तौ, प्रासादो गृहभेदे इत्यादौ नित्यम्, प्रतिवेशः प्रतीवेशः एवं प्रतिहार, निकार, प्रतिरोध, अभिसार, परिहास, प्रतिहास इत्यादौ विकल्पः, प्रकार, प्रसार, विसार, प्रसाद,

४३। विश्वस्य वसुराटोः।

[ विश्वस्य ६।, वसु, राटोः ७।। ]

अनयोर्विश्वस्य दीर्घः स्यात्। विश्वावसुः, विश्वाराट् : राड़िति निर्द्देशात् नेह—विश्वराजौ। (ड)

४४। नरे च नाम्नि। मित्रे च ऋषौ।

[ नरे ७।, च ०१।, नाम्नि ७। । मित्रे ७।, च ०१।, ऋषौ ७। ]

विश्वानरः, विश्वामित्रः ऋषिः। ऋषौ किम ? विश्वमित्रो मानवकः।

४५। यथारूढि संज्ञायां।

[ यथारूढि ०२।, संज्ञायां ७। ]

नाम्नि दीर्घः स्यात्। संस्कृता, असंस्कृता वाऽपि (नाम्नः) प्रायः संज्ञा यथाश्रुता। कोटरावणं, पोटरावणं, मिश्रकावणं, किंशुलकागिरिः, लोहितागिरिः। मतौ च। उडुम्बरावती, मशकावती, वारणावती, शरावती, अहीवती, पद्मावतीत्यादि ;

---

प्रसेव, विवाद, अवसाद, इत्यादौ निषेधः। इति जुमरः। प्रायेण मनुष्याभिधानेऽपि स्यात् निषादश्चाण्डाल इति च। इगन्तोपसर्गस्य काशे। इति सङ्क्षिप्तसारसूत्रम्। इकःकाशे इति पाणिनीयम् (६।३।१२३) अतःपरं सङ्क्षिप्तसारे दादौ च तादेशे। इति सूत्रान्तरमस्ति नोक्तं, अनुक्तम्।

(ड) राड़िति पदान्तोपलक्षणार्थं इति सिद्धान्तकौमुदी, तेन भ्यामादौ विश्वाराड्भ्यामित्यादि रूपाणि भविष्यन्ति। राजि टादेशे इति सङ्क्षिप्तसारसूत्रम्। विश्वं वसु यस्य स विश्वावसुः।

यथासङ्‌ख्यवचनान्नेह—अजिरवती, मलयवती । शुनोदंष्ट्रादौ । श्वादंष्ट्रः, श्वापुच्छः । अष्टनोवक्रादौ । अष्टावक्रः, अष्टापदम् । कपाले हविषि । अष्टाकपालं हविः । गवि तद्युक्ते । अष्टागवं शकटं, द्विगुरयं । (ढ)

४६ । चितेः कपि । [ चितेः ६।, कपि ७। ]

चितेः कपि दीर्घः स्यात् । एकचितीकः, द्विचितीकः ।

४७ । अन्येषामपि दृश्यते ।

[ अन्येषां ६।।।, अपि ०।। दृश्यते तिङ् ]

अन्येषामपि दीर्घः स्यात् । दण्डादण्डि, बाहूबाहवि, यष्टी-यष्टि, श्वापदं, श्वाकर्णः, श्वापुच्छः, श्वपुच्छो वा ; जनाषाट्, पूर्वा-मुखः, उत्तरामुखः । उक्तो दीर्घः । (ण)

---

(ढ) मतौ बह्वचो । नाजिरादीनां (६।३।११९) इति पाणिनीय-सूत्रम् । अजिरादयो यथा सङ्क्षिप्तसारे अजिर, खदिर, खपुर, पुलिन, मलय, कलहंस, चक्रवाक, कारण्डव । अनाम्नि तु वलयवती । शरादीनां (६।३।१२०) पाणिनीयसूत्रम् । शरादेश्चेति सङ्क्षिप्तसारसूत्रं शर, वंश, पद्म, धूम, अहि, मुनि, कपि, मणि, शुचि, हनु । इति शरादिगणः । दंष्ट्रादावित्यादिपदेन दन्त, कर्ण, कूर्द, वराह, पुच्छ पदानां ग्रहणम् । पदपुच्छयोर्वेति आन्ध्राः । कूर्द इत्यत्र कुन्द इति क्वचित् पाठः । अष्टनः संज्ञायां (६।३।१२५) इति पाणिनीयसूत्रम् । पदः बन्धुर इति वक्रादयः । असंज्ञायां अष्टवक्रः । अवक्रादौ अष्टभार्य्यः ।

(ण) क्वचिदन्यत्रापीति सङ्क्षिप्तसारसूत्रम् ।

४८। गोत्रे याप् ईः पुत्रपत्योस्तत्पुरुषे ।
[ गोत्रे ७।, याप् ०१।, ईः १।, पुत्र, पत्योः ७।।, तत्पुरुषे ७। ]

तत्पुरुषे पुत्र, पत्योः परयोः गोत्रे स्त्रियां याप् ईः स्यात् । कारीषगन्धीपुत्रः, जातुकर्णीपतिः, जातुकर्णीपुत्रः । तत्पुरुष इति किम् ? कारीषगन्ध्यापतिर्ग्रामः । (त)

४९। बन्धौ बहुव्रीहौ वा च मातृक मातृमातेषु ।
[ बन्धौ ७।, बहुव्रीहौ ७।, वा ०१।, च १।, मातृक, मातृ, मातेषु ७।।। ]

बन्धौ परे बहुव्रीहौ याप् ईः स्यात् । कारीषगन्ध्याबन्धुरस्य कारीषगन्धीबन्धुः । वा च मातृकादिषु । हे कारीषगन्धीमातृक, हे कारीषगन्ध्यामातृक, कालेनीमाता, कालेन्यामाता, हे वाराहीमातः, हे वाराह्यामातः । (१)

(त) ष्यङः सम्प्रसारणं पुत्रपत्यो स्तत्पुरुषे (६।१।१३) इति पाणिनीयसूत्रं ष्यङन्तस्य पूर्व्वपदस्य सम्प्रसरणं स्यात् पुत्रपत्योरुत्तरपदयोस्तत्पुरुषे इति सिद्धान्तकौमुदी । सम्प्रसारणस्य (६।३।१३९) सम्प्रसारणस्य दीर्घः स्यादुत्तरपदे । कुमुदगन्धीपुत्रः । स्त्रीप्रत्यये चानुपसर्ज्जने नेति तदादि नियमप्रतिषेधात् परमकारीषगन्धीपुत्रः । उपसर्ज्जने तु तदादि नियमात् नेह । अतिकारीषगन्ध्यापुत्रः । इति सिद्धान्तकौमुदी । अतिकारीषेति अत्यादय इति समासे पुनस्तत्पुरुषे ष्यङन्तं न पूर्व्वपदमिति भाव इति तट्टीका ।

(१) बन्धुनि बहुव्रीहौ (६।१।१४) इति पाणिनीय सूत्रं मातज मातृक मातृषु चेति वार्त्तिकं । नेह-कारीषगन्ध्याया माता, कारीषगन्ध्या माता

## ५०। इदं किमोरीकी दृग् दृश दृक्षेषु।

[ इदं किमोः (इदम्—किम्) ६।।, ई, की ०१।।, दृक् दृश, दृक्षेषु ७।।। ]

दृगादिषु इदम ईः, किमः कीः स्यात्। ईदृक, ईदृशः, ईदृक्षः ; कीदृक्, कीदृशः, कीदृक्षः। (२)

## ५१। अन्यतदादेष्टेरात्।

[ अन्य, तदादेः (तत्-आदि) ६।, टेः ६।, आत् ०१।। ]

दृग्, दृश, दृक्षेषु अन्यतदादेष्टेराद्भवति। अन्यादृक्, अन्यादृशः अन्यादृक्षः, तादृक्, तादृशः, तादृक्षः, यादृक्, अमूदृक्, एतादृशः, भवादृशः। (३)

## ५२। महतश्चैकाधिकरण, जातीययोः।

[ महतः ६।, च० १।, एकाधिकरण, जातीययोः ७।। ]

अत्र महतष्टेराद्भवति। महापुरुषः, महान् भुजोऽस्य महाभुजः, महाभार्य्यः, महाजातीयः एकाधिकरण इति किम्? महतः पुत्रः महत्पुत्रः। न च्व्यर्थे महद्भूतः। घासकरविशिष्टेषु पुम्वच्च। महत्या घासः। महाघासः, महाकरः, महाविशिष्टः।(४)

(२) इदङ्किमोरीश्की (६।३।९०) इति पाणिनीयसूत्रं। दृक्षे चेति वार्त्तिकं। यणादिः क्रमादेः। इदम ईः इति संक्षिप्तसार सूत्रद्वयम्।

(३) आसर्वनाम्नः दृक्षे चेति वार्त्तिकम्। आत्यदादेरन्त इति संक्षिप्तसारसूत्रम्।

(४) आन्महतः समानाधिकरणजातीययोः (६।३।४६) इति पाणिनीय सूत्रम्। पदाधिकारे तदन्तस्यापि ग्रहणविधानात् महच्छब्दान्तस्यापि,

५३। द्व्यष्टनोर्दशादौ वा तु चत्वारिंशदादिष्वानवतेर-वह्वब्रीह्यशीत्योः। त्रेस्त्रयश्च।

[ द्व्यष्टनः (द्वि-अष्टन्) ६।, दशादौ (दश-आदि) ७।, वा ०१।, तु ०१।, चत्वारिंशत्आदिषु ७।।।, आनवतेः (आ-नवति) ५।, अ (न) वह्वब्रीह्यशीत्योः (वह्वब्रीहि,—अशीति) ७।। ]। [त्रेः ६।. त्रयः १।. च० १।]

दशादौ द्व्यष्टनष्टेराद्भवति। त्रेस्त्रयश्च। द्व्यधिका दश द्वादश, द्वाविंशतिः, द्वात्रिंशत्, अष्टादश, अष्टाविंशतिः, अष्टात्रिंशत्, त्रयोदश, त्रयोविंशतिः, त्रयस्त्रिंशत्। वा तु चत्वारिंशदादिषु। द्वाचत्वारिंशत्, द्विचत्वारिंशत, अष्टाचत्वारिंशत्, अष्टचत्वारिंशत्, त्रयश्चत्वारिंशत्, त्रिचत्वारिंशत् एवं यावन्नवतेः—

---

ग्रहणं, तेन परममहापुरुष इत्यादि सिद्धिः। तदन्तग्रहणेऽपि गौणस्य न ग्रहणं भाष्ये महद्भूतश्चन्द्रमा इत्युदाहरणे च्वन्ते गौणत्वान्नात्त्वमित्युक्तत्वात् तेन अतिमहद्दाकृतिरित्येवेति शब्देन्दुशेखरः। महती शब्दस्य पुम्वत् कर्म्मधारये इति पुम्वद्भावे कृते आत्त्वम् महाजातीया। महतीप्रिया इत्यत्र पुम्वन्न प्रियदाविति पुम्वद्भावनिषेधः। अमहती महती भूता महद्भूता ब्राह्मणी। महाभार्य्यः इत्युदाहरणं पाणिण्यादिविरुद्धम्। पुम्वत् कर्म्मधारय जातीय देशीयेषु (६।३।४२) पाणिनीय सूत्रम्। कर्म्मधारय एव पुम्वत्त्वं नानयत्र स च पुम्वद्भावः पूरणी प्रियादिष्वप्राप्तो विधीयते महानवमी, महाप्रिया इति सिद्धान्तकौमुदी। वह्वब्रीहौ पुम्वद्भावाभावात्। महादिति रूपाभावान्नात्त्वं अतएव महती प्रिया अस्येति महतीप्रिय इति संक्षिप्तसारम्।

द्वानवतिः, द्विनवतिः, अष्टानवतिः, अष्टनवतिः, त्रयोनवतिः, त्रिनवतिः, आनवतेरिति किम्? द्विशतं. अष्टसहस्रं, त्र्ययुतं अवहुव्रीह्यशीत्योरिति किम्? द्विदशाः, त्रिदशाः, द्व्यशीतिः, त्र्यशीतिः (५)।

५४। षोड़शैकादश च।

[षोड़शैकादश (षोड़श एकादश) १।१।, च० १।]

षषः षउत्वं, दस्य डत्वं, दीर्घत्वञ्च निपात्यते। षोड़शः, एकादशः। (६)

५५। अन्नञोऽनखादेरचित्वन्।

[अन १।। नञः ६।, अनखादेः (न-नख आदि) ६।, अचि ७।, तु ०१।. अन् ०१।]

उत्तरपदे परे नञोऽन्भवति। अब्राह्मणः, अशौचः; अचि तु- अन्-अनृषां, अनुरुः, सर्वान्तमुत्तरपदं ततोनेह नाति शुक्लं; अनखादेरिति किम्? नास्ति खं शून्यं अस्मिन् नखः, न भ्राजते नभ्राट्, न पातीति नपात्। पृषोदरादि। नवेत्ति नवेदाः असन्तः, नास्त्यसत्यमस्मिन् नासत्यः, संज्ञायामेवं नमुचि, नकुल, नपुंसक, नक्र, नाकाः। नगो वा द्रुमशैलयोः। पक्षे अगः। (७)

---

(५) सिद्धान्तकौमुद्यां बहुव्रीहौ द्विना इत्यप्युदाहृतं।

(६) षषउत्वं दतृदशधासूत्तरपदादेः, ष्टुत्वञ्च धासुवेति वाच्यमिति वार्त्तिकम्। षोड़न्, षोड़श, षोढ़ा, षड्धा इति सिद्धान्तकौमुदी।

(७) नभ्राण्नपान्नवेदा नासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या (६।३।७५) इति पाणिनीयसूत्रम्। नमुञ्चतीति नमुचिः, नकुलमस्य

५६ । तिङि चाक्षेपे । [तिङि ७।, च० १।, आक्षेपे ७। ]

नञस्तथा स्यात् । अपचसि जाल्म:, अघटते नितरां, अन-श्नान त्वं ॥

५७ । एकादन्नः । [एकात् ५।, अन्नः १। ]

एकान्नञोऽन्न: स्यात् । एकान्नविंशतिः, एकान्नशतं ।

५८ । सहस्य सो वा बहुव्रीहौ ।

[ सहस्य ६।, स: १।, वा० १।, बहुव्रीहौ ७। ]

अत्र सहस्य सो वा स्यात् । सपुत्र:, सहपुत्रो वा; बहुव्रीहौ किम् ? सहयोद्धा ।

५९ । आशिषि गोवत्स हलेष्वेव ।

[ आशिषि ७।, गो, वत्स, हलेषु ७।।, एव ०१। ]

आशंसायां गवादिष्वेव सहस्य सो वा स्यात् । स्वस्ति ते सगवे, सहगवे वा ; स्वस्ति ते सवत्साय सहवत्साय वा ; सह-लाय, सहहलाय वा, नान्यत्र स्वस्ति ते सहपुत्राय । (८)

---

नकुल:, नस्त्रीपुमान् नपुंसकं स्त्रीपुंसयो: पुंसकभावोनिपातनात् । नक्रामतीति नक्र: क्रमेड: । नास्यकमस्मिन्निति नाक: । इति नैकधे-त्यादेर न शब्देन सह सुपेति समास: । इति सिद्धान्तकौमदी । नगो-ऽप्राणिष्वन्यतरस्याम् । (६।३।७७) इति पाणिनीदसूत्रम् । नत्र इत्यत्र नञ् प्रकृत्या वा नग:, अग: पर्व्वत: । इति सिद्धान्तकौमुदी ।

(८) अत्र चतुर्थी कारयाशीर्व्वादार्थं शब्दप्रयोगे गवादिष्वेवेति नियमो बोध्यस्तेन राज्ञ: शिवं सावरजस्य भूयात्, येन सवत्साय नृप:

৬০। নিত্যং সংজ্ঞা গ্রন্থান্তাধিকানুমেয়ে।

[ নিত্যং ০১।, সংজ্ঞা, গ্রন্থান্তাধিকানুমেয় (গ্রন্থান্ত-অধিক-অনুমেয়) ৭। ]

এষু নিত্যং সহস্য সঃ স্যাৎ। সংজ্ঞায়াং সাশ্বত্থং স্থানং, গ্রন্থান্তে সাঙ্গান্ বেদান্ অধীতে অঙ্গান্তানিত্যর্থঃ। অধিকে—সদ্রোণা খারী, অনুমেয়ে সাগ্নিঃ কপোতঃ গৃহে কপোতপতনাদ্-ভাব্যগ্নিরনুমীয়তে, সপিশাচিকা বাত্যা।

৬১। অব্যয়ীভাবে চাকালে।

[ অব্যয়ীভাবে ৭।, চ০ ১।, অ (ন) কালে ৭। ]

অত্র সহস্য সঃ স্যাৎ। সচক্রং নিধেহি যাণং। অকাল ইতি কিম্? সহমধ্যাহ্নং।

৬২। সমানস্য চ দৃক্, দৃশ, দৃক্ষ, জ্যোতি, জনপদ, রাত্রি, নাভি, বন্ধু, ব্রহ্মচারি, পক্ষেষু।

[ সমানস্য ৬।, চ ০১।, দৃক্, দৃশ, দৃক্ষ, জ্যোতিঃ- - -পক্ষেষু ৭।।। ]

এষু সমানস্য সঃ স্যাৎ। সদৃক্, সদৃশঃ, সদৃক্ষঃ, সজ্যোতিঃ, সজনপদঃ, সমানং ব্রহ্ম চরতীতি সব্রহ্মচারীত্যাদি।

৬৩। বিভাষা রূপ, গোত্র, নাম, স্থান, বর্ণ, ধর্ম্ম-বয়ো, জাতীয়োদরেষু।

[ বিভাষা ০১।, রূপ—জাতীয়োদরেষু (রূপ, গোত্র, নাম, স্থান, বর্ণ, ধর্ম্ম, বয়স্ জাতীয়, উদর) ৭।।। ]

প্রতস্থে ইতি কালিদাসোক্তীনাং সঙ্গতিঃ। সহযোদ্ধেত্যত্র সহ পূর্ব্বাৎ যুধ ধাতোঃ ক্বনিপ্ ততশ্চোপপদসমাসঃ। এবং "সহকান্তা প্রিয়া যস্য" ইতি বাক্যে সহকান্তপ্রিয় ইত্যেব ভবতি সহস্যাপ্রাধান্যাৎ ন সাদেশঃ।

रूपादौ समानस्य सो वा स्यात् । सरूपः, समानरूपः ; सगोत्रः, समानगोत्रो वा ; सनाम, समाननाम वा ; सधर्म्मा, समानधर्म्मा वा ; सवयाः ; समानवयाः, सजातीयः, समानजातीयः ; सोदरः, समानोदरः ; सोदर्य्यः, समानोदर्य्य इत्यादि । (९)

६४ । अन्यस्यान्यत् कारकेययोरषष्ठतृतीयास्थस्य त्वाशीराशास्थास्थितोत्सुकोति रागेषु ।

[ अन्यस्य ६।, अन्यत् ०१।, कारक ईय योः ७।।, अ(न) षष्ठी च (न) तृतीयास्थस्य ६।, तु ०१।, आशिष्, आस्था, आस्थित, उत्सुक, ऊति, रागेषु ७।।। ]

कारके, ईये च सामान्येऽन्यस्य अन्यद्भवति । अन्योऽन्यस्य कारकः अन्यत्कारकः, अन्यस्मिन् भवोऽन्यस्येदं वा अन्यदीयं ; आशीरादौ—पुनरषष्ठतृतीयास्थस्यान्यस्यान्यत् स्यात् । अन्या, अन्यस्मिन् वा आशीः अन्यदाशीः, एवं अन्यदाशा, अन्यदास्था, अन्यदास्थित, अन्यदुत्सुकः ; अन्यदूतिः, अन्यद्रागः ; अषष्ठा-

---

(९) पाणिनिमते असूर्द्ध, प्रभृति, उदर्केषु परतः समानस्य सादेशो न स्यात् । एवं ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयो वचनबन्धुषु नित्यं समानो दृगादौ इति संक्षिप्तसारसूत्रं दृगादिषु दृश्, दृश, दृक्ष, ज्योतिस्, जनपद, नाभि, रात्रि, नामन्, रूप, स्थान, वर्ण, वयस्, वचन, सेतु, बन्धु ब्रह्मचारिन्, तीर्थपिण्ड, पत्नीति जुमरः । नामगोत्ररूपस्थानवर्णवयो जातीये चेति चान्द्राः तीर्थे ये (६ ३।८७) इति पाणिनीयसूत्रं सतीर्थ्य एकगुरुकः ।

तृतीयास्थस्येति किम् ? अन्यस्याशीः, अन्याशीः अन्येनास्थितः अन्यास्थितः (१०) अर्थे वा । अर्थे तवा चान्यस्यान्यद्वा स्यात् । अन्यदर्थोऽन्यार्थो वा । (११)

६५ । कोः कत् तत् पुरुषेऽच् त्रिवद्रथेषु ।

[ कोः ६।, कत् ०१।, तत् पुरुषे ७।, अच्, त्रि, वद्, रथेषु ७॥। ]

अजादौ परे कोः कत् स्यात् । कदन्नं, कदुष्णं, कत्त्रयः । कतमस्तो न योजिष्णुयस्याज्जीयत्त्रनिस्पृहः । कामो यस्य जरन्तेते मयवंशेषु कत्त्रयः । कद्वदः, कद्रथः, एष्वेति किम् ? कुब्राह्मणः तत्पुरुष इति किम् ? काश्वोऽयं जनः ।

६६ । तृणे च जातौ । [ तृणे ७।, च ०१।, जातौ ७। ]

तृणे कोः कत् स्यात् । कत्तृणं, जाताविति किम् ? कुतृणं ।

६७ । कापथ्यक्षयोरीषदर्थे च ।

[ का ०१।, पथ्यक्षयोः ( पथि—अक्षि ) ७॥, ईषदर्थे (ईषत् अर्थे) ७।, च ०१। ]

(१०) षष्ठयक्षीत्यादौतिकम् ? अन्यस्यान्येन वाशीः अन्याशीः । कारके, के (ईये) च नायं निषेधः अन्यस्य कारकः अन्यत् कारकः, अन्यस्यायं अन्यदीयः । इति सिद्धान्तकौमुदी (६।३।९९) पाणिनीय सूत्रम् । अन्यस्यान्यदाशादौ । षष्ठी, तृतीययोर्नेष्ट आशीरादिषु समस्त इति संक्षिप्तसार सूत्रद्वयं । समस्तेति नियमात् कारके ईये च परे षष्ठी तृतीययोरपि भवति इति गोयीचन्द्रः । आशादयो यथा आशा, आशिष् आस्था, आस्थित, उत्सुक, ऊति, राग, कारक, ईय ।

(११) अर्थे इत्यत्रापि षष्ठी, तृतीययोर्नेष्ट इति संक्षिप्तसारम् । अन्यस्यान्येन वार्थः अन्यार्थ इति ।

पथ्यादौ का स्यात्। कापथः, काचः, ईषदर्थे च-काम्लं, कामधुरं। वा पुरुषे। कापुरुषः, कुपुरुषः। (१२)

९८। कवञ्चोष्णे। [कवः १।, च ०१।, उष्णे ७।]

उष्णे कोः कवः, का च वा स्यात्। कवोष्णं, कोष्णं, कदुष्णं च।

९९। हृदयस्य हृदयाण्लेखलासेषु।

[हृदयस्य ६।, हृत् ०१।, याण्लेखलासेषु (य, अण, लेख, लास) ७।।]

याणौ हृदयस्य हृद्भवति। निरनुबन्धक य प्रत्यये। हृदयस्य प्रियं हृद्यं, तस्येदं अण् हार्दं, हृदयं लिखति हृल्लेखः, हृल्लासः अन्यत्र छन्दस्येऽप्यन्ति तलोपश्च स्यात्। हृदयशोकः, हृच्छोकः; हृदयरोगः, हृद्रोगः; सौहृदय्यं, सौहृद्यं। (१३)

(१२) अविशेषादनिन्द्रियपर्याये काच्छत्रादिरिति वर्द्धमानः। बहुव्रीहावपि कुत्सिते अन्विर्यो यस्य स काच इति मतं भाष्यवार्त्तिकयो-र्नसम्मतम् कुपथमित्यसाधु इति जूमरः। पथिशब्देन समासे नित्य कादेशः। इति मायीचन्द्रः। ईषदर्थे वर्त्तमानः कुशब्दः अक्षादौ, अनक्षादौ च परे का भवति। वा पुरुष इति अप्राप्ते विभाषेयं ईष-दर्थे हि पूर्व्व विप्रतिषेधान्नित्यमेव। ईषत् पुरुषः, कापुरुषः, इति सिद्धान्त-कौमुदी। ईषदर्थे वेति भागवृत्तिः कापुरुषः, कुपुरुष इतिजूमरः।

(१३) लेखेत्यणन्तस्य ग्रहणं अन्ति तु हृदयलेखः। लेख ग्रहणमेव ज्ञापकं उत्तर पदाधिकारे तदन्त विधिर्नास्तीति सिद्धान्तकौमुदी। माधवे। लेख शब्दोऽग्रहीतः न तु घञन्त इति, हृदयसमानार्थात् हृच्छब्दात्

## ७०। नस् नासिकाया यतसि त्तुद्रेष्ववर्णनगरयोः।

[ नस् ०१।, नासिकायाः ६।. य, त, सि, चुद्रेषु ७।।।, अ (न) वर्ण नगरयोः ७।।]

यादौ नासिकाया नस् भवति। नस्यं, नस्तः पतितं, नःचुद्रं, अवर्णनगरयोरिति किम्? नासिक्यो वर्णः, नासिक्यं नगरं।

## ७१। पादस्य पदाेगोपहतात्याजिषु।

[ पादस्य ६।, पदः १।, गोप—हतात्याजिषु (ग-उपहत-आति आजि) ७।।। ]

गादिषु पादस्य पदः स्यात्। पदगः, पदोपहतः, पदातिः, पदाजिः।

## ७२। पद्धिमकाषिहतिगेषु।

[ पद् ०१।, हिम, काषि, (काषिन्) हति, गेषु ७।।। ]

हिमादिषु पादस्य पद्भवति। पद्धिमं, पत्काषी, पद्गः, पद्धतिः।

---

हल्लासादयः सिद्धमेव। हृदयशब्दोक्त हृदयलासादि प्रयोगनिराकरणार्थं मन्त्रमिदमिति च गोयीचन्द्रः। वा शोक ष्यञ् रोगेषु (६।३।५१) ष्यञ् शल्यरोगेष्विति क्वचित् पाठः इति पाणिनीयसूत्रान्तरमपि दृश्यते। हृदयशब्दपर्य्यायोहृच्छब्दोऽप्यस्ति तेन सिद्धे प्रपञ्चार्थमिदं इति सिद्धान्तकौमुदी, प्रपञ्चार्थमिति अत्र प्रयोगद्वयं अन्यत्र हृदयशब्दप्रयोग एवेति व्यवस्थार्थमिति भावः। इति तट्टीका। सुहृन्मित्रे। इति संक्षिप्तसारसूत्रं मित्रादन्यत्र सुहृदयः सज्जनः। दुर्हृच्छत्रौ। इति च संक्षिप्तसार सूत्रं। शत्राविति किम्? दुर्हृदयश्चौरः।

७३। येऽप्यतदर्थे।

[ ये ७।, अपि ०१।, अ (न) तदर्थे ( तद् अर्थे ) ७। ]

ये पादस्य पद्भवति। पादौ विध्यन्ति पद्याः कण्टकाः, पादे भवः पद्यः शूद्रः, अतदर्थे किम्? पाद्यं जलं। केवलस्य ग्रहणान्नेह द्विपाद्यं; अपिशब्दात् इके चरतौ—पदिकः। (१४)

७४। ऋचः शे। [ ऋचः ६।, शे ७। ]

ऋचः पादस्य पद्भवति। पच्छो गायत्रीं शंसन्ति वीप्सायां शस्, ऋच इति किम्? पादशः कार्षापणं ददाति। पच्छब्दोऽप्यस्ति तेनान्यत्रोभयं स्यात्। पद्घोषः, पादघोषः; पन्मिश्रः, पादमिश्रः; पच्छब्दः, पादशब्दः; पन्निष्कः, पादनिष्कः।

७५। उदकस्योदोधिपेषं वासवाहनेषु।

[ उदकस्य ६।, उदः १।, धि, पेषं, वास, वाहनेषु ७।। ]

(१४) इके चरतावुपसंख्यानं। पादाभ्यां चरति पदिक इति सिद्धान्तकौमुदी। इके चलनार्थे इति संक्षिप्तसार सूत्रम् पादस्य लोपोऽहस्त्यादिभ्यः (५।४ १३८) हस्त्यादिवर्ज्जितादुपमानात् परस्य पाद शब्दस्य लोपः स्याद् बहुव्रीहौ। व्याघ्रस्येव पादावस्य व्याघ्रपात्, प्रसादौ पादः पत् व्याघ्रपदः, व्याघ्रपदा, अहस्त्यादिभ्यः किम्? हस्तिपादः। कुम्भपदीषु (५।४।१३९) इति पाणिनीय सूत्रं, कुम्भपद्यादिषु पादस्य लोपो ङीप् च निपात्यते स्त्रियां पादः पत् कुम्भपदी स्त्रियां किम्? कुम्भपादः। कुम्भपदी, एकपदी, द्विपदी, त्रिपदी, शुनपदी, षट्पदी, विष्णुपदी, आर्द्रपदी, शितपदी, कृष्णपदी द्रोणपदी, निष्पदी, सूचिपदी इत्यादि।

एषूदकस्य उदः स्यात् । उदधिः, उपपेयं; उदवासः, उदवाहनः ।

## ७६ । संज्ञायामन्तस्य च ।

[ संज्ञायां ७।, अन्तस्य ६।, च ०१। ]

नाम्नि समासे पूर्वपदस्थान्तस्य च उदकस्य उदः स्यात् । उदमेघोगिरिः, उदपेरः, क्षीरोदः, लोहितोदः ।

## ७७ । वा मन्थौदन शक्तु विन्दु, वज्र, भार, हार, वीवध, गाहेषु ।

[ वा ०१।, मन्थौदन ( मन्थ ओदन )——गाहेषु ७।।। ]

मन्थादौ परे उदकस्योदो वा स्यात् । उदमन्थः, उदकमन्थः ; उदौदनः, उदकौदनः ; उदशक्तुः, उदकशक्तुः ; उदविन्दुः, उदकविन्दुः, उदवज्रः, उदकवज्रः । भार, हार, गाहाः कर्मण्यण्णन्ता, घञन्ताश्च । उदहारः, उदकहारः ; उदभारः, उदकभारः ; उदवीवधः, उदकवीवधः ; उदगाहः, उदकगाहः ; अणि उदगाही स्त्री ।

## ७८ । तत्पूर्ये चैकहलादौ ।

[ तत्पूर्ये ७।. च ०१।, एक हलादौ ( एक—हल—आदि ) ७। ]

तत्पूर्ये परे उदकस्योदो वा स्यात् । उदकुम्भः, उदककुम्भः ; उदपात्रं, उदकपात्रं ; एकहलादाविति किम् ? उदकस्थानं, तत्पूर्य्ये इति किम् ? उदकगिरिः । (१५)

(१४) एक असहाय हल् आदौ यस्य स एकहलादिः । असहायता च हलवर्णस्य तुल्यजातीयसान्निध्याभवः ।

७९। इकोह्रस्वोऽङ्यादेशसेयुवः।

[ इकः ६।, ह्रस्वः १।, अङ्यादेश सेयुवः च (न) ( ङी-आदेश-स इय्-उव् ) १।।। ]

उत्तरपदे परे इगन्तानां ह्रस्वो वा स्यात्। ग्रामणिपुत्रः, ग्रामणीपुत्रो वा, जम्बुलता; जम्बूलता वा; अङ्यादेरिति किम्? गार्गीपुत्रः. आदेशस्य च—कारीषगन्धीपुत्रः, शुक्लीभूतं, सेयुवः—श्रीकुलं. भ्रूकुलं।

८०। भ्रुवः कुंस कुट्योरच्च।

[ भ्रुवः ६।, कुंस कुट्योः ७।।, अत् ०१।, च०१।]

अनयोर्भ्रुवोह्रस्वोऽच्च वा स्यात्। भ्रुकुंसः, भ्रकुंसः, भ्रूकुंसः; भ्रुकुटिः, भ्रकुटिः, भ्रूकुटिः भृकुटिश्चेत्येके।

८१। ङ्यापोर्नाम्नि बहुलं।

[ ङ्यापोः ( ङी-आप् ) ६।, नाम्नि ७।. बहुलं ०१। ]

संज्ञायां ङ्यापोर्नाम्नि बहुलं ह्रस्वः स्यात्। रेवतिपुत्रः, रोहिणिपुत्रः, वैदेहिपुत्रः, वैदेहिबन्धुः, शिलवहं, शिलप्रस्थं नाम नगरं; क्वचिन्नेव नान्दीघोषः, क्वचिदसंज्ञायाञ्च। कलञ्जः, मन्दुरजः, सुसूक्ष्मजटकेशः।

८२। इष्टकेषीकामालानां चिततूल भारिषु।

[ इष्टकेषीकामालानां ( इष्टका-इषीका-माला ) ६।।।, चित, तूल, भारिषु ७।।। ]

इष्टकादेश्चितादौ ह्रस्वः स्यात्। इष्टकचितं, सविशेषणानाञ्चेष्यते। पक्वेष्टकचितं, इषीकतुलं, मालभारिणी, उत्पलमालभारिणी।

৮৩। কেঽণোঽকপি প্রত্যয়ে। আপঃ কপি বা।

[ কে ৭।, অণঃ ৬।, অ (ন) কপি ৭।, প্রত্যয়ে ৭। ] । আপঃ ৬।, কপি ৭।, বা ০১। ]

কে প্রত্যয়েঽণোহ্রস্বঃ স্যাৎ। স্রুকা, চণ্ডিকা, বধুকা, গ্রামণিকঃ, নৈষাদকর্ষুকঃ, অণ ইতি কিম্? নৌকা, অকপীতি কিম্? সস্ত্রীকঃ, সবধূকঃ। আপঃ কপি বা। বহুখট্বকো বহুখট্বাকঃ।*

৮৪। ইদস্য কাৎ পূর্ব্বস্যাপি স্বার্থেঽক্ষিপকাদেঃ।

[ ইৎ ০১।, অস্য ৬।, কাৎ ৫।, পূর্ব্বস্য ৬।, আপি ৭।, স্বার্থে ৭।, অ (ন) ক্ষিপকাদেঃ (ক্ষিপক—আদি) ৬। ]

আপি পরে প্রত্যয়ককারাৎ পূর্ব্বস্যাবর্ণস্য ইদ্ভবতি। কারিকা, পাচিকা; প্রকারার্থে—জটিলিকা, মুণ্ডিকা। মামকনরকয়োঃ। মামিকা, নরিকা। ত্যক্ত্যপোশ্চ। দাক্ষিণাত্যিকা, অমাত্যিকা। স্বার্থে ইতি কিম্? বহুপরিব্রাজকা পুরী, অক্ষিপকাদেরিতি কিম্? ক্ষিপকা, ধ্রুবকা, উপত্যকা, অধিত্যকা, দেবদত্তকা। উত্তরপদলোপে চ। দেবকা। তারকা জ্যোতিষি। অন্যত্র তারিকা। অষ্টকা পিতৃদৈবত্যে। যত্তদোশ্চ।

* কেঽণঃ। (৭।৪।১৩), ন কপি। (৭।৪।১৪), আপোঽন্যতরস্যাং (৭।৪।১৫) পাণিনীয়সূত্রত্রয়ং কেঽণ ইত্যত্র তদ্ধিতক এব ব্যাখ্যানাদিতি সিদ্ধান্তকৌমুদীটীকা। তেন রাজ্ঞৈব্যত্র ন হ্রস্ব।

यका, सका; यकाभ्यां, तकाभ्यां। आशिषि च। जीवका नन्दका।*

## ८५। सूतकादीनां वा।

[ सूतकादीनां ६।।।, वा ०१। ]

एषामवर्णस्य इहा स्यात्। सूतका, सूतिका; सहपुत्रिका, सहपुत्रका, वृन्दारिका, वृन्दारका। आपीयकपूर्व्वस्य। इभ्यका, इभ्यिका, क्षत्रियिका, क्षत्रियका, चटकका, चटकिका। आप इति किम्? शकृशकायतेः क्विप् शकशका: ततः शकशकिका नित्यम्। द्वैषयोश्चानञः। द्वके, द्विके; एषका, एषिका। नञ्-पूर्व्वयोस्तु नित्यं अद्विके, अनेषिका। भस्त्राजाज्ञास्वानां नञ्-पूर्व्वाणामपि। भस्त्रका, भस्त्रिका, अभस्त्रका, अभस्त्रिका; अजका, अजिका; ज्ञका, ज्ञिका; स्वका, स्विका।†

---

† प्रत्ययस्थात् कात् पूर्व्वस्यात् इदाप्यसुपः (७।३।४४) इति पाणिनीय-सूत्रम्। प्रत्ययस्थात् किम्? शक्नोतीति शका असुपः किम्? बहुपरि-व्राजका नगरी; कात् किम्? नन्दना, आपि किम्? मामकं, कारकः। न यासयोः (७।३।४५) इति पाणिनीयसूत्रं यत्तदोरस्येन्न स्यात्। यका, सका। क्षिपकादेराकृतिगणो यथा—क्षिपका, ध्रुवका, चरका, सेवका, करका, चटका, अवका, लहका, अलका, कन्यका, ध्रुवका, एडका। अष्टिकाऽन्या। वर्णका तान्तवे—अन्यत्र वर्णिका; वर्त्तका शकुनौ प्राचाम्। उदीचान्तु वर्त्तिका।

‡ वा इत्यत्र वा अ इति च्छेदः कात् पूर्व्वस्य वाऽकारादेश इत्यर्थः। तेन पुत्रिका शब्दे इवर्णस्य पक्षेऽकारः। उदिचामावः स्थाने

## ८६। नित्यस्त्रीणां प्रकृत्या वाप्।

[ नित्यस्त्रीणां ६।।।, प्रकृत्या ३।, वा ०।।, आप् ०।। ]

सर्व्वदा स्त्रीणामाप् प्रकृत्या वा स्यात्। मालका, मालिका, मालाका वा ; खट्वका, खट्विका, खट्वाका।

## ८७। द्व्यन्तरुपसर्गादनतोऽप ईप्।

[ द्व्यन्तः (द्वि—अन्तर्), उपसर्गात् ५।, अनतः (न—अत्) ५।, अपः ६।, ईप ०।।

द्व्यादेः परस्याप शब्दस्य ईप् स्यात्। द्वीपं, अन्तरीपं, नीपं, समीपः, अन्वीपः। अनत इति किम्? प्रापः, कूपः।

## ८८। अनूपोदेशे

अनूपः १।, देशे ७।]

निपात्यते।

---

यः क पूर्व्वायाः (७।३ ४६) इति पाणिनीयसूत्रम् यक पूर्व्वस्य स्त्रीप्रत्ययाकारस्य स्थाने योऽकारस्तस्य कात् पूर्व्वस्येदा स्यादापि परे। आतः किम्? साकाश्ये भवा सांकाश्यिका। यकेति किम्? अश्विका स्त्री प्रत्ययेति किम्? शुभं यातीति शुभं या अज्ञाता शुभंया शुभंयिका। धात्वन्तयकोस्तु नित्यं सुनयिका, सुपायिका। भस्त्राग्रहणमुपसर्ज्जनार्थं (समस्तस्य ग्रहणार्थम्) अन्यस्य (असमस्तस्य) तूत्तरसूत्रेण सिद्धम्। एषा, द्वे एतयोस्तु सपूर्व्वयोर्न्नत्वं अन्तर्व्वर्त्तिनीं विभक्तिमाश्रित्य सुप इति निषेधात् अनेषका, परमेषका, अद्वके, परमद्वके। स्वशब्दस्त्वनुपसर्ज्जनमात्मीयवाची अकजन्तः, अर्थान्तरे तु न स्त्री संज्ञोपसर्ज्जनीभूतस्तु कप्रत्ययान्तत्वाद्भवत्युदाहरणम्। स्वकात्मीयायां स्विका परमस्विकेति सिद्धान्तकौमुदी।

## ८९। पृषोदरादीनि यथोपदिष्टम्।

[ पृषोदरादीनि ( पृषोदर-आदि ) १।।।, यथोपदिष्टम् (यथा-उपदिष्ट ) ०१। ]

शिष्टै र्यथाप्रयुक्तानि पृषोदरप्रकाराणि तथैव साधूनि स्युः। पृषदुदरमस्य पृषोदरः, मह्यां रौति मयूरः, भ्राम्यन् रौति भ्रमरः, ब्रुवन्तः सीदन्त्यस्यां बृषी, वारिवाहो बलाहकः, पूर्य्यन्ते गलन्ति च पुद्गलाः शरीराः, तथ्यस्य भावस्तथता ममेत्यव्ययस्य भावः ममत्वं, ममता; रतेस्तननं रत्नं, वाहितं पापमनेन ब्राह्मणः, यस्य क्नौति यस्कः, जितमनेन जिनः, कौ जीर्य्यते कुञ्जरः, हिनस्ति सिंहः, केन उभ्यते कुम्भः आगच्छन्त्यत्रेति अङ्गणं। षषो-धाद्दृभ्यां षोढ़, षोढ़त् षोढन् वत्सः, षोढा च धा प्रत्यये, तृतीयं पिष्टपं त्रिपिष्टपं इत्यादि। वर्णागमो वर्णविपर्य्ययश्च द्वौ चापरौ वर्णविकारनाशौ। धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तं। वर्णागमोगवेन्द्रादौ सिंहे वर्णविपर्य्ययः, षोड़शादौ विकारः स्यात् वर्णनाशः पृषोदरे। वर्णविकार नाशाभ्यां धातो रतिशयेन यः योगः स उच्यते प्राज्ञैर्मयूर भ्रमरादिषु।*

इति श्रीपद्मनाभ दत्तकृता सुपद्मे व्याकरणे चतुर्थोऽध्यायः।

---

* दिक्शब्देभ्यस्तस्य तीरस्य तारभावो वा दक्षिणतारं, दक्षिणतीरं, उत्तरतारं उत्तरतीरम्। दुःखेन दाश्यते, दुडाशः, दुःखेन नाश्यते दुर्णाशं दुःखेन दभ्यते दुडभः, दुष्टं ध्यायतीति दूढ्यः। इति सिद्धान्तकौमुदी।

अथ

# पञ्चमाध्यायस्य-

## प्रथमः पादः ।

### तद्धिते—वृद्धिप्रकरणम् ।

१ । तद्धिते । (तद्धिते ७।)

अधिकारोऽयं ।

२ । ञिति वृद्धिरचामादेः ।

[ञिति ७।, वृद्धिः १।, अचां ६॥, आदेः ६।]

ञिति तद्धिते परे प्रकृतेरचां मध्ये आदेरचो वृद्धिः स्यात् । गार्ग्यः, दाक्षिः, समासे तु पूर्व्वपदस्यैव—औपगवः ।

३ । प्रलय केकय मित्रयूनां यादेरियश्च ।

[प्रलय, केकय, मित्रयूनां ६॥, यादेः (य-आदि), ६।, इयः १।, च ०१।]

एषां यादेः परभागस्य वृद्धिसहचरित इयादेशः स्यात् । प्रलयादागतं प्रालेयं हिमं, केकयस्यापत्यं कैकेयः, मित्रयोर्भावेन श्लाघा मैत्रेयिका ।

४। देविका शिंशपा दित्यवाड् दीर्घसत्र श्रेयसामात्।

[देविका, – शिंशपा, – दित्यवाड् (दित्यवाह्) दीर्घसत्र, श्रेयसां ६॥, आत् ०१।]

देविकादेरादेरच आद्भवति। वृद्धेरपवादः। देविकायां भवं दाविकं पयः, दाविकाकूलाः शालयः, शिंशापायाः विकारः शांशपश्चमसः, दातौहः, दीर्घसत्रे भवं दार्घसत्रं, श्रेयसि भवं श्रायसं।

५। इणोर्यूरस्वागतादेरैयौवौ।

[ इणः ६।, यूः (य्—व्) ६॥, अस्वागतादेः (न-स्वागत-आदि) ६।, ऐ यौवौ (ऐय्-औव्) १॥)

अचामादेरिण आदेशयोर्यकारवकारयोः स्थाने ऐयौवौ स्यातां। वैयाकरणः, स्वश्वस्यापत्यं सौवश्विः, अस्वागतादेरिति-किम्? स्वागतमाह स्वागतिकः, व्यवहारेण चरति व्यावहारिकः, व्याड़स्यापत्यं व्याड़िः, अत्र आदेशस्थानिवत् क्वचित् इति यणादेशस्यास्थानिवत्त्वादिणोवृद्धिर्न स्यात्।

६। श्वादेरश्वगणादेः।

(श्वादेः (श्व-आदि) ६।, अश्वगणादेः (न-श्वगण आदि) ६।)

अनिणादेशार्थं वचनं श्वादेर्यूरैयौवौ स्याताम्। शुनइदं शौवं मांसं, श्वादंष्ट्रायां भवं शौवादंष्ट्रं, द्वारे नियुक्तो दौवारिकः। श्वोभविता शौवस्तिकः, स्वस्तीत्याह सौवस्तिकः, स्वरमधिकृत्य कृतो ग्रन्थः सौवरः। न्यग्रोधस्यायमवयवः। नैयग्रोधः, समस्तस्य तु—न्याग्रोधकूला: शालयः, अश्वगणादेरितिकिम्? श्वगणेन चरति श्वागणिकः, श्वादेरिकारादावेव निषेधः। श्वादंष्ट्रि: श्वाभस्त्रिः

स्वाजन्यं, स्वापतेयं, स्वापथिकः, स्वार्थिकः, स्वाभाविकः। स्वापदस्य वा। स्वापदं, शौवापदं।

## ७। गुरुलघ्वादेरुत्तरपदस्य।

[गुरु, लघ्वादेः (लघु-आदि) ६।, उत्तरपदस्य ६।]

गुरुलघु प्रभृतेरुत्तरपदस्य वृद्धिः स्यात्। गुरुलाघवं, एकपौरुष्यं, पितृपैतामहं, गङ्गास्रोतन्यायेनात्र वृद्धिर्विवक्षिता।

## ८। ऋतोरङ्गे। [ऋतः ६।, अङ्गे ७।]

उत्तरपदस्य वृद्धिः स्यात्। पूर्व्ववार्षिकः, श्रावणः, अपरहैमनं अङ्ग इति किम्? पूर्व्वासु वर्षासु भवं पौर्व्ववार्षिकं अनुमतादि। (१३।१५)

## ९। सुसर्व्वार्द्धाज्जनपदस्य।

सु,-सर्व्वार्द्धात् (सर्व्व,-अर्द्ध) ५।, जनपदस्य ६।

उत्तरपदस्य वृद्धिः स्यात्। सुमाद्रः, सर्व्वपाञ्चालकः अर्द्धपाञ्चालकः, बहुवचनविषयादितःकण् (१२५।३।५)।

## १०। दिशः परस्यामद्राणां।

[दिशः ५।, परस्य ६।, अमद्राणां ६।॥]

जनपदस्येतीव—दिशः परस्य वृद्धिः स्यात्। पूर्व्वपाञ्चालकः अमद्राणामितिकिम्? पौर्व्वमद्रः। आदिग्रामनगराणाञ्च—दिश इत्येव—पूर्व्व इषुकामसमा गजा, इषुकामसमीग्रामः नगराणां पूर्व्वकान्यकुब्जकोऽश्वः, पूर्व्वमाथुरः। संख्यायाः सम्वत्सरसंख्ययोः। द्विसाम्वत्सरिकः, त्रिसाम्वत्सरिकः, समधीष्टोभृतोभूतोभावीवा; द्विसा-

मतिकः, त्रिषाष्टिकः, क्रीतार्थे टिकण्। वर्षस्याभविष्यति। संख्याया इत्येव—द्वेवर्षेऽधीष्टो—भृतोभूतो वा द्विवार्षिकः, त्रिवार्षिकः, अभविष्यतीकिम्? द्वे वर्षे भावि द्वैवार्षिकं भक्तं, त्रैवार्षिकं धान्यं। परिमाणस्याशाणस्य। संख्याया इत्येव—क्रीतार्थे टिकण्, द्विनैष्किकं अशाणस्येतिकिम्? द्वैशाणं, द्वित्रिपूर्व्वादण् च, प्रष्ठपदाभद्रपदयोर्जाते, तत्र जातः प्रौष्ठपादो वालः, भद्रपादः। ऋतुभसन्ध्यादेरवर्षाभ्योऽण्। जातइतिकिम्? भवार्थे प्रौष्ठपदोमेघः।

## ११। अनुशतादेरुभयोः।

अनुशतादेः (अनुशत-आदि) ६।, उभयोः ६॥]

अनुशतादीनामुभयोःपदयोर्वृद्धिः स्यात्। तत्रभवः आनुशातिकं अध्यात्मादिभ्यष्टिकण्, (४०।३।५) शातकौम्भं, सार्व्वपौरुष्यं, तत्र दीयते आनुसाम्वत्सरिकं, पाञ्चभौतिकं, सार्व्वभौमः, आधिभौतिकं, पौष्करसादिः, पौर्व्ववार्षिकं, आधिदैविकं, चातुर्वैदिकं, आनुहौड़िकं, कौरुपाञ्चालकः। सिन्धुलोकभगान्तस्य। सौरसैन्धवः, ऐहलौकिकः, सार्व्वलौकिकः, कथं त्रैलोक्यं भाविवहुलवचनात्। सौभाग्यं, दौर्भागिणेयः। हृदन्तस्य वहुलं। सौहार्दं, सौहृदं, सौहार्द्यं सौहृद्यं,। पुण्ड्रादेर्नगरे। पौण्ड्रनागरः, सौक्ष्मनागरः। देवताद्वन्द्वे सूक्तहविषोः। सौम्यचान्द्रमसोमन्त्रः, आग्निमारुतं हविः, सूक्तहविषोरितिकिम्? ब्राह्मविशाखं। नेन्द्रस्य परस्य। सौमेन्द्रश्चरुः परस्येति किम्? ऐन्द्रोवार्हस्पत्यः। दीर्घाद्वरुणस्य। नेत्येव—ऐन्द्रावरुणं, दीर्घादितिकिम् आग्निवारुणं।

## १२। जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरं।

[जङ्गल, धेनु, वलजान्तस्य ६।, विभाषितं, ०१।, उत्तरं ०१।]

जङ्गलाद्यन्तस्य उत्तरपदस्य वृद्धिर्वा स्यात्। कौरुजाङ्गलः, कौरु

जङ्गलोवा, समूहे—कार्ष्णधेनुकं, कार्ष्णधेनुकं वा दौग्धवालजः, दौग्धवलजो वा।

## १३। अर्द्धात् परिमाणस्य पूर्व्वस्य तु वा।

[अर्द्धात् ५।, परिमाणस्य ६।, पूर्व्वस्य ६।, तु ०१।, वा ०१।]

अर्द्धात् परस्य परिमाणस्य वृद्धिः स्यात्। पूर्व्वस्य तु वा। अर्द्ध-द्रौणिकं आर्द्धद्रौणिकं वा क्रीतार्थे टिकण्।

## १४। न परस्यातः। [न. १। परस्य ६।, अतः ६।]

अर्द्धात् परस्य परिमाणस्यातो वृद्धिर्नास्ति। पुर्व्वस्य तु वा, अर्द्ध-प्रस्थिकं, आर्द्धप्रस्थिकं वा क्रीतार्थे टिकण्। न प्रवाहणस्य टेयणि। प्रवाहणेयः, प्रावाहणेयः।

## १५। नञः शुचीश्वरक्षेत्रज्ञ कुशल निपुणानां।

[नञः ५।, शुचीश्वर (शुचि-ईश्वर) क्षेत्रज्ञ, कुशल, निपुणानां ६॥]

नञः परेषामेषां वृद्धिः स्यात्। पूर्व्वस्य तु वा। अशौचं, आशौचं, अनैश्वर्य्यं, आनैश्वर्य्यं, अक्षैत्रज्ञं, आक्षैत्रज्ञं, अकौशलं, आकौशलं, अनैपुण्यं, आनैपुण्यम्।

## १६। यथातथापूरयोः पर्य्यायेण।

[यथा तथा पूरयोः ६॥, पर्य्यायेण ३।]

नञः परयोरनयोः पर्य्यायेण णिति वृद्धिः स्यात्। आयथातथ्यं, अयथातथ्यं वा ; आयथापूर्व्वं, अयथापूर्व्वं वा। उक्तो वृद्धिविधिः।

## १७। भस्य। [भस्य ६।]

यादावजादौ च तद्धिते पुर्व्वस्य कार्य्यं वक्तव्यमित्यधिकृतम्।

१८ । नष्टेर्लोपोऽङ्यणोः ।

[नः ६।, टेः ६।, लोपः १।, अङ्यणोः (न-ङी अण्) ६॥,)

नान्तस्य भस्य टेर्लोपः स्यात्। आग्निशर्म्मिः, औडुलोमिः, अङ्यणोरितिकिम् ? सुप्रेम्णी, सौत्वनः, सामनः ।

१९ । अणि चापत्ये इणोगाथि, विदथि, केशि,गणि, पणि, संयोगादि वजर्जं ।

[अणि ७।, च ०१।, अपत्ये ७।, इणः ६।, गाथि-संयोगादिवर्जं ०१।)

अपत्यार्थेऽणि च परे इणन्तस्य टिलोपोभवति। मैधावः पुत्रः, गाथ्यादिवर्ज्जमितिकिम् ? गाथिनः, पाणिनः, संयोगादेः—वाग्मिनः, शाङ्गिणः ।

२० । मनश्चावर्म्मणः ।

[मनः ६।, च, ०१।, अवर्म्मणः (न-वर्म्मन्) ६।]

मनन्तस्य चापत्ये अणि परे टिलोपोभवति। भाद्रसामः पुत्रः, अवर्म्मण इति किम् ? चाक्रवर्म्मणः पुत्रः ।

२१ । सब्रह्मचार्य्यादेः संघाटो च ।

सब्रह्मचर्य्यादेः ६।, संघाटो ७।, च ०१।]

एषां संघाटो चापि टिलोपोभवति। साब्रह्मचाराः, पैठसर्पाः, तस्येदमित्यण्; सब्रह्मचारि, पीठसर्पि, कलापि, कुथुमि, तैतिलि, आजलि, शिखण्डि, शिलालि, सुधा-कर, सद्म, सुपर्व्व ।

२२ । अश्वष्टेनयोः । [अश्वः ६।, टेनयोः (ट-ईन) ७॥)

पूर्व्वेण नित्ये प्राप्ते नियमार्थं वचनं। टेनयोरेवाङ्गोष्टिलोपो-भवति। समाहारे द्व्यहः, द्वे अहनी भूतोभावी वा द्व्यहीनः, अहो-रात्रि सम्वत्सराच्चेति (१२०।३।५) ईनः, टेनयोरितिकिम्? आह्निकं।

## २३। आत्माध्वनोरनीने।

(आत्माध्वनोः (आत्मन् अध्वन्) ६॥, अनीने (न-ईन) ७।)

अनयोरनीने टिलोपोभवति। प्रत्यात्मं, प्राध्वं, अनीन इति किम्? आत्मनीनं, अध्वनीनः।

## २४। ये त्वनोभावकर्म्मणोः।

(ये ७।, तु ०१। अनः ६।, भावकर्म्मणोः ७॥)

अनन्तस्य ये भावकर्म्मणोरेव टिलोपः स्यात्। राज्ञोभावः कर्म्म वा राज्यं भावकर्म्मणोरितिकिम्? तदलं गामीति अध्वन्यः, तत्र साधुः सामान्यः, सुत्वन्यः, ब्रह्मण्यः, तत्रभवः शीर्षण्यः।

## २५। यूनोऽभावाणकयोः।

( यूनः ६।, अ (न) भावाणकयोः (भावार्थे अण्-अक) ७॥)

यूनोभस्य टिलोपः स्यात्। यौवः, भावाणकयोस्तु-अणि यौवनं, अके यौवनकं मनज्ञादिः।

## २६। शुनः संकोचविकारयोः।

(शुनः ६।, संकोच, विकारयोः ७॥)

भवार्थे शुनष्टिलोपः स्यात्। शौवः सङ्कोचः; विकारे—शौवं मांसं।

## २७। वा हितनाम्नोऽपत्ये।

(वा ०१।, हितनाम्नः ६।, अपत्ये ७।)

हितनाम्नष्टिलोपोवा स्यात्। हैतनामः पुत्रः, हैतनामनोवा।

## २८। अश्मनोविकारे। (अश्मनः ६। विकारे ७।)

टिलोपोवा स्यात्। आश्मः प्रासादः, आश्मनोवा, अस्येदमित्यणि, आश्मनोनित्यं।

## २९। ब्रह्मणोऽजातौ। (ब्रह्मणः ६।, अजातौ ७।)

टिलोपः। ब्राह्मोनारदः, जातौ तु, ब्राह्मणः।

## ३०। कार्म्मस्ताच्छील्ये। (कार्म्मः १।, ताच्छील्ये ७।)

स्यात्। अन्यत्र कार्म्मणः।

## ३१। चार्म्मः कोषे। (चार्म्मः १।, कोषे ७।)

स्यात्। अन्यत्र चार्म्मणः। औक्ष्मनपत्यं। औक्षं पदं, अपत्ये-तु औक्ष्णोवत्सः।

## ३२। आथर्व्वणिक जैह्माशिनेय दाण्डिनायन हास्तिनायन वासिनायनि भ्रौणहत्य धैवत्यानि।

(आथर्व्वणिक—धैवत्यानि १॥।)

इमानि निपात्यन्ते। अथर्व्वण् उक्थादि, जिह्माशिन शुभ्रादि; दण्डिन हस्तिनौ णडादौ, वासिन तिकादि, भ्रूण हन्, धीवन् एतौ ष्यणन्तौ।

## ३३ । सायं प्रातरादेश्च ।

सायं, प्रातरादेः (प्रातः आदि) ६।, च ०१।)

भस्य टिलोपः स्यात्। सायंप्रातिकः, पौनःपुनिकः, नेह— आरातीयः, शाश्वतः—शाश्वतिकः ।

## ३४ । यस्य । (यस्य ६।)

इवर्णसावर्णस्य च भस्य तद्धिते लोपः स्यात्। वालेयास्तण्डुलाः, वत्सप्रोः-वात्सप्रेयः, अस्यापत्यं इः, इो देवता अस्य ऐः, गार्गी कुमारी. तद्धित इतीव—काण्डे इ । विल्वकीयादेरीयलुग्वक्तव्यः । वैल्वकः । (क्वचित् विल्वकीय इति पाठः)

## ३५ । ओरवधातोरस्त्रियां ।

(ओः ६।, अव् ०१।, अधातोः (न धातु) ६।, अस्त्रियां (न-स्त्री) ७।)

उवर्णान्तस्य भस्य ओरवादेशो भवति । औपगवः, वाभ्रव्यः, अधातोरितिकिम्? स्वायम्भुवं, पौनर्भुं, खालपुं, अस्त्रियामिति-किम्? पट्वी कुरुः, कथं पौनर्भवं ? पुनर्भवशब्दाद्वाञ्जा निर्दिष्ट मनित्यं वा ।

## ३६ । एयणि लोपोऽकद्र्वाः ।

(एयणि ७।, लोपः १।, अकद्र्वाः ६।)

एयणि परे ओर्लोपो भवति । मार्कण्डेयः, कामण्डलेयः, जाम्बेयः, अकद्र्वा इति किम् ? काद्रवेयः ।

## ३७ । पाण्डोर्ड्यणि जनपदस्य ।

(पाण्डोः ६।, ड्यणि ७।, जनपदस्य ६।]

ण्ये जनपदस्य पाण्ड्रोरुलोपः स्यात्। पाण्ड्यः।

३८। सारवैक्ष्वाकहिरण्मयानि।

[सारवैक्ष्वाक, (सारवऐक्ष्वाक), हिरण्मयानि १॥]

अमूनि निपात्यन्ते। सरय्वा अणि यलोपः, सारवं जलं, इक्ष्वाको-रुलोपः तस्या पत्य ऐक्ष्वाकः बहुले ऽलुकि इक्ष्वाकवः, इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः हिरण्यस्य मयटि यादिलोपः हिरण्मयं।

३९। हलस्तद्धितयोऽनाति।

(हलः ५।, तद्धितयः ६।, अनाति (न-आति) ७।)

हलः परस्य तद्धितयकारस्य भस्य तद्धिते लोपः स्यात्। गार्गी, सौमी इष्टिः, आनुपूर्व्वी, औचिती, गार्गीयः, गार्गीणां समूहो गार्गकं हल इति किम्? कैकेयी, आग्नेयी, तद्धितय इति किम्? वैद्यस्य भार्य्या वैद्यी अनातीति किम्? गार्ग्यायणः ईकारे ह्यनाप-त्यस्य यस्य लोपोनान्यस्मिन् तेन सांकाश्यकः।

४०। तिष्यपुष्ययोर्नक्षत्राणि।

(तिष्य, पुष्ययोः ६॥, नक्षत्राणि (नक्षत्र अण्) ७।]

अनयोर्नक्षत्रे अणि य-लोपः स्यात्। तैष, पौषः।

४१। सौर्य्यागस्त्ययोङ्यामीये च।

(सौर्य्यागस्त्ययोः (सौर्य्य आगस्त्य) ६॥, ङ्यां ७।, इये ७। च ०१।]

यलोपः स्यात्। सौरी, सौरीयास्ताः लाः, आगस्ती, आगस्तीयः अगस्त्यादीयः।

४२। ङ्यां मत्स्यस्य। [ङ्यां ७।, मत्स्यस्य ६।]

यलोपः। मत्सी, ङ्यामिति किम् ? मात्स्योऽध्यायः प्रवर्त्तते।

४३। क्यच्व्योरापत्यस्य। [क्यच्व्योः ७॥, आपत्यस्य ६।]

क्ये च्वौ च परे आपत्यस्यैव यकारस्य लोपः स्यात्। वात्सीयति, वात्सायते, वात्सीभूतः, कुलदत्त्ये व आत्रेयीयति।

४४। नाके राजन्यस्य मनुष्यस्य ङ्याञ्च।

[न ०१।, अके ७, राजन्यस्य, ६।, मनुष्यस्य ६।, ङ्यां ७, च ०१।]

य-लोपोनास्ति। समूहे राजन्यकं, मानुष्यकं, अस्य ङ्याञ्च मनुष्यी।

४५। टेर्डिति। [टेः ६।, डिति ७,]

डिति भस्य टेर्लोपोभवति। डट्-एकादशः, डकः-त्रिंशकः। डित्यभस्यातडिते च कुमुद्वान्-प्लवगः।

४६। विंशतेरतेः।

[विंशतेः ६।, अतेः ६।]

डिति विंशतेरतेर्लोपः स्यात्। ऊणविंशकोऽध्वरः, ऊणविंशं शतं।

४७। इष्ठेमेयस्स्वनेकाचः।

[इष्ठेमेयःसु (इष्ठ इमन्-इयस्) ७॥, अनेकाचः (न-एक-अच्) ६।]

इष्ठादौ परेऽनेकाचष्टिलोपः स्यात्। पटिष्ठः, पटिमा, पटीयान्, अनेकाच इतिकिम् ? श्रेष्ठः, स्रजिष्ठः।

**४८ । स्थूल, दूर, युव, ह्रस्व, क्षिप्र, क्षुद्राणां स्थव द्रव, यव, ह्रस, क्षेप, क्षोदाः ।**

[स्थूल—क्षुद्राणां ६॥, स्थव—क्षोदाः १॥]

इष्ठादौ स्थूलादेः स्थवादयः स्युः । स्थविष्ठ, स्थवीयान्, दविष्ठः, दवीयान्, ह्रस्वक्षिप्रयोरिमन्नस्ति । ह्रसिष्ठः, ह्रसिमा, ह्रसीयान्, क्षेपिष्ठः, क्षेपिमा, क्षेपीयान्, क्षोदिष्ठः, क्षोदीयान् ।

**४९ । प्रिय, स्थिर, स्फिरोरु, बहुल, गुरु, तृप, दीर्घ, वृन्दारकाणां प्र, स्थ, स्फ, वर, वंह, गर, त्रप, द्राघ, वृन्दाः ।**

[प्रिय, स्थिर, स्फिर उरु—वृन्दारकाणां ६॥, प्र—वृन्दाः १॥]

इष्ठादौ प्रियादीनां प्रादयः स्युः । प्रियोरुबहुलगुरुदीर्घाणामेव प्रियादित्वादिमन्नस्ति, इष्ठेयसौ सर्व्वत्र । प्रेष्ठः, प्रेमा, प्रेयान्, स्थेष्ठः, स्थेयान्, स्फेष्ठः, स्फेयान, वरिष्ठो, वरिमा, वंहिष्ठो, वंहिमा, वंहीयान् त्रपिष्ठः, त्रपिमा, द्राघिष्ठः, द्राघिमा, द्राघीयान् । वृन्दिष्ठो, वृन्दीयान् ।

**५० । बहोर्भूर्यादिरिष्ठश्चादिलोप इमेयसोः ।**

(बहोः ६।, भूः १।, यादिः (य आदिः) १।, इष्ठः १।, च ०१। आदिलोपः १।, इमेयसोः (इमन्‌इयस्) ६॥)

बहोरिष्ठादौ भूः स्यात् । इष्ठश्च यादिर्भवति । इमेयसोरादि-लोपश्च । भूयिष्ठ, भूमा, भूयान् ।

**५१ । दृढ़, पृथु, मृदु, कृश, भृश, परिवृढानामृतोरः ।**

(दृढ़—परिवृढानां ६॥, ऋतः ६।, रः ०१।)

एषामिष्ठादौ ऋतोरः स्यात् । द्रढिष्ठो, द्रढिमा, द्रढीयान्, प्रथिष्ठः, प्रथिमा, प्रथीयान्, म्रदिष्ठः, म्रदिमा, म्रदीयान्, क्रशिष्ठः, परिव्रढिष्ठः ।

५२ । विन्मतोर्लुगिष्ठेयसोः ।

(विन्मतोः (विन्-मतु) ६॥, लुक् ०१।, इष्ठेयसोः ७॥)

अनयोरिष्ठेयसोः परतोलुग्भवति । स्रग्विनः,—स्रजिष्ठः, स्रजीयान्; ओजस्विनः-ओजिष्ठः, ओजीयान्; त्वग्वतः—त्वचिष्ठः, त्वचीयान्; धर्म्मवतः—धर्म्मिष्ठः, पापवतः—पापिष्ठः ।

५३ । प्रशस्य वृद्धयोः श्रवर्षौ ।

(प्रशस्य, वृद्धयोः ६॥, श्र, वर्षौ १॥)

अनयोः श्र, वर्षौ भवतः । श्रेष्ठः, श्रेयान्, वर्षिष्ठो वर्षीयान् । ज्यश्चेयस ईदाच्च । इष्ठेयसोः परयोः प्रशस्य वृद्धयोर्ज्यादेशः स्यात् । ईयस ईकारश्चाद्भवति । ज्येष्ठः, ज्यायान् ।

५४ । अन्तिकबाढयोर्नेदसाधौ ।

(अन्तिकबाढयोः ६॥, नेद, साधौ १॥)

अनयोर्नेद, साधौ स्याताम् । नेदिष्ठः, नेदीयान्, साधिष्ठः, साधीयान्, क्रियाविशेषणमिदमित्यर्थे साधीयः ।

५५ । युवाल्पयोः कन्वा ।

(युवाल्पयोः (युवन्-अल्प) ६॥, कन् ०१।, वा ०१।)

अनयोः कनादेशोवा स्यात् । कनिष्ठः, कनीयान्; पक्षे यविष्ठः; यवीयान्; अल्पिष्ठः अल्पीयान् ।

## ५६। शिरसः शिर्षोऽणि।

(शिरस: ६।, शिर्ष: १।, अणि ७)

अणि शिरसः शिर्षो, भवति। स्थौलशीर्ष', हास्तिशीर्षः। शीर्षन् ये वाच केशेषु। ये शिरसः शीर्षन् भवति। शिरसि भवः शीर्षण्यः स्वरः ; केशेषु वा—केशाः शिर्षण्याः शिरस्याः वा।

## ५७। अन्तिकस्य तसिकादेर्लुग्वातादेश्च तमे।

(अन्तिकस्य ६।, तसि ७।, कादे ६।, लुक् ०१।, वा ०१, तादे. ६।, च ०१।, तमे ७।)

तसि परेऽन्तिकस्य कादिपरभागस्य लुग्वा स्यात्। अन्तितः, अन्तिकतो वा ; तमे परे तादेः, कादेश्च वा—अन्तमः, अन्तितमः, अन्तिकतमश्च।

## ५८। अमतदुपधेभ्योझयश्च मतोर्मो वोऽयवादेः।

(अमतदुपधेभ्यः (अ-म-तत्-उपध) ५।॥, झय. ५।, च ०१।, मतोः ६।, म ६।, वः १।, अयवादे (म यव आदि) ५।)

अकारमकारान्तेभ्योऽकार मकारोपधेभ्यश्च झयन्ताच्च मतो र्मो वः स्यात्। गुणवान्, मालावान्, किम्वान्; अमोपधेभ्यः पयस्वान् भास्वान्, लक्ष्मीवान्, झयन्तात्—मरुत्वान् अमादेरितिकिम् ? बुद्धिमान् धीमान्, आयुष्मान्, श्रीमान् अयवादेरितिकिम् ? यवमान्, ऊर्म्मिमान्, भूमिमान्, क्रमिमान्, ककुद्मान् गरुत्मान् हरित्मान्।

## ५९। नाम्नि बहुलं। [नाम्नि ७।, बहुलं ०२।]

संज्ञायां मतोर्मोवः स्यात्। अहीवती, मुनीवती नदी, बाहुल्यात् कार्य्यान्तरञ्च निपात्यते। आसनस्य आसन्दीवान् ग्रामः।

अष्ठीवत् प्राण्यङ्गे। कक्षिवान् ऋषिः, चक्रीवान् गर्द्दभः। लवणस्य रुमण्वादेशः। रुमण्वान् देशः। नलोपाभावोऽपि चर्म्मादेः। चर्म्मण्वती नदी। उदन्वानुदधौ, उदकस्य उदन्। क्वचिन्न भवति—बिन्दुमती काचित्।

## ६०। उगिसुस्तान्तदोर्भ्योऽशश्वदादेरिकः कः।

(उगिसुस्तान्तदोर्भ्यः (उक्-इस् उस-त-अन्त, दोस्) ५।३ अ (न) शश्वदादेः (शश्वत् आदि) ६।, इकः ६।, कः १।)

उक्प्रत्याहार इस् उस् तान्तदोस् इत्येतेभ्यः परस्य टिकणादेरिकः कः स्यात्। नैषादकर्षुकः, पैतृकः, पितुर्यच्चेति टिकण् सर्पिष्कः, धानुष्कः, औदश्वित्कः, दोर्भ्यां तरति दौष्कः, अशश्वदादेरितिकिम्? शाश्वतिकः, यावतिकः।

## ६१। ऋतोरोयि। [ऋतः ६।, रः १।, यि ७।]

यादौ तद्धिते ऋतोरः स्यात्। यत् पित्र्यः, ण्य—पैत्र्यः।

## ६२। बहुलं प्रातिपदिकात्तद्धिताः।

(बहुलं ०१।, प्रातिपादिकात् ५।, तद्धिताः १।३।)

अतः प्रातिपदिकात् तद्धितसंज्ञकाः प्रत्यया बहुलं वाच्याः। समासान्ताः। आपादपरिसमाप्तेः समासाश्रयप्रत्यया वाच्याः।

## ६३। न पूजने स्वतिभ्यां प्राग्बहुव्रीहेः।

(न ०१।, पूजने ७।, स्वतिभ्यां (सु-अति) ५।२, प्राक् ०१।, बहुव्रीहेः ५।)

बहुव्रीहेः प्राक् पूजार्थे स्वतिभ्यां परात् समासान्तो न भवति। सुराजा, अतिराजा, सुगौः, अतिगौः, प्राग्बहुव्रीहेरितिकिम्? सखीसिखः, अतिसक्थः।

## ६४। किमः क्षेपे। [किमः ५। क्षेपे ७।]

क्षेपे किमः परात् समासान्तो न भवति। किंराजा यो न रक्षति प्रजाः, स किंसखा साधु न शास्ति योऽधिपं किंगौरदोहवाहीत् क्षेप इति किम्? कस्य राजा किंराजः, किंसखः, किंगवः।

## ६५। नञस्तत्पुरुषाद्वा तु पथः।

(नञः ५।, तत्पुरुषात् ५।, वा ०११, तु ०११, पथः ५।)

नञ्पूर्वात् तत्पुरुषात् समासान्तो न भवति। अराजा, असखा, अगौः, अधूः, पथी वा, अपथं, अपन्थाः; तत्पुरुषादिति किम्? अराजकं नगरं, अधुरं शकटं।

## ६६। ऋक्पथिपुरपोधुरश्चानक्षेऽत्।

(ऋक्-पथि-पुरपः (पुर्-अप) ५।, धुरः ५।, च ०११, अनक्षे (न-अक्ष) ७।, अत् १।)

ऋगादिभ्यः सर्व्वसमासेऽद्भवति। ऋचोऽर्द्धं, अर्द्धर्चः, अनृचो मानवकः बह्वृच्चरणविषय एव। राजपथः, बहुपथो देशः। पुरः क्लीवे। नान्दीपुरं, त्रिपुरं। अपः परलिङ्गता नेष्यते। गङ्गापः, द्वीपः, बह्वपानि तडागानि, कथं बह्वम्पि समासान्तविधिरनित्य इति धुरः- द्विधुरं, राजधुरा, महाधुरः अनक्ष इति किं अक्षधूः दृढधूरक्षःस्य- न्दनस्य।

## ६७। प्रत्यन्ववात् सामलोम्नः।

(प्रत्यन्ववात् (प्रति-अनु-अव) ५।, सामलोम्नः (सामन् लोमन्) ५।)

प्रत्यादि पूर्व्वात् सामलोम्नश्चाद्भवति। प्रतिसामं, अनुसामं, अवसामं, प्रतिलोमं, अनुलोमं, अवलोमं।

६८। संख्यायाः नदी गोदावरीभ्यां। कृष्णपाण्डूदकाच्च भूमेः।

(संख्याया ५।, नदीगोदावरीभ्यां ५॥, अथ, पाण्डूदकात् (पाण्डु-उदक) ५।, च ०।।, भूमेः ५।)

संख्यादिपूर्व्वान्नद्यादेरत् स्यात्। द्विनदं, पञ्चगोदावरं, द्विभूमं सूत्रं, कृष्णभूमो देशः, पाण्डुभूमा स्थली, उदकभूमं।

६९। अक्ष्णोऽप्राण्यङ्गे।

(अक्ष्णः ५।, अप्राण्यङ्गे (न प्राणि-अङ्ग) ७।)

अप्राण्यङ्गे गस्येऽक्ष्णोऽत् स्यात्। लवणाक्षः, गवाक्षः, पुष्कराक्षाः; प्राण्यङ्गे—तु गोऽक्षि।

७०। ब्रह्म, राज, हस्ति, पल्येभ्यो वर्च्चसः।

(ब्रह्म—पल्येभ्यः (ब्रह्मन्, —राजन्, हस्तिन्, पल्य) ५॥, वर्च्चसः ५।)

एभ्यो वर्च्चसोऽत् स्यात्। ब्रह्मवर्च्चसं, राजवर्च्चसं, हस्तिवर्च्चसं, पल्यवर्च्चसम्।

७१। तमसोऽवसमन्धेभ्यः।

(तमसः ५।, अव, सम्, अन्धेभ्यः ५॥)

अवादेस्तमसोऽत् स्यात्। अवतमसं, सन्तमसं, अन्धतमसं।

७२। निःश्वोभ्यां श्रेयसः।

(निःश्वोभ्यां (निर्, श्वस्) ५॥, श्रेयसः ५।)

अत् स्यात्। निःश्रेयसं, श्वःश्रेयसं।

७३। रहसोऽन्ववतप्तात्।

(रहस: ५।, अन्ववतप्तात् (अनु, अव, तप्त) ५।)

अत् स्यात्। अनुरहसं, अवरहसं, तप्तरहसं।

७४। प्रादेरध्वन:।

(प्रादे: (प्र-आदि) ५।, अध्वन:, ५।)

अत् स्यात्। प्राध्वो, दुरध्व:।

द्विगुतत् पुरुष कर्म्मधारये। आद्वन्द्वमयमधिकार:।

७५। संख्याव्ययादङ्गुले:।

(संख्याव्ययात् (संख्या, अव्यय) ५।, अङ्गुले: ५।)

आख्यामङ्गुलेरत् स्यात्। द्वेऽङ्गुली प्रमाणमस्य इति मात्रटालुक्-द्व्यङ्गुलं, निर्गतमङ्गुलेभ्यो निरङ्गुलं, द्विगादौ किम्? पञ्चाङ्गुलिर्हस्त:।

७६। आयुषो द्वि, त्रि, पुरुषात्।

[आयुष: ५।, द्वि, त्रि, पुरुषात् ५।]

अत् स्यात्। द्व्यायुषं, त्र्यायुषं, समाहारेऽभिधानं नेह—द्वयोरायु: द्व्यायु:, त्र्यायु:, पुरुषायुषं।

७७। उक्षोजातमहद्वृद्धात्।

[उक्ष: ५, जात, महद्वृद्धात् (महत्, वृद्ध) ५।]

अत् स्यात्। जातोक्ष:, महोक्ष:, वृद्धोक्ष:।

## ७८। रात्रेर्व्वर्षा, पुण्य, दीर्घैकदेशसर्व्वाव्यय संख्यासंख्यातात्।

[रात्रेः ५।, वर्षा—सङ्ख्यातात् (वर्षा, पुण्य, दीर्घ, एकदेश, सर्व्व, अव्यय, संख्या, सङ्ख्यात) ५।]

एभ्योरात्रेरत स्यात्। वर्षारात्रः, पुण्यरात्रः, दीर्घरात्रः, एकदेशात्—पूर्व्वरात्रः, पररात्रः, सर्व्वादेः—सर्व्वरात्रः, नोरात्रः अतिरात्रः, गणरात्रं, पञ्चरात्रः, संख्यातरात्रः।

## ७९। टऽह्नोऽह्न एकदेशादेरनेकादसमाहारे।

[टे ७।, अह्न ६।, अह्न १।, एकादेशादे ५।, अनेकात् (न एक) ५।; असमाहारे (न समाहार) ७।]।

एकदेश, सर्व्वाव्यय, संख्या, संख्यातात् अहन्-शब्दस्य वक्ष्यमाण ट प्रत्यये अह्नादेशो भवति। पूर्व्वाह्णः, मध्याह्नः, सर्व्वाह्णः, निरह्नः। प्रताह्न, द्वयारह्नार्भव द्विगोरजादेर्लुगनपत्ये, टिकणलुक (५५।२।५ ततष्ट. द्वाह्न, त्र्याह्न, सख्यातं अहः सख्याताह्न. एकदेशादितिकिम् पुण्याहं, अनेकादितिकिम्? एकाहः, असमाहार—इतिकिम् द्वाहं, त्र्याहं।

## ८०। संख्याविसायादह्नस्याहन् वा ङौ।

संख्या, विसायात् ५।, अह्नस्य ६।, अहन् ०१।, वा ०१।, ङौ ७।]

ङौ परे संख्यादिपूर्व्वस्याह्नस्य अहनादेशोभवति वा। द्वाह्ने द्व्यहनि, व्यह्ने, व्यहनि, सायाह्ने, सायाह्नि।

## ८१। निर्व्विंशादयश्च।

[निस्त्रिंश आदयः १।।, च ०।।]

टिलोपान्ता निपात्यन्ते । निस्त्रिंशानि वर्षाणि, निर्गतस्त्रिंशतोऽङ्गुलिभ्यः निस्त्रिंशः खड्गः, निश्चत्वारिंशाः ।

८२ । राजाहः सखिभ्यष्टः ।

[राजाहः सखिभ्यः (राजन्, अहन्,-सखि) ५।।, टः १।]

द्विगुतत् पुरुषकर्मधारये राजादेष्टः स्यात् । पञ्चराजी, देवराजः, महाराजः, द्व्यहः, सोमाहः, उत्तमाहः, राजसखः न लिङ्गभेदे महाराज्ञी ।

८३ । उरसः प्रधानार्थे ।

[उरसः ५, प्रधानार्थे (प्रधान-अर्थ) ७।]

टः स्यात् । हस्तिनामुरः प्रधानं—हस्त्युरसं, अश्वोरसं ।

८४ । अनोऽश्मायः सरसोर्जातिसंज्ञयोः ।

[अनो—सरसः (अनस्, अश्मन्, अयस्, सरस्) ५।, जाति, संज्ञयोः ७।।]

एभ्यष्टः स्यात् । जातौ उपानसः, अमृताश्मः, कालायसं, मण्डूकसरसं, नाम्नि-महानसः, पिण्डाश्मः, लोहितायसं, कालसरसं ।

८५ । ग्रामकौटात्तक्ष्णः ।

[ग्राम, कौटात् ५।, तक्ष्णः ५।]

टः स्यात् । ग्रामतक्षः, कुटीभवस्तक्षा कौटतक्षः स्वतन्त्रः ।

८६ । शुनोऽति.गोष्ठादुपमायाश्चाप्राणिनः ।

[शुनः ५।, अति, गोष्ठात् ५।, उपमायाः ५।, च ०।।, अप्राणिनः (न—प्राणिन्) ५।]

एभ्यः शुनष्टःस्यात्। अतिश्वः अतिश्वी मृगी, गोष्ठश्वः, उपमानाच्च—फलकः श्वेव फलकश्वोव्याघ्रादिः। अप्राणिन इति किम्? वानरः श्वेव वानरश्वा।

८७। मृगपूर्व्वोत्तरोपमानात् सक्थ्नः।

[मृग, पूर्व्वोत्तरोपमानात् (मृग, पूर्व्व, उत्तर, उपमान) ५।, सक्थ्नः ५।]

मृगादेः सक्थ्नष्टःस्यात्। मृगसक्थं, पूर्व्वसक्थं, उत्तरसक्थं, उपमानात्—फलकसक्थं।

८८। ब्रह्मणोजानपदाख्यायां।

[ब्रह्मणः ५।, जानपदाख्यायां ७।]

ब्रह्मणष्टः स्यात्। जनपदाभिधानश्चेत्। सुराष्ट्रे ब्रह्मा सुराष्ट्रब्रह्मः, काशीब्रह्मः, जानपदाख्यायोमितिकिम्? देवब्रह्मा नारदः। कुमहद्भ्याम्वा। कुब्रह्मः, कुब्रह्मा, महाब्रह्मः, महाब्रह्मा।

८९। गोरतद्धितलुकि।

[गोः ५।, अतद्धितलुकि (न-तद्धित-लुक्) ७।]

टः, स्यात्। पञ्चगवं, राजगवी, स्त्रीगवी, पुंगवः अतद्धितलुकीतिकिम्? पञ्चगुः पटः क्रीतार्थे टिकण. द्विगोरध्यर्द्धपूर्व्वाच्च लुक् संज्ञायां (६५।३।५) इति टिकणलुक्।

९०। नावोद्विगौ। अर्द्धाच्च।

[नावः ५।, द्विगौ ७।, अर्द्धात् ५।, च ०१।]

द्विगुसमासे नावष्टः स्यात्। द्विनावं, पञ्चनावः, अतद्धितलुकी-

त्येव—पञ्चनौर्गजः । अर्द्धाच्च । अर्द्धनावी, अर्द्धनावं, लोकाश्रयत्वात् परलिङ्गता व्यभिचरति ।

९१ । खार्य्या वा । [खार्य्याः ५।, वा ०।]

द्विगौ अर्द्धाच्च खार्य्याष्टोवा स्यात् । द्विखारं, द्विखारी, अर्द्धखारं, अर्द्धखारी ।

९२ । द्वित्रिभ्यामञ्जलेः ।

[द्वि, त्रिभ्यां ५॥, अञ्जलेः ५।]

आभ्यामञ्जलेष्टः स्यात् । द्व्यञ्जलं, त्र्यञ्जलं, द्विगावित्येव—द्वयोरञ्जलिः, द्व्यञ्जलिः, अतद्धितलुकीत्येव—क्रीतार्थे—द्व्यञ्जलिः ।

९३ । षद्चुहोद्वन्द्वे समाहारे ।

[ष, द, चु, हः ५।, द्वन्द्वे ७।, समाहारे ७।]

द्वन्द्वे ष, द, चवर्ग, हान्तात् टः स्यात् । ष-योषप्रावृषं, द-सम्पद्विपदं, चु—वाक्त्वचं, उपाध्यायशब्दप्राञ्छं, श्रीस्रजं, ह,-छत्रपानहं, पिकमधुलिहं, समाहार इति किम् ? योषप्रावृषौ, द्वन्द्व इति किम् ? पञ्चवाक्, परमवाक् ।

९४ । धेन्वनडुहौ । [धेनु अनडुही १॥]

समाहारे निपात्यते ।

९५ । स्त्रीपुंसर्ग्यजुषर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोष्ठीवर्वं पदष्ठीव नक्तन्दिव रात्रिन्दिवाहर्दिवाशेत्राणाः ।

[स्त्रीपुंस—प्रथमा: १।३]

(स्त्रीपुंस, ऋग्-यजुष ऋक्साम, वाङ्मनस, अक्षिभ्रुव, दारगव, ऊर्व्वष्ठीव, पदष्ठीव, नक्तन्दिव, रात्रिन्दिव, अहर्दिव, अहोरात्रा:) द्वन्द्वे षमी निपात्यन्ते। स्त्रीपुंसौ, ऋग्यजुषे, ऋक्सामे, वाङ्मनसे, अक्षिभ्रुवं, दाराश्च गावश्च दारगवं, ऊरुश्च अष्ठी वांश्च ऊर्व्वष्ठीवं, पादौ च अष्ठीवन्तौ च पादष्ठीवं, नक्तन्दिवं, रात्रिन्दिवं, वीप्सायां अहर्दिवं, अहोरात्रौ।

## ९६। अव्ययीभावे शरदादे:।

[अव्ययीभावे ७।, शरदादे: ५।]

ट: स्यात्। उपशरदं, उपविपाशं, उपदिवं, प्रतिदृशं, प्रतिदिशं, उपचतुरं, सरजसमभ्यवहरति। प्रतेरुरस: सप्तम्यर्थे। उरसि प्रतिवर्त्तते प्रत्युरसं, सप्तम्यर्थ इति किम्? उर: प्रतिगतं प्रत्युर:। अक्ष्ण: समनुप्रत:। समक्षं, अन्वक्षं, प्रत्यक्षं।

## ९७। अन: क्लीवाद्वा।

[अन: ५।, क्लीवात् ५।, वा ०१।]

अनन्ताट्ट: स्यात्। राज्ञ: समीपे योवर्त्तते उपराजं, दशानां समीपे ये वर्त्तन्ते उपदशं, अध्यात्मं। क्लीवाद्वा। उपभस्मं, उपभस्म, उपचर्म्मं उपचर्म्म, प्रत्यहं, प्रत्यहर्य्यीति। नदीगिरिपौर्णमास्याग्रहायणीभ्य:। वेतिरव—उपनदं उपनदि, उपगिरं उपगिरि, उपपौर्णमासं, उपपौर्णमासि, उपाग्रहायणं, उपाग्रहायणि।

## ९८। झयश्च। [झय ५।, च०१।]

झयन्ताट्ट: स्यात्। उपदृशदं, उपदृशत्, प्रतिसमिधं, प्रतिसमित्। उपजुनोपजरसे निपात्यते। उपजुनं उपजरसं। अनुगवमायामे। अनुगवं, आयाम इति किम्? गो: पश्चात् अनुगु॥

## ९९ । अक्षि, सक्थिभ्यां बहुव्रीहौ स्वाङ्गार्थे ।

[अक्षि, सक्थि भ्यां ५।, बहुव्रीहौ ७।, स्वाङ्गार्थे (स्व-अङ्ग-अर्थे) ७।]

आभ्यां स्वाङ्गार्थे टः स्यात् । दीर्घाक्षः, मृगाक्षी, दीर्घसक्थः, बहुव्रीहाविति किम् ? मृगस्याक्षि मृगाक्षि, इतो बहुव्रीहौ समान्त विधिः ।

## १०० । नञ् दुःसुभ्यो विभाषितो हलिसक्थेः ।

नञ् दुः, सुभ्यः ५॥, विभाषितः १।, हलिसक्थेः ५।]

नञादेर्हलि, सक्थिभ्यां टो विकल्पितः । अहलोऽहलिर्वा, दुर्हलः, दुर्हलिः ; सुहलः, सुहलिः; असक्थोऽसक्थिः; दुःसक्थो, दुःसक्थि; सुसक्थः, सुसक्थिः ।

## १०१ । अङ्गुलेर्दारुणि ।

[अङ्गुलेः ५।, दारुणि ७।]

दार्व्वार्थेऽङ्गुलिष्टः स्यात् । द्व्यङ्गुलं दारु ।

## १०२ । द्वित्रिभ्यां मूर्द्ध्नः ।

[द्वि, त्रि, भ्यां ५॥, मूर्द्ध्नः ५।]

टः स्यात् । द्विमूर्द्धः त्रिमूर्द्धः ।

## १०३ । संख्येये डोऽबहोः ।

[संख्येये ७।, डः १।, अबहोः ५।]

संख्येये बहुव्रीहौ डः स्यात् । उपदशाः, आसन्नविंशाः, एकादशः अध्यकोटाः, अबहोरिति किम् ? उपबहवः ।

## १०४ । अत् पूरणीप्रमाणीभ्यां ।

[अत् ०१।, पूरणी, प्रमाणीभ्यां ५॥]

स्त्रीलिङ्गे पूरणीप्रत्ययान्तात् प्रमाणीशब्दाच्च अत् स्यात्। कल्याणीपञ्चमा रात्रयः, भार्य्याप्रमाणाः कुटुम्बिनः।

१०५। नाभेः संज्ञायाम्।

[नाभेः ५।, संज्ञायां ७।]

अत् स्यात्। पद्मनाभः, ऊर्णनाभः, रुढ़िग्रहणान्नेह—प्रजाद्दवाङ्गादरविन्दनाभेः।

१०६। नेतुर्नक्षत्रपूर्व्वात्।

[नेतुः ५।, नक्षत्र पूर्व्वात् ५।]

अत् स्यात्। मृगोनेता यासां ता मृगनेत्रा रात्रयः, पुष्यनेत्राः।

१०७। चतुरस्त्रिनञ्सुव्युपात्।

[चतुरः ५।, त्रि, नञ्, सु, व्यु पात् (वि—उप) ५।]

त्र्यादेश्चतुरोऽत् स्यात्। त्रिचतुराः, अचतुराः, सुचतुराः, विचतुराः, उपचतुराः।

१०८। लोम्नोऽन्तर्वहिसः।

[लोम्नः ५।, अन्तर्वहिसः (अन्तर्वहिस्) ५।]

लोम्नोऽत् स्यात्। अन्तर्लोमो, वहिर्लोमः।

१०९। प्रादेर्नासिकाया नस् च।

[प्रादेः (प्र-आदि) ५।, नासिकायाः ५।, नस् ०१।, च ०१।]

नासिकाया अत् स्यात्। नसादेशश्च। उन्नसं वक्त्रं, सुनसा स्त्री, अनुनासिकस्तु तत्पुरुषः।

## ११०। खरणाः खुरणोविग्राश्च।

[खरणाः, खुरणाः, विग्राः १।॥, च ०१।]

खरादि पूर्व्वनासिकाया एते निपात्यन्ते। खरणाः, खुरणाः, विग्राः; चकारान्नसादेशश्च—खरणसः, खुरणसः, विनसः।

## १११। संज्ञायामस्थूलात्।

[संज्ञायां ७।, अस्थूलात् (न-स्थूल) ५।]

नाम्नि नासिकाया अद्भवति। नसादेशश्च। द्रुणसः, गोनसः, अस्थूलादितिकिम्? स्थूलनासिकोवराहः, संज्ञायामितिकिम्? तुङ्गनासिकः।

## ११२। सुप्रात, सुश्व, सुदिव, शारिकुच, चतुरश्रैणीपदाजपदप्रोष्ठपदाः।

[सुप्रात—प्रोष्ठपदाः (सुप्रात, सुश्व, सुदिव, शारिकुच, चतुरश्र, एणीपद, अजपद, प्रोष्ठपद) १॥।]

अदन्ता एते निपात्यन्ते। शोभनं प्रातरस्य सुप्रातोऽयं जनः, सुश्वः सुदिवः, शारिरिव कुक्षिरस्य शारिकुक्षः, चतस्रोऽश्रयोऽस्य चतुरश्रः, एण्या इव पादावस्य एणीपदः, अजपदः, प्रोष्ठोगौः तस्येव पादावस्य प्रोष्टपदः।

## ११३। नञ् सुदुरोऽसिः प्रजायाः अल्पाच्च मेधायाः।

[नञ्—दुरः ५।, असिः १।, प्रजायाः ५।, अल्पात् ५।, च ०१।, मेधायाः ५।]

नञादेः प्रजायाः असिः स्यात्। अल्पाच्च मेधायाः। अप्रजाः, सुप्रजाः, दुष्प्रजाः, अमेधाः, सुमेधाः, दुर्मेधाः, अल्पमेधाः।

## ११४। गन्धात् समवेतादित्सूत् पूति सुरभेः।

[गन्धात् ५।, समवेतात् ५।, इत् ०१।, सूत् पूति सुरभेः (सु-उत्, पूति, सुरभि) ५।]

स्वादेर्गन्धादित् स्यात्। सुगन्धि कुसुमं, उत्कट उद्गतोवा गन्धो ऽस्येति उद्गन्धिः, पूतिगन्धिः, सुरभिगन्धिः, समवेतादितिकिम्? सुगन्धोगन्धवहः।

## ११५। अल्पार्थे चोपमानाच्च।

[अल्पार्थे (अल्प अर्थ) ७।, उपमानात् ५।, च ०१।]

गन्धादित् स्यात्। अल्पः सूपोऽस्यां सूपगन्धिः स्थली, घृतगन्धि भोजनं, प्रेमगन्धि वचनं उपामानात्-पद्मस्येव गन्धोऽस्येति पद्मगन्धि, करीषगन्धिः।

## ११६। क्रियाविनिमयार्थादव्ययश्च।

[क्रियाविनिमयार्थात् ५।, अव्यय ०१।, च ०१।]

इत् स्यात्। समासान्तश्चाव्ययं भवति। केशाकेशि, जल्पाजल्पि, प्रवादिनां।

## ११७। द्विदण्डादयश्च।

[द्विदण्डादयः (द्वि-दण्डि-आदि) १॥, च ०१।]

इमे क्वचिदर्थे निपात्यन्ते। द्विदण्डि प्रहरति, द्विमुषलि· उभाहस्ति, उभयाहस्ति, उभाञ्जलि, उभाखड्गि, उभाकर्णि, उभयाकर्णि, समासान्तरेऽपि, उभादन्ति, उभयादन्ति नेह-द्विदण्डा शाला:। गणपाठात् निकुच्यकर्णि धावति। कर्णौ निकुच्येत्यर्थः। यद्दृच्छादयश्चेति समासः (४७।३।४)। प्रोह्यपादि हस्तिनं वाहयति पादं प्रोह्येत्यर्थः।

## ११८। धर्म्मादन् केवलाद्वा च बहुपदे।

[धर्म्मात् ५।, अन् ०१।, केवलात् ५।, वा ०१।, च ०१।, बहुपदे ७।]

धर्म्मादन् स्यात्। प्रियधर्म्मा, वा च बहुपदे—साक्षात्कृतो धर्म्मो यैः ते साक्षात्कृतधर्म्माणोमुनयः, साक्षात्कृतधर्म्मा वा परमः स्वो धर्म्मोऽस्येति परमस्वधर्म्मा, परमस्वधर्म्मो वा केवलादितिकिम्? परमः कुलधर्म्मोऽस्येति परमकुलधर्म्मः।

## ११९।. जम्भा सुहरित् तृणसोमात्।

[जम्भा ११, सु, हरित्, तृण, सोमात् ५।]

एभ्योऽनन्तोजम्भा स्यात्। जम्भोभोजनं दन्तभेदश्च, सुजम्भा, हरित्जम्भेत्यादि।

## १२०।. दक्षिणेर्म्मा व्याधव्रणितदक्षिणाङ्गे।

[दक्षिणेर्म्मा ११, व्याध-व्रणित-दक्षिणाङ्गे (दक्षिण अङ्ग) ७।]

अयमत्रार्थे निपात्यते। दक्षिणे ईर्म्मं व्रणं यस्य, स दक्षिणेर्म्मा मृगः।

## ११२। जाया जानिः। [जाया ११, जानिः ११]

जाया जानिः स्यात्। युवती जाया अस्येति युवजानिः।

## १२२। धनुर्धन्वन् वा च नाम्नि।

[धनुः ०१।, धन्वन् ०१।, वा ०१।, च ०१।, नाम्नि ७।]

धनुः शब्दोधन्वंन् स्यात्। शार्ङ्गं धन्वा, गृहीतधन्वा, कथं हृतधनुषमङ्काय तृणवत्? अनित्यत्वात्; वा च नाम्नि पुष्पधन्वा, पुष्पधनुः।

## १२३। जानु ज्ञुः प्रसमौवा चोर्द्ध्वात्।

[जानु ०१।, ज्ञुः १।, प्रसमौ (प्र, सम्) ५॥, वा ०१।, च ०१।, ऊर्द्ध्वात् ५।]

प्रसंभ्यां जानु ज्ञुः स्यात्। प्रज्ञुः, संज्ञुः; ऊर्द्ध्वाद्वा—ऊर्द्ध्वज्ञुः, ऊर्द्ध्वजानुः।

## १२४। सु संख्याभ्यां वयसि दन्तोदत्ः।

[सु, संख्याभ्यां ५॥, वयसि ७।, दन्तः १।, दत्ः १।]

आभ्यां दन्तोदत्ः स्यात्। सुदन् कुमारः, सुदती बाला, द्विदन् वत्सः, वयसीतिकिम्? द्विदन्तोगजः। संज्ञायाञ्च। सुदती, फालदती काचित्।

## १२५। अग्रान्तशुद्ध, शुभ्र, श्यावाऽरोक वृषवराहा हिगर्द्धभ शिखर मूषिकाद्वा।

[अग्रान्त-मूषिकात् (अग्र, अन्त, शुद्ध, शुभ्र, श्याव, अरोक, वृष, वराह, अहि, गर्द्धभ, शिखर, मूषिक) ५।, वा ०१।]

अग्रान्तादेर्दन्तो वा दत्ः स्यात्। कुन्दकोरकाग्रदन्, कुन्दकोरकाग्रदन्तोवा, शुद्धदन्तो वा शुद्धदन्, श्यावदन्, श्यावदन्तो वा अरोको, निर्दीप्तिः अरोकदन्, अरोकदन्तः, अहिदन्तः, अहिदन्, शिखरदती शिरदन्तीत्यादि।

## १२६। अल्लुक् पादस्य संख्या, सूपमानादहस्त्यादेः।

[अल्लुक् (अत्-लुक्) ०१।, पादस्य ६।, संख्या,सूपमानात् (सु,-उपमानात्) ५।, अहस्त्यादेः (न—हस्तिन् आदि) ५।]

संख्यादि पूर्ब्बस्य पादस्य अल्लुक् स्यात्। द्विपात्, त्रिपात्, सुपात्, उपमानात्, व्याघ्रपात्, सिंहपात्, अहस्त्यादेरितिकिम्? हस्तिपादः, कण्डोलपादः।

## १२७। कुम्भपद्यादिषु च।

[कुम्भपद्यादिषु (कुम्भपदी आदि) ७॥, च ०१।]

अल्लोपो निपात्यतेऽत्र। कुम्भपदी, शतपदी, एकोऽभिन्नः सर्व्वेषां पादोऽत्रेति एकपदी पन्थाः, गोधापदीत्यादि; निपातनात् ङी नित्यं।

## १२८। ककुदस्य पूर्णादेरवस्थायां।

ककुदस्य ६।, पूर्णादेः (पूर्णः आदि) ५।, अवस्थायां ७।]

पूर्णादेः ककुदस्याल्लुक् भवति। पूर्णककुत्, जातककुत्, स्थूलककुत् तरुणः। अवस्थायामिति किम्? श्वेत ककुदः। त्रिककुच्छैलविशेषे—पर्व्वतभेदे त्रिककुत् स्यात्।

## १२९। उद्विभ्यां काकुदस्य।

[उद्. विभ्याम् ५॥, काकुदस्य ६।]

अल्लुक् स्यात्। काकुदं तालुका—उत्काकुत्, विकाकुत्। पूर्णाद्वा। पूर्णकाकुत्, पूर्णकाकुदो वा। सुहृन्मित्रे, दुर्हृच्छत्रौ। अन्यत्र सुहृदयः साधुः, दुर्हृदयश्चोरः॥

## १३०। ऋन्नदी सर्पिरादेः कप्॥

[ऋत्-नदी सर्पिरादेः ५।, कप् ०१।]

ऋदन्तात्, सर्पिरादेश्च कप् स्यात्। बहुपितृकः, सस्त्रीकः, सवधूकः,ससर्पिष्कः, व्यूढोरस्कः, मुक्तोपानत्कः। अर्थान्नञः, अनर्थकः। इनः स्त्रियां। बहुदण्डिका शाला, बहुवाग्मिका सभा। इह गणे लक्ष्मीरनड्वान् पयोनौः पुमान् इत्येकवचनान्ता एवास्ते, सुलक्ष्मीकः, बह्वानडुत्कः। द्विवचनान्तेभ्यो विभाषा, बहुलक्ष्मीः, बहुलक्ष्मीकः

प्राप्ते नावौ येन प्राप्तनौः, प्राप्तनौकः ; द्विपुमान्, द्विपुंस्कः। तद्न्तात् कप् प्रतिषेधः - यतद्दोरभीराच्चसाः।

१३१। शेषाद्वा। [शेषात् ५।, वा ०१।]

बहुव्रीहौ यस्मात् समान्तो न विहितस्तस्मात् कप् वा स्यात्। बहुखट्वको, बहु खट्वः, बहुदण्डिको, बहुदण्डी ; शेषादितिकिम् ? प्रियपथः, बह्वपः कूपः।

१३२। नेयसः। [न ०१।, ईयसः ५।]

ईयसन्तात् कप् न स्यात्। बहुप्रेयान्, बहुप्रेयसी नृपः।

१३३। स्तुतौ भ्रातुः। [स्तुतौ ७।, भ्रातु ५।]

भ्रातुरत्र कप् न स्यात्। सुभ्राता लक्ष्मणः, स्तुताविति किम् ? चौरभ्रातृकः। स्वाङ्ग-नाड़ी, तन्त्रीभ्याम् न कप्। बहुनाड़िः, कायः, बहुतन्त्री ग्रोवा, स्वाङ्ग इति किम् ? बहुतन्त्रीका वीणा। निष्प्रवाणिः निपात्यते निर्गता प्रवाणी यस्य स निष्प्रवाणिः अपनोतशलाको नवपटः॥ उक्ताः समासान्ताः॥

इति श्रीपद्मनाभ दत्तकृतौ सुपद्मे व्याकरणे तद्धितप्रकरणे पञ्चमस्याध्यायस्य प्रथमः पादः॥

---

# अथ पञ्चमाध्यायस्य ।

## द्वितीयपादः ।

तद्धिते—स्त्रीप्रत्ययादिप्रकरणम् ।

१ । स्त्रियामत् क्रुञ्चादेराप् ।

[स्त्रियां ७। अत् क्रुञ्चादेः (क्रुञ्च आदि) ५।, आप् ०१।]

स्त्रिलिङ्गेऽदन्तात् क्रुञ्चादेर्हलन्ताच्च आप् प्रत्ययो भवति। खट्वा, वामा, कन्या, देवता; त-परग्रहणात् नेह-संस्थाः-स्त्री, शुभंयाः क्रुञ्चा, देवविशा। ऋचि पदान्तात्। द्विपदा, त्रिपदा, गायत्री। गिरा-देव्यां। गिरा, गीः; वाचा, वाक्; दिशा, दिक्; क्षुधा, क्षुत्; उष्णिहा, उष्णिक्; इह टिलोपेऽपि सत्यप्रज्ञायां, पूर्व्वाह्णा, अपराह्णेति च णत्वं निपातनात्। अतः स्त्रियामित्यधिकारः।

२ । ऋदुगिन्नाच्चेरमन्मातृपञ्चादेर्ङी ।

[ऋदुगिन्नाच्चेः (ऋत्—उक्—इत्, न—अच्,) ५।, अमन्, मातृ, पञ्चादेः ५।, ङीः १।]

ऋदन्तादुगितो नान्तादच्चेश्च स्त्रियां ङीः स्यात्। कर्त्री, भवती, बहुगुणवती, दण्डिनी, प्राची अच्चिग्रहणाद्धातोरुगिन्न्यते। उखा-स्रदियं अमनादेरितिकिम्?—मनन्तात्, पामा, सीमा, मात्रादेः—माता, दुहिता, स्वसा, ननान्दा, याता, तिस्रः, चतस्रः, पञ्चादेः-पञ्च सप्त, नव, स्त्रियः नान्तसंज्ञायास्तदन्ताच्च प्रियापञ्चानीवेश्याः।

३। वनोरश्चान्तोऽयुधः।

[वनः (वन्) ५।, रः १।, च ०१।, अन्तः १।, अयुधः (न-युध्) ५।]

वनन्तात् ङी स्यात्। नस्य रेफादेशः। धीवरी, बहुदृश्वरी, सुत्वरी, अर्थवद्ग्रहणान्नेह-अतिशुनी, अयुध इति किम्? राजयुध्वा, सहयुध्वा।

४। वा बहुव्रीहौ।

[वा ०१।, बहुव्रीहौ ७।]

वनन्ताद्बहुव्रीहौ ङी, रो वा स्यात्। बहुधीवरी बहुधीवा वा।

५। पादोऽन्नृचि।

[पादः ५।, अनृचि (न-ऋच्) ७।]

पादन्तात् ङी वा स्यात्। द्विपदी, द्विपात्-भस्य पादः पत्; अनृचीतिकिम्? त्रिपदा ऋक्।

६। ऊधसोङीसोनश्च।

[ऊधसः ५।, ङी १।, सः ५।, नः १।, च ०१।]

बहुव्रीहौ ऊधसन्तात् ङी स्यात्। सोनश्च। कुण्डोध्नी, निरूध्नी, चतुरूध्नी।

७। दाम्नः संख्यादेः। हायनाद्वयसि।

[दाम्नः ५।, संख्यादेः ५।, हायनात् ५।, वयसि ७।]

संख्यादेर्दाम्नोहायनाच्च बहुव्रीहौ ङी स्यात्। द्विदाम्नी, त्रिहायणी गौः, संख्यादेरितिकिम्? उद्दामा वडवा।

८। अनोवोपान्त्यलोपिनोनैवान्यस्मात्।

[अनः ५।, वा ०१।, उपान्त्यलोपिनः ५।, न ०१।, एव ०१।, अन्यस्मात् ५।]

अनन्तादुपधालोपिनो ङी वा स्यात्। बहुराज्ञी, बहुराजा; बहुतक्ष्णी, बहुतक्षा; सुधाम्नी, सुधामा वा; उपान्तलोपिनोऽन्यस्मादनन्तात् नैव सुपर्व्वाणः, सुशर्म्माणः; स्त्रियः नित्यं संज्ञायां सुराज्ञी नाम ग्रामः। बहुव्रीहिनियमात् अतिपर्व्वणी क्रिया।

## ९। डाब्वाऽनोमनोऽन्यत्रापि।

[डाप् ०१।, वा ०१।, अनः ५।, मनः ५।, अन्यत्र ७।, अपि ०१।]

पुनरन् ग्रहणात्-अनन्तमात्राद्बहुव्रीहेर्डाववा स्यात्। सुराजे, सुराजानौ; सुपर्व्वे, सुपर्व्वाणी, बहुधीवे, बहुधीवानौ, बहुधीवर्य्यौ, मनन्तादन्यत्रापि सुसीमे, सुसीमानौ, सुसीम्नौ; तत्पुरुषे च अतिपटिमे, अतिपटिमानौ; स्वार्थे। सीमे, सीमानौ। स्वार्थे। अतः स्त्रियां स्वार्थे विधिः।

## १०। टिदण् गौरादेर्ङी।

[ टिदण् गौरादेः (टित्,-अण्,-गौर, आदि) ५।, ङी १।]

टितोऽणन्तात् गौरादेश्च स्वार्थे ङी स्यात्। टित-कुरुचरी, गायनी; अण्-वैनतेयी, कुम्भकारी, औपगवी; गौरादेः-गौरी,-कुमारी, तरुणी, वर्करी, वधूटी, चिरिण्टी, कलभी, किशोरी, नदी, सखी, अशिखी, वर्षाभ्वी, पिप्पली, पुटी, पुरी, कल्याणी, शवरी, पिशङ्गी शारङ्गी, निष्कली, विकली, पितामही, मातामही, हयी, गवयी, शुनी, द्रोणी, पृथिवी, मत्सी, मानुषी, वृषी, विम्बी, प्लवी, चौरी, अनडुही, कुण्डी, पात्रे, गोणी स्यादवपने। स्थली अकृत्रिमा भूश्चेत्, भाजी पक्वायां; नागी स्थूला चेत्, जातौ, नाग्येव, नागा अन्या। काली कृष्णायां। नीलात् प्राण्यौषध्योः। नीली, वडवा, नीली, ओषधिः, नीला अन्यत्र। कुशी लोहविकारे। कामुकी मैथुनेच्छायां। कामुका अन्यत्र। कवरी केशवेशे। केरलादेः संज्ञायां। केरली नाम ज्योतिर्व्वं, मामकी देवता, सामानी छन्दः, सुमङ्गली कापि, दृढी

भूमौ, वाऽन्यत्र; स्वार्थ इतिकिम्? बहुकुरुचरा नगरी, बहुकुम्भकारा इति पठितांश्चापठितांश्च गौरादौ ज्ञेयाः।

११। नणस्नञ क्करपः।

[नण,-स्नञ, क्करपः ५।]

नणाद्यन्तात ङी स्यात्। स्त्रैणी, पौंस्नी, इत्वरी।

१२। गार्ग्यादेष्टेरायणश्च बहुलं।

[गार्ग्यादेः (गार्ग्य-आदि) ५।, टेः ६।, आयनः १।, च ०१।, बहुलं ०२।]

गार्ग्यादेः स्त्रियां ङी स्यात्। टेरायनादेशश्च बहुलं। गार्गी, गार्ग्यायनी, वात्सी वात्सायणी, बाहुल्यान्नित्यं लौहित्यादेः-लौहित्यायनी, सांशित्यायनी कात्यायनी शाकल्यायनी, माधव्यायनी, वाभ्रव्यायनी, आङ्गिरसे काप्यायनी; वतण्डादाङ्गिरसे यणोलुक्स्त्रियामायनश्च न-वतण्डी; अन्यत्र वातण्ड्यायनी।

१३। कौरव्यासुरिमाण्डूकाच्च।

[कौरव्यासुरिमाण्डूकात् (कौरव्य,-आसुर,-माण्डूक) ५।, च ०१।]

ङी आयनौ स्यातां। कौरव्यायनी, आसुरायणी, माण्डूकायनी, तस्येदमित्यणन्तात्-कौरवी सेना, माण्डूकी भार्य्या। आवट्याच्चाप् च। आवट्या, आवट्यायनी।

१४। द्विगोः [द्विगोः ५।]

द्विगुसमासान्तात् स्त्रियां ङी स्यात्। त्रिशती, त्रिलोकी, त्रिखट्वी, त्रिफली; त्रिफला आमलक्यादित्रिके रूढिः।

१५। तद्धितलुकि परिमाणादसंख्याकालबिस्ताचितकम्बल्यात्।

[तद्धितलुकि ७।, परिमाणात् ५।, असंख्या—कम्बल्यात् (न) संख्या,-काल,-बिस्त,-आचित, कम्बल्य) ५।]

परिमाणान्तद्विगोस्तद्धितलुकि ङी स्यात्। क्रीतार्थे द्व्याढ़की, द्विप्रस्थी, परिमाणादितिकिम्? पञ्चाश्वा, लुकीतिकिम्? द्विपण्या असंख्यादेरितिकिम्? द्विशता, द्विवर्षा, द्विविस्ता, द्व्याचिता, द्विकम्बल्या।

## १६। काण्डादक्षेत्रे।

[काण्डात् ५।, अ (न) क्षेत्रे ७।]

काण्डाद्द्विगोस्तद्धितलुकि ङी स्यात्। द्वे काण्डे परिमाणमस्याः द्विकाण्डी रज्जुः, अक्षेत्र इतिकिम्? द्विकाण्डा क्षेत्रभक्तिः।

## १७। पुरुषात् प्रमाणे वा।

[पुरुषात् ५।, प्रमाणे ७।, वा ०१।]

प्रमाणे वर्त्तमानात् पुरुषान्ताद्द्विगोस्तद्धितलुकि ङी वा स्यात्। द्विपुरुषी यष्टिः, द्विपुरुषा वा।

## १८। अन्तर्वत्नी गुर्व्विण्यां।

[अन्तर्व्वत्नी ०१।, गुर्व्विण्यां ७।]

मत्वन्तो निपात्यते। पतिवत्नी भार्य्यायां। भार्य्यार्थेऽत्र मतोर्म्मो वत्वं, नकारश्च निपात्यते। पत्युरिश्च न ऊढायां। पत्युर्ङी स्यादेश्च नकारः। ऊढायां भार्य्यायां पत्नी, नान्यत्र।

## १९। वाऽन्यपदार्थे नित्यं सपत्न्यादौ तु।

[वा ०१।, अन्यपदार्थे ७।, नित्यं ०१।, सपत्न्यादौ (सपत्नी-आदि) ७।, तु ०१।]

अन्यपदार्थे स्त्रियां पत्युर्ङी वा स्यात्। एष नकारः, दृढपत्नी,

वृद्धपतिः, नित्यं तु सपत्न्यादौ-समानः पतिरस्याः सपत्नी, एकपत्नी समान, एक, वीर, पिण्ड, भ्रातृ पुत्रादिः।

शोणादेर्वा। शोणी, शोणा वा; चण्डी, चण्डा वा; उपाध्यायी, उपाध्याया वा; शोण, चण्ड, उपाध्याय, अराल, विशाल, विकट, विसङ्कट, कृपण, पुराण, कल्याण, साधारण, उदार।

## २०। श्येतैतहरितलोहितात्तोनश्च।

[श्येतैतहरितलोहितात् (श्येत, एत, हरित, लोहित) ५।, तः ६।, नः १। च ०१।]

एभ्यः स्वार्थे ङी वा स्यात्। तो नश्च। श्येनी, श्येता; एनी, एता; हरिणी, हरिता; लोहिनी, लोहिता।

## २१। क्नोऽसितपलितात्।

[क्नः १।, असित, पलितात् ५।]

आभ्यां ङी वा स्यात्। तकारस्य क्नादेशश्च। असिक्नी असिता; पलिक्नी पलिता।

## २२। इरक्तिनर्थात्।

[इः ५।, अ (न) क्तिनर्थात् (क्तिन् अर्थ) ५।]

इवर्णान्तात् ङी वा स्यात्। रात्री, रात्रिः धूली धूलिः, भूमी, भूमिः, युवती, युवतिः, यष्टी, यष्टिः, पद्धती, पद्धतिः, अस्ते—शक्तिः शक्ती, वस्ती, वस्तिरित्यादि; श्रीयं, लक्ष्मीय मिति दुर्घटरक्षितः। अक्तिनार्थादितिकिम्? गतिः, शक्तिः, हानिः अकरणिः, काङ्क्षारिमकार्षीः, स्त्रियामित्येव-अतिथिः।

## २३। उतोगुणादखरुसंयोगोपधात्।

[उतः ५।, गुणात् ५।, अ (न) खरु, संयोगोपधात् (संयोग उपध) ५।]

उदन्ताद्गुणवचनात् ङी वा स्यात्। गुर्वी, गुरुः, बह्वीः, बहुः,

मन्वो, तनुः; गुणादितिकिम् ? आखुः, अखरुसंयोगादेरितिकिम् ? खरु, कद्रुः, पाण्डुः ।

## २४ । पुंयोगात्तन्नाम्नोनित्यमसूर्य्यादेः ।

[पुंयोगात् ५।, तन्नाम्नः ५।, नित्यं ०२।, अ (न) सूर्य्यादेः (सूर्य्य,-आदि) ५।]

पुंयोगात् स्त्रियां वर्त्तमानात् पुन्नाम्नोनितरां ङी स्यात्। गणकस्य भार्य्या गणकी, शूद्री, वैद्यी, क्षत्रियी, प्रोष्ठी, असूर्य्यादेरितिकिम् ? सूर्य्या, गोपालिका, ज्येष्ठा, कनिष्ठा, मध्यमेति वयवस्थावाचित्वात्, ईश्वरा, ईश्वरीति औणादिकोवरट् ॥

## २५ । अग्नि, वृषाकपि, पुतक्रतु, कुसित, कुसीदानां टेरायः ।

[अग्नि—कुसीदानां ६॥, टेः ६।, आयः १।]

अग्न्यादेर्ङी स्यात्। टेरायादेशश्च। अग्नायी, वृषाकपायी, पूतक्रतायी, कुसितायी, कुसीदायी, कुसीदी, वृद्धिजीविका ।

## २६ । मनोराव्च वा ।

[मनोः ५।, आव् ०१।, च ०१।, वा ०१।]

मनोस्त्रियां पुंयोगात् ङी वा स्यात्। टेरायः, आव् च। मनावी मनायी, मनुः ।

## २७ । आनिन्द्रवरुणभवसर्व्वरुद्रमृडाचार्य्यब्रह्मणां योपधाद्णत्वञ्च ।

[आन् ०१।, इन्द्र—ब्रह्मणां (इन्द्र, वरुण, भव, सर्व्व, रुद्र, मृड, आचार्य्य, ब्रह्मन्) ६॥, योपधात् (य-उपध) ५।, अ (न) ण त्वं १।, च ०१।]

इन्द्रादेः पुंयोगात् स्त्रियां ङी स्यात्। टेरानादेशश्च। इन्द्राणी,

वरुणानी, भवानी, सर्व्वाणी, रुद्राणी, आचार्य्यादणत्वञ्च, आचार्य्यानी, ब्रह्माणी।

## २८। वोपाध्यायमातुलयोः।

[वा ०१।, उपाध्याय,मातुलयोः ६॥]

अनयोः पुंयोगात् टेरान् वा स्यात्। ङी नित्यमेव; उपाध्यायी, मातुलानी, मातुली।

## २९। अर्य्यक्षत्रियाच्चापुंयोगात्।

[अर्य्य, क्षत्रियात् ५।, च ०१।, अ (न) पुं योगात् ५।]

आभ्यामपुंयोगात् ङी वा स्यात्। आन् च टेः। चकारोवाऽभिसम्बन्धार्थः-अर्य्याणी, अर्य्या, क्षत्रियाणी, क्षत्रिया, पुंयोगात्तु-अर्य्यी, क्षत्रियी। हिमान्यरण्यानी महत्त्वे। स्याताम्। महद्धिमं हिमानी ; महदरण्यं—अरण्यानी। यवनानी लिपौ। यवनानी स्याल्लिपिश्चेत्। यवानी दोषे। दुष्टो यवो यवानी स्यात्।

## ३०। क्रीतात् करणपूर्व्वात्।

[क्रीतात् ५।, करणपूर्व्वात् ५।]

क्रीतात् स्त्रियां ङी स्यात्। करणपूर्व्वश्चेत्। धनक्रीती, वस्त्रक्रीती।

## ३१। क्तादल्पाख्यायां।

[क्तात् ५।, अल्पाख्यायां (अल्प आख्या) ७।]

करणपूर्व्वात् क्तान्तादल्पाख्यायां ङी स्यात्। अभ्रलिप्ती द्यौः, अल्पाऽभ्रा इत्यर्थः ; अन्नरलिप्ती जिह्वा।

## ३२। स्वाङ्गपूर्व्वादजातादेर्व्वहुव्रीहौ।

[स्वाङ्ग (स्व-अङ्ग) पूर्व्वात् ५।, अ (न) जातादेः (जात आदि) ५।, बहुव्रीहौ ७।]

स्वाङ्गपूर्व्वात् बहुब्रीहौ क्तान्तात् ङी स्यात्। शङ्खभिन्नी, केशविलूनी, कर्णच्छिन्नी, पाणिगृहीती, पत्नी। पाणिगृहीता अन्यत्र, स्वाङ्गपूर्व्वादितिकिम्? वृक्षभिन्ना वाटी, अजातादेरितिकिम्? दन्तजाता, दन्तमिता, दन्तहृता, दन्तप्रतिपन्ना।

## ३३। जातेरनाच्छादनाद्वा।

[जातेः ५।, अ (न) आच्छादनात् ५।, वा ०१]

जातिशब्दपूर्व्वात् क्तान्ताद्बहुब्रीहौ ङी स्यात्। पलाण्डुभक्षिती, पलाण्डुभक्षिता वा; सुरापीती सुरापीता वा। अनाच्छादनादितिकिम्? वस्त्रच्छन्ना, अजातादेरितिशेषः-वृक्षजाता।

## ३४। स्वाङ्गादप्रधानादसंयोगोपधबह्वच्क्रोड़ादेरसहनञ्विद्यमानपूर्व्वाच्च।

[स्वाङ्गात् (स्व-अङ्ग) ५।, अ (न) प्रधानात् ५।, अ (न) संयोगोपधबह्वच् क्रोड़ादेः (न-संयोग उपध, बहु-अच्, क्रोड-आदि) ५।, अ (न) सह, नञ् पूर्व्वात् ५।, च ०१।]

अप्रधानात् स्वाङ्गात् संयोगोपधादिवर्ज्जितादसहादिपूर्व्वात् ङी स्यात्। दीर्घकेशी, दीर्घकेशा; अतिकेशी अतिकेशा वा। नखमुखादसंज्ञायां। सुनखी, सुनखा, सुमुखी, सुमुखा असंज्ञायामितिकिम्? सूर्पणखा, कालमुखा, असंयोगोपधादेरितिकिम्? सुगुल्फा, वन्धुरस्कन्धा, बह्वचः—पृथुजघना, क्रोड़ादेः—सुक्रोड़ा, क्रोड़, गल, भग, खुर, वाल, गुद, शफ, शिखा, अंस। असहादिपूर्व्वादितिकिम्? सकेशा, अकेशा, विद्यमानकेशा। अद्रवं मूर्त्तिमत् स्वाङ्गं प्राणिस्थमविकारजं अतत्स्थं तत्र दृष्टञ्च तेन चेत्तत्तथायुतं। अद्रवं किम्? बहुकफा, मूर्त्तिमत् किम्? बहुज्ञाना, प्राणिस्थं किम्? दीर्घमुखा शाखा, अविकारजं किम्? बहुशोथा, अतत्स्थं तत्र दृष्टञ्च तदपि स्वाङ्गं दीर्घकेशी रथ्या, दीर्घकेशा वा, तेन चेत्तथायुतं तदपि स्वाङ्गं पृथुस्तनी प्रतिमा, पृथुस्तना वा।

## ३५। नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाङ्गगात्रकण्ठाच्च।

[नासिका–कण्ठात् (नासिका, उदर, ओष्ठ, जङ्घा, दन्त, कर्ण, शृङ्ग, अङ्ग, गात्र, कण्ठ,) ५।, च ०।१।]

एभ्योवह्वच् संयोगोपधेभ्योङी वा स्यात्। तुङ्गनासिकी, तुङ्ग-नासिका; तनूदरी, तनूदरा; विम्बोष्ठी, विम्बोष्ठा; दीर्घजङ्घी, दीर्घजङ्घा; समदन्ती, समदन्ता; चारुकर्णी, चारुकर्णा; तीक्ष्णशृङ्गी, तीक्ष्णशृङ्गा; मृदङ्गी, मृदङ्गा, सुगात्री, सुगात्रा; कम्बुकण्ठी, कम्बु-कण्ठा॥

## ३६। पुच्छाच्च। [पुच्छात् ५।, च ०।१।]

ङी वा स्यात्। दीर्घपुच्छी, दीर्घपुच्छा वा। कवर, मणि, विष, शरेभ्योनित्यम्। कवरपुच्छी, मणिपुच्छी, विषपुच्छी, शरपुच्छी। पक्षाच्चोपमानादेः—उलूकपक्षी सेना। पुच्छाच्च—काकपुच्छी।

## ३७। जातेरस्त्रीविषयादयोपधात्।

[जातेः ५।, अ (न) स्त्री विषयात् ५।, अ (न) योपधात् (य उपध) ५।]

जातेः सामान्यवचनात् ङी स्यात्। कुक्कुटी, विहगी, मृगी, दूती, पूतनी, अमरी, ब्राह्मणी, वृषली, नटी, कठी। नृनरयोर्वृद्धिश्च। नारी; अस्त्रीविषयादितिकिम्? मक्षिका, पिपीलिका, वलाका, एता नित्यस्त्रियः; अयोपधादितिकिम्? वैश्या, गवय, हय, मनुष्य इत्य-मत्स्यादन्योयोपधः (वैश्यादिः) क्षत्रिया, अर्य्या, गवयादेस्तु, गवयी, हयी, अजादयस्तु वैश्यादौ-अजा, अश्वा, एड़का, कोकिला। शूद्रा-चामहत्पूर्व्वा। महत्पूर्व्वाण, महाशूद्री आभीरी; स्वार्थ इत्येव-प्रिय कुक्कुटा, मथुरा मत इत्येव तित्तिरिः।

## ३८। पाक, कर्ण, पर्ण, वाल, मूलान्तात्।

[पाक—मूलान्तात् ५।]

जातेरित्येव—पाकाद्यन्तात् ङी स्यात्। स्त्रीविषयार्थं वचनं ओदनपाकी, आखुकर्णी, पृश्निपर्णी, गोवाली, शतमूली अमूलेति अजातिवचनत्वादाप्।

## ३९। पुष्पादसदादिपूर्व्वात्।

[पुष्पात् ५।, अ (न) सदादिपूर्व्वात् (सत् आदि पूर्व्व) ५।]

जातेरित्येव पुष्पान्तात् ङी स्यात्। शङ्खपुष्पी, असदादिपूर्व्वादितिकिम्? सत्पुष्पा, सत्, प्राक्, कान्त, प्रान्त, शत, एक।

## ४०। फलादसमाद्यादेः।

[फलात् ५।, अ (न) समाद्यादेः (सम्-आदि-आदि) ५।]

फलान्तात् ङी स्यात्। दाडिम्फली, असमाद्यादेरितिकिम्? सफ्फला; सम्, भस्त्र, अजिन, शण, पिण्ड।

## ४१। वाहः। [वाहः ५।]

एतदन्तात् ङी स्यात्। प्रष्ठौही।

## ४२। प्रायेणाल्पविवक्षायां।

[ प्रायेण ३।, अल्पविवक्षायां ७।]

अल्पविवक्षायां ङी स्यात्। अल्पं छत्रं छत्री, पत्री, मृणाली, दण्डी, घटीत्यादि।

## ४३। इतोऽनृजातेरिणस्त्वन्यतोऽपि।

[इतः ५।, नृजातेः ५।, इणः ५।, अन्यतः ५।, अपि ०१।]

इदन्तान्नृजातिवाचिनः स्त्रियां ङी स्यात्। अवन्ती, कुन्ती, इदन्तान्नृजातेश्चान्यतोऽपि-औदपायी, दाक्षी, तेन निर्वृत्ता सौतङ्गमी पुरी; इत इति किम्? जरत्, नृजातेरितिकिम्? तित्तिरिः।

४४। ऊङुतः [ऊङ् ०।१, उतः ५।१]

उदन्तान्नृजाते रूङ् स्यात्। ब्रह्मबन्धूः, कुरूः, भीरूः, बहुलाधिकारात् भीरुरित्यपि; न योपधात् अध्वर्युर्ब्राह्मणी, नृजातेरित्येव धेनुः, जातेरितिकिम्? किमभीरुरराध्यसे।

४५। अप्राणिनामरज्ज्वादेः।

[अ (न) प्राणिनां ६।३।, अ (न) रज्ज्वादेः (रज्जु आदि) ५।१]

अप्राणि जातेरुदन्तादूङ् स्यात्। अलाबूः, कर्कन्धूः, अप्राणिनामितिकिम? कृकवाकुः, अरज्ज्वादेरितिकिम्? रज्जुः, धेनुः।

४६। बाह्वन्तकद्रुकमण्डलुभ्यो नाम्नि।

[बाह्वन्त (बाहु-अन्त) कद्रु, कमण्डलुभ्यः ५।३।, नाम्नि ७।]

बाह्वन्तादेः संज्ञायामूङ् स्यात्। मद्रबाहूः, कद्रूः, कमण्डलूः, नाम्नीतिकिम्? वृत्तबाहुः स्त्री, कद्रुः, कमण्डलुः।

४७। ऊरोरुपमान सहितसहशफलक्षणवामादेः।

[ऊरोः ५।१, उपमान वामादेः (उपमान, सहित, संहित, सह, शफ, लक्षण, (वाम-आदि) ५।१]

उपमानादिपूर्व्वादूरोरूङ् स्यात्। करभइव ऊरू यस्याः सा करभोरूः, सहितोरूः, संहितोरूः, सहोरूः, शफोरूः, लक्षणोरूः, वामोरूः, कथं रम्भोरुकेलिस्खलत्? बाहुलाधिकारात्।

४८। यूनस्तिः। [यूनः ५।१, तिः १।]

यूनः स्त्रियां तिः स्यात्। युवतिः।

४९। अणिञोऽनार्षाद्गोत्रे गुरुपोत्तमाद्याप्।

[अणिञो (अण् इञ्) १।, अनार्षात् (न-आर्ष)-५।, गोत्रे ७।, गु: ५।, उपोत्तमात् ५।, याप् ०१।]

गोत्रे विहितौ यावणिञौ, तदन्तात् स्त्रियां याप् स्यात्। अण्-कारीषगन्ध्या, इञ्-वाराह्या, अनार्षादितिकिम्? वाशिष्ठी, गोत्र इति किम्? आहिक्षत्री, गुरुपोत्तमादितिकिम्? औपगवी, उत्तमशब्दस्त्रिप्रभृतिषु वर्त्तते तत् समीपमुपोत्तमं।

पङ्गुः श्वश्रूः। एतौ निपात्येते। श्वशुरस्य उकाराकारयोर्लोपः।

५०। क्रौड्यादेश्च।

[क्रौड्यादेः (क्रौडि-आदि) ५।, च ०१।]

क्रौडि प्रभृतेश्च स्त्रियां याप् स्यात्। क्रौड्या, नाड्या, क्रौडि, नाड़ि, व्याड़ि, आपिशलि, सौधातकि, भौरिकि, कापिष्ठलीत्यादि। भोजात् क्षत्रिय जातौ। भोज्या। कुलनाम्नश्च। पौलिक्या, मौखर्य्या।

५१। दैवयज्ञ्यादेर्वा।

[दैवयज्ञ्यादेः (दाज्ञि आदि) ५।, वा ०१।]

एभ्योयाप् वा स्यात्। दैवयज्ञ्या, दैवयज्ञी वा, दैवयज्ञि, शौचिवृक्षि, सात्यमुग्रि, काण्डविद्धि। पूर्णस्त्र्यधिकारः।

५२। प्राग्दीव्यतेरण्।

[प्राक् ०१।, दीव्यतेः ५।, अण् ०१।]

तेन दीव्यतीत्यतः प्राग् येऽर्था स्तेष्वण् भवति। उपगोरपत्यं औपगवः, बहुलमित्येव-उपग्वपत्यम्।

## ५३। दित्यदित्यादित्ययमाण्यः।

[दिति यमात् ५। ण्यः १।]

दित्यादेर्दीव्यतेः प्रागर्थेषु ण्यः स्यात्। दितेर्दैत्यः, अदिते रादित्यः, आदित्यात् आदित्यः, याम्यः।

## ५४। पत्युरगणादिपूर्व्वात्।

[पत्युः ५। अ (न) गणादि (गण-आदि) पूर्व्वात् ५।]

गणादेरन्यपूर्व्वात् प्रागदीव्यतेः पत्युर्ण्यः स्यात्। वार्हस्पत्यः, सैनापत्यं। अगणादेरितिकिम्? गाणपतं, आश्वपतं, गण, अश्व, राष्ट्र, कुल, गृह, पशु, धान्य, धन्वन्, प्राण, अधिनृसभा, क्षेत्र; प्रागदीव्यतेरित्यत्र आधिपत्यं भावे। अः स्याम्नः। स्यात्। अश्वत्थामः सहास्थामः।

## ५५। लोम्नोऽपत्ये वहुषु।

लोम्नः ५।, अपत्ये ७।, बहुषु ७।]

लोमान्ताद्वहुष्वपत्ये अः स्यात्। उडुलोम्नः पुत्राः उडुलोमाः, शरलोमाः, वहुष्वितिकिम्? औडुलोमिः। णाणौ पृथिव्याः। पार्थिवः, पार्थिवा, पार्थिवी। देवादण्यणौ। स्याताम्। दैवो, दैव्यः। वहिषोष्यण्डीकणौ। स्यातां। वाह्योवाहीकः, जाते ङीं वाहीकी।

## ५६। द्विगोरजादेर्लुगनपत्ये।

[द्विगोः ६।, अजादेः (अच्-आदि) ६।, लुक् ०१।, अनपत्ये (न-अपत्य) ७।]

द्विगोः सम्बन्धिनोऽजादेः प्रागदीव्यतीये तद्धितस्य लुक् स्यात्। पञ्चकपालः सूपः; तदधीते, वेद वा द्विवेदः, अनपत्ये इति किम्? द्वैमातुरः, अजादेरितिकिम्? पञ्चगर्गरूप्यं।

## ५७। भवनादेर्ग्निकलिभ्यां ढेयण्।

[भवनात् ५।, अग्नि, कलिभ्यां ५॥. टेयण् ०१।]

भवने चेव इतयत: प्रागर्थेष्वग्निकलिभ्यां टेयण् स्यात्। तस्यापत्यं, तेन क्रुष्टं, सास्य देवता, तस्येदं, तस्य निमित्तं, संयोगउत्पातो वा तदर्हति, तत्र साधुस्तस्मैहितं वा आग्नेयं, कालेयं।

## ५८। स्त्रीपुंसाभ्यां नणस्नणौ वा च भावे।

[स्त्रीपुंसाभ्यां ५॥, नण्, स्नणौ १॥, वा ०१।, च ०१। भावे ७।]

आभ्यां प्रागभवनात् नण्, स्नणौ भवत:। स्त्रैणं, पौंस्नं; वा च भावे स्त्रैणं, स्त्रीत्वं, पौंस्नं, पुंस्त्वं, भवनादित्येव-स्त्रीवत् पुम्वत्।

## ५९। गोरजादिप्रसङ्गे यत्।

[गो: ५।, अजादि प्रसङ्गे ७।, यत् ०१।]

सर्व्वत्राजादिप्रसङ्गे गोर्यत् स्यात्। गवि भवं, गोरिदं वा गव्यं; गौर्देवता अस्य गव्य: अजादीतिकिम्? गोरागतं गोरूप्यं।

## ६०। तस्यापत्यं। [तस्य ६।, अपत्यं १।]

अत्रार्थे यथाविहितमणादयोभवन्ति। औपगव: पौत्र:, दैत्य:, वार्हस्पत्य:, सैनापत्य, स्त्रैण:। अतोऽपत्याधिकार:।

## ६१। आद्यादेकोगोत्रे।

[आद्यात् ५।, एक: १।, गोत्रे ७।]

पौत्राद्यपत्यं गोत्रं; अत्रादाप्रकृतेरेक एव प्रत्ययो भवति। असति युवप्रत्यये उपगो: सर्व्वमेव गोत्रं औपगव:; दक्षस्य दाक्षि; गर्गस्य गार्ग्यस्य तदपत्यस्य तस्याप्यपत्यस्य, गोत्र इति किम्? गर्गस्यानन्तरापत्यं गार्गि:।

## ६२। गोत्राद्यून्यस्त्रियां।

[गोत्रात् ५।, यूनि ७।, अ (न) स्त्रियां ७।]

वंश्ये जीवति तदपत्यं युवोच्यते, तस्मिन्नपत्ये-यः स एकः गोत्रादूभवति। नाद्यप्रकृतेः। औपगवस्यापत्यं युवा औपगविः, दाक्षेर्दाक्षायणः, गार्ग्यस्य, गार्ग्यायणः अस्त्रियामितिकिम्? गार्गी युवसंज्ञैव प्रतिषिद्धा।

## ६२। अतोबाह्वादेरिञ्।

[अताह्वादेः (अत्-बाहु आदि) ५।, इञ् ०१।]

अदन्ताद्वाह्वादेश्चापत्ये इञ् स्यात्। दक्षस्यापत्यं दाक्षिः, गार्गिः तपरः किम्? कैलालपः, बाह्वादेः, बाहोरपत्यं बाहविः, बाहु, उपबाहु, चूडा, बलाका, मूषिका, एडका, सुमित्रा, पुष्करसद, अनडुह, स्वामिन्, देवशर्म्मन्, कुनामन्, अग्निशर्म्मन्, सुनामन्, पञ्चन्, सप्तन्, अष्टन्, सामन्, कृष्ण, युधिष्ठिर, अर्ज्जुन, गद, शाम्ब, प्रद्युम्न, कृष्णादीनां शिवाद्यण् बाधकबाधनार्थं वचनमित्यादि। दशरथादय्वौ। दाशरथिः, प्रदीयतां दाशरथाय मैथिली; सौमित्रिः सौमित्रश्च।

## ६४। सुधात्वादेर्डकिञ्।

[सुधात्वादेः (सुधात्व-आदि) ५।, डकिञ् ०१।]

एभ्योऽपत्ये डकिञ् स्यात्। सौधातकिः वैयासकिः, सुधात्व, व्यास, वरूट, निषाद, चाण्डाल, विम्ब।

## ६५। शिवादिभ्योऽण्।

[शिवादिभ्यः (शिव-आदि) ५।॥, अण् ०१।]

एभ्योऽपत्ये इञाद्यपवादोऽण् स्यात्। शैवः, यास्कः, शिव, यस्क, विश्रवण, वरुण, गङ्गा, यमुना, इला, पीला, भूमि, सपत्नी, इरावती, ककुत्स्थ, वतण्ड, जरत्कारु, तक्षण्, पूषण्, अयस्थूण, पुत्रादि।

तथा वशिष्ठाद्या ऋषयः। श्वाफल्काद्या, अन्धकवंश्याः, वसुदेवाद्या वृष्णयः नकुलाद्याः कुरवः। परस्त्रियाः परशु च। पारशवः।

## ६६। मातुर्मातुरसंख्या संभद्रादेः।

[मातुः ५।, मातुर् ०१।, संख्या, सं. भद्रादेः ५।]

संख्यादि पूर्व्वाया मातुरपत्येऽण्, मातुरादेशश्च भवति। द्वैमातुरः, त्रैमातुरः, षाण्मातुरः, साम्मातुरः, भाद्रमातुरः, संख्यादेरिति किम्? सौमात्रः। कन्यायाः कनीन् च। अण, कनीनादेशश्च। कानीनौ व्यास, कर्णयोः।

## ६७। स्त्रीशुभ्रादेष्टेयण् वहुलं।

[स्त्री. शुभ्रादेः (स्त्री, शुभ्र-आदि) ५। टेयण् ०१।]

स्त्रीप्रत्ययान्तात् शुभ्रादेश्च टेयण् स्यात्। पुनर्वहुलग्रहणं स्पष्टार्थं; सुपर्णाया अपत्यं सौपर्णेयः, सौभद्रेयः, गौप्तेयः, दात्तेयः, चान्द्रभागेयः, वासवदत्तेयः, यौवनेयः, कौम्भकारेयः, कामण्डलेयः। वड़वाया वृषे। वाड़वेयो वृषः, वाहुल्यान्न ह-पृथादेः पार्थः, यामुनः, क्रौञ्चः, कौकिलः, गौतम्याः गौतमः, शुभ्रादेः खल्वपि शौभ्रेयः, आत्रेयः। शुभ्र, अत्रि, वृष्णि, कद्रु, दिति, अदिति, लेखाभ्रु, विधि, विमातृ. सुरभि, अतिथि, प्रवाहण, भारत, मृकण्डु, इतर, अन्यतर; सुनामन्, जिह्माशिन, अष्टि, शुक, शुङ्ग, ग्रह, उग्र, जीव, पाण्डव, विकर्ण, कुशीत, कातर, काश्यपेत्यादि। भ्रुवोभ्रुवः। भ्रौवेयः। गङ्गायाः शिवादितिकादिपाठाच्च। गाङ्गेयो गाङ्गो, गाङ्गायनिः। मण्डूकाद्वा। माण्डूकेयः, माण्डूकिः माण्डूको वा। पीलायाः पैलेयः, शिवादित्वात् पैलः।

## ६८। टैनेयण् परस्त्रियां। [टैनेयण् ०१।, परस्त्रियां ७।]

टैनेयण् स्यात्। पारस्त्रैणेयः।

## ६९। कल्याण्यादेष्टिनेयण्।

[कल्याण्यादेः (कल्याणी आदि) ५।, टिनेयण् ०१।]

एभ्यष्टिनेयण् स्यात्। काल्याणिनेयः, सौभागिनेयः। कल्याणी, सुभगा, दुर्भगा, बन्धकी, जरती, ज्येष्ठा, कनिष्ठा, मध्यमा, कुलटा।

## ७०। चटकाया एरण् लुक् च स्त्रियां।

[चटकायाः ५।, एरण् ०१।, लुक् ०१।, च ०।, स्त्रियां ७।]

अस्या अपत्ये एरण्। लिङ्गविशिष्टग्रहणात् चटकादपि। चाटकैरः स्त्र्यपत्ये-एरणो लुक् च चटका।

## ७१। गोधाया अपत्ये रण् एरण् च।

[गोधायाः ५।, अपत्ये ७।, रण्, ०१।, एरण् ०१।, च ०१।]

गोधाया अपत्ये रण् एरणौ स्याताम्। चकारात् ढेयण् च। गौधारः, गौधेरः, गौधेयः।

## ७२। क्षुद्राभ्यो वा। [क्षुद्राभ्यः ५।।, वा ०१।]

अङ्गहीना अनियतपुंस्काश्च क्षुद्रास्ताभ्योऽपत्ये एरण् वा स्यात्। काणेयः, काणेरः, दासेरः, दासेयः, कौलटेरः, कौलटेयः।

## ७३। स्वसृ, मातृभ्यामीयो भ्रातुश्च।

[स्वसृ, मातृभ्यां ५।।, ईयः १।, भ्रातुः ५।, च ०१।]

एभ्योऽपत्ये ईयः स्यात्। स्वस्रीयः, मात्रीयः, भ्रात्रीयः, पितुः कुर्व्वादित्वाद्यः—पैत्र्यः।

## ७४। व्योरिपौ च। [व्यः १।, रिपौ ७।, च ०१।]

अपत्ये शत्रौ च भ्रातुर्व्यः स्यात्। भ्रातृव्यौ भ्रातृजद्विषौ।

७५। पितृमातृ पूर्व्वायाः स्वसुरीयण् टेयण्यन्त-लोपश्च।

[पितृ, मातृ. पूर्व्वायाः ५।, स्वसुः ५।, ईयण् ०१।, टेयणि ७।, अन्तलोपः १।, च ०१।]

एतत् पूर्व्वायाः स्वसुरीयण स्यात्। टेयण्यन्तलोपश्च, एतल्लिङ्गा-ट्टेयण् च। पैतृस्वस्रीयः, पैतृस्वसेयः, मातृस्वस्रीयः, मातृस्वसेयः।

७६। श्वशुराद्यः। [श्वशुरात् ५।, यः १।]

स्यात्। श्वशुर्य्यः।

७७। कुलाद् यदेयकणौ। ईनः स पूर्व्वाच्च।

[कुलात् ५।, यत् एयकणौ १॥, ईनः १।, सपूर्व्वात् ५।, च १।]

कुलादपत्ये यत् एयकण् स्यातां। ईनस्तु केवलाच्च, सपूर्व्वाच्च। कुल्यः, कौलेयकः, कुलीनः, आढ्यकुलीनः।

७८। महाकुलादणनीणौ च।

[महाकुलात् ५।, अण्, नीणौ १॥]

अस्मादण, नीणौ, ईनश्च स्युः। माहाकुलः, माहाकुलीनः, महा-कुलीनश्च।

७९। दुष्कुलाट्टेयण् वा।

[दुष्कुलात् ५।, टेयण ०१।, वा ०१।]

दुष्कुलाट्टेयण् वा स्यात्। पक्षे ईनश्च। दौष्कुलेयः, दुष्कु-लीनः।

८०। रेवत्यादिभ्यष्टिकण्।

[रेवत्यादिभ्यः ५॥, टिकण् ०१।]

एभ्यष्टेयणाद्यपवादष्टिकण् स्यात्। रैवतिकः; रैवतिः, अश्वपाली, मणिपाली, द्वारपालि, दण्डग्राह, कर्णग्राह, फल्गुग्राह इत्यादि।

## ८१। गोत्रस्त्रियाः कुत्सितेऽण् च।

[गोत्रस्त्रियाः ५।, कुत्सिते ७।, अण् ०१।, च ०१।]

गोत्रार्थप्रत्ययान्त स्त्रियाः कुत्सितेऽपत्येऽण् स्यात्। टिकण् च गार्ग्यस्य अपत्यं, गार्गोजाल्मः गार्गिकश्च, कुत्सित इतिकिम्? गार्गेयः। गोत्रापत्य ये प्रत्ययास्ते युवसंज्ञकाः।

## ८२। कुर्व्वादिभ्यः ण्यः।

[कुर्व्वादिभ्यः (कुरु आदि) ५।।।, ण्यः १।]

एभ्योऽपत्ये ण्यः स्यात्। कौरव्यः, गार्गाय्यः, कुरुरयं मुनिवचनः, तेन बहुत्वेऽपि कौरव्याः। तच्चाण्यो। ताच्णः, ताक्षण्यः। कुरु गर्ग, पिठ, कवि इन्द्रजालि, कापिञ्जल, शङ्कु, इन, तक्षण्।

## ८३। सेनान्तकारुलक्षणादिण् च।

[सेनान्त- कारु, लक्षणात् ५। इण् ०१।, च १०।]

एभ्य इण्, ण्यश्च भवति। सेनान्तात्-हारिषेणिः, हारिषेण्यः, वैष्वक्सेनिः, वैष्वकसेन्यः। एवं उग्रसेन, भीमसेन महासेन; कारोः तान्तवायिः, तान्तवाय्यः, लाक्षणिः, लाक्षण्यः।

## ८४। तिकादिभ्यो णायनिः।

[तिकादिभ्यः (तिक आदि) ५।।।, णायनिः १।]

एभ्योऽपत्ये णायनिः स्यात्। तैकायनिः, कैतवायनिः, तिक, कितव, कौरव्य, लोहित, चन्द्रमस्, शुक, शुभ, गङ्गा, वरेण्य, उदण्य, कौशल्या, काश्मार्य्य इत्यादि।

## ८५। अणोद्व्यचः।

[अणः ५', द्व्यचः (द्वि-अच्) ५।]

द्व्यचोऽणन्तादयूनि णायनिः स्यात्। हौत्रायणिः, यास्कायनिः, अण इति किम्? दाक्षायण; द्व्यच इति किम्? औपगविः।

## ८६। फाण्टाकृति मिमताभ्यां ण च सौवीरे।

[फाण्टाकृति, मिमताभ्यां ५॥, ण ०१।, च ०१।, सौवीरे ७।]

आभ्यां युनि णः स्यात्, णायनि च। फाण्टाकृतः, फाण्टाकृतायनिः, मैमतः, मैमतायनिः।

## ८७। तदादिभ्योवा।

[तदादिभ्यः (तद-आदि) ५॥, वा ०१।]

णायनिर्व्वा स्यात्। तादायनिः, पक्षे अण् तादः, यादायनिः, यादः।

## ८८। वृद्धाद्यचोऽगोत्रात्।

[वृद्धाद्यचः (वृद्धि आदि-अच्) ५।, अ (न) गोत्रात् ५।]

वृद्धिसंज्ञक आद्यच् यस्य तस्मात् णायनिर्वा स्यात्। शालगुप्तायनिः, पक्षे इण् शालगुप्तिः; कारोः-नापितायनिः, नापितिः, नापितः, वृद्धाद्यच इति किम्? दैवदत्तिः, अगोत्रादिति किम्? औपगविः।

## ८९। वाकिलादेः कायनिण्।

[वाकिलादेः (वाकिल आदि) ५।, कायनिण् ०१।]

एभ्यः कायनिण् वा स्यात्। वाकिलकायनिः, वाकिलायनिः, वाकिलि र्वा। पुत्रान्ताद्वृद्धाद्यचश्च। गार्गीपुत्रकायणिः, गार्गीपुत्रायणिः, गार्गीपुत्रिर्वा।

## ९०। ग्लुचुकादेरायनिः प्राचां।

[ग्लुचुकादेः (ग्लुचुक आदि) ५।, आयनिः १।, प्राचां ६॥।]

स्यात्। ग्लौचकायनिः, अन्येषां ग्लौचकिः।

## ९१। जातौ राजक्षत्राभ्यां यदियौ।

[जातौ ७।, राज, क्षत्राभ्यां ५॥, यदियौ (यत् इय) १॥।]

आभ्यां जातौ यदियौ स्यातां। राजन्यः, क्षत्रियः, जातौ किम्? राजनः, क्षात्रिः।

## ९२। मनोः ष्यमणौ।

[मनोः ५।, ष्य, मणौ १॥]

मनोर्जातौ ष्य, मणौ स्यातां। मनुष्यः, मानुषः, पुत्रे, जातौ च मानवः।

## ९३। विदादेरण् गोत्रे।

[विदादेः (विद-आदि) ५।, अण् ०१।, गोत्रे ७।]

विदादेः पौत्राद्यपत्येऽण् स्यात्। वैदः, और्व्वः, गोत्रे किम्? विदस्यानन्तरापत्यं वदिः, एषोऽत्र विशेषः। विद उर्व्व, कश्यप, कुशिक, भरद्वाज, विश्वानर, हर्य्यश्व, शुनक, गोपवनादिहरितादि। अतोगोत्रापत्ये विधिः।

## ९४। गर्गादिभ्यो यण्।

[गर्गादिभ्यः (गर्ग-आदि) भ्यः ५॥।, यण् ०१।]

गर्गादेर्गोत्रे यण् स्यात्। गार्ग्यो, वात्स्यः; गोत्र इत्येव—गार्गिः।

गर्ग, वत्स्य, संकृति, पुलस्ति, विदभृत्, व्याघ्रपात्, ग्रव्धुम, अवट, हृत्त, अनडुह, लोहित, शंसित, वभ्रू, मण्डु, मधु, मनु, ध्रुव, वतण्ड, कपि, कत, शकल, अगस्त्य, कुण्डिन, यज्ञवल्क, शण्डिल, मुद्गल, पराशर, जतूकर्ण, कृष्ण, उलूक, जमदग्नि इत्यादि। कथं रामो, जामदग्न्यः, पाराशर्य्यो व्यासः, पुत्रोपि पौत्रादिकार्य्यकारकत्वात् तथा व्यपदिश्यते, अन्यथा जामदग्नः एव। वभ्रोः कौशिके। वाभ्रव्य, वाभ्रवोऽन्यत्र। मधोर्ब्राह्मणे। माधव्यो, ब्राह्मणगोत्रः। माधवोऽन्यः। कपिवोधाङ्गिरसे। आङ्गिरसगोत्रे काप्यो, वौध्यः, अन्यत्र कापेयो, वौधिः।

कुञ्जादेष्टायन्यण्परयोर्लुक् च वहुषु। कौञ्जायन्यः, ब्राध्नायन्यः, गोत्र इतीवकौञ्जिः। परयोर्लुक् च वहुषु। कौञ्जायनाः स्त्रियां कौञ्जायनी, कुञ्ज, ब्रध्न, शङ्ख, शुण्डा, विपाश, स्कन्द, स्कम्भ, स्तम्भादि।

## ९५। नडादिभ्यष्टायणन्।

[नडादिभ्यः (नड—आदि) ५।॥, टायणन् ०१।]

एभ्यो गोत्रे टायणन् स्यात्। नाड़ायनः, चारायणः, गोत्र इत्येव नाड़िः, नड़, चर, इडिक, उपक, नमक, शलङ्कोःशलङ्क च, द्वीप, कश्यप, अमुष्य, ब्राह्मण, अग्र, शकट, मिमत, अलम्ब, युगन्धर, दण्डिन, हस्तिन, अश्मन्, वदर, अध्वर, उडुम्बर, इत्याद्यपिच, अश्व, पिञ्जर, श्रविष्टा, श्याम, धौम्र, विशम्प, राम, अर्ज्जुन, आतप, शिव, कितव। आत्रेयाद्भारद्वाजे। भर्गात्त्रैगर्त्ते। शरद्वतोभार्गवे। शुनकाद्वात्स्ये। दर्भादाग्रहायणे। द्रोणपर्व्वतजीवान्तादा। द्रोणायनो द्रौणिर्व्वा।

## ९६। इञ् यञ् हारितादिभ्यः।

[इञ् यञ् हारितादिभ्यः (हारित--आदि) ५।॥]

इञन्तादेर्गोत्राद्यूनि टायनण् स्यात्। इञ्-दाक्षायणिः, यञ्-गार्ग्यायणः, हारितादेः-हारितायनः, विदाद्यन्तर्गणः। उक्तं गोत्रं। पौत्राद्यपत्यं गोत्रं। पौत्रप्रभृत्यपत्यं गोत्रमुच्यते। गर्गस्य पौत्राद्यपत्यं गार्ग्यः, अनन्तरापत्यं गार्गिः। जीवति वंश्ये युवाग्रजेऽपि। पितृ पितामहादौ वंश्ये जीवति सति पौत्रप्रभृतेरपत्यं युवोच्यते। गर्गे जीवति, गार्गे वा, गार्गौ वा, तदा तस्यापत्यं युवा गार्ग्यायणः, मृते सति एको गार्ग्य एव। अग्रजे ज्येष्ठेऽपि भ्रातरि जीवति कनीयान् युवा गार्ग्यायणः।

## ९७। पितृव्यादौ वा वयोधिके।

[पितृव्यादौ (पितृव्य आदि) ७, वा ०१, वयोधिके (वयस अधिक) ७]

वयोधिके पितृव्ये, पितामहभ्रातरि वा जीवति तदा गोत्रापत्यं युवा वा स्यात्। गार्ग्यायणो, गार्ग्यो वा। वृद्धस्य पूजायां। गोत्रमेव वृद्धमाहुः स च पूजायां युवोच्यते वा। स भवान् गार्ग्यायणः, गार्ग्यो वा।

## ९८। युवा च निन्दायाम्।

[युवा ०१।, च ०१।, निन्दायाम् ७।]

निन्दायां युवा च युवसंज्ञो वा स्यात्। पितरि जीवति यः स्वतन्त्रः स गार्ग्यायणो जाल्मः, गार्ग्यो, वा।

## ९९। कुरु पञ्चालयुगन्धरादिभ्यः क्षत्रियेभ्यो ण्यागिणो राजनि च।

[कुरु--पञ्चाल--युगन्धरादिभ्यः (कुरु पञ्चाल युगन्धर आदि) ५॥, क्षत्रियेभ्यः ५॥, ण्यागिण. णौ (ण्य---अण्-इञ्) १॥, राजनि ७।, च ०१।]

कुर्व्वादि पञ्चालादि युगन्धरादिभ्यः क्षत्रियेभ्यो जनपदरूपेभ्योऽपत्ये, राजनि, च यथाक्रमं ण्य, अण् इण् प्रत्यया भवन्ति। कुर्व्वादेर्ण्य : कौरव्यः, पुत्रो, राजा च; कौन्त्यः, आवन्त्यः, कुरु, कुन्ति, अवन्ति, निषध, कोशल, अजातादि। वृद्धादेश्च:-आम्बष्ठः सौवीरादि। पञ्चालादेरण्-पाञ्चालः, पुत्रो राजा च; ऐक्ष्वाकः, पाञ्चालः, इक्ष्वाकु, विदेह, अङ्ग, वङ्ग, कलिङ्ग, मगध, सुह्म, सुर, सम, सूरसेन, मद्रादि। शाल्वेयः गान्धारिभ्याञ्च। शाल्वेयः, गान्धारः, युगन्धरादेरिण्, यौगन्धरिः पुत्रो राजा च औडुम्बरिः, युगन्धर, उडुम्बर, प्रतर, ग्रथ, कल, कूट, अश्मकादि।

## १००। काम्बोजादेर्लुक्।

[काम्बोजादेः (काम्बोज-आदि) ५।, लुक् ०१।]

एभ्योऽपत्ये, राजनि च, विहितस्य लुक् स्यात्। काम्बोजः पुत्रो राजा च, चोलः, शकः, केरलः।

## १०१। स्त्रियामवन्ति कुन्ति कुरु सूरसेनादिभ्यः।

[स्त्रियां ७, अवन्ति, कुन्ति, कुरु, सूरसेनादिभ्यः (सूरसेन आदि) ५॥]

एभ्यः स्त्रियामपत्ये विहितस्य लुक् स्यात्। अवन्ती, कुन्ती, कुरूः, सूरसेनी, मद्रीदरत्। केकयाद्वा। केकेयी, केकयी, एभ्यः किम्? पाञ्चाली, वैदेही, मागधी, आङ्गी, वाङ्गी, भार्गी।

## १०२। यस्कादिजनपदराजन्येभ्यो बहुष्वस्त्रियां।

[यस्कादि (यस्क आदि) जनपद राजन्येभ्यः ५॥, बहुषु ७॥, अस्त्रियां (न स्त्री) ७।]

एभ्योऽपत्ये विहितस्य बहुषु लुक् स्यात्। यास्कः, यास्कौ, यास्काः, अयस्थूणाः गर्गादेस्तु-गर्गाः, वत्साः, अगस्ति चागस्त्यस्य अग-

स्तय:, कौण्डिन्यस्य, कौण्डिनस्य-कुण्डिना:। विदादेरगोपवनादेः। विदा:, ऊर्व्वा, गोपवनादेस्तु, गौपवना:, शैग्रवा:। अत्रि, भृगु, कुत्स, वशिष्ठ, गोतमाङ्गिरोभ्य:। अत्रय:, भृगव:। इञो वह्वच: प्राच्यभरतेषु। पन्नागारा:, पुस्करसद:, भरतगोत्रे—युधिष्ठिरा:, अर्ज्जुना:। तिककितवादिभ्योद्वन्द्वे। तैकायनस्य, कैतवायनस्य, तिककितवा:। उपकादिभ्योवा द्वन्द्वे च। उपका:, औपकायना:; उपकनमका: औपकायननामकायना:। जनपदनामक्षत्रियेभ्य: खल्वपि। कुरव:, पञ्चाला: युगन्धरा:, कथं संरंच्यतां कौरवा, ? तस्येदमित्यणन्तात्। कथं प्रियवाङ्गा द्विजा: ? नेदं वाङ्गस्य वहुत्वं प्रियोवाङ्गोयेषामित्येकवचनत्वात्, अन्यकृतवहुत्वे मा भूत्; इह भवति आङ्गस्य, वाङ्गस्य, कालिङ्गस्य, अङ्गवङ्गकलिङ्गा:, अस्त्रियामितिकिम् ? यास्का: स्त्रिय: गार्ग्य:, वैद्य:, पाञ्चाल्य: अपत्य इति किम् ? यास्काश्छात्रा:।

## १०३। न प्रागदीव्यतीयेऽचि।

[न ०।१, प्राक् ०।१, दीव्यतीये ७।, अचि ७।]

प्रागदीव्यतीयेऽजादौ कर्त्तव्ये वहुषु लुक् नास्ति। गर्गाणां छात्रा: गार्गीया:, आत्रेयीया:, अचीतिकिम् ? गर्गभ्य आगतं गर्गरूप्यं।

## १०४। यूनि लुक्। [यूनि ७।, लुक् ०१।]

अजादौ प्रागदीव्यतीये कर्त्तव्ये यूनि विहितस्य लुक् स्यात्। फाण्टाहृतेरपत्यं युवा फाण्टाहृतस्तस्य छात्रा:-णस्य लुक्, तत इणन्तात् इण काण्वादेरण् गोत्रात् फाण्टाहृताश्छात्रा।

## १०५। टायण्णायन्योर्विभाषा।

[टायण्, फायनी. ६॥, विभाषा ०१।]

अनयो र्यूनिविहितयोरजादौ प्राग्दीव्यतीयेकर्त्तवेर लुग्वा स्यात्। गार्ग्यायणस्य छात्राः गार्ग्यीयाः, गार्ग्यायणीया वा, यास्कायनेश्छात्राः यास्कीयाः, यास्कायनीया वा, व्यवस्थितविभाषया नित्यं, आत्रे याय-णस्य छात्राः आत्रेयीयाः; यूनीत्येव-नेह अश्वादेः आश्वायनीयाः।

## १०६। पैलादिभ्योयूनि।

[पैलादिभ्यः (पैल-आदि) ५॥, यूनि ७।]

पुनर्यूनीतिग्रहणं प्राग्दीव्यतीयेऽचीति निवृत्त्यर्थम्। एभ्योयुवप्र-त्ययस्य लुक् स्यात्। पीलाया अण्, ततो यूनि णायनेर्लुक् पैलः पिता, पैलः पुत्रः; वैदादेर्वैदः पिता, वैदः पुत्रः, पान्नागार्य्यादेष्टायणस्य लुक्। पान्नागारिः पुत्रः, एवं सातकिः, भौरिकि, औदमेघि प्रभृतिः। दाक्ष्या-देर्न लुक्। दाक्षिः पिता, दाक्षायणः पुत्रः, आर्ज्जुनिः, आर्ज्जुनायनः। तौल्वलिः, तौल्वलायनः, आसुरिः, आसुरायणः। तैकायन्यादे रणो-लुक्। तैकायनिः पिता, तैकायनिः पुत्रः, स्वार्षक्षत्रियेभ्य इणोलुक्। कौरव्यः पिता पुत्रश्च, तिकादिपाठात्, कौरव्यायनिः, आर्षात् वाशिष्ठः पिता पुत्रश्च; क्षत्रियात् श्वाफल्कः पिता पुत्रश्च। पूर्णोऽपत्याधिकारः।

## १०७। तेनरक्तं रागात्।

[तेन ३।, रक्तं ०१।, रागात् ५।]

तेन रक्तमित्यर्थे रागवाचिशब्दादण् स्यात्। कषायेण रक्तं काषायं वस्त्रं, कौङ्कुमं, हारिद्रं, माहारजनं, कथं हारिद्री कुक्कुटस्य पादौ? इत्युपमानात्। लाक्षारोचनाट्टिकण्। लाक्षया रक्तं लाक्षिकं वस्त्रं रौचनिकी शाटी। शकलकर्द्दमाद्वा। शाकलिकं वस्त्रं

शाकलं वा; कार्द्दमिकः पटः कार्द्दमो वा। पीतात् कः। पीतकं वस्त्रं। नील्या अन्। नीलः पटः; तेनेति वर्त्तते प्राक्कौमारात्।

१०८। दृष्टं साम। [दृष्टं ०१।, साम ०१।]

अत्रार्थे यथाविहितमणादयः स्युः। वशिष्ठेन दृष्टं साम वाशिष्ठं, वैश्वामित्रं, आग्नेयं, कालेयम्; उशनसष्टिलोपोवा। उशनसा दृष्टं औशनं साम, औशनसं वा। गोत्रादङ्कण्। औपगवेन दृष्टं साम औपगवकं। वामदेवाद्ड्यः। वामदेव्यं साम।

१०९। परिवृतोरथः। [परिवृत. १।, रथः १।]

अत्रार्थेऽण् स्यात्। वस्त्रेण परिवृतोरथः वास्त्रः, चार्म्मणः, काम्बलः, द्वैपेन चर्म्मणा परिवृतः अणि टिलोपोनिपात्यते द्वैपोरथः वैयाघ्रः। पाण्डुकम्बलादिन्। पाण्डुकम्बलीरथः।

११०। युक्तः कालोनक्षत्रात्।

[युक्तः १।, कालः १।, नक्षत्रात् ५।]

तेन युक्त इत्यर्थे नक्षत्रादण् स्यात्। पुष्येण युक्तं पौषमहः माघी रात्रिः। लुबविशेषे। अद्य पुष्यः, अद्य मघा। अविशेषे किम्? श्रावणी रात्रिः। नाम्नि श्रवणाश्वत्थाभ्यां। अणोलुप् स्यात्। श्रवणा, अश्वत्था मूहूर्त्तः। द्वन्द्वादीयः राधानुराधीया रात्रिः। लुप्च बाध्यते, अद्य पुष्य पुनर्व्वसवीयम्।

१११। तद्युक्तास्मिन् पौर्णमासीति संज्ञायाम्।

[तत्-युक्ता ०१।, अस्मिन् ७।, पौर्णमासी ०१।, इति ०१।, संज्ञायाम् ७।]

अत्रार्थे नक्षत्रादण् स्यात्। पुष्ययुक्ता पौर्णमासी अत्रेति पौषो मासः, मार्गशीर्षः शिरसः शीर्षोऽणि।

११२। अश्वत्थाग्रहायणीभ्यां टिकण्।

[अश्वत्थ-अग्रहायणीभ्यां ५॥ टिकण् ०१।]

पूर्व्वोक्तार्थे आभ्यां टिकण् स्यात्। अश्वत्थयुक्ता पौर्णमासी अस्मिन्निति आश्वत्थिकः पञ्चोमासो वा; आग्रहायणिकः।

११३। चित्राश्रवण फल्गुनी कृत्तिकाभ्यो वा।

चित्राश्रवण, फल्गुनी, कृत्तिकाभ्यः ५॥। वा ०१।]

टिकण् स्यात्। चैत्रिकोमासः चैत्रोवा, श्रावणिकः, श्रावणः; फाल्गुनिकः, फाल्गुनः, कार्त्तिकिकः, कार्त्तिकोवा।

११४। कौमारः प्रथमपरिणये।

[कौमारः १।, प्रथमपरिणये ७।]

प्रथमविवाहे सति अणन्तः कौमारः स्यात्। कौमारः पतिः, प्रथमोढा कौमारी।

११५। तत्रोद्धृतं पात्रेभ्यः [तत्र ७।, उद्धृतं ०१।, पात्रेभ्यः ५।॥

तत्रोद्धृतमित्यर्थे पात्रेभ्योऽण् स्यात्। शरावेषूद्धृतं शारावं दधि

११६। शेते स्थण्डिलाद्व्रते।

[शेते तिङन्तपदं, स्थण्डिलात् ५।, व्रते ७।]

अण् स्यात् व्रतश्चेत्। स्थण्डिले शेते स्थाण्डिलः।

११७। संस्कृतं भक्षाः [संस्कृतं ०१।, भक्षाः १॥।]

तत्र संस्कृतमित्यर्थेऽण् स्यात्। भक्षाश्चेत्; भ्राष्ट्रे संस्कृताः भ्राष्ट्राः अपूपाः, पैठराः। शूलोखाभ्यां यः। शूले संस्कृतं शूल्यं,

उख्यं। क्षीराड्ढञ्। क्षीरे संस्कृता क्षैरेयी यवागूः। दध्नष्ठक्। दध्नि संस्कृतं दाधिकं। उदश्वितो वा। उदश्विति संस्कृतं औदश्वितिकम्? उदश्वितं वा।

११८। तेन संस्कृते टिकण् [तेन ३।१, संस्कृते ७।१ टिकण् ०।१।]

तेन संस्कृतेऽर्थे टिकण् स्यात्। दध्ना संस्कृतं दाधिकं, गौड़िकं, मारीचिकं। कुलत्थकोपधादण्। कौलत्थं, तान्तिड़िकम्।

११९। साऽस्य देवता। [सा ०।१, अस्य ६।, देवता ०।१।]

अत्रार्थे यथाविहितमणादयः स्युः। इन्द्रो देवताऽस्य ऐन्द्रं हविः, वार्हस्पत्यो मन्त्रः, आग्नेयः। कादायट्। को देवताऽस्य कायं हविः। शुक्रादियः। शुक्रो देवताऽस्य शुक्रियोऽध्यायः। अपोनप्त्रपांनप्तृभ्यामीयश्च। अपानप्त्रीयं, अपोनप्त्रियश्च; अपां नप्त्रीयं, अपां नप्त्रियश्च। महेन्द्रादण् च। महेन्द्रो देवता अस्य माहेन्द्रं, महेन्द्रियं, महेन्द्रीयं हविः। सोमाट्ट्यण् (टी-अण्)। सौम्यं, सौमी ऋक्। महाराजप्रोष्ठपदाट्टिकण्। माहाराजिकः, प्रौष्ठपदिकः। ऋतुवायूषःपितृभ्यो यत्। ऋतुर्देवताऽस्य ऋतव्यं, वायव्यं, उषस्यं, पित्र्यम्। द्यावापृथिव्यादेरीयश्च। यश्च। द्यावापृथिव्यौ देवते अस्य द्यावापृथिवीयं, द्यावापृथिव्यं, द्यावापृथिवी, सुनासीर मरुत्वत्, अग्नीषोम, वास्तोष्पतिगृहमेध।

१२०। सोऽत्र वर्त्तते पूर्णमासात्।

[सः १।, अत्र ७।, वर्त्तते तिङन्तं पदं, पौर्णमासात् ५।]

अत्रार्थे पूर्णमासादण् स्यात्। पूर्णमासोऽत्र वर्त्तते पौर्णमासी तिथिः। अन्यायादेष्ठिकण्। अन्यायोऽत्र वर्त्तते आन्यायिकः, औत्पातिकः, नारयज्ञिकः॥

## १२१। पितृव्य, मातुल, मातामह, पितामहाः।

[पितृव्य—पितामहाः १॥]

चत्वारोनिपात्यन्ते। पितुर्भ्राता पितृव्यः, मातुर्भ्राता मातुलः। मातुः पिता मातामहः, पितुः पिता पितामहः।

## १२२। अवेः सोढ़ः, दूस, मरीसा दुग्धे।

[अवेः ५।, सोढ़, दूस, मरीसाः १॥, दुग्धे ७।]

अविशब्दादेते स्युः। अविसोढ़ं, अविदूसं, अविमरीसं।

## १२३। तिलात् पिञ्जपेजौ निष्फले।

तिलात् ५।, पिञ्जपेजौ १॥, निष्फले ७।]

तिलादेतौ स्याताम्, निस्फलश्चेत्। तिलपिञ्जः तिलपेजः।

## १२४। तस्य समूहोनपुंसके।

[तस्य ६।, समूहः १।, नपुंसके ७।]

अत्रार्थे क्लीविऽण् स्यात्। मयूराणां समूहो मायूरं, कापोतं, काकं, शौकं, औलूकं, वाड़वं, भैक्षुकं, भैक्षं, गार्भिणं, वार्म्मणं, यौवतं, पुम्वद्भावादयौवजमितीरके। पर्श्वोरोर्वेश्च। पार्श्वं। अश्वादोयश्च। अश्वीयं, आश्वञ्च। गोत्रोक्षोष्ट्रोरभ्रराज राजन्य राजपुत्र वत्स मनुष्याजवृद्धेभ्योऽकण्। गोत्रात्-दाक्षीणां समूहः दाक्षकं, गार्गकं, उक्षादेः—औक्षकं, औष्ट्रकं, औरभ्रकं, राजकं, राजपुत्रकं वात्सकं, मानुष्यकं, आजकं, वार्द्धकं; केदारादिकण्यणौ च। केदाराणां समूहः कैदारिकं, कैदार्य्यं, कैदारकम्। ब्राह्मण, मानव, पृष्ठवाड़वादाः। ब्राह्मणानां समूहो ब्राह्मण्यं, मानव्यं, पृष्ठ्यं, वाड़व्यं। चरणेभ्यो धर्म्मवत्। धर्म्मार्थे विहित प्रत्ययाः स्युः। कठानां समूहः काठकं छान्दोग्यं, आथर्व्वणं। अचित्त, हस्ति,

क्वचित्, धेनोष्टिकण्। टित्करणमुत्तरार्थं। अचित्तात्-अपूपानां समूहः आपूपिकं शास्कुलिकं इत्यादिः—हास्तिकं, कावचिकं, धैनुकम्। केशाट्ठयण् च। कैश्यं कैशिकम्। गणिकायाश्च यण् स्यात् गाणिक्यं। पुंस्यङ्क इनः कृतो। अहीनः। जन, गज, बन्धु, माहाय ग्रामेभ्यः स्त्रियां ताप्। जनानां समूहोजनता, गजता, बन्धुता, सहायता, ग्रामता।

## १२५। पाशादिभ्योयाप् [पाशादिभ्यः ५॥, याप् ०१।]

स्त्रियां याप् स्यात्। पाश्या, धूम्या, तृण्या, वन्या, नद्या, वातया। गोरथात्ताप कड्यापौ च। याप् च। क्रमात् गव्या, गोत्रा, रथ्या, रथकड्या। खलादिन् च॥ यापच॥ खलिनी, खल्या॥ नलादेश्च॥ इन् स्यात् नलानां समूहोनलिनी, पद्मिनी, उत्पलिनी, उलूकिनी॥ उक्तं समूहे॥

## १२६। विषयोदेशे॥ [विषयः १।, देशे ७।]

'तस्य' इतीव—तस्य विषय इत्यर्थे इन् स्यात्॥ देशश्चेत्— शिवीनां विषयो देशः शैवः आङ्गः। राजन्यादेरकण्। राजन्यानां विषयोदेशः राजन्यकः, माणवकः।

## १२७। सोऽस्यादिरितिछन्दोभ्यः प्रगाथे।

[सः १।, अस्य ६।, आदिः १।, इति ०१। छन्दोभ्यः ५॥, प्रगाथे ७।]

अत्रार्थे छन्दोभ्योऽण् स्यात्। पंक्तिरादिरस्य प्रगाथस्य पांक्तिः, त्रैष्टुभः, जगती जागतः। स्वार्थे च क्लीवे। अनुष्टुवेव आनुष्टुभं, त्रैष्टुभं, जागतं।

## १२८। युद्धे प्रयोजनं योद्धृभ्यः।

[युद्धे ७।, प्रयोजनं ०१।, योद्धृभ्यः ५॥]

एभ्योऽणादयः स्युः। युद्धे त्। सुभद्रा प्रयोजनमस्य सौभद्रो रणः, द्रौपदः, स्त्रैणः भरता योद्धारोऽस्य भारतः संग्रामः, पादातः पाञ्चालः, पौंस्नः।

१२९। तदत्र क्रीड़ायां प्रहरणमिति स्त्रियां णः।

अत्रार्थे स्त्रियां णः स्यात्। दण्डः प्रहरणमस्यां दाण्डा क्रीड़ा मौष्टा, पाल्लवा।

१३०। घणश्च सास्यां क्रियेति।

[घणः ५१, च ०१, सा ०१, अस्यां ७, क्रिया ०१। इति, ०१।]

घणन्तादत्रार्थे स्त्रियां णः स्यात्। श्येनपातः क्रिया अस्यां श्यैनंपाता मृगया, तैलं पाता स्वधा, मौषलपाता भूः।

१३१। तदधीते वेद वा। [तदधीते तिङ्, वेद तिङ्, वा ०१।]

अनयोरत्रार्थयोरण् स्यात्। व्याकरणमधीते वेद वा वैयाकरणः, ज्यौतिषमधीते वेत्ति वा ज्यौतिषः, छान्दसः, तद्वेत्ति नैमित्तः।

१३२। उक्थादिभ्यष्टिकण्।

[उक्थादिभ्यः (उक्थ-आदि) ५॥, टिकण् ०१।]

टिकण् स्यात्। उक्थमधीते वेद वा औक्थिकः, याज्ञिकः, नैयायिकः, लौकायतिकः, ऐतिहासिकः, पौराणिकः, ज्यौतिषिकः वार्त्तिकः। क्रतोः। आग्निष्टोमिकः। कल्पलक्षण सूत्रान्तादक ल्पादेः। प्राथमकल्पिकः गौलाक्षणिकः, वार्त्तिसूत्रिकः अकल्पादेरितिकिम्? काल्पसूत्रः।

१३३। विद्यायाः चत्राङ्गत्रिधर्म्मादन्यपूर्व्वायाः।

[विद्यायाः ५१, क्षत्राङ्ग, क्षत्र-अङ्ग, त्रि, धर्म्मात् ५१, अन्यपूर्व्वायाः ५१]

टिकण् स्यात्। वायसविद्यिकः, चातुर्विद्यिकः, तत्र कुशलार्थेऽणि चत्राद्यन्यपूर्व्वाया इति किम्? चातुर्विद्यः, आङ्गविद्यः, त्रैविद्यः, धार्म्मविद्यः। आख्यानाख्यायिकाभ्याञ्च। यावक्रीतिकः, वासवदत्तिकः। क्रमादेरकः। क्रमममधीते, वेद वा क्रमकः, शिक्षकः, मीमांसकः, उपनिषदकः। पदोत्तरपदादिकः। पदोत्तरपदिकः। शत, षष्टेः पथष्टिकः। शतपथिकः षष्टिपथिकः। अनुब्राह्मणादिन्। अनुब्राह्मणी। सर्व्वसादेरणोलुग्वक्तव्यः। सर्व्ववेदमधीते, वेद वा सर्व्ववेदः, सवेदः, सवार्त्तिकः द्विगोर्लुगेव पञ्चकल्पः।

## १३४। प्रोक्ताल्लुक्। [प्रोक्तात् ५।, लुक् ०१।]

प्रोक्तात् प्रत्ययान्तात् तत् अधीते, वेद वेत्यर्थे विहितप्रत्ययस्य लुक् स्यात्। पाणिना प्रोक्तोग्रन्थः पाणिनीय, तदधीते वेद वा पाणिनीयाःऽणोलुक्, आपिशलिना प्रोक्तं इणकाण्वादेरसगोत्रादापिशलं सूत्रं तदधीते वेद वा इत्यणोलुगापिशला ब्राह्मणीः पूर्व्वस्याणोऽन्यार्थत्वात् ङीन भवति। कठेन प्रोक्तं छन्दोऽपि कठः, तमधीते कठः।

## १३५। सूत्राच्च संख्याप्रकृतिकोपधात्।

[सूत्रात् ५।, च ०१।, संख्या प्रकृतिकोपधात् ५।]

ईदृशः सूत्रात् अध्येतृवेदितृ।विहितप्रत्ययस्य लुक् स्यात्। अष्टकं पाणिनीयसूत्रमधीते विदन्ति वा अष्टकाः पाणिनीयाः दशका वाघ्रपदीयाः, द्वादशकाः मीमांसकाः, पञ्चकाः सौपद्माः।

## १३६। तदस्मिन्नस्तीति देशे तन्नाम्नि।

[तत् ०१।, अस्मिन् ७।, अस्तितिङ्, इति ०१।, देशे ७, तंन्नाम्नि (तत् नाम) ७।]

अत्रार्थेऽण् स्यात्। देशस्तन्नामा चेत्। पर्व्वताः अस्मिन् सन्ति पार्व्वतोदेशः औडुम्बरः।

## १३७। तेन निर्वृत्तः। [तेन ३।, नि॰ त्तः १।]

अत्रार्थेऽण् स्यात्। कुशाम्बेन निर्वृत्ता कौशाम्बी नगरी, माकन्दी नगरी, साहस्री परिखा।

## १३८। तस्य निवासः। [तस्य ६।, निवासः १।]

अत्रार्थेऽण् स्यात्। शिवीनां निवासः शैवः।

## १३९। अदूरभवश्च। [अ (न) दूरभवः १।, च ०१।]

अत्रार्थेऽण् स्यात्। विदिशाया अदूरभवं वैदिशं नगरं, गाङ्गं, चाम्पानि वनानि, एते चत्वारोऽर्थाः शैषिकं यावदनुवर्त्तन्ते। संकाश्यादेर्ण्यः। सांकाश्यं, काम्पिल्यं प्रगदिनः प्रागद्यं। सुतङ्गमादेरिण्। सौतङ्गमिः। अरीहणादेरकण्। आरीहणकं। कृशाश्वादेरीयण्। कार्शाश्वीयं। ऋश्यादेः कः। आर्श्यकं। कुमुदादेरिकठिकणौ। कुमुदिकं, कौमुदिकं, गोमठिकं गौमठिकं। काशादेरिनः। काशिनः। तृणादेः सः। तृणसा, वरणसा, नड़सा। प्रेक्षादेरिन्। प्रेक्षी, फलकी। अश्मादिभ्यो रः। आश्मरं। संख्यादेर्ण्यण सांख्येयं बलादेर्यः। बल्यं। पक्षादेरायनण्। पाक्षायणः। कर्णादेर्णायनिः। कार्णायनिः वराहादेः कण्। वाराहकं।

## १४०। जनपद, वरणादिभ्यो लुप्।

[जनपद, वरणादिभ्यः (वरण-आदि) ५॥।, लुप् ०१।]

जनपदोदेशः वरणादयोग्रामास्तेभ्यश्चातुरर्थिकप्रत्ययस्य लुप् स्यात्। पञ्चालानां निवासः पञ्चाला जनपदाः अङ्गाः, वङ्गाः, कुरवः वरणा ग्रामः, गया, उज्जयनी, खलतिकं वनानि, कथं वरणसा ? विशेष विधानात्।

## १४१। शर्करायाः वा। [शर्करायाः ५।, वा ०।]

अणोलुप्वा स्यात्। शर्कराभिनिर्वृत्तः शर्कराः अस्मिन् सन्ति-वा शर्करा देशः, शार्करीवा। टिकणीयौ च। शार्करिकः, शार्करेयः।

## १४२। नद्यां मतुः।

चातुरर्थिकोमतुः स्यात्। नदो चेत्। उडुम्बरावती नदी, इक्षुमती।

## १४३। कुमुद, नड, महिष वेतसाड्ड्मतुः।

[कुमुद--सात् ५।, ड्मतु. १।]

एभ्यश्चतुरर्थे ड्मतुः स्यात्। कुमुद्वान, नड्वान्, महिष्मान्, वेतस्वान्।

## १४४। नड्शाद्राड्ड्वलः।

[नड् शाद्रात् ५।, ड्वलः १।]

आभ्यां चातुरर्थिको। ड्वलः, स्यात्। नड्वलः, शाद्वलः। उतकरादेरीयः। उतकरीयः।

## १४५। नड़ादेः कीयः।

[नड़ादेः (नड-आदि) ५।, कीयः १।]

एभ्यः कीयः स्यात्। नड़कीयः, बिल्वकीयः, प्लक्षकीयः। कुञ्चायाः ह्रस्वश्च कुञ्चकीयः। उक्ताश्चातुरर्थिकाः।

इति श्रीपद्मनाभदत्तकृतौ सुपद्मे व्याकरणे पञ्चमाऽध्यायस्य द्वितीयः पादः।

---

# अथ पञ्चमाध्यायस्य ।

## तृतीयपादः ।

### १ । प्राग्विकाराच्छेषे ।

[प्राक् ०१।, विकारात् ५।, शेषे ७।]

शेषार्थे विधिः प्राग्विकारात् । चक्षुषा गृह्यते--चाक्षुषं रूपं, श्रावणः शब्दः, अश्वैरुह्यते आश्वोरथः, चातुरं शकटं, चतुर्दश्यां दृश्यते चातुर्दशोभूतः, दृषदि पिष्टा दार्षदा माषाः, औदूखलाः शक्तवः, अथच वक्ष्यमानप्रत्ययाः शेषे तत्र जातस्तत्र भवः तत आगतः तस्येदमित्याद्यर्थे ज्ञेयाः ।

### २ । दिक् पूर्व्वपदारण्याच्च ः । /

[दिक्पूर्व्वपदारण्यात् (दिक्पूर्व्वपद-अरण्य) ५।, णः १।]

आभ्यां शेषे णः स्यात् । पौर्व्वशालः, औत्तरशाला वाला, आरण्याः सुमनसः । राष्ट्रादियः । राष्ट्रे भवो राष्ट्रादागतो वा राष्ट्रियः । अवारपारादीनः । अवारीणः, पारीणः, संघाताच्च--अवार पारीणः पारावारीणश्च । ग्रामाद्यश्च ग्रामग्रोग्रामीणश्च । कत्र्यादे-रेयकण् । कर्त्री-कार्त्रेयकः, ग्रामेयकः नागरेयकः, कौलेयकः शुनि, कौक्षेयकः कृपाणे । ग्रैवेयको अलङ्कारे । नद्यादेष्टेयण् । नादेयं पयः वाराणसेयोजनः ।

## ३। दक्षिणा पश्चात् पुरसस्त्यण्।

[दक्षिणा, पश्चात्, पुरसः ५।, त्यण् ०१।]

आजन्तो दक्षिणाशब्दः तेन सर्व्वनाम्नो न पुम्वत्। दाक्षिणात्यः, पाश्चात्यः, पौरस्त्यः।-

अमाक्केहतसिवेभ्यस्त्यप्। अमात्यः, क्वत्यः, इहत्यः, तस्यन्तात् ततस्त्यो, यतस्त्योः वेति ममस्यास्तदन्यात् कुवतेशायचत्यः। निरो निरवसिते। निर्गतोदेशात् निष्ट्यश्चाण्डालः ह्रस्वात्तसीति षत्वं (३७।३।१)। नेध्रुवे। नित्यं। ऐषमोह्यः श्वसोवा पक्षे तनट् वक्ष्यते, ऐषमस्त्यः, ऐषमस्तनं, ह्यस्त्यः, ह्यस्तनं, श्वस्त्यः, श्वस्तनं, वाहुल्यात् प्रतिस्त्योऽपि। दूरादेत्यः। दूरेत्यः पथिकः उत्तरादाहञ्। औत्तराहः। कपिश्याद्दिष्टायनञ्। कापिशायनं, मधुकापिशायनी द्राक्षा, वाह्लिभौलायनी, तद्विस्ताद्वायनी। रङ्कोरमनुष्येऽण् च। राङ्कवः, राङ्कवायणः, रङ्कुर्मृगभेदः। द्युप्रागवागुदक् प्रतीचोयत्। दिव् दिव्यं, प्राच्यं, अवाच्यं, उदीच्यं, प्रतीच्यं। कन्थायाष्टिकण्। कान्थिकः। ईयस्तदादिवृद्धाद्यजगहादेः। तदादेस्तदीयं, मदीयं, वृद्धाद्यचः शालीयः, गार्गीयः, आचार्य्यीयः; गहादेः--गाहीयः, अन्तस्थीयः, मलयीयः। पृथ्वीमध्यो मध्यमात्। मध्यमीयः। नगराद्यन्तदेशाच्च। कठनगरीयं, दाक्षिकन्थीयः। नन्दिग्रामीयः। पार्व्वतान्मनुष्ये। पर्व्वतीयः, इति माऽवजीगणः। नान्यत्र पर्व्वतीयं फलं पार्व्वतं वा। एङादाचः प्रागदेशात्। एणी पचनीयोजनः, भोजकटीयः देशात् किम्? गोमतां भवाः गौमताः मत्स्याः। वृनाम्नो वा। देवदत्तीयाः देवदत्ताश्छात्राः। परजनराजदेवतात् कीयः। परकीयः, जनकीयः, राजकीयः, देवकीयः। स्वादीयश्च। स्वीयः, स्वकीयः। भवतष्टिकणीयौ तोदश्चेये। भावत्कं, तोदश्च भवदीयः

## ४। इञ् काश्यादेरञ् गोत्रात्।

[इण् काण्वादेः (इण् काण्वा-आदि) ५।. अण् ०१।, गोत्रात् ५।]

ईयस्यापवादः इणन्तात् काण्वादेश्च अण् स्यात्। दाचेरमी दाचाः, काण्वादेः-काण्वस्य छात्राः काण्वाः, शाकलस्य शाकलाः, युवप्रत्ययत्वात् पाणिनेर्न भवति पाणिनीया श्छात्राः।

## ५। न द्व्यचः प्राच्य भरतेषु।

[न ०१।, द्व्य चः (द्वि अच्) ५।, प्राच्यभरतेषु ७।]

द्व्यच इण अणनास्ति। प्राच्यभरतगोत्रे। रैङ्कीयाः रैङ्कः क्वचित्। काश्यादिभ्यष्टिकणिकणौ। काशिकी, इकण् काशिका, वैदिकी, वैदिका।

## ६। ओर्देशाट्टिकण्।

[ओः ५।, देशात् ५।, टिकण् ०१।]

उवर्णान्ताद्देशाट्टिकण् स्यात्। नैषादकर्षुकः, शावरजम्बुकः। सांकाश्यादेरकण्। ईयाणोरपवादः। सांकाश्यकः, पारधन्वकः सैन्धुवक्रकः, त्रैगर्त्तकः, धूमादेः, धौमकः, वैदेहकः, राजगृहकः, औज्जयनकः, दाक्षिणापथकः। प्रस्थपुरवहान्तात्। मालाप्रस्थकः, नान्दीपुरकः, पैलुवहकः। ईद्रोपधाभ्यां प्राचां। अकण् इदन्तात् माकन्दकः, रोपधात् पाटलिपुत्रकः, ऐकचक्रकः, वहुवचनविषयात्। अकण् ईयाणोरपवादः आङ्गकः, पाञ्चालकः, आजमीढकः, कालाञ्जरकः। न मद्रेभ्यः माद्रः; समुद्रान्नौमनुष्ययोः। सामुद्रिका नौका, सामुद्रकोमनुष्यः। नगरात् प्रावीण्यगर्हयोः। अकण् कुशलो नागरकः, खलोनागरकः अनयोः किम् ? नागराः विप्राः।

## ७। अरण्यादध्याय न्याय पथि हस्तिमनुष्य विहारेषु।

[अरण्यात् ५।, अध्याय, न्याय, पथि, हस्ति, (पथिन् हस्तिन्) मनुष्य, विहारेषु ७॥]

एष्वर्थेष्वकण् स्यात्। आरण्यकोऽध्यायः, आरण्यकोन्यायः, पन्था. हस्ती, मनुष्योविहारश्च। वा गोमये। आरण्यकं गोमयं आरण्यं वा।

## ८। कच्छादेर्मनुष्य तत्स्थयोः।

[कच्छादिः ५।, मनुष्य, तत्स्थयोः ७॥]

अकण् स्यात्। काच्छकोमनुष्यः, सैन्धवकः, काच्छकमस्य हसितं, सैन्धविकाचूड़ा; अनयोः किम्? काच्छः सैन्धवः। साल्वादपदातौ। साल्वकः, नेह-साल्वः पदातिः। कुरुयुगन्धरेभ्यो वा। कौरवको-हस्ती कौरवो वा. योगन्धरको यौगन्धरः। उक्तं देशात्।

## ९। युष्मदस्मदोर्वाखीनच युष्माकास्माकौ चैकत्वे तावकाममकौ।

[युष्मद्-अस्मदोः ६॥. वा ०१।. अखीन (अण-ईन) १॥, च ०१। युष्माकास्माकौ १॥, च ०१।. एकत्वे ७।, तवकममकौ १॥]

शेषार्थे युष्मदस्मदभ्यामण् ईनश्च वा स्यात। अयथा संख्यार्थं पृथग वचनं सन्निपातलक्षणस्यानित्यत्वात् तयोः परतोयुष्मदस्मदो-स्थाने युष्माकास्माको; एकत्वे तवक, ममकौ। यौष्माको, यौष्माकीनः; आस्माकः, आस्माकीनः; एकत्वे तु-तावकं, तावकीनं, मामकं, मामकीनं, पक्षे तदादित्वादीयः, युष्मदीयं, अस्मदीयं, त्वदीयं, मदीयं।

## १०। अर्द्धाद्यत् परावराधमोत्तमपूर्व्वाच्च।

अर्द्धात् ५।, यत् ०१।, परा-पूर्व्वात् (पर-अवर-अधम-उत्तमपूर्व्व) ५।. च १।]

अर्द्धाद्यत् स्यात्। अर्द्ध्यं; परादिपूर्व्वात्, परार्द्ध्यं,-अवरार्द्ध

अधमार्द्धं, उत्तमार्द्धं। दिक्पूर्व्वाट्टिकण् च। पौर्व्वार्द्धिकं दाक्षिणार्द्धिकं पक्षे यत्। ग्रामजनपदांशेऽण्टिकणौ। दिक्पूर्व्वादेव ग्रामस्य जनपदस्य वा। पूर्व्वार्द्धे भवाः पौर्व्वार्द्धाः पौर्व्वार्द्धिकाः औत्तरार्द्धाः, औत्तरार्द्धिकाः।

## ११। शेष पूर्व्वाद्दिकण्।

[शेष पूर्व्वात् ५।, टिकण ०१।]

उपयुक्तेतर पूर्व्वादर्द्धात् शेषार्थे टिकण् स्यात्। गौतमार्द्धे भवं गौतमार्द्धिकं, वालेयार्द्धिकं।

## १२। मध्यादेर्मोऽवोऽधसोः सलोपश्च।

[मध्यादे. (मध्य-आदि) ५।, म १।, अवोऽधसोः, (अवस्, अधस्) ६॥, सलोपः १।, च ०१।]

एभ्योमः स्यात्। मध्यमः, आदिमः, अवोऽधसोः सलोपश्च अवमः, अधमः।

## १३। मध्यान्नात्येऽत्।।

अत् स्यात्। युक्तेनात्युच्चे नातिनीचैर्मध्यस्तार्किकः। द्वीपाद् यण्। द्वैप्यः।

## १४। कालाट्टिकण् [कालात् ५।, टिकण् १।]

कालवाचिनः शब्दाट्टिकण् स्यात्। शेषार्थे। दैवसिकः, आह्निकः, मासिकः, वार्षिकः, साम्वत्सरिकः। शरदः, श्राद्धे। शारदिकं, शारदं दधि। रोगातपयोर्व्वा। शारदिकोरोगः शारदो वा आतपश्च। निशा प्रदोषाभ्यां च। टिकण् वा स्यात्। नैशिकं नैशं वा तमः प्रादोषिकः प्रादोषो वा। श्वसः श्वस्तच।

टिकण् वास्यात् शौवस्तिकः शौवस्तिको भूतिः पक्षे तनट् वा

श्वस्त्यः, श्वस्तनं। ऋतुभ--सन्ध्यादेरवर्षाभ्योऽण्। ऋतोः—ग्रैष्मं वासन्तं, नेह—वार्षिकं, पौर्व्ववार्षिकं नक्षत्रात्—तैषः, पौषः,-माघः, रौहिणं सन्ध्यादेः—सान्ध्यं, मान्धिवेलं—आमावास्यं, पौर्णमासं, त्रायोदशं, प्रातिपदं। सम्वत्सरात् फलपर्व्वणोः। अण् साम्वत्सरं फलं पर्व्व वा।

हेमन्तादृत्किण्, वाऽणि-तल्लोपश्च। हैमन्तिकं, अणि—तल्लोपश्च हैमन्तं, हैमनं वा। प्रावृष एण्यः। प्रावृषेण्यः मेघः।

सायं चिरं प्राह्णे प्रगेऽव्ययेभ्यस्तनट्।

सायमादेर्निपातनान्मान्तेदन्तत्वं—सायन्तनी, चिरन्तनं, प्राह्णेतनं, प्रगेतनं ; अव्ययकालात्—प्रातस्तनं, दिवातनं, दोषातनं, ह्यस्तनम्। पूर्व्वाह्णाऽपराह्णाद्वा। तनट् वा स्यात्। पूर्व्वाह्णेतनं पौर्व्वाह्णिकं वा; अपराह्णेतनं, आपराह्णिकं वा, सप्तम्या अलुक्। चिरपरुत्परारिभ्यस्त्नः। चिरत्नं, परुतस्तल्लोपश्च—परुत्नं, परारित्नं। उक्तं कालात्।

## १५। अग्र, पश्चादन्तेभ्योडिमः।

[अग्र, पश्चात अन्तेभ्यः ५॥ डिम. १।]

एभ्यः शेषे डिमः स्यात्। अग्रिमः, पश्चिमः, अन्तिमः। शेषप्रभृतेरुक्ताः प्रत्ययाः अविशेषोक्तौ वक्ष्यमाणजाताद्यर्थेषूह्याः।

## १६। तत्र जातः। [तत्र ७।, जातः १।]

अत्रार्थे विहितमणादयः स्युः। माथुरः, राष्ट्रियः, कार्त्तेयकः, सायन्तनः। इकः प्रावृषः। प्रावृषि जातः प्रावृषिकः। शरदोऽकण् संज्ञायां। शारदका मुद्गाः। मूलादेरकः। नाम्नि मूलकः, आर्द्रकः, प्रदोषकः, अपराह्णकः, पूर्व्वाह्णकः अवस्करकः। पथः पन्थ च। पथिजातः पन्थको वत्सः। अमावास्याया अञ्च वा। अका-

णौ च भवतः। अमावास्यः, अमावास्यकः, आमावास्योवा। सिन्धुप-कराभ्यां कः। सिन्धुकः, अपकरकः ; वेत्येव—सैन्धवः, आपकरः।

नक्षत्रेभ्योलुग्बहुलं। जातार्थेऽणोलुक् तद्धितलुकि लुक् स्त्रियां। रोहिण्यां जातो रोहिणः, रौहिणोवा मृगशिरा, मार्गशीर्षो वा, अभिजितः, आभिजितोवा; अश्वयुक, आश्वयुजोवा; शतभिषगादेरणि टिलोपोवा शतभिषक्, शातभिषो वा, शातभिषजः वाहुल्या न्नित्यं श्रविष्ठादेरणोलुक् श्रविष्ठः, फल्गुनोऽर्ज्जुनः पुनर्व्वसुर्व्वररुचिः, श्रविष्ठा, फल्गुनी, अनुराधा, स्वाती, तिष्य, पुनर्व्वसु, हस्ता, विशाखा, आषाढ़ा, कृत्तिका, वहुला।

स्थानान्तगोशालखरशालाच्च। अणोलुक्। गोस्थाने जातः गोस्थानः, खरस्थानः, गोशालः, खरशालः। वत्सशालाद्वा। वत्सशालः, वात्सशालो वा। श्रविष्ठाषाढ़ाभ्यामीयण् च। श्राविष्ठीयः, आषाढीयः; लुकि श्रविष्ठः उक्तं जातार्थे ; तत्रेति वर्त्तते।

## १७। कृत, लब्ध, क्रीत, कुशलाः।

[कृत-लब्ध-क्रीत-कुशलाः १॥,]

तत्र कृताद्यर्थे यथाविहितमणादयः स्युः। स्रुघ्ने कृतः, लब्धः, क्रीतः, कुशलः वा स्रौघ्नः, राष्ट्रियः।

## १८। प्रायभवः। [प्रायभवः १।,]

अत्रार्थे यथाविहितं स्यात्। स्रुघ्ने प्रायेण भवः स्रौघ्नः, राष्ट्रियः। उपजानूपकर्णोपनीवेष्टिकण्। औपजानुकः पाणिः, औपकर्णिकं चक्षुः, औपनीविकः करः।

## १९। सम्भूतं। [सम्भूतं ०१।,]

तत्र सम्भूतमित्यर्थे यथाविहितं स्यात्। स्रौघ्नो राजा। कोषा-

ट्ञ्यण्। कोषे सम्भूतं कौषेयं वस्त्रं। कालात् साधुपुष्प्यत् पच्यमानेषु। ग्रीष्मे साधु ग्रैष्मं चन्दनं, हैमनं वासः, वसन्ते पुष्प्यति वासन्ती लता, शरदि पच्यन्ते शारदा मुद्गाः।

## २०। उप्ते च। [उप्ते ७१, च ०१।]

अत्रार्थे कालात् यथाविहितं स्यात्। हेमन्ते उप्ता हैमन्ता यवाः। ग्रैष्माः शालयः। आश्वयुज्या अकञ्। आश्वयुज्यां पौर्णमास्यां उप्ता आश्वयुजका माषाः। ग्रीष्म वसन्ताद्वा। ग्रैष्मकं, ग्रैष्मं वा; वासन्तकं, वासन्तं वा।

## २१। देयं ऋणम्। [देयं ७१। ऋणं ०१।]

अत्रार्थे कालाद् यथाविहितं स्यात्। मासे देयं ऋणं मासिकं, सांवत्सरिकं। कलाप्यश्वत्थयवबुषाद्वुञ्। यदा कलापिनोमयूराः अश्वत्थाः फलिनः, यवबुषा उत्पद्यन्ते तदा देयं ऋणं कलापकं, अश्वत्थकं, यवबुषकं। ग्रीष्मावरसमाद्वुञ्। ग्रीष्मे देयमृणं ग्रैष्मकं, सम्वत्सराग्रहायणीभ्यां ठञ् च। साम्वत्सरिकं, साम्वत्सरकं; आग्रहायणिकं, आग्रहायणकं ऋणं।

## २२। मृगशकुनिव्याहरति। [मृगशकुनिव्याहरति तिङ्]

अत्रार्थे यथाविहितं स्यात्। निशायां व्याहरति नैशोमृगः, नैशिकोदात्यूहः। तदनेन सोढम्। निशा सोढाऽनेन तत्सहचरिताध्ययनादिभिरिति नैशश्छात्रः, नैशिकः, कालादिति निवृत्तम्।

## २३। तत्र भवः। [तत्र ७१, भवः ११]

अत्रार्थे यथा विहितं स्यात्। स्रुघ्ने भवः स्रौघ्नोराष्ट्रियः, वार्घ्रो, दैवसिकः, दिवाः, प्रावृषेण्यः। दिगादेर्योहिते च देहावयवात्। दिशि भवं दिश्यं, वंश्यं, रहस्यं, आद्यं, अन्त्यं, मुख्यं, यूथ्यं, गण्यं, अग्रं,

सन्नतात् सन्नत्यं। देहावयववाचिते च। दन्ते भवं दन्ताय हितं वा दन्त्यं, औष्ठ्यं, तालव्यं, मूर्द्धन्यं, मुख्यं, चक्षुष्यं, उरस्यं, नासिक्यं, नस्यं वा। सोदरादेर्भवे। समानोदरे भवः सोदर्य्यः, समानोदर्य्यः। सगर्भ्यं, सयूथ्यौ। समानस्य सोनिपात्यते। अहिकुक्षिकलसिदृत्यस्थिवस्ते-ष्टेयण्। आहेयः, कुक्षौ भव, कौक्षेयोऽसिः कालसेयं दधि, दार्त्येयं, आस्थेयं, वास्तेयं। ग्रीवाया अण् च तत्र भवं ग्रैवं, ग्रैवेयम्; गम्भीरादेर्ण्यः। गाम्भीर्य्यं, पाञ्चजन्यः। अव्ययीभावादनुपकूलादेः। पारिमुख्यं, पारिहनव्यं; नेह—औपकूलः, औपशालः॥ चतुर्मासाद्यञ्॥ चातुर्मास्यं व्रतं। संज्ञायामिण् च। चातुर्मासी पूर्णिमा। अध्यात्मादिभ्यष्टिकण्। अध्यात्मे भवं आध्यात्मिकं, आधिभौतिकं, चातुरर्थिकं, त्रैवर्णिकः साम्प्रतिकं, सामानिकं सामानग्रामिकं, परिग्रामिकं, आनुग्रामिकं, और्द्धदेहिकं, लोकोत्तरपदात्। ऐहलौकिकं, बहुलाधिकाराट्लुक्; पारलौकिकम्। अन्तपूर्व्वपदात्। आन्तर्व्वेशिकः, आन्तर्देहिकः। अभ्रादेरियः। अभ्रियः। जिह्वामूलादेरीयः। जिह्वामूलीयः, अङ्गुलीयः, अग्रीयं, मुखतःपार्श्वतसष्टिलोपश्च। मुखतीयः, पार्श्वतीयः। वर्गान्ताच्च। कवर्गीयः, चवर्गीयः। यदणौ चाशब्दे। मित्रवर्ग्यः, मित्रवर्गीणः, मित्रवर्गीयश्च। शब्दे तु कवर्गीयः। मध्यान्मण्मीयेयाः। माध्यमः, मध्यमीयः, मध्यीयः णोमध्यन्दिनश्च मध्यस्य। माध्यन्दिनः। कर्णललाटादिकः स्त्रियां भूषणे। कर्णे भवं भूषणं कर्णिका, ललाटिका।

## २४। तस्य व्याख्यानमिति च तिङादेः।

[तस्य ६।, व्याख्यानं ०१।, इति ०१।, च ०१।, तिङादेः ५।]

तत्र भवः, तस्य व्याख्यानञ्चेत्यर्थद्वये तिङादेरणादयः स्युः। तिङिभवस्तिङो व्याख्यानं वा तैङो ग्रन्थः, सौपः, कार्त्तः। द्वन्द्वात् कृत्तद्धितादेष्टिकण्। भवव्याख्यानयोः कार्त्तद्धितिकं, षात्वणत्विकं।

## २५। ह्रस्वजृह्वाह्मणादिभ्यश्च।

[द्वा—भव: (द्वि, अच्, ऋत्—ब्राह्मण-आदि) ५॥, च ०१।]

द्वाचः नैष्ठिकः, ऋतः चातुर्होत्रिकः, ब्राह्मणादेः—ब्राह्मणिकः, प्राथमिकः आध्वरिकः, आग्निष्टोमिकः, पाञ्चौदनिकः, पौरश्चरणिकः, नामाख्यातिकः; विग्रहीताच्च नामिकः आख्यातिकः, ऋचः आर्चिकः। ऋषेश्चाध्याये। वाशिष्ठिकोऽध्यायः, वैश्वामित्रिकः। भवव्याख्यानयोः पौरडाशपुरोडाशाट्ठिकः। पौरोडाशिकः पुरोडाशिकौ। छन्दसोयदणौ। छन्दस्यः छान्दसः। ऋगयणादेरण्। आर्गयणः, नैरुक्तः, शैक्षः, यौगः, नैगमः, वैयाकरणः। उक्तो भवव्याख्याने।

## २६। ततः आगतः। [ततः ५।, आगतः १।]

अत्रार्थे यथाविहितं स्यात्। स्रुघ्नादागतः स्रौघ्नः। आयस्थानेभ्यष्टिकण्। आपणादगतः आपणिकः, शौल्किकः। शुण्डिकादेरण्। टिकणोऽपवादः, शौण्डिकः, कार्कशः। विद्यायोनिसम्बन्धेभ्योऽकण्। विद्यायोनिकृतः सम्बन्धोयेषां तेभ्योऽकण् स्यात्। उपाध्यायादागतं औपाध्यायकं आचार्य्यकं, पैतामहकं, मातुलकं।

## २७। ऋतष्ठिकण्। [ऋतः ५।, टिकण् ०१।]

ऋदन्ताट्टिकण् स्यात्। हौतृकं, मातृकं, स्वासृकं। पितुर्यश्च। पित्र्यं पैतृकं। गोत्रादङ्कवत्। तस्याङ्कमित्यर्थे वक्ष्यमाणप्रत्ययवद्गोत्रात्। औपगवादागतः औपगवकं, अण् दाक्षं। नृप्योहेतुमनुष्याद्वा मयट्च। समाद्वेतोरागतं समरूप्यं, सममयं, देवदत्तरूप्यो, देवदत्तमयः; पक्षे गहादित्वादीयः समीयः अण् दैवदत्तः।

## २८। प्रभवति। [प्रभवति, तिङन्तं पदं]

ततः इत्येव, ततः प्रभवतीत्यर्थे यथाविहितमणादयः स्युः। हैमवती राष्ट्रियः। विदूरीमयः। वैदूर्य्यो मणिः।

## २९ । तत्गच्छति पथि दूतयोः

[ तत् ०२।, गच्छति तिङ्, पथिदूतयोः ७॥]

तत्गच्छतीत्यर्थे यथाविहितमणादयः स्युः । पथिदूतौ चेत् । स्रौघ्नः पन्थाः, माथुरोदूतः ।

## ३० । अभिनिष्क्रामति द्वारे ।

[अभिनिष्क्रामति तिङ्, द्वारे ७।]

तदभिनिष्क्रामतीत्यर्थे यथाविहितमणादयः स्युः । द्वारञ्चेत् । स्रौघ्नं द्वारं कान्यकुब्जं ।

## ३१ । अधिकृत्य कृतोग्रन्थः ।

[अधिकृत्य कृत् अव्य, कृतः १।, ग्रन्थः १।]

तदधिकृत्य कृत इत्यर्थे यथाविहितं स्यात् । सुभद्रामधिकृत्य कृतोग्रन्थः सौभद्रः, भैमरथी, आख्यायिका, कादम्बरी कथा, ज्योतिरधिकृत्य कृत ग्रन्थः ज्यौतिष इति संज्ञापूर्व्वकोविधिरनित्य इति वृद्ध्यभावः । द्वन्द्व—यमसभादेरीयोऽदेवासुरादेः । द्वन्द्वात् किरातार्ज्जुनीयः, श्येनकपोतीयः यमसभादेः—यमसभीयः, शिशुक्रन्दीयः, इन्द्रजालीयः, प्रद्युम्नागमनीयः, सीतान्वेषणीयं, काव्यं, शिष्योपनयनीयोऽध्यायः, अदेवासुरादेरिकिम् ? दैवासुरा, राक्षोगन्धर्व्वः ।

## ३२ । सोऽस्य निवासः । [स १।, अस्य ६।, निवासः १।]

अत्रार्थे यथाविहितं स्यात् । स्रुघ्नोनिवासोऽस्य स्रौघ्नः ।

## ३३ । अभिजनश्च । [अभिजनः १।, च ०१।]

अत्रार्थे यथाविहितं स्यात् । स्रुघ्नोऽभिजनोऽस्य स्रौघ्नः, सैन्धवः,

काश्मीरः. ताच्छ[illegible] अभिजनः—कुलस्थानं। गिरेरीयोऽस्त्रजीविषु। रोहितगिरिं अभिजन एषां रौहितगिरीयाः अस्त्रजीविनः। शालातुरादीयण्—शालातुरीयः। तुदीवर्म्मतीभ्यां ढेयण्। तौदेयः वार्म्मतेय। शण्डिकादिभ्योण्यः। शण्डिकोऽभिजनोऽस्य शाण्डिक्यः, चाणक्यः, शाक्यः, कूचवारात् कौचवार्य्यः।

## ३४। सेव्यः। [सेव्यः १।]

सोऽस्य सेव्य इत्यर्थे यथाविहितं स्यात्। वुञः सेव्योऽस्य वौञः, श्यौघ्नः। अपूपादेष्ठिकण्। आपूपिकः, मौदकिकः, माहाराजिकः। वासुदेवार्ज्जुनाभ्यामकः। वासुदेवकः, अर्ज्जुनकः। गोत्रक्षत्रियाख्येभ्योऽकण् बहुलं। गोत्राख्यात्—औपगवः, सेव्योऽस्य औपगवकः, क्षत्रियाख्याद्बहुवचनविषयात् जनपदात् आङ्गकः जनपदिनोऽपि बहुत्वे जनपदवत्; बाहुल्यान्नेह पाणिनीयः, पौरवीयः।

## ३५। तेन प्रोक्तं। [तेन ३।, प्रोक्तं १।]

अत्रार्थे यथाविहितं स्यात्। पाणिनिना प्रोक्तं पाणिनीयं सूत्रं तदधीते पाणिनीयः प्रोक्ताल्लुक्, माथुरी वृत्तिरिति तत्र भवार्थे। तित्तिरिवरतन्तुखण्डिकोखादीयण्। भित्तिरिणा प्रोक्तं तैत्तिरीयः तदधीते वेद वा तैत्तिरीयश्छात्रः, वारतन्तवीयं, खाण्डिकीयं, औखीयं। छगलिनोणियिन। छागलि छन्दः, बहुत्वे छागलेयिनश्छात्राः। कौशिकादिभ्य ऋषिभ्योणिन्। कौशिकेन प्रोक्तं कौशिकिश्छन्दः तदधीयते विद्वुर्वा प्रोक्ताल्लुक् कौशिकिनश्छात्राः, काश्यपिनः, शौनकिनः, कलापिशिष्येभ्यः औलपिनः हारिद्रविणः। वैशम्पायनशिष्येभ्यः आलम्बिनः, स्फौलिङ्गिन इत्यादि। पुराणप्रोक्तब्राह्मणकल्पे च। तान्तवी मन्त्रः पैङ्गीकल्पः, कला

पिनोऽण् कालापं। कठचरकाल्लुक्। णिनिप्रत्ययस्यैव लुक् कठेन प्रोक्तः कठः चरकः। तदधीयते कठाश्चरकाः। कर्म्मन्दपाराशर्य्याभ्यामिन् भिक्षु सूत्रे। कर्म्मन्देन प्रोक्तं भिक्षुसूत्रं कर्म्मन्दि तदधीते कर्म्मन्दीभिक्षुः। पाराशरी। शिलालिकृशाश्वाभ्यां णिनिनौ नट सूत्रे। शिलालिना प्रोक्तं नटसूत्रं णिन् शैलालि तदधीयते शैलालिनोनटाः कृशाश्विनः।

३६। तेनैकदिक्। [तेन ३। एकदिक् ०१।]

अत्रार्थे यथाविहितं स्यात्। सूर्य्येण एका समाना दिक् सौरी वलाका, सौदामनी विद्युत्, श्रौघ्नः पन्थाः। उरसीयत्। उरसा एकदिक् उरस्योहारः।

३७। उपज्ञातं। [उपज्ञातं ०१।]

तेनोपज्ञातमित्यर्थे यथा विहितं स्यात्। पाणिनिना उपज्ञातं प्रथमं कृतं पाणिनीयमकालकं व्याकरणं; शूरेणोपज्ञातः शौरः स्वयंग्राहः।

३८। कृतोग्रन्थः। [कृतः १। ग्रन्थः १।]

तेन कृतमित्यर्थे यथाविहितं स्यात् ग्रन्थश्चेत्। वररुचिना कृतोग्रन्थः वाररुचः। मक्षिकादेः संज्ञायां। अण्स्यात् मक्षिकया कृतं माक्षिकं मधुक्षौद्रं, भ्रामरं, वाराटं, वातपं, गार्म्मुतं। कुलालादेरकण्। कौलालकोघटः ऐन्द्रियकं ज्ञानं। कुलाल, वरूट, चण्डाल, निषाद, कर्म्मार, इन्द्रिय, देवराज, परिषद, वधू, अनडुह् ऊर्ण, ब्राह्मण कुम्भकार, श्वपाक। तेनकृतं शौवपाककं।

३९। तस्येदं। [तस्य ६। इदं ०१।]

अत्रार्थे यथाविहितं स्यात्। उपगोरिदं औपगवं आश्वत्थं

राष्ट्रियं पारिषदः, [redacted] न परितराजेत् । वोढुरण् । वहितुश्च । संवोढुरिदं सांवहित्रं । अग्नीधः शरणे याधोभश्च । यः स्यात् अग्नीध्रः । ऋचि समिधष्टेनण् । अस्यार्थे समिधष्टेनण् स्यात् सामिधेनी ऋच् । रथादवाहनपूर्व्वादयः । रथस्येदं रथ्यं, परमरथ्यं अवाहनपूर्व्वादितिकिम् ? आश्वरथं चक्रं । हलसीराट्टिकण् । हलस्येदं हालिकं, सौरिकं । द्वन्द्वादिकः स्त्रियां वैरमैथुनिकयोरदेवाऽसुरादेः । वीरे भवं वैरं विरोधः, मिथुनस्य कर्म्म मैथुनिकोविवाह स्तयोरर्थयोर्द्वन्द्वात् स्त्रियां इकः स्यात् । अश्वमहिषस्य वैरं अश्वमहिषिका, काकोलूकिका ; मैथुनिके—अत्रिभरद्वाजयोः कुटुम्बकरणं अत्रिभरद्वाजिका ; अदेवासुरादेः—दैवासुरं राक्षोगन्धर्व्वम् । गोत्रादकण् । औपगवस्येदं औपगवकं, दाक्षकं, गार्गकं, न पाणिनेर्युवत्वात् । पाणिनीयं । चरणाद्धर्म्माम्नाययोः । कठस्य धर्म्म आम्नायो वा वा काठकं, कालापकं ।

## ४० । नान्तेवासिदण्डमानवेषु ।

[न ०१।, अन्तं वासिन्, दण्डमानवेषु ७।।]

एषु गोत्रचरणादकण् नास्ति । दाक्षा अन्तं वासिनः, गौरक्षा दण्डमानवाः ।

## ४१ । संङ्घाङ्कलक्षणघोषेष्विञयञवेदादिभ्योऽण् ।

[सङ्घाङ्क (सङ्घ, अङ्क) लक्षण, घोषेषु ७।।, इञयञ् (इञन्त, अयञन्त) वेदादिभ्य (वेद, आदि) ५।।, अण् ०१।]

संघादौ इञाद्यन्ताद्वेदादेश्च अण् स्यात् । अकणोऽपवादः । दाक्षीणां संघोऽङ्कोलक्षणं घोषोवा दाक्षः, गार्गः, वैदः, और्व्वः ।

छन्दोगादेर्ण्यः। धर्म्माम्नाय संज्ञादौ—छान्दोग्यं, औक्थिकानां औक्थिक्यं, याज्ञिक्यं, वाह्वृच्यं, नटानां नाट्यं। रेवतिकादेरीयः। रेवतिकीयः। कौपिञ्जलहास्तिपदादण्। धर्म्माम्नायसंज्ञादौ—कौपिञ्जलः, हास्तिपादः। आर्थर्व्वणिकस्येकलोपश्च। आर्थर्व्वणः। पूर्णः शेषाधिकारः।

## ४२। विकारे।

तस्य विकार इत्यर्थे यथा विहितं स्यात्। अश्मनो विकार आश्मः, आपूपिकः, आग्नेयः, स्त्रैणः।

## ४३। अवयवे प्राण्योषधिवृक्षेभ्यः।

[अवयवे ७।, प्राण्योषधिवृक्षेभ्य (प्राणिन् ओषधि, वृक्ष) ५॥।]

एभ्योविकारे, अवयवे च यथाविहितमणादयःस्युः। मयूराणां विकारोऽवयवो वा मायूरः, कापोतः, स्त्रैणः, पौंस्नः, (औषधेः दौर्व्वं, सौर्व्वं;-वृक्षात्—यैणवं, दैवदारवं, कापित्थं, बैल्वं, माधूकम्। शाल्याः शमीन्च। शामीनो स्रुक्। त्रपुजतुभ्यां षुक्। त्रापुषं जातुषं।

## ४४। मयड्वैतयोरभक्ष्याच्छादनयोः।

[मयट् ०१।, वा ०१।, एतयो ७॥, अभक्ष्याच्छादनयो (न भक्ष्य आच्छादन) ७॥]

विकारावयवयोर्व्वा मयट स्यात्। अश्वत्थमयं, वा आश्वत्थं; रजतमयं, राजतं वा; लोहमयं, लौहं वा, काञ्चनमयी, काञ्चनी वास-यष्टिः; कपोतमयं कापोतं वा; दूर्व्वामयं, दौर्व्वं; विल्वमयं, बैल्वं, मधूकमयं, माधूकं; अपूपमयः आपूपः, स्त्रैणकः अभक्ष्याच्छादनयोरितिकिम्? मौद्गः सूपः, कार्पासं वासः, नित्यमेकाच

शरादेः । मृण्मयं, मृन्मयं, त्वङ्मयं शरादेः—शरमयं, दर्भमयं। शर, दर्भ, सोम, वल्वज, कुश, तृण। हृक्षाद्यचः प्रायेण। आम्रमयं, शालमयं। तत्प्रभवे च तदादेः। तन्मयं, यन्मयं। गोः पुरीषे। गोमयं, गव्यमन्यत्र। ब्रीहेः पुरोडाशे। व्रीहिमयः पुरोडाशः। ब्रैहमन्यत्र। तिलयवाभ्यामण् संज्ञायां। तैलं, यावं। पिष्टाच्च। पिष्टमयं। संज्ञायां कः। पिष्टकः, पिष्टिका।

## ४५। न दैवदारवादेः।

[न ०१।, दैवदारवादेः (दैवदारव, आदि) ५।]

एभ्योविकारावयवप्रत्ययान्तेभ्यो मयट् न स्यात्। विकारे दैवदारो यूपः, शामीनस्य शामीनः। तालाद्धनुषि। तालं धनुः। हाटकार्थीमाने। हाटको निष्कः जातरूपः इह भवति विल्वमयः।

## ४६। क्रीतवत् संख्यापरिमाणात्।

[क्रीतवत् ०१।, संख्या, परिमाणात् ५।]

आभ्यां विकारे क्रीतवत् प्रतयया: स्युः। यथा क्रीतार्थे शत्यः शतिकः, तथा विकारेऽपि ; एवं नैष्किकः। क्रीतवल्लुक् च द्विसहस्रः जातरूपः। उष्ट्राद्वुञ्। उष्ट्रस्य विकारोऽवयवो वा औष्ट्रकः। उमोर्णाद्वा। उमाया विकारोऽवयवो वा औमकः, औमो वा और्णकः, और्णो वा। एण्याष्ट्येञ्। ऐणेयं, ऐणेयो जङ्घा एणादणेव ऐणं चर्म। पयसो यः। पयस्यं। द्रोश्च। द्रव्यं। माने वयः। द्रवयं मानं।

## ४७। पुष्पफलं मूलेषु लुब्बहुलं।

[पुष्प, फल, मूलेषु ७।।, लुप् ०१।, बहुलं ०१।]

एषु विकारावयवयोर्विहितप्रत्ययस्य लुप् स्यात्। पुष्पे आस्रा-

दिभ्यः जाती, मालती, मल्लिका, केतकी, शेफालिका, चम्पकी, वकुलः पुष्पं । पाटलाया वा । पाटला पाटलं वा । फले फलपाकान्त हरीतक्यादिभ्यः । यवानां फलानि यवाः, तिलाः, मुद्गाः, माषाः, व्रीहयः, कदली, हरीतक्यादेः—हरीतकी, द्राक्षा, कोलिः, क्रमुकः, कण्टकारिका । विदार्य्यादेर्मूले । विदारी, बृहती ।

## ४८ । फले लुब्वदर्य्यादेः ।

[फले ७।, लुक् ०१ ; वदर्य्यादेः (वदरी, आदि) ५।]

एभ्यो फले लुक् स्यात् । लिङ्गं फलस्यैव, वदर्य्याः फलं, तद्धित लुकि लुक् स्त्रियाः (१०८।३।४) वदरं, आम्रं, पनसं, खर्ज्जूरमित्यादि । आमलक्यादेर्वा । आमलकं, आमलकी । कोलेरिदञ्च । कोलं । न प्लक्षादेः । एभ्योलुव् लुकौ न स्यातां । प्लाक्षं फलं, नैयग्रोधं, वार्हतं, ऐङ्गुदं, आश्वत्थं, ककुभः, वैणवं । जम्ब्वा वा । जम्ब्वा लुव्लुकौ वा स्यातां । जम्ब्वाः फलं जम्बु, जाम्बवं च ।

विल्वादेर्वा लुक् पुष्पे च । एभ्योलुग्वा निषेधश्च । विल्वं, वैल्वं वा फलं पुष्पञ्च ; अशोकं, आशोकञ्च ; कदम्बं, कादम्बञ्च; करवीरं, कारवीरञ्च ।

## ४९ । कंसीय परशव्याद्यणाणौ लुक् चेययोः ।

[कंसीय, परशव्यात् ५।, यणाणौ (यण्, अण्) १॥, लुक् ०१।, च ०१।, ईययोः (ईय-अय,) ६॥]

आभ्यां विकारे यण् अणौ स्यातां । ईययोर्लुक् च । कंसीयस्य विकारः कांस्यं, पारशवं ।

## ५० । तत्तदस्मिन् प्रस्तुतमिति मयट् ।

[तत् ०१।, तत् ०१।, अस्मिन् ७।, प्रस्तुतं ०१।, इति ०१।, मयट् ०१।]

तदेव प्रस्तुतं [redacted] वा प्रस्तुतमित्यर्थे मयट् स्यात् । अन्नमेव प्रस्तुतं अन्नमयं, अन्नं प्रस्तुतमस्मिन् अन्नमयो यज्ञः । अपूपमयं पर्व्व । समूहवच्च बहुषु । अपूपाः प्रस्तुताः आपूपिकं, अपूपमयं च । वाटुकिकी, वटुकमयी, यात्रा । उक्ताः प्राग्दीव्यतीयाः ।

## ५१ । आब्रह्मचर्य्याट्टिकण् । [आब्रह्मचर्य्यात् ५।, टिकण् १।]

ब्रह्मचर्य्यसंशब्दन पर्य्यन्तं टिकणधिकारः ।

## ५२ । तेन दीव्यति खनति जयति जितं ।

[तेन ३।, दीव्यति तिङ, खनति तिङ, जयति तिङ, जितं ०१।]

एष्वर्थेषु टिकण् स्यात् । हलेन दीव्यति, खनति, जयति, जितो वा हालिकः, अक्षैर्दीव्यति, जयति, जितो वा आक्षिकः ।

## ५३ । तरति । [तरतितिङ्]

तेन तरतीत्यर्थे टिकण् स्यात् । वैतनिकः, जाङ्घिकः वार्त्तिकः । आयुधाद्दीयश्च । आयुधीयः, आयुधिकः ।

## ५४ । वस्नक्रयविक्रयादिकः ।

[वस्न क्रय विक्रयात् ५।, इकः १।]

वस्नोमूल्यं तेन जीवति इत्यर्थे इकः स्यात् । वस्नेन जीवति वस्निकः, वस्निका वणिग्वधूः क्रयिकः, संघाताच्च ; क्रयविक्रयिकः ।

## ५५ । वहत्युत्सङ्गादेः । [वहति तिङ, उत्सङ्गादेः ५।]

एभ्यस्तेन वहतीत्यर्थे टिकण् स्यात् । औत्सङ्गिकः, औडुपिकः । भस्त्रादिभ्यष्टिकः । भस्त्रया हरति भस्त्रिकी । विर-

धवीरधाद्वा। विरधेन हरति विरधिकः, वैरधिकः, पक्षे वैरधिकः। अण् कुटिलिकायाः। कुटिलिकया गत्या हरति कौटिलिको गणिका।

## ५६। निर्वृत्तेऽक्षद्यूतादेः।

[निर्वृत्ते ७।, अक्षद्यूतादेः (द्यूत आदि, ५।]

पञ्चम्यस्तेन निर्वृत्तार्थे टिकण् स्यात्। अक्षद्यूतेन निर्वृत्तं आक्षद्यूतिकं वैरं, जायापत्तिकं। पाकादेरिमः। पाकेन निर्वृत्तं पाकिमं फलं, सेकिमा लता, कुट्टिमा भूः, दानिमः, पुर्णः पुर्णिमा। याचितापमिताभ्यां ककणौ। याचितेन निर्वृत्तं याचितकं मण्डलं, अपमितादिति यपि आपमित्यकं।

## ५७। संसृष्टे। [संसृष्ट ०१।]

तेन संसृष्टमित्यर्थे टिकण् स्यात्। दध्ना संसृष्टं एकीभूतं दाधिकं, गौडिकं। लवणाल्लुक च। लवणेन संसृष्टो लवणः। मुद्गादण्। मुद्गेन संसृष्टा मौद्गो यवागूः।

## ५८। सूपादेरुपसिक्ते। [सूपादेः (सूप आदि) ५।, उपसिक्ते ७।]

तेनोपसिक्त इत्यर्थे टिकण् स्यात्। सौपिकः, सार्पिष्कः, दाधिकः। अश्वादिभ्यष्टिकः। अश्वेन चरति अश्विकः रथिकः। श्वगणाद्वा। श्वगणिकः, श्वागणो वा। तेनेति निवृत्तं।

## ५९। तदाहेति माशब्दादेः।

[तत् १।, आह तिङ्, मा-शब्दादेः ५।]

एभ्यस्तदाहेत्यर्थे टिकण् स्यात्। माशब्दमाह माशब्दिकः, कार्यशब्दिकः, नैत्यशब्दिकः, पार्श्वाभिकः, प्राभूतिकः।

६०। धर्म्मादिभ्यश्चरति। [धर्म्मादिभ्यः ५।, चरति तिङ्]

एभ्यस्तच्चरतीत्यर्थे टिकण् स्यात्। धार्म्मिकः साधुः, आधर्म्मिकश्चौरः, महानाम्नीव्रतं चरति माहानाम्निकः, आदित्यव्रतिकः, गौदानिकः। चातुर्मास्यादिण् च यलोपश्च। चातुर्मास्यं व्रतं चरति चातुर्मासी, चातुर्मासिकः। देवव्रतादेश्च। इन् स्यात्। देवव्रती, अवान्तरदीक्षी।

६१। प्रतीपादेर्व्वर्त्तते। [प्रतीपादेः ५।, वर्त्तते तिङ्]

एभ्यस्तद्वर्त्तत इत्यर्थे टिकण् स्यात्। प्रतीपं वर्त्तते क्रियाविशेषणं वा प्रातीपिकः, आन्वीपिकः, प्रातिकूलिकः, आनुकूलिकः, परिमुखं वर्त्तते पारिमुखिकः, सेवकः, पारिपार्श्विकः।

६२। पृच्छति सुस्नातादेः। [पृच्छति तिङ्, सुस्नातादेः ५।]

एभ्यस्तत् पृच्छतीत्यर्थे टिकण् स्यात्। सौस्नातिकः, सौखरात्रिकः।

६३। गृह्णाति द्विगुणादेः। [गृह्णाति तिङ् द्विगुणादेः ५।]

एभ्यस्तद् गृह्णातीत्यर्थे टिकण् स्यात्। द्विगुणं गृह्णाति द्वैगुणिकः। वृद्धेर्वार्धुषश्च। वार्धुषिकः इण्चात्र दृश्यते वार्धुषिः प्रातिकण्ठिको वल्लभः आर्थिकः, लालामिकः; पदान्तात् प्रातिपदिकं पौर्व्वपदिकं, औत्तरपदिकं। कुशीददशैकादशाट्टिकः। कुशीदिकः दशभिरेकादशं गृह्णाति दशैकादशिकः।

६४। उञ्छति रक्षति। [उञ्छति तिङ्, रक्षति तिङ्]

তদুচ্ছতি, তদ্রক্ষতীত্যর্থয়োষ্টিকণ্ স্যাৎ। শাকানুচ্ছতি শাকিকঃ, বাদরিকঃ, সমাজং রক্ষতি সামাজিকঃ, সান্নিবেশিক।

## ৫৫। পশু, পক্ষি, মৎস্যার্থেভ্যো হন্তি।

[ পশু মৎস্যার্থেভ্যঃ ৫।।।, হন্তি তিঙ্]

এভ্যোস্তদ্ধন্তীত্যর্থে টিকণ্ স্যাৎ। মৃগং হন্তি মার্গিকঃ, শৌকরিকঃ, হারিণিকঃ, খাড়্গিকঃ, পক্ষিমৎস্যার্থাৎ পাক্ষিকঃ, শাকুনিকঃ, মাৎস্যিকঃ মৈনিকঃ। পরিপন্থ্যাদুত্তিষ্ঠতি চ। পরিপন্থ ইতি নিপাতনাৎ তদুত্তিষ্ঠতি হন্তি বা পারিপন্থিকশ্চৌরঃ। পরিপন্থীরিপৌ নিপাত্যতে।

## ৫৬। পারায়ণাদের্বর্ত্ততে। [পারায়ণাদেঃ ৫।, বর্ত্ততে তিঙ্]

এভ্যস্তদ্বর্ত্তয়তীত্যর্থে টিকণ্ স্যাৎ। পারায়ণিকঃ, তৌরায়ণিকঃ, চান্দ্রায়ণিকঃ, তদন্তাচ্চ দ্বৈপারায়ণিকঃ।

## ৫৭। পদব্যাদের্ধাবতি।

[ পদব্যাদেঃ (পদবী আদি) ৫।, ধাবতি তিঙ্]

এভ্যস্তদ্ধাবতীত্যর্থে টিকণ্ স্যাৎ। পদবীং ধাবতি পাদবিকঃ, আনুপাদিকঃ, আক্রন্দিকঃ, মাথান্তাৎ শৌল্কমাথিকঃ, দাণ্ডমাথিকঃ।

## ৫৮। শব্দ, দর্দুরাৎ করোতি।

[ শব্দ দর্দুরাৎ ৫।, করোতি তিঙ্]

আভ্যাং তৎকরোতীত্যর্থে টিকণ্ স্যাৎ। শাব্দিকঃ, দার্দুরিকঃ কুলালঃ।

## ६९। समवैति समवायादेः।

[समवैति तिङ्, समवायादेः ५।]

एभ्यस्तत् समवैतीत्यर्थे टिकण् स्यात्। सामवायिकः, सामूहिकः, सामाजिकः, सामुदायिकः। परिषदोण्यः। परिषदं समवैति पारिषद्यः। सेनाया वा। सेनां समवैति सैन्यः, सैनिकः।

## ७०। संज्ञायां ललाट कुक्कुटीभ्यां पश्यति।

[संज्ञायां ७।, ललाट, कुक्कुटीभ्यां ५॥, पश्यति तिङ्]

आभ्यां तत् पश्यतीत्यर्थे टिकण् स्यात्। योहि कार्य्याक्षमः प्रभोर्ललाटमात्रं पश्यति स लालाटिकः, योहि कुक्कुटीं दम्भचर्य्यां, कुक्कुटीपातयोग्यमदूरदेशं वा पश्यति स कौक्कुटीकः दाम्भिको, भिक्षुकश्च।

## ७१। योजनादिभ्यो गच्छति।

योजनादिभ्यः ५॥, गच्छति तिङ्]

एभ्यस्तद् गच्छतीत्यर्थे टिकण् स्यात्। यौजनिकः, क्रौशिकः, पारदारिकः, गौरुतल्पिकः। प्रतिपथादिकः। प्रतिपथं गच्छति प्रातिपथिकः, प्रतिपथिकश्च। पथष्टिकः। पन्थानं गच्छति पथिकः, पथिकी।

## ७२। णः पन्थश्च। [णः १।, पन्थ ०१।, च ०१।]

पथोणः स्यात्। पन्थादेशश्च। पान्था स्त्री, पान्थः।

उत्तरादि पूर्व्वात् पथस्तेनाहृतञ्च। टिकण स्यात्। उत्तरपथेनाहृतं, गच्छति वा औत्तरपथिकं जाङ्गलपथिकं, शाङ्कुपथिकं, आजपथिकं, स्थलपथिकं, वारिपथिकं। स्थल वारिभ्यां मधूक मरीचयोरण्। स्थालपथं, वारिपथं।

७३। तस्य धर्म्मम्। [तस्य ६।, धर्म्मम् ०१।]

अत्रार्थे टिकण् स्यात्। शुल्कस्य धर्म्ममाचारः शौल्किकः, आपणिकः, सपत्न्या धर्म्मं सापत्निकः। होत्रादेरण। होतुर्धर्म्मं हौत्रं, औद्गात्रं, महिष्या धर्म्मं माहिषं, पौरहितं, प्राजापतं विशसितुर्विंशस्तृश्च। वैशस्त्रं; विभाजयितुर्णिलोपश्च। वैभाजित्रं

७४। तदस्य पण्यं। [तत् ०१।, अस्य ६।, पण्य ०१।]

अत्रार्थे टिकण् स्यात्। मोदकः पण्यमस्य मौदकिकः, लावणिकः, आपूपिकः। किशरादेष्टिकः। किशरं गन्धद्रव्यं पण्यमस्य किशरिकः, उशीरिकः। शानालुकः, शनालुकः।

७५। शिल्पं। [शिल्पं ०१।]

तदस्य शिल्पमित्यर्थे टिकण् स्यात्। मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः, वेणवात्—वैणविकः, वांशिकः।

वाऽण् मड्डुक झर्झरात्। अण् वा स्यात्। मड्डुकवादन शिल्पमस्य माड्डुकः, माड्डुकिको वा; झार्झरो, झार्झरिको वा।

७६। प्रहरणं। [प्रहरणं ०१।]

तदस्य प्रहरणमित्यर्थे टिकण् स्यात्। असि प्रहरणमस्य आसिकः, प्रासिकः, चाक्रिकः, धानुष्कः पारश्वधिकः। शक्ति, यष्टिभ्यां टीकण्। शाक्तीकः, शाक्तीकी, याष्टीकः।

७७। अस्ति, नास्ति दिष्टान्मतिः।

[अस्ति, नास्ति, तिङ् दिष्टात् ५।, मतिः १।]

एभ्यः सास्य मतिरित्यर्थे टिकण् स्यात्। अस्तीति मतिरस्य आस्तिकः, नास्तिकः, दैष्टिकः प्रामाणिक इत्यर्थः।

७८। शीलं। [शीलं ०१।]

तदस्य शीलमित्यर्थे टिकण् स्यात्। पारुषिकः, कारुणिकः, आक्रोशिकः। छत्रादिभ्योणः। गुरुदोषाच्छादनं छत्रं तच्छीलमस्य छात्रः, छात्रा स्त्री, भैक्षः, तापसः।

७९। कर्म्माध्ययने वृत्तं। [कर्म्म अध्ययने ७।, वृत्तं ०१।]

अत्रार्थे टिकण् स्यात्। एकमन्यदध्ययनेऽपपाठलक्षणं कर्म्म वृत्तमस्य ऐकान्यिकः, द्वैयन्यिकः, ऐकरूपिकः, ऐकयन्यिकः। बह्वचपूर्व्वपदादिकः। द्वादशान्यिकः, त्रयोदशग्रन्यिकः।

८०। तदस्मै दीयते नियुक्तं।

[तत् ०१।, अस्मै ४।, दीयते तिङ, नियुक्तं ०१।]

अत्रार्थे टिकण् स्यात्। अग्रभोजनं नियुक्तमस्मै दीयते आग्रभोजनिकः, प्राथमकल्पिकः, आवशिकः, मांसिकः, मासौदनिकः। भक्तादण् च। भाक्तं, भाक्तिकः। ओदनात्ष्टिकः। ओदनं नियुक्तमस्मै दीयते औदनिकी।

८१। हितं भक्षात्। [हितं ०१।, भक्षात् ५।]

तस्मै हित मित्यर्थे टिकण् स्यात्। आपूपाहितमस्मै आपूपिकः, मौदकिकः।

८२। तत्र नियुक्तः। [तत्र ७।, नियुक्तः १।]

अत्रार्थे टिकण् स्यात्। द्वारे नियुक्तो दौवारिकः, शौल्किकः, आगारिकः। आगारान्तादिकः। देवागारिकः, भाण्डागारिकः। ऐकागारिकश्चौरे। निपात्यते। ऐकागारिकश्चौरः ऐकागारिकी।

## ८३। अधीते देशकालात्। [अधीते तिङ्, देशकालात् ५।]

अत्रार्थे निषिद्ध देशकालाट्टिकण् स्यात्। श्माशानिकः, चातुष्पथिकः, चातुर्द्दशिकः, आष्टमिकः।

## ८४। व्यवहरति कठिनान्तादेः।

[व्यवहरति तिङ्, कठिनान्तादेः ५।]

एभ्यस्तत्र व्यवहरतीत्यर्थे टिकण् स्यात्। वंश कठिने व्यवहरति, वांशकाठिनिकः, प्रास्ताविकः, सांस्थानिकः।

## ८५। वसत्यावसथादेः।

[वसति तिङ्, आवसथादेः (आवसथ—आदि) ५।]

एभ्यस्तत्र वसतर्थे टिकण् स्यात्। आवसथिकः, नैकटिकः, सासमिकः, वार्क्षमूलिकः।

## ८६। लोक, सर्व्वलोक, वेदात् ख्याते।

[लोक—वेदात् ५।, ख्याते ७।]

एभ्यस्तत्र ख्यात इत्यर्थे टिकण् स्यात्। लौकिकः, सार्व्वलौकिकः, वैदिकः।

## ८७। तस्मै प्रभवति सन्तापादेः।

[तस्मै ४।, प्रभवति तिङ्, सन्तापादेः (सन्ताप आदि) ५।)

एभ्योऽत्रार्थे टिकण् स्यात्। सन्तापाय प्रभवति सान्तापिकः, सांग्रामिकः। योगाद्यश्च। योग्यो, यौगिकः। कर्म्मण उकण्। कर्म्मणे प्रभवति कार्म्मुकं धनुः।

## ८८। समयात्तदस्य प्राप्तं।

[समयात् ५।, तत् ०[illegible]स्य ६।, प्राप्तं ०१।]

अत्रार्थे समयाट्टिकण् स्यात्। समयः प्राप्तोऽस्य सामयिकः। ऋतोरण्। ऋतुः प्राप्तोऽस्य आर्त्तवं पुष्पं। कालाद्यः। कालः प्राप्तोऽस्य काल्यः। विप्रकृष्टार्थे टिकण्। विप्रकृष्टः कालोऽस्य कालिकमृणं।

## ८९। संशयात्तमापन्ने।

[संशयात् ५।, तं २।, आपन्ने ७।]

टिकण् स्यात्। संशयमापन्नः सांशयिकः।

## ९०। अकालादनियतकालवचने।

[अ (न) कालात् ५।, अ (न) नियतकाल-वचने ७।]

अनियतकालोऽस्य तस्मिन् वाच्येऽकालाट्टिकण् स्यात्। आकालिको मेघः आकालिकीं वीक्ष्य मधुप्रवृत्तिं। इकटिकौ च। अकालिका, अकालिकी।

## ९१। तदस्य प्रयोजनं। [तत् ०१।, अस्य ६।, प्रयोजनं ०१।]

अत्रार्थे टिकण् स्यात्। उत्सवः प्रयोजनमस्य औत्सविकः, ऐन्द्रमहिकः। अनुप्रवचनादेरीयः। अनुप्रवचनं प्रयोजनमस्य अनुप्रवचनीयं, उत्थापनीयं। प्रवेशन, समापनारोहण, पूरण, प्रपतनेभ्यः संपूर्व्वपदेभ्यः। गेहे प्रवेशनीयं, कलहसमापनीयं, दानं, अश्वारोहणीयं, प्रपापूरणीयं, अश्वप्रपतनीयं। स्वर्गादिभ्योयः। स्वर्गः प्रयोजनमस्य स्वर्ग्यं यशस्यं आयुष्यं, वश्यं, हृष्यं, वैशाखो मन्थे। आषाढोव्रतिनां दण्डे। अणन्तौ द्वौ निपात्येते।

## ९२। आर्हात्। [आ ०१, अर्हात् ५।]

तदर्हतीति पर्य्यन्तं येऽर्थास्तेषु इतस्त्यो [illegible]र्बोद्धव्यः। टिकस-नुवर्त्तत एव।

## ९३। संख्याया अतिशदन्तायाः कः डितेश्च।

[संख्यायाः ५।, अतिशदन्तायाः (अति, शत अन्त) ५।, कः १।, डितेः ५।, च ०१।]

आर्हीये क्रीताद्यर्थे संख्यायाः कः स्यात्। त्रिकः, पञ्चकः, गजकः, कतेः प्रतिषेधोऽपवादः कतिकः अतिशदन्ताया इति किम्? वैंशतिकः, पाञ्चशतकः।

## ९४। डवतोरिकश्च। [डवतोः ५।, इकः १।, च ०१।]

डवत्वन्त संख्याया इकः स्यात्। कश्च। भावतिकः, भावत्कः विशेष विधानादिकः कोन स्यात्।

विंशति त्रिंशद्भ्यां वा। आभ्यामार्हीये को वा स्यात्। पक्षे-टिकण्। विंशतिकः, वैंशतिको वा; त्रिंशत्कः, त्रैंशतकः। डकोऽसंज्ञायां। विंशकः, त्रिंशकः।

## ९५। शतादिक यतावशते।

[शतात् ५।, इक् यतौ १॥, अशते ७।]

आर्हीयेऽर्थे शतादिक् यतौ स्यातां। कस्य बाधः; शतिकोऽश्वः शत्यः अशत इतिकिम्? शतं परिमाणमस्य शतकं स्तोत्रं शतमेव। अर्द्धं कां साभ्यां टिकः। अर्द्धिकः, अर्द्धिकी, कंसिकः पटः। कार्षापणाद्वा प्रति चास्य। टिकोवा प्रत्यादेशश्च। प्रतिकः पक्षे टिकण्, कार्षापणिकः।

## ९६। शतमान, विंशतिक, सहस्र, वसनादण्।

[शतमान, वसनात् ५।. अण् ०१।]

एभ्य आर्हीये [illegible] स्यात्। शातमानं, वैंशतिकं, वासनं। शूर्पाद्वा। शौर्पः, शौर्पिको वा।

## ९७। द्विगोरध्यर्द्धपूर्व्वाच्च लुगसंज्ञायां।

[द्विगोः ५।, अध्यर्द्धपूर्व्वात् (अधि, अर्द्ध पूर्व्व) ५।, च ०१।, लुक् ०१।, अ(न)संज्ञायां ७।

आभ्यामार्हीयस्य लुक् स्यात्। द्वाभ्यां कंसाभ्यां क्रीतं द्विकंसं, त्रिकंसं, अध्यर्द्धकंसं, असंज्ञायां मितिकिम्? पाञ्चलौहिकः पटः।

## ९८। सहस्रकार्षापण, सुवर्ण, शतमानाद्वा।

[सहस्र-शतमानात् ५।, वा ०१.]

लुग्वात्। द्विसहस्रं, द्रव्यं; द्विसाहस्रं, द्विकार्षापणं, द्विकार्षापणिकं; द्विसुवर्णं, द्विसौवर्णिकं, द्विशतमानं, द्विशातमानं; परिमाणस्याशाणस्येत्युत्तरपदवृद्धिः एवं अध्यर्द्धसहस्रं, अध्यर्द्धसाहस्रं, अध्यर्द्धसुवर्णं, अध्यर्द्धसौवर्णिकं।

## ९९। द्वित्रि, वहु, पूर्व्वाद्विस्त, निष्कात्।

[द्वि, त्रि, वहु पूर्व्वात् ५।, विस्त, निष्कात् ५।]

लुग्वा स्यात। द्वाभ्यां विस्ताभ्यां क्रीतं द्विविस्तं, द्विवैस्तिकं; त्रिविस्तं, त्रिवैस्तिकं वहुविस्तं वहुवैस्तिकं; एवं द्विनिष्कं, द्विनैष्किकं, त्रिनिष्कं, त्रिनैष्किकं, वहुनिष्कं वहुनैष्किकं।

## १००। विंशतिकाद्दीनः। [विंशतिकात् ५। ईनः १।]

अस्मादार्हीयस्य लुग्विषये ईनः स्यात्। द्विविंशतिकीनं, अध्यर्द्धविंशतिकीनं। खारी काकिनीभ्यामीकः केवलाभ्याञ्च। द्विखारीकः, अध्यर्द्धखारीकः, खारीकश्च; द्विकाकिनीकः, अध्यर्द्धकाकिनीकः काकिनीकश्च। पणपादमासाद्यः। द्विपण्यं, द्विपाद्यं,

द्विमास्य, अध्यर्द्धपण्य, अध्यर्द्धपाद्य, अध्यर्द्ध[illegible]; द्विगादेरित्येव-पाणिकः, मासिकः टिकण्। शताद्वा। द्विशत्यं, लुक्चं द्विशतं; अध्यर्द्धशत्यं, अध्यर्द्धशतं वा। शाणाच्च। द्विशाण्यं, टिकण् लुकि-द्विशाणं वा, अध्यर्द्धशाण्यं, अध्यर्द्धशाणं वा। द्वित्रिपूर्व्वादण्। द्वैशाणं, त्रैशाणं

## १०१। तेन क्रीतं। [तेन ३।, क्रीत ०१।]

अत्रार्थे यथाविहितं स्यात्। टिकणादि निष्केण क्रीतं नैष्किकं, साप्ततिकं, शतिकं, शत्यं, द्विपाद्यं, अध्यर्द्धमास्यं।

## १०२। तस्य निमित्तं संयोगोत्पातौ।

[तस्य ६।, निमित्त ०१।, संयोग-उत्पातौ १॥]

अत्रार्थे यथा विहितं टिकणादि स्यात्। शतस्य निमित्तमधमर्णेन संयोगः-शतिकः, शत्यः; द्विशतिकः; सहस्रस्य, निमित्तमचिस्पन्दनमुत्पातः साहस्रः। गोद्व्यचोऽसंख्या परिमाणाश्वादेर्यत्। टिकणादेर्व्वाधः गोर्निमित्त संयोग उत्पातो वा गव्यः, द्व्यचः, स्वर्ग्यः, धन्यः, यशस्यः आयुष्यः; असंख्या[illegible]रितिकिम्? पञ्चानां निमित्तं पञ्चकः, प्रास्थिकः, अश्वादेः, आश्विकः—हास्तिकः। ब्रह्मवर्च्चसाच्च। ब्रह्मवर्च्चस्यं। पुत्रादीयश्च यच्च। पुत्रस्य निमित्तं संयोग उत्पातो वा पुत्रीयः, पुत्र्यः।

## १०३। तदीश्वर, तत्र विदितौ, चेत्यण् पृथिवी सर्व्वभूमिभ्यां।

[तदी—विदितौ १॥, च ०१।, इति ०१।, अण् ०१।, पृथिवी—भूमिभ्यां ५॥]

आभ्यां निमित्तादार्थेऽण् स्यात्। पृथिव्यानिमित्तं संयोग उत्

पातो वा पृथिव्या ईश्वरः पृथिव्याः विदितो वा पार्थिवः, एवं सार्व्वभौमः ।

## १०४ । तच्छमनकोपने वात, पित्त, श्लेष्म, सन्निपातेभ्यः ।

[तच्छमन कोपने (तत्-शमन, कोपन) ११। वात—सन्निपातेभ्य (वात, पित्त, श्लेष्म, सन्निपात) ५॥ ]

अत्रार्थे वातादेष्ठिकण् स्यात् । वातस्य शमनं कोपनं वा वा वातिकं, पैत्तिकं, श्लैष्मिकं, सान्निपातिकं । तसै वापः । अत्रार्थे यथा विहितं ठिकणादयः स्युः । उप्यतेऽस्मिन्निति वापः-प्रस्थस्य वापः क्षेत्रं प्रास्थिकं, द्रौणिकं चेत्रं, पात्रिकी भूः, खारीकः ।

## १०५ । तदस्मिन्नस्मै च वृद्ध्यायोलाभोपदा शुल्कं दीयते ।

[तत् ०१।, अस्मिन् ७।, अस्मै ४।, च ०१।, वृद्धि आयलाभ उपदा शुल्कं ०२।, दीयते तिङ्]

अत्रार्थे यथाविहितं स्यात् । पञ्चास्मिन्नस्मै वा वृद्धिर्वा आयो लाभ उपदा शुल्कं वा दीयते पञ्चकोविंशः, शतिकः ।, पूरणार्द्धादिकः द्वितीयं वृद्ध्यादिकमस्मिन्नस्मै वा दीयते द्वितीयिकः, पञ्चमिकः, षोड़शिकः, अर्द्धिकः । भागाद्यश्च । इकश्च । भागो वृद्ध्यादिरस्मिन्नस्मै वा दीयते भाग्यं, भागिकश्च ।

## १०६ । तद्धरति वहत्युत्पादयति वंशादेस्तदादिभाराच्च ।

[तत् ०२।, हरति, वहति, उत्पादयति तिङन्तानि, वंशादेः ५।, तदादि-भारात् ५।, च ०१।]

एभ्यस्तद्धरतीत्यर्थे टिकण् स्यात्। वंशं हरति वहति उत्पादयति वा वांशिकः, वाल्वजिकः, कौटजिकः वंशादि पूर्व्वभाराच्च वांशभारिकः, वाल्वजभारिकः। द्रव्यात् कः। द्रव्यं हरति द्रव्यकः। वतुखादिकः। वतस्निकः।

## १०७। सम्भवति संहरति पचति प्रस्थादेः।

[सम्भवति, संहरति, पचति तिङन्तानि, प्रस्थादेः ५।]

एभ्यः सम्भवत्याद्यर्थेषु टिकण् स्युः। प्रमाणादनतिरेकः सम्भवः प्रस्थं सम्भवति, संहरति, संवहति, पचति वा प्रास्थिकः कटाहः; खारीकः, कौडविकः। पचतौ द्रोणादण् च। द्रोणं पचति द्रौणः, द्रौणिकः। वाढकाचितपात्रादीनः। पक्षे टिकण् आढकं सम्भवति संहरति पचति वा आढकीना, आढकिकी स्थाली; आचितीनः, आचितिकः, पात्रीणः, पात्रिकः। टिकश्च, द्विगौ। द्वे आढके सम्भवति, संहरति, पचति वा द्व्याढकिकी, द्व्याढकीना पुनर्विधानसामर्थ्यात् द्विगौ लुगन्न भवति टिकणस्तु लुगेव द्व्याढकी।

## १०८। अंश भूति मूल्यं तदस्य।

[अंश भूतिमूल्यं ०१।, तत् ०१।, अस्य ६।]

इत्यर्थे यथाविहितं स्यात्। शतमंशाभूतयो मूल्यं वाऽस्य शतिकः, शत्यः, पञ्चकः।

## १०९। परिमाणं। [परिमाणं ०१।]

तदस्य परिमाणमित्यर्थे यथाविहितं स्यात्। प्रस्थः परिमाणमस्य प्रास्थिकीराशिः, द्रौणिकः, खारीकः, शतिकः, वार्षशतिकोरोगः, षष्टिर्जीवितपरिमाणमस्य, षाष्टिकः, साप्ततिकः, द्वे षष्टी परिमाणं जीवितस्य द्विषष्टिर्जीवितं द्विगौ लुक् तदेव परिमाण

मस्य पुनष्टिकण् द्विषष्टिकः अथवा द्वाधिका षष्टिर्द्विषष्टिः साऽस्य परिमाणं द्विषष्टिकः, द्विसाप्ततिकः।

## ११०। संख्यायाः संज्ञा, संघ, सूत्राध्ययनेषु।

[संख्यायाः ५।, संज्ञा संघ, सूत्राध्ययनेषु (सूत्र, अध्ययन) ७।]

संख्यावाचिनः शब्दात् संज्ञादौ परिमाणार्थे यथाविहितं स्यात्। नाम्नि पञ्चैव पञ्चकाः शकुनयः, परिमाणमस्य पञ्चकः संघः, अष्टावध्यायाः परिमाणमस्य अष्टकं पाणिनीयसूत्रं, पञ्चा वृत्तयः परिमाणमस्य पञ्चकमध्ययनं। पञ्चद्दशतौ वर्गे वा। निपात्यते। पञ्च परिमाणमस्य पञ्चद्वर्गः, दशत्; पक्षे पञ्चकोदशकः पङ्क्ति विंशतादयोरूढ़ाः सहस्रादिवत् तथाच व्युत्पत्तिः। द्वौ पञ्चतौ पंक्तिः, द्वौ दशतौ विंशतिः, त्रयोदशतस्त्रिंशत् एवं चत्वारिंशत्प्रभृतयः।

## १११। तदर्हति। [तत् ०२।, अर्हति तिङ]

अत्रार्थे यथाविहितं स्यात्। छत्रमर्हति छात्रिकः, शतिकः शत्यः। छेदादेर्नित्यम्। नित्यमिति प्रकृत्यर्थे विशेषणं; नित्यं छेदमर्हति छैदिकश्छागः, भैदिकः। शीर्षच्छेदात्यच्च। टिकण्। शीर्षच्छेद्यः शीर्षच्छेदिकोवा। दण्डादिभ्यश्च। दण्डमर्हति दण्ड्यः, छेद्यः, कशामर्हति कश्यः, अर्घ्यः, स्रग्यः, मधुपर्क्यः, वन्यः। पात्रादियञ्च। पात्रमर्हति पात्रियः पात्र्यश्च। स्थालीबिलादीयः। स्थालीबिलीयास्तण्डुलाः, पाकयोग्या इत्यर्थः। कडङ्गरदक्षिणाद्यच्च। ईयश्च। कडङ्गरमर्हति कडङ्गर्योगौः, कडङ्गरीयश्च, दक्षिण्यो दक्षिणीयः। ऋत्विज ईनञ्। ऋत्विजमर्हति आर्त्विजीनं ब्राह्मणकुलं। यज्ञादियः। यज्ञमर्हति यज्ञियोमृगः। तत्कर्मार्हे च। यज्ञियोदेशः। आर्हीयाः पूर्णाः।

११२। तेन शोभि। [तेन ३।१, शोभि ०।१।]

अत्रार्थे टिकण् स्यात्। चन्दनेन शोभि चान्दनिकं वपुः, कार्ण-वेष्टकिकं मुखं वास्त्रयुगिकं शरीरं। कर्म्मवेशादयः। कर्म्मणा शोभि कार्म्मणं शरीरं, वेशेन शोभिनी वैश्या स्त्री।

११३। अयः शूल दण्डाजिनाभ्यामन्विच्छति।

[अयः-शूल, दण्डाजिनाभ्यां (दण्ड-अजिन,) ५॥, अ (नु) इच्छति तिङ्]

आभ्यां तेन अन्विच्छतीत्यर्थे टिकण् स्यात्। अयः शूलेन तीक्ष्णोपायेनान्विच्छति मृग्यति आयःशूलिकः साहसिकः, दाण्डाजिनिको दाम्भिकः। पार्श्वात् कः। पार्श्वेन अनृजूपायेनान्विच्छति पार्श्वकः कटः।

११४। उदराद्विजिगीषौ।

[उदरात् ५।, अ (न) विजिगीषौ ७।]

टिकण् स्यात्। उदरेणाविजिगीषुः औदरिकः।

११५। तस्य दक्षिणा यज्ञनाम्नः।

[तस्य ६।, दक्षिणा ०१।, यज्ञनाम्नः ५।]

अस्मात्तस्य दक्षिणेत्यर्थे टिकण् स्यात्। आग्निष्टोमिकी दक्षिणा, राजसूयिकी।

११६। कालात्। [कालात् ५।]

अत्रार्थे कालवाचिनष्टिकण् स्यात्। अह्ना निर्वृत्तं आह्निकं, मासिकं सांवत्सरिकं, द्विसांवत्सरिकं।

११७। तमधीष्टोभृतोभूतो भावी वा।

[ तं १।, अधीष्ट, भृत्रिकृते।, भृतः ११, भूतः ११. भावी ०१।, वा ०१।]

अत्रार्थे टिकण् स्यात्। अधीष्टं गुर्व्वादिः प्रार्थनया नियोजनं मासमधीष्टोभृतोभूतो भावी वा मासिको गुरुर्भृतो व्याधिरुत्सवः एवं साम्वत्सरिकः। मासाद्वयसि येनणौ। मासं भृतो भूतो भावी वा मास्योदारकः मासीनश्च; वयसीतिकिम्? मासिको भृतकः। द्विगोर्यः। द्वौ मासौ भूतो, भावी वा द्विमास्योवालः। षण्मासाण्ण्यश्च। यष्टिकन् च भवति। वयसि षाण्मास्यः, षण्मास्यः, षाण्मासिकः शिशुः। इकश्चावयसि। ण्यश्च—षण्मासिको रोगः, षाण्मास्यः।

## ११८। समाया ईनः। [समायाः ५।, ईनः १।]

अस्यानिर्वृत्ताद्यर्थे ईनः स्यात्। समया वर्षेण निर्वृत्तः समामधीष्टः भृतोभूतोभावी वा समीनः। द्विगोर्व्वा। द्विसमीनः। टिकण् द्वैसमिकः।

## ११९। अहोरात्रिसम्वत्सराच्च।

[अहो—सम्वत्सरात् (अहन्, रात्रि, सम्वत्सर) ५।, च ०१।]

द्विगोरीनष्टिकण् निर्वृत्ताद्यर्थे स्यात्। द्व्यहीनः, द्वैयह्निकः, द्विरात्रीनः, द्वैरात्रिकः, द्विसम्वत्सरीणः, द्विसाम्वत्सरिकः, अत्रो-त्तरपदवृद्धिः। वर्षाल्लुक् च। द्विगोरीनटिकणौ स्यातां लुक् च। द्विवर्षीणो रोगः द्विवार्षिको द्विवर्षश्च, नित्यं प्राणिषु। लुक् द्विवर्षीवत्सः। षष्टिको व्रीहौ। षष्टिरात्रेण पच्यते षष्टिको नाम व्रीहिः।

## १२०। तेन परिजय्य लभ्य कार्य्य सुकरम्।

[तेन ३।, परिजय्य, लभ्य, कार्य्य, सुकरं ०१।]

अत्रार्थे कालाट्टिकण् स्यात्। मासेन परिजय्यः लभ्यः कार्य्यः, सुकरो वा मासिकः, साम्वत्सरिकः।

## १२१। तदस्य ब्रह्मचर्य्यम्।

[तत् ०१।, अस्य ६।, ब्रह्मचर्य्य ०१।]

अत्रार्थे टिकण् स्यात्। मासं ब्रह्मचर्य्यमस्य मासिको मानवकः, मासमतिसंयोगे द्वितीया, तदितिप्रथमान्तञ्च तेन मासोऽस्य ब्रह्मचर्य्यस्य मासिकं ब्रह्मचर्य्यमिति। ० पूर्णष्टिकणाधिकारः।

## १२२। तत्र दीयते कार्य्यञ्च भववत्।

[तत्र ७।, दीयते तिङ्, कार्य्य ०१।, च ०१।, भववत् ०१।]

अनयोरर्थयोः कालात्तत्र भववत् प्रत्ययाः स्युः। मासे दीयते कार्य्यं वा मासिकं, प्रावृषेण्यं, हैमनं, मायन्तनं। व्युष्टादेरण्। व्युष्टे प्रभाते दीयते कार्य्यम्बा वैयुष्टं। तेन हस्तादयः। हस्तेन दीयते कार्य्यम्बा हस्त्यं। यथा. कथा चास्यः। अव्यय समुदायोऽमनादरार्थः। यथा कथा च दीयते कार्य्यम्बा याथाकाथाचं। ०

इति श्रीपद्मनाभदत्तकृतौ सुपद्मे व्याकरणे
पञ्चमस्याध्यायस्य तृतीयःपादः॥ ०।

---

# मध्वादिप्रकरणम्।

अथ पञ्चमाध्यायस्य--

## चतुर्थपादप्रारम्भः।

### १। यः प्राङ्मधोः। [यः १।, प्राक् अव्य, मधोः ५।]

अधिकारोऽयं। मधोर्णोलुक् च वेति सूत्रात् प्राग्यो वेदितव्यः।

### २। देवतान्तपादार्घात्तादर्थ्ये।

[देवतान्तपादार्घं घन् (देवता-अन्त-पाद अर्घ) ५।, तादर्थ्ये ७।]

एभ्यस्तादर्थ्ये यः स्यात्। अग्निदेवतायै इदं अग्निदैवत्यं, पादाय इदं पाद्यं जलं, अर्घ्यं पुष्पं। अतिथिभ्यः तादर्थ्ये आतिथ्यं।

### ३। तद्वहति रथयुगप्रासङ्गेभ्यः।

[तत् ०१।, वहति तिङ्, रथयुग,प्रासङ्गेभ्यः ५॥]

अत्रार्थे रथादेर्यः स्यात्। रथं वहति रथ्यं, तदन्ताच्च द्विरथ्यः, युग्यः, प्रासङ्ग्यः। धुरढ्ढेयण् च। धुरं वहति धौरेयः, धुर्य्यः। ईनः सर्व्वधुरादेः। धुरश्च धुरीणः। सर्व्वधुरीणः, उत्तरधुरीणः, दक्षिणधुरीणः। एकधुराल्लुक्। एकधुरीणः, एकधुरः। शकटादण्। शकटं वहति शाकटः, द्वैशकटः। हलसीराट्ठिकण्। हलं वहति हालिकः, द्वैहलिकः, सैरिकः, द्वैसीरिकः। जन्यो वरप्रियादौ। जनीं वधूं वहति जन्योवरप्रियादिः। जल्पे च। जनस्य जल्पोजन्यः।

धनगणाल्लब्धा। धनं लब्धा धन्यः, गण्यः। [illegible]णः। अन्नं लब्धा आन्नं, आन्ना स्त्री।

## ४। तद्विध्यति कर्म्मणोऽनस्त्रेण।

[तत् ०२, विध्यति तिङ्, कर्म्मणः ५।, अनस्त्रेण ३।]

तद्विध्यति कर्म्मणोयः स्यात्। पादौ विध्यति पद्यः कण्टकः, अनस्त्रेणेतिकिम्? विध्यति चौरं धानुष्कः। वशंगतो वश्यः।

## ५। तद्दृश्य मस्मिन् पादात्।

[तत् ०२।, दृश्यं १२।, अस्मिन् ७।, पादात् ५।]

अत्रार्थे यः स्यात्। पद्यः पन्थाः, पद्यः कर्द्दमः।

धेनुष्या निपात्यते। दुग्धबन्धके स्थिता चेत्। धेनुष्या गौर्महिषी वा। गार्हपत्याऽग्नौ। गृहपतिना संयुक्तो गार्हपत्योऽग्निभेदः।

## ६। नावादेस्तेनताय्यदौ।

[नावादेः (नौ आदि) ५।, तेन ३।, ताय्यादौ ७]

यः स्यात्। नाव्यं नावा नाव्यं पयः, कैश्चिदतरिषुभुंजैः। वयसस्तुल्ये। वयस्यः। धर्म्मात् प्राप्ये। धर्म्म्योभोगः। विषाद्वध्ये। विष्यः। सीताया सम्मिते। सीत्यं सीतालाङ्गलपद्धतिः, बहुसीत्यं। तुलायाः सम्मिते तुल्यं। छन्दसो निर्म्मिते। छन्दसा इच्छया निर्म्मितं छन्दस्यं विष्वं। मूलादनभिभवनीयं समवर्हिषु। मूलेनाभिभवनीयं मूल्यं मूलेन समोमूल्यः पटः, मूलेनावर्हिणो ग्रहणमात्रादुत्पतन्तीति मूल्याः मुद्गाः वृहद्यमे। उरसो निर्म्मितेऽण् च। उरसि निर्म्मितः औरसः पुत्रः। औरस्यश्च।

## ७। न्यायधर्म्मार्थ पथोऽनपेते।

[न्याय, धर्म्मार्थ (धर्म्म-अर्थ), पथः ५।, अ(न) अपेते ७।]

एभ्योऽनपेते यः स्यात्। न्यायादनपेतं न्याय्यं, धर्म्यं, अर्घ्यं, पथ्यं इत्येवं लोपश्च।

## ८। हृदयात्तत्प्रियवशीकरणयोः।

[हृदयात ५।, तत्प्रिय, वशीकरणयोः ७॥]

यः स्यात्। हृदयस्य प्रियो वशीकरणमन्त्रो वा हृद्यः पुत्रेऽनभिधानं। मतात् करणे। मतस्य करणं मत्यं, हलात् कर्षे। हलस्य-कर्षो हल्यः। तदन्ताच्च द्विहल्यः।

## ९। तत्र साधु। [तत ७।, साधु ०१।]

अत्रार्थे यः स्यात्। सभायां साधुः, सभ्यः, सामन्यः, कर्मण्यः, प्रतिजनादेरीनण्। प्रतिजनेषु साधुः प्रतिजनीनः, सार्व्वजनीनः। सांयुगीनः, ऐदंयुगीनः। भक्ताण्। भक्ते साधुः भाक्तः शालिः। परिषदोण्य। परिषदि साधुः परिषद्यः,गव्य-पारिषदः। कथादिभ्यष्ठिकण्। कथायां साधुः काथिकः, वैकथिकः, वार्त्तिकः, गौड़िकः-इक्षुः, कौल्माषिकोयवः, सांग्रामिको भटः। पथ्यतिथि वसति स्वपतेर्ढ यण्। पथि साधुः पाथेयः, आतिथेयः, वासतेयः, स्वापतेयं धनं समानतीर्थेवासो सतीर्थः। निपात्यते। तीर्थं गुरुः, सतीर्थ्याश्चैकगुरवः।

## १०। दूतात्तद्भागे। [दूतात् ५।, तद्भागे ७।]

यः स्यात्। तस्य भागश्चेत्। दूत्यः।

## ११। तप आदेर्मासि मत्वर्थे।

[तप आदेः ५।, मासि ७।, मत्वर्थे (मतु-अर्थ) ७।]

यः स्यात्। तपोऽत्रास्ति तपस्योमासः, नभस्यः; सहस्यः। ऊर्जो यः मधोर्णोलुक् च वा। मध्वस्मिन्नस्ति माधवोमासः। लुक् च वा मधुर्मासः।

१२। इषोर्ज्जं शुक्राश्च। [इष ऊर्ज्ज शुक्राः १॥, च ०१।]

एते मासि निपात्यन्ते। इषः, ऊर्ज्जः, शुक्रः। शिवशम-रिष्टात्ताति स्वतत्करे। शिवं करोति शिवतातिः, शमतातिः, रिष्टतातिः।

१३। प्राग्धान्यादीयः। [प्राक् अव्य, धान्यात् ५१, ईयः ११]

अधिकारोऽयं। धान्य-संशब्दनात् प्रागीयोहितप्रकृतशादी-यः याः।

१४। उ गवादेर्यः। [उ, गवादेः (गो-आदि) ५१, यः ११]

उकारान्तात्, गवादेश्च यः स्यात्। ईयापवादः। वध्वै हितं वधव्यं, धेनव्यं, शङ्क्वर्था प्रकृतिः शङ्कव्यं दारु, सक्तव्या धानाः, गवादेः-गव्यं, सुगव्यं, हविष्यं। नाभेरप्राण्यङ्गे नभश्च। नाभ्यर्था प्रकृतिर्नभ्यं काष्ठं। शुनः शून, शुनौ च। शून्यं, शुन्यं। ऊधसः धोनश्च। ऊधन्यं। नान्नि कम्बलात्। कम्बल्यमूर्णा सूत्रपलशतं। आमिक्षादेर्वा। आमिक्ष्यं, आमिक्षीयं, दधि; पुरोडाश्यं, पुरोडाशीयमौषधं, अपूप्यं, अपूपीयं; तण्डुल्यं, तण्डुलीयं; सूर्य्याः, सुरीयाः।

१५। तस्मै हितं। [तस्मै ४।, हितं ०१।]

. अत्रार्थे यथा विहितं स्यात्। वत्साय हितं, वत्सीयं नवतृणं, धेनव्यं, गव्यं, शून्यं। सर्व्वाण्वावा। सर्व्वस्मै हितं, सार्व्वः, सर्व्वीयः, देशावयवात् प्रागुक्तीयः-नाभ्यं तैलं। ब्रह्मखलयव वृषतिलमाषरथादयः। ब्रह्मणे हितो ब्रह्मण्यः, खल्यं, यव्यं, वृष्यं, तिल्यं, माष्यं, रथ्यं, रथ्या प्रतोली। अजाविभ्यां थ्यः। अजाय हितं अजथ्यं, अविथ्यं, विश्वजनात्मपञ्चजन मानव भोगान्तादीनः। विश्वजनेभ्यो हितं विश्वजनीनं, आत्मनीनं, गायन वादक नर्त्तक दासीभण्डपतिभ्यो हितं पञ्चनीनं

मानवीनं, भोगान्त[illegible]मातृभोगीनः, स्वभोगीनः, आचार्य्यादणत्वञ्च आचार्य्यभोगीनः। सर्व्वजनाट्टिकण् च। सर्व्वजनेभ्यो हितः, सर्व्व-जनीनः, सार्व्वजनिकः। महाजनाच्च। टिकण् महाजनिकः। चरकादीनञ्। चारकीणः। पुरुषाड्ढञ् तद्वन्धवधविकारकृतेषु। पुरुषस्य समूहादौ हिते च पौरुषेयः।

## १६। विकृतेस्तदर्थप्रकृतौ। [विकृतेः ५।, तदर्थ प्रकृतौ ७।]

विकृतेर्यथाविहितं स्यात। तदर्था प्रकृतिश्चेत्। अङ्गाराय इदं, अङ्गारीयं काष्ठं, यूपीयं दारु, शङ्कव्यं। छदिरुपधिवलेर्ढञ्। छदिषे इदं छादिषेयं तृणं, उपधेः स्वार्थे औपधेयं, वालेयास्तण्डुलाः। ऋषभोपानहोर्ञ्यः। ऋषभायार्थोऽयं वत्सः, आर्षभ्यः, औपानह्यं। चर्म्मणोऽञ्। तद्विकृतेस्तदर्थप्रकृतौ, वध्रय इदं वाध्रं वरत्रायै इदं चार्म्म वारत्रं।

## १७। तदिह स्यात्तदस्य च।

[तत् ०१।, इह ७।, स्यात् तिङ्, तत् ०१।, अस्य ६।, च ०१।]

अत्रार्थे इये यथा विहितं स्यात्। प्रासादोऽस्यां भूमौ सम्भाव्येत प्रासादीया भूमिः प्राकार आसामिष्टकानां स्यात् प्राकारीया इष्टकाः।

परिखायाढ्ढञ्।

परिखा अस्यां भूमौ स्यात पारिखेयी भूः।

## १८। मत्वर्थे सूक्तसाम्नोः। [मत्वर्थे ७।, सूक्त साम्नोः ७॥]

ईयः स्यात्। अच्छावाकोऽत्रास्ति अच्छावाकीयं सूक्तं, वारवन्तीयं साम। अध्यायानुवाकयोर्लुक् च। गर्दभाण्डीयो गर्दभाण्डो

ऽध्यायः अनुवाकोवा । वियुक्तादेरण् । वियु[illegible]ऽत्रास्ति वैयुक्तोऽध्यायोऽनुवाकोवा, दैवासुरः ।

१९ । जात्यन्ताद्द्रव्ये । [जात्यन्तात् ५।, द्रव्ये ७।]

ईयः स्यात् । ब्राह्मणजातीयः, ब्राह्मणएव; तज्जातीयः स एव द्रव्य इति किम्? ब्राह्मणजातिरदुष्टा । स्थानान्ताद्वा तत सदृशे । पितृस्थानीयः, पितृस्थानो वा तत्तुल्य इत्यर्थः । ईयविधिः पूर्णः ।

२० । धान्यादेरीनण् भवने चेत्रे ।

[धान्यादेः ५।, ईनण् ०१।, भवने ७।, चेत्रे ७।]

एभ्य ईनण् स्यात् । तद्भ्यादि चेत्रञ्चेत् । भवन्त्यत्रेति भवनं, धान्यानां भवनं चेत्रं धान्यीनं, मौद्गीनं, कौद्रवीणं । व्रीहिशालिभ्यां ढयण् । व्रैहेयं, शालेयं, चेत्रं । यवयवकषष्टिकाद्यः । यव्यं, यवक्यं, षष्टिक्यं । तिलमाषभङ्गोमाणुभ्योवा । यईनण् च । तिल्यं, तैलीनं, माष्यं माषीणं, भङ्ग्यं, भाङ्गीनं, उम्यं, औमीनं, अणव्यं, आणवीनं । मूलकादेः शाकिन्, शाकटौ । मूलकानां भवनं चेत्रं मूलकशाकिनं, मूलकशाकटं, इक्षु शाकटं ।

२१ । आप्रपदादीनस्तदाप्नोति ।

[आप्रपदात् ५।, ईनः २।, तत् ०२।, आप्नोति तिङ्]

तत् प्राप्नोतीत्यर्थेऽस्मादीनः स्यात् । आप्रपदीनं वस्त्रं । अनुपदाद्बद्धा । अनुपदं बद्धा, अनुपदीना पादुका । सर्वान्नाद्भक्षयति । सर्वान्नं भक्षयति सर्वान्नीनो भिक्षुः । अयानयान्नेये । अयप्रदक्षिणं, अनयः प्रसव्यं, अयानयं नेयोऽयानयीनः शार्य्यादिः । यथामुखसम्मुखात्तद्दर्शने । दृश्यतेऽस्मिन्निति दर्शनं यथामुखीनोदर्पणः सम्मुखीनः ।

## २२। सर्व्वादेः पथ्यङ्गकर्म्मपत्रपात्रात्तद्व्याप्नोति।

[सर्व्वादेः ५।, पथ्यङ्ग कर्म्मपत्रपात्रात् ५।, तत ०२।. व्याप्नोति तिङ्]

ईनः- स्यात्। सर्व्वपथं व्याप्नोति सर्व्वपथीनोरथः, सर्व्वाङ्गीणः पटः, सर्व्वकर्म्मीणः करः सर्व्वपत्रीणः सारथिः सर्व्वपात्रीण भक्तं। परावरपरम्परपुत्रपौत्रादनुभवति। परांश्च अवरांश्चानुभवति परावरीण परम्परीणः पुत्रपौत्रीणः। अत्यन्तावारपारानुकामाद्गच्छति। अत्यन्तं गच्छति अत्यन्तीनः, अवारीणः, संघातश्च---अवारः, पारीणः, पारावारीणः, अनुकामीनः। तस्मै शक्तोऽलं कर्म्मालं पुरुषात्। कर्म्मणेऽलं अलं कर्म्मीणः, अलं पुरुषीणः। आढ्यश्वो नमासन्नक्रिये। अद्यश्वीवा जायते अद्यश्वीना गौः, अद्यश्वीना वियोगः।

## २३। समांसमीनाः प्रत्यब्दप्रसवां।

[समां समीनाः १॥, प्रत्यब्दप्रसवाः १॥]

आवन्ता निपात्यते। समां समां प्रसूयत इत्यर्थः। आगोदानं कर्म्म कार्य्यागवीनः। आगवीनः स्यात्। गोदानकपर्य्यन्तं कर्म्म कारी चेत्।

अनुगवीनो गवानुगामी। स्यात्।

अषड्क्षीणोद्विगोचरे।

अषड्लोणामन्त्रः द्विगोचर इत्यर्थः।

आश्रितङ्गवीनमाश्रितागावोऽत्रेति। आश्रितङ्गवीनमरण्यं।

## २४। स्वार्थे वाञ्चेरदिक् स्त्रियां।

[स्वार्थे (स्व अर्थे) ७।, वा ०१।, अञ्चेः ५॥ अ (न) दिक् स्त्रियां ७।]

अस्य नीनौ वा स्यात्। स्वार्थे-प्राङ्, प्राचो[illegible] उदङ्, उदीचीनः अदिक्. स्त्रियामितिकिम्? प्राची दिक्।

## २५। तदलंगामीत्यध्वनोयदीनौ।

[तदलं गामी ०१। इति ०१, अध्वनः ५।; यदीनौ १॥]

स्याताम्। अध्वानमलं गामी अध्वन्यः, अध्वनीनः।

अभ्यमित्रादीयश्च। अभ्यमित्रमलं गामी अभ्यमित्रोऽभ्यमित्रीयोऽभ्यमित्रीणश्च।

## २६। गोष्ठादीनण् भूतपूर्व्वे।

[गोष्ठात् ५।, इनण् ०१।, भूत पूर्व्वे ७।]

स्यात्। गोष्ठं भूतपूर्व्वं गौष्ठीनो देशः। अष्वादेकाहगम्ये। आश्वीनोऽयं पन्थाः। शालीनमधृष्टे। शालाप्रवेशमर्हति, शालीना नववधूः। कौपीनमकार्य्यगुह्ययोः। कूपप्रवेशमर्हति कौपीनं। व्रातीनः कर्म्मापजीविनि। स्यात्। साप्तपदीनं सख्ये। सप्तभिः पदैरावाप्यते इत्यर्थः। हैयङ्गवीनं, ह्योगोदोहोद्भवाज्ये। इदं घृतं विशेषे स्यात्। सर्व्वं चर्म्मणा ईनश्च कृते। इनण्च। सर्व्वमेव चर्म्मणा कृतः सर्व्वचर्म्मीणोरथः, सार्व्वचर्म्मीणश्च।

## २७। तस्य मूलं कर्णादिजाहः।

[तस्य ६।, मूलं ०१।. कर्णा-आदेः ५।, जाहः १।]

तस्यमूलं इत्यर्थे कर्णादे जाहः स्यात्। कर्णस्य मूलं कर्णजाहं, कर्णजाहविलोचना इति भट्टिः। अक्षिजाहं, कर्ण, अक्षि, नख, मुख, केश, पाद, अंश, भ्रू, दन्त, ओष्ठ, गुल्फ, शृङ्ग, पृष्ठ। पक्षात्तिः। पक्षस्य मूलं पक्षतिः।

२८। पौल्वादेः कुणः पाके।

[पौल्वादेः (पौलु-आदि) ५।, कुणः १।· पाके ७।]

एभ्यः पाके कुणः स्यात्। पीलुकुणः, कर्कन्धुकुणः, शमीकरीर, बकुल, बदर, खदिर, अश्वत्थ।

२९। तेन ख्याते चुञ्चुचनौ।

[तेन ३।, ख्याते ७, चुञ्चु चनौ १।]

अत्रार्थे चुञ्चुचनौ स्याताम्। केशेनख्यातः, केशचुञ्चुः, केशचनः, अक्षरचुञ्चुः, अक्षरचनः।

३०। तिलादेः स्नेहे तैलं।

[तिलादेः ५॥, स्नेहे ७।, तैलं •१।]

स्यात्। तिलतैलं, कटुतैलं, इङ्गुदीतैलं।

३१। न्यादेः कटः। [न्यादेः ५।, कटः १।]

स्यात्। निकटः सङ्कटः, ततकटः। तिलादिभ्योरजसि। तिलकटः, उमाकटः, भङ्गाकटः, अलाबुकटः। अव्यादेः समूहे। अविकटः। वेःशाल, शसङ्कटौ। विशालः, विशसङ्कटः। स्थाने गोष्ठं पशुभ्यः। गोगोष्ठं, महिषो गोष्ठं, क्लीवनिर्देशोलिङ्गापेक्षः। द्वित्वे गोयुगं गोयोगयुगं, अश्वगोयुगं। षट्के षड्गवं। हस्तिषड्गवं। विस्तारे पटः। अविपटः। अवात्कट, कुट, कुटारौ वैरूप्ये। अवकटः, अवकुटारः। टीट, नाट भ्रटानतनासिके। अवटीट, अवनाट अवभ्रटः। नेरिल पिटकाश्चिक चिचिकाश्च।

नेरिलादयः स्युः। यथा संख्यं चिकादयश्च। चिकिलः, चिपिटः, चिकः।

३२। निविड़ निविरीषौ। [निविड़ निविरीषौ १॥]

निपात्येते।

३३। चुल्ल, चिल्ल, पिल्लार्द्रे चक्षुषि तद्वति च।

[चुल्ल, चिल्ल, पिल्ल ०१।, आर्द्रे ७।, चक्षुषि ७।, तद्वति ७।, च ०१।]

इमानि क्लिन्ने नेत्रे, क्लिन्न नेत्रवति च निपात्यन्ते। चुल्ले चक्षुषी चुल्लोऽयं मैत्रः।

३४। अध्युपाभ्यां त्यक् ऊर्द्ध्वासन्नयोः।

[अध्युपाभ्यां (अधि उप) ५॥, त्यक् १।, ऊर्द्ध्वासन्नयोः (ऊर्द्ध्व-आसन्न) ७॥]

आभ्यां त्यको भवति। अधित्यका गिरेरूर्द्ध्वभूमिः, उपत्यका गिरेरासन्नभूमिः। तत्र घटते कर्म्मणोऽठः। कर्म्मणि घटते कर्म्मठः।

३५। तदस्य संजातं तारकादेरितः।

[तत ०१।, अस्य ६।, संजातं १।, तारकादेः ५।, इतः १।]

एभ्योऽस्यार्थे इतः स्यात्। तारकाः संजाता अस्य तारकितं नभः कोरकितस्तरुः तारकः कोरक, पुष्प, मल, पल्लव, मुकुल, सुख, दुःख, कुसुम, स्तवक, तन्द्रा, तन्त्रि प्रत्यय बुभुक्षा पिपासा, भव, व्रण, रोग, व्याधि, उत्कण्ठा लज्जा इत्यादि। गर्भाद प्राणिनि। गर्भितो व्रीहिः।

३६। माने मात्रट, दघ्नट, द्वयसटौः।

[माने ७।, मात्रट,—सटौः १॥]

एते तदस्य मानमित्यर्थे मात्रटादयःस्युः। जानु प्रमाणमस्य जानुमात्रं जलं गिरिकूटदघ्नोगजः ऊरुद्वयसी नदी ऊर्द्ध्वमाने दघ्नट् द्वयसटौ मात्रट् पुनः सर्व्वत्र प्रस्थमात्रं घृतमात्रं तन्मात्रं। क्रियत्

डावत्वन्तात् स्वार्थे ...टि, द्वयसटौ। कियन्मात्रं, कियद्द्वयसं, तावद्द्वयसं। हस्तिपुरुषाभ्यामण् च। हस्तिमानमस्य हास्तिनं, हस्तिदघ्नं पौरुषी परिखा, पुरुषमात्री। मानार्थान्मात्रादेर्लुग्वा। समं मानमस्य समः, सममात्रो वा, हस्तो, हस्तमात्रो वा। वितस्ति वितस्तिमात्री वा शस्त्री।

## ३६। द्विगोर्नित्यम्। [द्विगोः ५।, नित्यं ०१।]

लुक् स्यात्। द्विसमं, द्विवितस्ति, द्विहस्तिनी परिखा, द्विपुरुषी, शद्शान्तविंशतेर्डिनो वा। त्रिंशत् प्रमाणमस्य त्रिंशिनोऽमासः, त्रिंशन्मात्रो वा; पञ्चदशिनः पक्षः, विंशिनोऽङ्गिरसः। संख्यामानाभ्यां संशये मात्रट्। पञ्च स्युर्नवेति पञ्चमात्रं, समं स्यान्नवेति सममात्रं, हस्तमात्रं, प्रस्थमात्रं।

## ३७। यत्तदेतेभ्यः परिमाणे डावतुः।

[यत्तदेतेभ्यः (यद् तद्-एतद्) ५॥, परिमाणे ७।, डावतु. १।]

एभ्यः परिमाणार्थे डावतुः स्यात्। यत् परिमाणमस्य यावान्, तत् परिमाणमस्य तावान्, एतत् परिमाणमस्य एतावान्।

## ३८। किमिदंभ्यां डियतुरिदमोऽश्च।

[किमिदंभ्यां (किम्-इदम्) ५॥, डियतु. १।, इदमः ६।, अत् ०१।, च ०१।].

आभ्यां परिमाणे डियतुः स्यात्। इदमोऽश्च। कियान्, इयान्।

## ३९। किमः संख्या परिच्छेदे डति च।

[किमः ५।, संख्या परिच्छेदे ७।, डति ०१।, च ०१।].

स्यात्। डियतुश्च। का संख्या एषां कति गुणिनः, कियन्तः सन्ति गुणिनः।

## ४० । संख्याया अवयवे तयट्

[संख्यायाः ५।, अवयवे ७।, तयट् ०१।]

अवयव वृत्ति संख्यायास्तयट् स्यात्। पञ्चावयवा अस्य पञ्चतयं द्वन्द्वं, चतुष्टयी शब्द प्रवृत्तिः।

## ४१ । विभाषा द्वित्रेरयट्।

[विभाषा ०१', द्वि, त्रेः ५।. अयट् ०१।]

आभ्यामयट् वा स्यात्। द्वितयं, द्वयं, त्रितयं, त्रयं। उभान्नित्यं। उभावयवौ अस्य उभयोमुनिः, उभये देवमनुष्याः।

## ४२ । शते सहस्रेऽस्मिंस्तदधिकमिति शद्दशान्तविंशतेर्डः।

[शते ७।, सहस्रे ७।, अस्मिन् ७।, तदधिकं ०१।, इति ०१।, शद्दशान्तविंशतेः (शत्—अन्त विंशति) ५।, डः १।]

शते सहस्रे च विषयेऽस्मिंस्तदधिकमित्यर्थे शदन्ताद्दशान्ताच्च विंशतेश्च डः स्यात्। त्रिंशदधिकमस्मिन् शते त्रिंशं शतं, चत्वारिंशं सहस्रं, एकादशं शतं, चतुर्विंशं सहस्रं, इह संख्या पूर्व्वाभिधानान्नेह—गोत्रिंशत्।

## ४३ । संख्याया पूरणे डट्।

[संख्यायाः ५।, पूरणे ७।, डट् ०१।]

तत् पूरणे डट् स्यात्। द्वादशानां पूरणः द्वादशः स्वर्गः, विंशी कारिका।

## ४४ । नान्तायाः असंख्यादेर्मट्।

[नान्तायाः (न-अन्त) ५।, अ (न) संख्यादेः (संख्या आदि) ५।, मट् ०१।]

नान्त संख्यायाः पूरणे मट् स्यात्। डटोबाधः पञ्चानां पूरणः पञ्चमः, एवं दशमः; असंख्यादेरितिकिम्? एकादशः।

४५। षट्, कति, कतिपय, चतुरस्थट्।

[षट्—चतुरः ५।, थट् ०१।]

एभ्यः पूरणे थट् स्यात्। षषां पूरणः षष्ठः। कतिथः, कतिपयथः, चतुर्थः, चतुर्थी। चतुरो यैयौ च लोपश्च। चतुर्णां पूरणः तुर्य्यः, तुरीयः।

४६। बहु, पूग, गण, संख्यायास्तिथट्।

[बहु-संख्यात् ५।, तिथट् ०१।]

एभ्यः पूरणे तिथट् स्यात्। बहूनां पूरणः बहुतिथः, गणतिथः, संघतिथः।

४७। डावतोरिथट्। [डावतोः ५।, इथट् ०१।]

डावत्वन्तात् पूरणे इथट् स्यात्। तावतां पूरणः तावतिथः। यावतां पूरणी यावतिथी।

४८। द्वित्रिभ्यां तीयोरेर्ऋश्च।

[द्वि, त्रिभ्यां ५॥, तीयः १।, रेः ६।, ऋः १।, च ०१।]

आभ्यां पूरणे तीयः स्यात्। त्रेस्तुरिकारस्य ऋश्च। द्वितीयः, तृतीयः।

४९। विंशत्यादेस्तनट् वा।

[विंशत्यादेः (विंशति-आदि) ५।, तनट् ०१।, वा ०१।]

एभ्यः पूरणे तनड्वा स्यात्। पक्षे डट्। विंशतेः पूरणः विंशतितमो विंशोवा, त्रिंशत्तम, त्रिंशोवा, एकविंशतितमः, एकविंशोवा, द्विपञ्चाशत्तमः, द्विपञ्चाशः।

## ५०। नित्यं शतादिमासार्द्धमास सम्वत्सराच्च।

[नित्यं, ०१।, शतादि (शत आदि) मासार्द्धमास (मास, अर्द्धमास), सम्वत्सरात् ५, च ०।१।]

एभ्यः पूरणे तनट् स्यात्। शतस्य पूरणः शततमः, सहस्रतमः, एकशततमः, द्विलक्षतमः, मासतमो दिवसः, अर्द्धमासतमः, सम्वत्सरतमः। षष्ट्यादेश्चाऽसंख्यादेः। षष्टेः पूरणः षष्टितमः, सप्ततितमः, अशीतितमः, नवतितमः। असंख्यादेरिति किम्? एकषष्टः एकषष्टितमः, द्विनवतितमः द्विनवतः पूर्व्वेण विकल्पः।

## ५१। णो वा षष्ठाष्टमाद्भागे।

[ण, १।, वा ०१।, षष्ठाष्टमात् (षष्ठ, अष्टम) ५।, भागे ७।]

णो वा स्यात्। षष्ठो भागः षष्ठो वा, अष्टमो भागः, अष्टमो वा।

## ५२। तत्र कुशले पथोऽकः।

[तत्र ७।, कुशले ७।, पथः ५।, अकः १।]

पथि कुशलः पथकः।

## ५३। आकर्षादेः कः। [आकर्ष आदिः ५।, कः १।]

स्यात्। आकर्षे कुशलः आकर्षकः। धनहिरण्यात् कामे। धने कामः धनकः, सुमुक्षोर्धनकः, कुतः हिरण्यकः। स्वाङ्गात् प्रसक्तेः। तत्रेतीय-केशेषु प्रसक्तः केशकः, दन्तकः, नखकः। शस्यात्तेन सम्पन्ने। शस्येन गुणेन सम्पन्नः शस्यको मणिः, शस्यको वत्सः, शस्यकः शालिः। अंशकोऽशंहारी। स्यात्। अंशं हरति अंशको दायादः। तस्मादपि रापहृते।

कः स्यात्। [illegible] नव पटः। उष्णिका यवागूः। उष्णिका भवति यवागूश्चेत्। ब्राह्मणकोऽस्त्रजोविब्राह्मणदेशे।
शीतकोष्णकौ शिथिलशीघ्र कारिणोः। शिथिल कारी, शीतकोऽलसः, उष्णकः शीघ्रकारी।

अधिकं प्रमाणादतिरिक्ते। स्यात्। अनुकाभिकाभीकाः कामुके। स्युः। अनुकोऽभिकोऽभीकश्च।

## ५४। तावतिथेन गृह्णातीति पूरणात् पूरणस्य लुक् च।

[तावतिथेन ३।, गृह्णाति तिङ्, इति ०१', पूरणात् ५।, पूरणस्य ६।, लुक् ०१।, च ०१।]

अत्रार्थे पूरणार्थात् कः स्यात्। पूरणार्थस्य लुक् च। द्वितीयेन रूपेण ग्रन्थं गृह्णाति, द्विको मेधावी, त्रिकः, षट्कः। ग्रहणे लुग्वा। द्वितीयेन रूपेण ग्रन्थग्रहणं द्विकं, द्वितीयकं; चतुष्कं, चतुर्थकं वा।

## ५५। स एषां ग्रामणीः। [सः १।, एषां ६॥, ग्रामणीः १।]

अत्रार्थं कः स्यात्। त्वं ग्रामणीरेषां त्वत्का इमे, मत्कं, देवदत्तकोजनः। शृङ्खलकः करभे। शृङ्खलं बन्धनमस्येति शृङ्खलकः। उत्क उन्मनाः। उत्कः स्यादुन्मनाश्चेत्।

## ५६। ज्वरे भवादौ कालादेः।

[ज्वरे ७।, भवादौ ७।, कालादेः (काल, आदि) ५।]

ज्वरे वाच्ये भवादावर्थे कालवाचिनः शब्दादेः कः स्यात्। दिवसं भवति दिवसको ज्वरः, मासकं, द्वितीये भवः द्वितीयकः, चतुर्थकः। तेन प्रयुक्तः। विषपुष्पेण प्रयुक्तो विषपुष्पकः, काशपुष्पकः। तदस्य कार्य्यं शीतादेः। शीतं कार्य्यमस्य शीतकोज्वरः, तापकः।

अज्ञात कुत्सिताक्षेपेषु। कः स्यात्।(अनु)ज्ञायते कस्यायं किं स्वभावो वा अश्वकः, कुत्सितो विप्रः विप्रकः, समासे चोत्तरपदे त्वतकपितृकः, असर्व्वनामत्वादकन् स्यात्। आक्षेपे व्याकरणकेन गर्व्वितः।

५७। संज्ञायां। [संज्ञायां ७]

कः स्यात्। शूद्रकः।

५८। नीतौ। [नीतौ ७।]

कः स्यात्। धनकं गोप्यं।

५९। अनुकम्पायां। [अनुकम्पायां ७।]

कः स्यात्। पुत्रकः वत्सकः।

वह्वचो नृनाम्न इयेकेलास्त्वादिपदशेषश्च बहुलं। उपादेर्ड श्च।

उगन्तात्-इ-लुक् चेयादेः। नृनाम्नः परे इय इक इलाः स्युः। कश्च। उपादि नाम्नोडश्च, उगन्तादियादेरिकारस्य लुक् च तन्नाम्न आदिपदशेषश्च वाहुल्यात् के विकल्पिकः। अनुकम्पायां देवदत्तोऽनुकम्पितः देवदत्तको देवकः, देवियः, देविकः, देविलः, उपेन्द्रदत्तकः, उपकः, उपियः, उपिलः, उपडश्च; पितृनामकः, पितृकः, वासुदत्तको वासुकः, वासुयः, वासुलः, षडङ्गुलिदत्तकः, षट्कः, षड़ियः कृष्णाजिनकः, कृष्णकः, कृष्णियः, कृष्णिकः, कृष्णिलः एवं शेवलदत्तादेः वाहुल्यात् क्वचिदशेषश्च दत्तको दत्तियः, दत्तिकः, दत्तिलः, वह्वच इति किम्? गुप्तको, व्याघ्रक, सिंहकः, कचिदककारश्च दत्तः।

६०। स्वार्थे कः। [स्वार्थे ७।, कः १।]

स्यात्। अविरेव अविकः, यावकः, मणिकः, श्रेयस्कः। स्नातावेद समाप्तौ। स्नातको मुनिः।

## ६१। कालेलोहितादेर्नित्यवर्णे रक्ते च।

[काल-लोहितादेः ५।, नित्यवर्णे ७।, रक्ते ७।, च ०।।]

कः स्यात्। वैलक्ष्येण कालकं मुखं, कोपेन लोहितकं चक्षुः, रक्ते रागवाचिनः कालकः पटः, लोहितकः। लोहितकोमणौ च। अयं मणौ च स्यात्। तूष्णीं शीले तूष्णीकमलोपोनिपात्यते।

## ६२। क्तादनत्यन्तगतावनर्द्धार्थे।

[क्तात ५।, अनत्यन्तगतौ (न,-अत्यन्त गति) ७।। अनर्द्धार्थे न (अर्द्ध-अर्थे) ७।]

क्तान्तात् कः स्यात्। नात्यन्तं भिन्नं भिन्नकं, छिन्नकं, अनर्द्धार्थे इति किम्? अर्द्धक्तं, सामिभक्तं। बृहतिका आच्छादने। बृहतिकं वस्त्रं

## ६३। ह्रस्वाल्पयोः। [ह्रस्वाल्पयोः (ह्रस्व, अल्प) ७।]

अनयोरर्थयोः कः स्यात्। ह्रस्वोदण्डो दण्डकः। अल्पं घृतं घृतकं, संज्ञायाञ्च ह्रस्वो वंशो वंशकः, वेणुकः। कुटीशमी, शुण्डाभ्योरः। अल्पा कुटी कुटीरः, शमीरः, शुण्डारः। कुत्वा डुपः। अल्पा कुतूः कुतुपः। कासूगोणीभ्यां तरट्। ह्रस्वा कासूः शक्तिः, कासूतरी, गोणीतरी।

## ६४। वत्सतरोऽतिबाल्ये।

[वत्सतरः १।, अतिबाल्ये ७।]

अतिक्रान्त बाल्ये तरङन्तोनिपात्यते। वत्सतरः।

## ६५। उक्षतरोऽति यौवने।

[उक्षतरः १।, अति-यौवने ७।]

अयमति क्रान्तयौवने स्यात्।

६६ । अश्वतरः खर जन्ये । [[illegible] १।, खरजन्ये ७।]

स्यात् ।

६७ । ऋषभतरोमन्दे । [ऋषभतर. ०१।, मन्दे ७।]

अयं वाहनादि मन्दे स्यात् ।

६८ । पादशतमोदकाद्वीप्सार्थसंख्यापूर्व्वादिकः स्त्रियां पादस्य पदश्च ।

[पाद, शत, मोदकात् ५।. वीप्सार्थं, (वीप्सा अर्थं) संख्या पूर्व्वात् ५।, इक १।, स्त्रियां ७, पादस्य ६।, पद ०१।, च ०१।]

एभ्यो वोप्सार्थं संख्या पूर्व्वेभ्यः स्त्रियामिकः स्यात् । पादस्य पदश्च । द्वौ द्वौ पादौ तद्धितार्थे द्विगुः द्विपदिकां ददाति गच्छति वा; त्रिंशतिकां दण्डितः; द्विमोदकिकामश्नाति ददाति वा । दण्ड-दानयोरवीप्सार्थे च । द्विपदिकां दण्डितः ददाति व्यवसृजति ।

६९ । तदत्र भक्ष्यं संज्ञायां ।

[तत् ०१।, अत्र ७।, भक्ष्यं १।, संज्ञायां ७।]

अत्रार्थे इकः स्यात् । संज्ञा चेत् । गुडापूपा भक्ष्या अस्यां गुड़ापूपिकापौर्णमासी तिलापूपिका । वटकादिनः । वटकिनी पौर्णमासी ।

७० । प्रकारे जातीयः । [प्रकारे ७।, जातीयः ०१।]

स्यात् । पटुप्रकारः, पटुजातीयः, मृदुजातीयः, तज्जातीयः ।

७१ । स्थूलादेः कः । [स्थूलादेः ५।, कः १।]

स्यात् । स्थूलप्रकारः स्थूलकः, यवकः, अणुकः, माषकः, पक्व-तकः, इक्षुतकः जटिलकः ।

७२। अजीवेऽपि च। [प्रति रूपे ७।, च ०१।]

कः स्यात्। वासुदेवस्य प्रतिरूपं वासुदेवकः, अश्वकः, गर्दभकः।

७३। लुब्देवपथादेः। [लुप् ०१।, देव-पथादेः (पथ-आदि) ५।]

एभ्यः कस्य लुप् स्यात्। देवपथस्य प्रतिरूपं देवपथः, हंसपथः, काश्यपथः, चञ्चा प्रतिरूपो मनुष्यः चञ्चालुपि युक्तवत्। (चञ्चा तृण प्रतिमा)।

७४। जीविकार्थे प्यविक्रये।

[जीविका अर्थे ७।. अ (न) विक्रये ७।]

लुप् स्यात्। वासुदेवक आजीवोऽस्य वासुदेवः, आदित्यः, यः प्रतिमां गृहीत्वा भ्रमति स उच्यते, अविक्रय इति किम्? वासुदेवकान् विक्रिणीते।

७५। इवे कुशाग्रादीयः।

[इवे ७।, कुशाग्रात् (कुश-अग्र) ५।, ईयः १।]

इवार्थे कुशाग्रादीयः स्यात्। कुशाग्रमिव कुशाग्रीया बुद्धिः। काकतालादेराकस्मिके। काकगमने तालपतनं निपातनात् काकतालं समासः तदिव आकस्मिको देवदत्तस्य दस्युना संयोग इति काकतालीयं अजाकृपाणीयं। वस्तेष्टेयण्। वस्तिरिव वास्तेयः, वास्तेयी। शिलायाष्टेयश्च। शिलेव शिलेयं, शैलेयञ्च। शाखादिभ्योयः। शाखेव शाख्यं, मुख्यं, जघन्यं। द्रोर्भव्ये। द्रुरिव सव्वाश्रयं द्रव्यं। शर्करादेरण्। शर्करेव शार्करं, कापालं। अः सपत्ना इति वक्तव्यं सपत्नीव सपत्नः प्रतिपक्ष उच्यते। अङ्गुल्यादेष्टिकण्। अङ्गुलीव अङ्गुलिकः। इकश्च कशालायाः। एकशालेव एकशालिकः, ऐकशालिकः। कर्कलोहितादिकण्। कर्क इव कार्किकोवृषः लौहितिकः। गता इवार्थाः।

७६ । रूपः प्रशंसायां । [रूपः १।, प्रशं[illegible] ७।]

रूपः स्यात् । प्रशंसा चेत् । प्रशस्तो याज्ञिकः याज्ञिकरूपः । तिङः क्लीवे । प्रशस्तं पचति—पचति रूपं ।

७७ । ईषदसमाप्ते कल्प, देश्य, देशीयाः ।

[ ईषदसमाप्ते (ईषत्-अ (न) समाप्ते ) ७।, कल्प, देश्य, देशीयाः १॥]

ईषदसमाप्ते वाच्ये कल्पादयः स्युः । ईषदिन्द्रेण समाप्तः इन्द्रकल्पः, पण्डितदेश्यः, मुनिदेशीयः । तिङश्च । दीयते कल्पं । पचतिकल्पं ।

७८ । सुपोवहुर्व्वा पूर्व्वे तु ।

[सुपः ५।, वहुः १।, वा ०१।, पूर्व्वे ७।, तु ०१।]

ईषदसमाप्तार्थात् सुबन्तात् पूर्व्वएव वहुर्व्वा स्यात् । वहुगुड़ा द्राक्षा, गुड़कल्पा लघुः, वहुतृणं नरः, तृणदेश्यः ।

७९ । किंयत्तदेकेभ्यो डतरोद्वयोरेकस्य निर्द्धारणे ।

[किंयत्तदेकेभ्यः (किं यत्,-तद्,-एक,) ५॥, डतरः १।, द्वयोः ६॥, एकस्य ६।, निर्द्धारणे ७।]

जाति गुणादिभिर्द्वयोरेकस्य पृथक्करणे किमादेर्डतरः स्यात् । कतरोभवतोर्मैत्रः, यतरोभवतोः पटुः, ततरो भवतोः कारकः, एकतरोभवतो धंनी ।

८० । वा वहूनां डतमोजातिपरिप्रश्ने ।

[वा ०१।, वहूनां ६॥, डतमः १।, जाति—परि-प्रश्ने ७।]

जातिपरि प्रश्ने वहूनामेकस्य निर्द्धारणे किं यत्तदेकेभ्योडतमो वा स्यात् । कतमोभवतां कठः, कोवा, यतमो, यो वा, ततमः, स वा,

सक्तोवा; एकतम: [illegible]वा भवतां कठ:. जाति परिप्रश्न इति किम्? कोभवतां मैत्र:।

## ८१। एकाद्सहाये काकिनौ।

[एकात् ५।, अ (न) सहाये ७।, क, आकिनौ १।]

स्यातां। एकक:, एकाकी; वेत्येव—एक: एकलश्चेत्येके।

## ८२। भूतपूर्व्वे चरट्। [भूतपूर्व्वे ७।, चरट् ०१।]

स्यात्। आढ्योभूत: पूर्व्वं आढ्यचर:, पटुचरी। षष्ठ्या: रूप्योवा। षष्ठ्यन्तात् रूप्योवा स्यात्। ब्राह्मणस्य भूत: पूर्व्वं ब्राह्मणरूप्यो देश:; पचे—चरट् ब्राह्मणचर:।

## ८३। पाशोहीने। [पाश: १।, हीने ७।]

हीने वाच्ये पाश: स्यात्। हीनो याज्ञिक:, याज्ञिकपाश:, शाब्दिकपाश:।

## ८४। तम: सातिशयादिष्ठश्च गुणात्।

[तम: १।, सातिशयात् (सह-अतिशय) ५।, इष्ठ: १।, च ०१।, गुणात् ५।]

प्रकर्षयुक्तात्तम: स्यात्। अयमेषा मतिशयेन पाचक: पाचकतम:, गुणादिष्ठश्च अयमेषामतिशयेन पटु:. पटिष्ठ:, पटुतमश्च।

## ८५। द्विविभज्यस्य तरो गुणादीयसुश्च।

[द्विविभज्यस्य ६।, तर: १।, गुणात् ५।, ईयसु: १।, च ०१।]

द्वयोर्विभक्तस्य च सातिशयात्तर: स्यात्। अयमनयोरतिशयेन पाचक: पाचकतर:, गुणादीयसुश्च अयमनयोरतिशयेन पटु:, पटीयान् पटुतरश्च:, विभक्तस्य सातिशयात्—पाश्चात्या गौडेभ्य: पटुतरा:,

पटीयां सः। तिङश्च तर, तमौ सातिशयात्। [redacted]यमनयोरतिशयेन पचति पचतितरां, अयमेषामतिशयेन जल्पति जल्पतितमां।

## ८६। वैसारिणोमत्स्ये। [वैसारिणः १।, मत्स्ये ७।]

निपात्यते। भेषजादेर्यण् स्वार्थे। भेषजमेव भैषज्यं, आनन्त्यं, आवसथ्यं, औपम्यं, सामीप्यं, सामान्यं, चातुराश्रम्यं, चातुर्व्वर्ण्यं, चातुर्व्वैद्यं, यौगपद्यं, सान्निध्यं, साहित्यं, त्रैलोक्यं, षाड्गुण्यं, वैश्यं। इतिह पारम्पर्य्योपदेशेऽव्ययं ऐतिह्यं।

## ८७। आभिजितादेर्लुक् च वहुषु।

[आभिजितादेः (आभि जित, आदि) ५।, लुक् ०१।, च ०१।, वहुषु ७॥]

एभ्योऽणन्तेभ्योयण् स्यात्। आभिजित्यः, वहुषु लुक् च आभिजिताः। वैदभृत्यः, वैदभृताः, एवं शालावतः, शामीवतः, और्णवतः, शिखावतः, आश्मतः। देवात्तल्। स्वार्थे देवता।

## ८८। नव्य, नवीन, नूत्न। नवे। [नव्य-नूत्नाः १॥, नवे ७।]

चत्वारोऽमी नवार्थे निपात्यन्ते।

## ८९। प्रवीण प्रतन, प्रत्नाः पुरातने।

[प्रवीण—प्रत्नाः १॥, पुरातने ७।]

एते चत्वारः पुरातनार्थे स्युः। क्षेमादेर्यः। स्वार्थे क्षेम्यं, मर्त्यः, यविष्ठः। भागरूपनाम्नोधेयः। स्वार्थे। भागधेयः, रूपधेयः, नामधेयः।

## ९०। प्रज्ञादेरण्। [प्रज्ञादेः (प्रज्ञा आदि) ५।, अण् ०१]

स्वार्थे प्रज्ञादेरण् स्यात्। प्रज्ञ एव प्राज्ञः, प्राज्ञी स्त्री। देवता

दैवतं, वणिक् वाणिजः, मनोमानसं, मरुत् मारुतः रक्षो राक्षसः, चोर चौरः, शत्रुः शात्रवः, पिशाचः पैशाचः, बन्धुर्बान्धवः, विकृतं वैकृतं, द्वितं द्वैतं, प्रतिभा, प्रातिभं, चण्डालः चाण्डालः, चतुष्पथं चातुष्पथम् इत्यादि। औषधेरजातौ। औषधं व्याधिनाशनं। वयसः काकः। वायसः। कर्म्मणोवाचिकयुक्तात्। वाचा प्रतिपादितं कर्म्म कार्म्मणम्।

## ९१। विनयादिभ्य ष्टिकण्। [विनयादिभ्यः ५॥, टिकण ०१।]

स्वार्थे विनय एव वैनयिकः, अनुगादो, आनुगादिकः, समयः सामयिकः, उपचारः औपचारिकः, उपायस्य ह्रस्वश्च औपयिकः, अत्ययः आत्ययिकः। स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते च। मुक्ता मौक्तिकं, व्यवहारः व्यावहारिकः, समूहः सामूहिकः, त्रिशेषोत्रैशेषिकः। अकस्मातष्टिलोपश्च। आकस्मिकं। वाचोव्याहृतार्थायाः। उक्तार्था वाक् वाचिकं सन्देशवाक्।

## ९२। तीयाट्टीकणविद्यायां।

[तीयात् ५।, टीकण् ०१।, अ (न) विद्यायां ७।]

स्वार्थतीयान्ताट्टीकण् स्यात्। द्वैतीयीकः, तार्त्तीयीकः, अविद्यायामिति किम्? द्वितीया विद्या। वर्णात्कारः स्वार्थे। आकारः, ककारः, औकारः, ओंकारः। रादेफः, रेफः। मृदस्तिकः। मृत्तिका। सस्नौ प्रशंसायां। प्रशस्ता मृत्—मृत्सा, मृत्स्ना, रूपस्यापवादः।

## ९३। इन्द्रियमिन्द्रलिङ्गेन्द्र दृष्टादौ।

[इन्द्रियं १।, इन्द्रलिङ्ग इन्द्रदृष्ट आदौ ७।]

निपात्यते। इन्द्र आत्मातस्य लिङ्गं, तेन दृष्टं, तेन सृष्टं, तेन जुष्टं दत्तं वा इन्द्रियं।

९४। छन्दोऽधीत इति श्रोत्रियो वा।

[छन्दः ०२।, अधीते तिङ्, इति ०१।, श्रोत्रियः १।, वा ०१।]

अत्रार्थे श्रोत्रियो निपात्यते। पक्षे छान्दसः।

९५। क्षेत्रियं जन्मान्तरदेहचिकित्स्ये।

[क्षेत्रियं ०१।, जन्मान्तरदेहचिकित्स्ये ७।]

निपात्यते। क्षेत्रियः कुष्ठव्याधिः।

९६। तद्भुक्तमनेन श्राद्धादिनिकौ।

[तद् भुक्तम् ०१।, अनेन ३।, श्राद्धात् ५।, इनिकौ (इन्, इक) १॥]

अत्रार्थे श्राद्धादिनिकौ स्यातां। श्राद्धं भुक्तमनेन श्राद्धी, श्राद्धिकः।

९७। इष्टादिक्तत पूर्व्वादेरिन्।

[इष्टादि क्तत् पूर्व्वादेः ५।, इन् ०१।]

एभ्य इन् स्यात्। अनेनेत्येव—इष्टमनेन इष्टी यागे, अधीती व्याकरणे, कृती कटे, श्रुती शब्दे, निराकृतीत्यादि। क्तादि पूर्व्वात्, पूर्व्वादेव,-कृतं पूर्व्वमनेन सुप्सुपेति समासः कृतपूर्व्वीकटान् अत्र-षष्ठी निषिद्धा, न तद्धितप्रयोगे, भुक्तपूर्व्वीत्यादि। पूर्व्वाच्च। पूर्व्वं भुक्तं, पीतं, आसितं अशितं वा अनेन पूर्व्वी, पूर्व्विणौ।

९८। साक्षी साक्षाद्द्रष्टरि। [साक्षी ०१।, साक्षात् द्रष्टरि ७।]

निपात्यते। अनुपद्यन्वेष्टा। अनुपदी स्यादन्वेष्टा चेत्।

९९। तदस्यास्त्यस्मिन् वा मतुः।

[तत् ०१।, अस्य ६।, अस्तितिङ्, अस्मिन् ७।, वा ०१।, मतु ०१।]

अत्रार्थे मतुः स्यात्। गुणोऽस्यास्ति अस्मिन् वा गुणवान्।

भूम निन्दा प्रशंसासु नित्ययोगेऽतिशायने।

संसर्गेऽस्ति विवक्षायां मत्वर्था हि भवन्त्यमी। भूम्नि वहुत्वे गोमान्, निन्दायां ककुदावर्त्ती हयः, प्रशंसायां-रूपवान्, नित्ययोगे, क्षीरी वृक्षः, अतिशये उदरी, संसर्गे कन्नी, अस्ति विद्यमाने पुत्री।

शुक्लादयः शब्दा गुणिनि गुणे, च वर्त्तन्ते।

तेभ्योमत्वादयो नेष्यन्ते। तथा—

मत्वर्थाच्छैषिकात्तुल्यो न मत्वर्थो न शैषिकः। न भावप्रत्ययो भावान्न समिच्छासनन्ततः।"

तुल्यभावप्रत्ययनिषेधादिह भवति। दण्डिमान् दाक्षिणात्यीयं, पाकत्वं, जुगुप्सिषते।

## १००। चूडादेर्लोवहुलं। [चूडा आदेः ५।, लः १।, वहुलं ०१।]

स्यात्। चूडा अस्यास्ति अस्मिन् वा चूडालः, चूडावान्, जङ्घालः, जङ्घावान्, शिरालः, शिरावान्, शिखलः, शिखावान्, गडुलः, वहुलः, श्लेष्मलः। पार्ष्णि धमन्योर्दीर्घश्च वाहुल्यात्। पार्ष्णीलः, धमनीलः, स्नेहलः, युकालः, मूर्च्छालः, वत्सलः प्रकामवति, अंशलोवलवति। जटादेरुत्कटे। जटालः, घाटालः, कीलालः, विचर्चिकालः, विपादिकालः, कर्णिकालः।

## १०१। अव्रीह्यादेरिनिकौ।

[अव्रीह्यादेः (अदन्त) व्रीहि आदि) ५।, इनिकौ (इन्-इक) १॥]

अदन्तात्व्रीह्यादेश्च सामान्येन इनिकौ स्याताम्। दण्डी, दण्डिकः, कार्य्यी, कार्य्यिकः, धनादुत्तमर्णे धनी, धनिकः; वहुलानुवृत्त्या—एकाक्षरात्वकाज्जातेः सप्तम्याश्च न तौ स्मृतौ। खवान्, कारकवान्, हस्तवान् दण्डाः सन्त्यस्यां दण्डवती शाला; सुखादेरिन्नेव-सुखी, दुःखी, पताकी, शृङ्गी। इन्नेऽतदङ्गात् प्राणिस्थात्। कटकवलयिनी,

शंख नूपुरिणी, न तदन्तात्-स्नान केशवती। ग[illegible]ाभ्याञ्च। ककुदावर्त्ती, ज्वरी पूली। धर्म्म शीलवर्णान्ताच्च। द्विजधर्म्मी, भिक्षुशीली, द्विजवर्णी। वयसि पूरणान्तात्। पञ्चमोमासोवर्षोवाऽस्यास्ति पञ्चमी हयः, दशमी वृद्धः। करहस्तदन्ताद्गजे। करी, हस्ती, दन्ती। वर्णीब्रह्मचारिणि। अर्थी प्रार्थके। मर्व्वबीजादेश्च। सर्व्व-बीजी, सर्व्वधनी, सर्व्ववेशी, बाहुवली, उरुवली। पुष्करादेः संज्ञायां। पुष्करिणी, पद्मिनी, उत्पलिनी, हैमिनी। द्वीपी व्याघ्रे। ब्रीह्यादेः खल्वपि-ब्रीही, ब्रीहिकः, ब्रीहिमान्, शाली, शालिकः, मायी, मायिकः। शिखादेरिन्। शिखी, शिखावान्, मेखली, सङ्गी, श्रोणी जटी, पताकी, कर्म्मी, चर्म्मी। नावादेरिकः। नाविक इत्यादि। पिच्छादेरिलः। फनाल्लश्च। पिच्छिलः, मतुः सर्व्वत्र-पिच्छवान्, फेनिलः, फेनलश्च, जटिलः, तुन्दिलः, बहुलमितीश्च-तुन्दी, तुन्दिकः, उदरिल, उदरी, उदरिकः, कर्णिलः, कर्णी।

## १०२। स्वामीश्वरे। [स्वामी ०१।, ईश्वरे ७।]

अयमीश्वरे निपात्यते। वातादेः किन्। स्यात्। वातकी अतिसारकी, पिशाचकी पिशाचवान्। लोमादेः शः। लोमशः, कृमिशः। पामादेर्नः। पामनः, श्लेष्मणः, हेमनः, वलिनः, लक्ष्म्या ईदश्च। लक्ष्मणः। अङ्गात् प्रशंसायां। अङ्गना। दद्रोर्ह्रस्वश्च। दद्रुणः। ज्योत्स्नादेरण्। ज्यौत्स्नः पक्षः तापसः साहस्रः, तामिस्रः कौण्डलः कौतपः वैपादिकः सैकतोघटः शार्करः। सहस्रादिन् च। सहस्री। तपसोविन् वक्ष्यते। तपस्वी।

## १०३। सिकताशर्कराभ्यां देशे लुबिलौ च।

[सिकता शर्कराभ्यां ५॥, देशे ७।, लुबिलौ (लुप्, इल) १॥, च ०१।]

आभ्यां देशे वाच्ये इणोलुप्, इलश्च चकाराद्यण् च स्यात्। सिक-

तादेश: सिकतिल:, सैकत:, सिकतावान्, शर्करा, शर्करिल:, शार्कर:, शर्करावान्।

## १०४। प्रज्ञाश्रद्धार्चा वृत्तिभ्यो णः।

[प्रज्ञा, श्रद्धार्चा (श्रद्धा, अर्चा) वृत्तिभ्य: ५।३। णः १।]

एभ्यो णः स्यात्। प्राज्ञः, प्राज्ञा स्त्री, प्रज्ञावान्, श्राद्धः, श्रद्धावान् आर्च:, अर्चावान्, वार्त्त:, वृत्तिमान्।

## १०५। अस्, माया, मेधा, स्रजो विन्।

[अस्—स्रज: ५।, विन् ०१।]

एभ्यो विन् स्यात्। असन्तात्—ऊर्ज्जस्वी, ऊर्ज्जस्वान्, तपस्वी, तपस्वान्, यशस्वी, यशस्वान्, मायावी, मायी, मेधावी, स्रग्वी। आमयादाविन्। आमयावी। दन्तादुरउन्नतात्। उन्नतोदन्तोऽस्यास्ति दन्तुरः। ऊषादिभ्योरः। ऊषरः, ऊषावान्, शुषिरः, पुष्करः, मधुरः, पांशुरः, पाण्डुरः, कुञ्जरः, नगरः। कच्छ्वा ह्रस्वश्च। कच्छुरः। सुखादवश्चमुखे। मुखरः, हिरण्यादिभ्यः। हिरण्यवः, मानवः, इष्टकावः, केशवः, बहुलमितीव केशिकः, केशी, केशवान्। राज्यादेः संज्ञायां। राजीवं पद्मं राजीवो मत्स्यः, गाण्डीवः, ह्रस्वश्च गाण्डिवः, अजगवं पिनाकः। अजकवमित्येके। अर्णसः सलोपश्च। अर्णवः। मेधारथाभ्यामिरः। मेधिरः, रथिरः, रथी, रथिकश्च। अण्डकाण्डादीरः। अण्डीरः, काण्डीरः। कृष्यादिभ्योवलच्। कृषीवलः, आसुतीवलः, परिषद्वलः, रजस्वलः, ऊर्ज्जस्वलः, भ्रातृवलः। दन्तावलो हस्तिनि। शिखावलः केकिनि। इनश्च वर्हादेः। वर्हिणः, फलिनः, शृङ्गिणः, मलिनः, वर्हि, फलीत्यादि यथा दर्शनं।

## १०६। गोमिन्मलीमसौ। [गोमिन् मलीमसौ १॥]

एतौ निपात्येते। गोमी, गोमान्, मलीमसः पटः चैमस् प्रत्यये।

द्युद्रुभ्यां मः। द्युमः, द्रुमः। एकगोपूर्व्वाट्ठञ्। एकशतमस्यास्ति ऐकशतिकः, गौसहस्रिकः, ऐकदेशिकः, एकदेशी च।

१०७। शत, सहस्रान्निष्कादेः।

[शत सहस्रात् ५।, निष्कादेः (निष्क आदि) ५।]

टिकण् स्यात्। नैष्कशतिकः, नैष्कसहस्रिकः।

१०८। रूपात् प्रशंसाहतयोर्यः।

[रूपात् ५।, प्रशंसाहतयोः ७।, यः १।]

प्रशस्तं रूपमस्यास्ति रूप्यः पुरुषः, आहतं ताड़ननिष्पादितं रूपमस्यास्ति रूप्यो दीनारः।

१०९। पदादेश्च। [पदादेः ५।, च ०।]

यः स्यात्। पदमस्यास्ति पद्यः, श्लोकः। हिंस्यः पर्व्वतः, गुण्याद्विजाः। शृङ्गवृन्दाभ्यामारकः। शृङ्गारकः, वृन्दारकः। ऊर्णायुः। निपात्यते। वाग्मी वावदूके। निपात्यते। वाचाट, वाचालौ बहुभाषिणि। निपात्यते।

११०। अर्श आदेरत् [अर्श आदेः ५।, अत् ०।]

अत् स्यात्। अर्शोऽस्यास्ति अर्शसः, ओन्दः, काणः, खञ्जः, पलितः, शुक्लः, नीलः, गोधूल इत्यादि। पर्व्वमरुभ्यां तः। पर्व्वतः, मरुतः।

१११। शुभंयूहंयु, कंयु, शंयु, कंय, शंयाः।

[शुभंयूहंयु (शुभंयु, अहंयु)—शंयाः १।]

अमी निपात्यन्ते। निपातनादनुस्वारश्च। शुभमस्यास्ति शुभंयुः, अहंयुः अहङ्कारवान्, कंयुर्जलवान्, शंयुः शुभान्वितः, एवं कंयः, शंय इत्यादि।

## ११२ । कं, शं, भ्यां व, भ, ति, तु, ताश्च ।

[कं, शंभ्यां ५॥, व—ताः १॥।, च ०१।]

आभ्यां वादयः स्युः । कंवः, शंवः, कंभः, शंभः, कन्तिः, शन्तिः, कन्तुः, शन्तुः, कन्तः, शन्तः । तुण्डिवलि, वटेर्भः । तुण्डिभः, वलिभः वलिनश्च, वटिभः । कृपादेरालु । कृपा अस्यास्ति कृपालुः, दयालुः लज्जालुः, श्रद्धालुः, तन्द्रालुः, निद्रालुः, हृदयालुः, हृदयी, हृदयिकौ हृदयवांश्च ।

## ११३ । शीतादेस्तन्न सहते ।

तन्न सहते इत्यर्थे शीतादेरालुः स्यात् । शीतं न सहते शीतालुः, उष्णालुः, तमालुः । हिमादेलुश्च । हिमं न सहते हिमलुः, हिमालुश्च । वलादूलः । वलं न सहते वलूलः । वातात् समूहे च । वातं न सहते तस्य समूहो वा वातूलः । उक्ता मत्वर्थीयाः ।

## ११४ । तस्य भावे त्वतापौ । [तस्य ६।, भावे ७।, त्व, तापौ १॥]

भवतोऽस्मादभिधानप्रत्ययाविति भावः, शब्दप्रवृत्तिनिमित्तं वस्तुधर्म्मोजात्यादि, तस्य भावे त्व-तापौ स्याताम् । त्वं क्लीवे, ताप् स्त्रियां । गोर्भावः गोत्वं, गोता, शुक्लत्वं, शुक्लता, रसत्वं, रसता, क्रियात्वं, समासादौ सम्बन्धप्रवृत्तिनिमित्तं, राजपुरुषत्वं, गार्ग्यत्वं, पाचकत्वं, स्वरूपमात्रे च डित्थत्वं, चैत्रत्वं, ममेताव्ययात् स्वार्थे ममत्वं, ममता ।

## ११५ । न शेषा नञ्तत्पुरुषादचतुरसङ्गत लवणवहवुध कत रस लसात् ।

[न ०१।, शेषाः १॥, नञ्तत्पुरुषात् ५।, अ (न) चतुर् सङ्गत (अः लवण, वह, वुध, कत, रस, लसात् ५।]

शेषा भावप्रत्यया नञ्तत्पुरुषान्न स्युः। अशुचित्वं, पत्यन्तान्न यण्, कथमपाटवं पाटवसिद्धौ पश्चात् नञ्समासेन। चतुरादेस्तु भवति। आचतुर्य्यं, आसङ्गत्यं, आलवण्यं, आवट्यं, आवुध्यं आकत्यं आरस्यं, आलस्यं। प्रियादिभ्य इमन् वा। इमन् पुंसि. प्रियात् क्लीवे च। प्रियस्य भावः प्रेमा, प्रेम वा, प्रियत्वं, प्रियता, पृथोः प्रथिमा, पृथुत्वं, अण् वक्ष्यते पार्थवं, एवं तनिमा तनुत्वं, प्रिय, पृथु, तनु, गुरु, लघु, मृदु, महत्, चिप्र, दीर्घ, बहुल, ऊरु, अणु।

## ११६। वर्णं दृढादिष्ट्यण् च।

[वर्ण, दृढादेः (दृढ, आदिः ५।, ष्यण् ०१।, च ०१।]

एभ्यः ष्यण्, इमन् वा स्यात्। वर्णात् शौक्ल्यं, शुक्लिमा. त्व-तापौ सर्व्वत्र शुक्लत्वं, शुक्लता, कार्ष्ण्यं, कृष्णिमा। दृढादेः, दार्ढ्यं, द्रढिमा, जाड्यं. जड़िमा; कार्श्यं, क्रशिमा, वैमनस्यं, विमनिमा, माधुर्य्यं, मधुरिमा, टित्त्वात् ङी माधुरी, औचित्यं, औचिती, आनुपूर्व्यं, आनुपूर्व्वी, वैदग्ध्यं वैदग्धी, वाधिर्य्यं. शैत्यं, औष्ण्य मित्यादि।

## ११७। गुणवचन ब्राह्मणादिभ्यः कर्म्मणि च।

[गुणवचन ब्राह्मणादिभ्यः ५।॥, कर्म्मणि ७।, च ०१।]

एभ्योभावे कर्म्मणि च ष्यण् स्यात्। गुणवचनात् जड़स्य भावः कर्म्म वा जाड्यं, मौर्ख्यं, कार्श्यम्। ब्राह्मणादेर्ब्राह्मण्यं, आभिजात्यं, मैत्र्यं,. माध्यस्थ्यं, चौर्य्यं, चापल्यं, कौशल्यं, नैपुण्यं, पैशुन्यं, काव्यं, दायाद्यं, सामूह्यं। अर्हतोनुम् च। आर्हन्त्यम्। अतोभावकर्म्मणोर्विधिः प्राग्वतेः।

## ११८। दूत वणिक् स्तेनाद्योनलोपश्च।

[दूतवणिक् स्तेनात् ५।, यः ११, न लोपः ११. च ०१।]

एभ्योयः स्यात्। ब्राह्मणादित्वात् ष्यण् च। दूतस्य भावः कर्म्म

वा-दूतं, दौता[illegible]णिज्या स्त्रियां वाणिज्यञ्च; स्तेनस्य न-लोपश्च-स्तेयं, स्तैन्यञ्च।

११६। पत्यन्तराजादेर्यण्।

[पत्यन्तराजादेः (पति-अन्त, राजा-आदि) ५।, यण् ०१।]

पत्यन्तात्, राजादेश्च यण् स्यात्। प्राजापत्यं, सैनापत्यं। राजादेः—राज्यं, सैन्यं, पौरोहित्यं। माध्युर्यः। सख्यं। कपिज्ञाति-ष्टयण्। कपेर्भावः कर्म्म वा कापेयं, ज्ञातेयं।

१२०। अण् प्राणिवयोवचनोद्गात्रादिभ्यः।

[अण् ०१।, प्राणि-वयो-वचन-उद्गातृ-आदिभ्यः ५॥]

एभ्यः अण् स्यात्। अश्वस्य भावः कर्म्म वा आश्वं, औष्ट्रं, औकं, काकं, मायूरम्; वयोवचनात्—कौमारं, यौवनं, स्थाविरं। उद्गात्रादेः—

औद्गात्रं, औन्नेत्रं, पौरुषं। हायनान्तस्य—पौर्व्वहायणः, सौहृदं, ब्राह्मणादित्वात्—सौहृद्यं चापलं, दौर्हृदं, नैपुणं, कौशलं; श्रोत्रियस्य श्रोत्रश्च श्रौत्रं। इगन्ताच्च लघुपूर्व्वात्। शुचेर्भावः कर्म्म वा शौचं, मौनं, पाटवं, लाघवं, पार्थवं हारीतकं, लघुपूर्व्वादिति किम्? पाण्डुत्वं।

१२१। गुरूपोत्तमाद्योपधान्मनोज्ञादेश्चाऽकण्।

[गुरु-उपोत्तमात् ५।, य उपधात् ५।, मनोज्ञ आदेः ५।, च ०१।, अकण् ०१।]

गुरूपोत्तमात्, योपधात्, मनोज्ञादेश्च अकण् स्यात्। रमणीयस्य भावः कर्म्म वा रामणीयकं, कामनीयकं, आचार्य्यकं, औपाध्यायकं, वैद्यकं (वैद्यशब्दस्य ऐकार उपोत्तमः), साहायकं, साहाय्यञ्चेष्यते, मानोज्ञं, प्रैयरूपकं, आभिरूपकं।

१२२। द्वन्द्वाऽमुषाकुलादेरिकण् स्त्रियां।

[इन्ह, अमुष्य कुल-आदेः ५।. इकण् ०१।, स्त्रियां ७।]

एभ्यः स्त्रियामिकण् स्यात्। शैष्योपाध्यायिका, पैतापुत्रिका; अमुष्यकुलादेः, आमुष्यकुलिका, आमुष्य पुत्रिका।

## १२३। गोत्रचरणाच्छ्लाघाधिक्षेपतद्वेतेषु।

[गोत्रचरणात् ५।, श्लाघा,-अधिक्षेप,-तत अवेतेषु ७॥]

एषु प्रयुज्यमानेषु गोत्रचरणाभ्यां भावकर्म्मणोरिकण् स्यात्। गोत्रचरणान्नियमार्थो विधिरयम्। गोत्रात्-गार्गिकया श्लाघते, दाक्षिकया अधिाक्षपति, वाक्षिकादवेतः। एवं चरणात् काठिकया श्लाघते, अधिक्षिपति वा, दाह्लृचिकादवेतः। अन्यत्र-गार्ग्यत्वं। अहं पूर्व्वादेरिकण् स्त्रियामिति च वक्तव्यम्। अहंपूर्व्विका, अहमहमिका, आह्लोपुरुषिका, ऋत्विजोमित्रावरुणादेरीयः। मित्रावरुणीयं, अच्छावकीयं। उक्ताः भाव कर्म्मणोः प्रतायाः।

## १२४। तदिवेत्यादौ वतिः।

[तत् ०१।, इव ०१।, इत्यादौ ७', वतिः ०१।]

तदिव, तेन इव इत्याद्यर्थे वतिः स्यात्। 'विप्रइव विप्रवदधीते. मित्रमिव पुत्रं मित्रवदाचरेत्, देवेनेव देववत् कृतं, देवायेव देववद्दत्तं पूर्व्वस्मादिव पूर्व्ववत्सनः। मुनेरिव मुनिवच्चरित्रं, गुराविव, गुरुवद्गुरु पुत्रेषु वर्त्तितव्यं, शिवार्थिनां मथुरायामिव मथुरावत् स्रौघ्न प्राकाराः।

## १२५। ए किमव्यय तिङ स्तरतमादामद्रव्ये।

[ए,-किं अव्यय. तिङः ५।, तरतमःत् ५।, आम् ०१।,-अ (न) द्रव्ये ७।]

एभ्य एकारान्तादिभ्यस्तरतमात् आम् भवति। पूर्व्वाह्णेतरां गायति, पूर्व्वाह्णेतमां गायति, अत्राधारशक्तेः सातिशयत्वं, किन्तरां

किन्तमां, अत्र क्रियाया गुणस्य वा प्रकर्षः, प्रातस्तरां, सुतरां, नितरां, उच्चैस्तरां, पचतितरां। अद्रव्य इति किम्? उच्चैस्तरो गिरिः।

१२६। विना नाना। [विनानाना ०१।]

एतौ निपात्येते। वेर्ना विना, नञोऽना नाना।

१२७। सुब्वत् प्रागधः। [सुब्वत् ०१, प्राक् अव्य, धः ५।]

धा प्रत्ययात् प्राक्प्रत्ययाः सुब्वत् बोद्धव्याः। सुपीव-सुब्वत्, तदादेष्टेरदादि कार्य्यं।

१२८। प्राक् प्रकारात् काले सप्तम्याः।

[प्राक् अव्य, प्रकारात् ५।, काले ७।, सप्तम्याः ५।]

प्रकार शब्दात् प्राक् सप्तम्यन्तात् काले प्रत्यया वाच्याः।

१२९। सर्व्वैकान्यकिंयत्तदोदा सर्व्वस्य सोवा च।

[सर्व्व, एक, अन्य किं यत् तदः ५।, दा ०१।, सर्व्वस्य ६।, सः १।, वा ०१।, च ०१।]

एभ्यः सप्तम्यन्तेभ्यः काले दा स्यात्। सर्व्वस्य सोवा च। सर्व्वस्मिन् काले सर्व्वदा, सदा, एकदा, अन्यदा, कदा, यदा, तदा।

१३०। किंयत्तदेतदोर्हिः। [किं यत्तदेतदः ५।, र्हिः १।]

किमादेः काले र्हिः स्यात्। कस्मिन् काले कर्हि, यर्हि, तर्हि, एतर्हि। अधुनेदानीं तदानीञ्च। इदमः काले अधुना, इदानीञ्च निपात्यते, तदस्तदानीञ्च।

१३१। परुत् परार्य्यैषमः पूर्व्वपूर्व्वतरगच्छदब्देषु।

[परुत् परार्य्यैषमः १।, पूर्व्व पूर्व्वतर गच्छदब्दे षु ७।]

निपात्यन्ते। पूर्व्वे वर्षे पदुत्, पूर्व्वतरे वर्षे परारि. गच्छदव्दे ऐषमः ।

## १३२ । अहन्यन्यान्यतरेतर पूर्व्वापराधरोत्तरेभ्य-एद्युस ।

[अहनि ७। अन्य-अन्यतर इतर पूर्व्व अपर अधर-उत्तरेभ्यः ५।॥, एद्युस् ०१।]

एभ्योऽहनाभिधेये एद्युस् स्यात्। अन्यस्मिन् अहनि अन्येद्युः, अन्यतरेद्युः, इतरेद्युः पूर्व्वेद्युः, अपरेद्युः, अधरेद्युः, उत्तरेद्युः। द्युस्चोभयात्। उभयद्युः, उभयेद्युश्च। अद्य, सद्यः, परेद्यवि। अस्मिन्नहनि अद्य, समानेऽहनि सद्यः, परस्मिन्नहनि परेद्यवि। उक्तं काले।

## १३३ । उभयादेः प्रकारे थाः ।

[उभयादेः ५।, प्रकारे ७।, थाः १।]

स्यात्। उभयेन प्रकारेण उभयथा, सर्व्वथा, अन्यथा, अन्यतरथा, इतरथा, यथा, तथा, बहुथा। कथमित्थं। किमिदमोः प्रकारे निपात्येते। गताः प्रागाधीयाः।

## १३४ । संख्याया विधार्थे धा ।

[संख्यायाः ५।, विधार्थे ७।, धा ०१ ]

प्रकारे वृत्तेः संख्याया धा स्यात्। पञ्चभिः प्रकारैर्भुङ्क्ते, पञ्च प्रकारान् करोति पञ्चधा, षोढ़ा, विंशतिधा, कतिधा, बहुधा। द्वित्रिभ्यामेधा च। एधा च स्यात्। द्विधा, त्रिधा, द्वेधा, त्रेधा, द्वैधं, त्रैधं, मैकध्यं वा। द्वित्रिभ्यां धमुण् एकाद्ध्यमुण च स्यात्। वा ग्रहणात् द्विधा, त्रिधा, एकधा। धं ध्यमन्तात् स्वार्थे उश्च। द्वैधीभावेन वर्त्तते. ऋते द्वैधोनिः. संशयं वाहुल्यात् अनव्ययम्। आचाराद्भिश्च

शब्देभ्यः प्रथमा ...मी सप्तमीभ्योदिग्देशकालेषु। वारशब्दात् प्राक् दिक् शब्देभ्यः प्रथमाद्यन्तेभ्योदिगादिषु वर्त्तमानेभ्यः स्वार्थे—प्रत्यया वाच्याः।

१३५। पूर्व्वाधरावरेभ्योऽसस्तातौ पुरधवश्च।

[पूर्व्व-अधर-अवरेभ्यः ५॥।, अस् अस्तातौ १॥, पुर अध्-अवः १॥।, च० १।]

एभ्योऽस् अस्ताच्च भवति। तेषां पुर्, अध्, अवादेशाश्च। गिरेः पूर्व्वा पुरः, पुरस्तात्, दिक् रमणीया देशोवा। वैशाख्याः पुरः, पुरस्तात् कालोऽतिरम्यः, तत आगतस्तत्र वसति वा। एवं अधः, अधस्तात् रम्यं, आगतोवसति वा; अवः, अवस्तात् रम्या दिक्।

१३६। दक्षिणोत्तराभ्यामतम्।

[दक्षिण उत्तराभ्यां ५॥।, अतम् ०१।]

स्यात्। दक्षिणतोरम्यं, आगतोवसति वा। उत्तरतः। पुरतः। पूर्व्वस्य निपात्यते। पराऽवराभ्यामस्ताच्च। अतस् च। परतः परस्तात्, अवरतः, अवरस्तात्; पुनर्विधानात् अवादेशो न भवति।

१३७। अञ्चेर्लुक्च। [अञ्चेः ५।. लुक् ०१।, च ०१।]

अञ्चत्यन्तात् दिक् शब्दात् अस्ताद्भवति। तस्य लुक् च। प्राक् रम्यं, आगतो, वसति वा; उदक्, प्रत्यक्। उपर्य्युपरिष्टात्। ऊर्द्ध्व-शब्दस्य हो निपात्यते। पश्चात् पश्च चार्द्धे। अवरस्य निपात्यते। अर्द्ध शब्दे परे पश्चभावश्च। पश्चाद्रम्यं आगतो वसति वा, पश्चार्द्धं. दक्षिण पश्चार्द्धं।

१३८। उत्तराधरदक्षिणादात्।

[उत्तर-अधर-दक्षिणात् ५।, आत् ०१।]

एभ्य आत् स्यात्। उत्तरात् रम्यं आगतोवसति वा, अधरात्, दक्षिणात्।

## १३९। एनोऽन्यतरस्यामदूरेऽपञ्चम्याः

[एनः १।, अन्यतरस्यां ७।, अदूरे ७।, अ (न) पञ्चम्याः ५।]

दिक् शब्राददूरे एनोवा स्यात्। उत्तरेण उत्तरात् रम्य वसति वा, एवं पूर्व्वेण, अधरेण, दक्षिणेन। अपञ्चम्या इति किम् दक्षिणतोदेशादागतः। अतोऽपञ्चम्या एव—

## १४०। दक्षिणादाजाही अदूरदूरयोः।

[दक्षिणात् ५।, आच् आहौ १॥, अदूरदूरयोः ७॥]

आच्—अदूरे दक्षिणा रम्यं, वसति वा। आहि—दक्षिणाहि रम्यं वसति वा।

## १४१। उत्तराद्दूरे। [उत्तरात् ५।, दूरे ७।]

आजाह्नौ स्याताम्। उत्तरा, उत्तराहि रम्यं, वसति वा। उक्ता अतसार्थाः।

## १४२। वारे संख्यायाः कृत्वस्।

[वारे ७।, संख्यायाः ५।, कृत्वस् ०१।]

क्रियाया अवसरे गम्ये संख्याया कृत्वस् भवति। पञ्च वारान् पञ्चकृत्वोदिवसस्य भुङ्क्ते, शतकृत्वोरात्रेः स्मरति प्रियाम्। अदूरकाले धा च वक्तः। बहुकृत्वः, बहुधा अह्नोभुङ्क्ते, नेह-बहुकृत्वो मासस्य भुङ्क्ते।

## १४३। द्वित्रि-चतुर्भ्यःसु। [द्वित्रि, चतुर्भ्यः ५॥, सुः १।]

एभ्योवारे सुः स्यात्। द्विर्भुङ्क्ते, त्रिःपचति चतुरधीते; रात् स-द्विपोलोपः।